श्रीमदप्पय्यदीक्षितविरचिता

# चित्रमीमांसा

न्याया-लङ्कार-व्याकरणविदुषा,
मैसूरु श्रीमन्महाराजसंस्कृतमहापाठशालायां
विश्रान्तालङ्कारशास्त्रप्राध्यापकेन
पण्डितप्रवरेण

## सो. रामस्वामिऐय्यङ्गार्येण

विरचितया " तत्वालोक " व्याख्यया सहिता

भागः-१

[उपमादि स्मरणान्तः]

भारतसर्वकारस्य ह्युमन् रिसोर्सस् डेवलेप्मेण्ट् मन्त्र्यालयवितीर्ण
धनसाहाय्येन इदं पुस्तकं मुद्रितम्

प्रकाशकः
रामस्वमिऐय्यङ्गार्यः
२९०-सरस्वती सदनम् , सीताविलास अग्रहारः
मैसूरु-२४
१९८८

लेखकः सम्पादकश्च:- सो, रामस्वामि ऐय्यङ्गार्यः
मुद्रणालयः- जयन्ती मुद्रणालयः, जयनगरम्, मैसूरु
संस्करणम्- प्रथमम् 1988
मूल्यम्रूप्यकाणि Rs 89 /



प्राप्तिस्थानम्-

१ विद्वान् सो. रामस्वामि ऐय्यङ्गार्यः
२९०, सरस्वती सदनम्
सीताविलासाग्रहारः
मैसूरु-५७००२४



२ वेदान्त बुक् हौस्
उमाचित्रमन्दिर समीपम्
चामराजपेट्
बेंगळूरु २६००१८

३

# CHITRAMĪEMĀMSĀ

OF

APPAYYA DīKṢHIṬA

With

# TATTVĀLOKA

A Samskrita Commentary by

PANDITHA PRAVAR

S. RAMASWAMY IYENGARYA

NYAYĀ-ALANKĀRA-VYĀKARAṆA VIDWĀN

*Retd. Prof. of Alankarashastra*

*Maharaja's Samskrita College, Mysore*

Volume-I

UPAMADI SMARANANTA

Published With the financial assistance

From

The Ministry of Human Resources &

Development Government of India

Publishers

*S: Ramaswamy Iyengarya*

*Saraswathy Sadanam*

*Seethavilasa Agrahara*

*Mysors 24*

1988

" Tatvāloka" Volume—I a commentary on 'Chitra-meīmāmsā' of Appaiyya Dikṣita written and published by S. Ramaswamy Iyengarya 290' Saraswathy Sadanam. Seeṭhavilasa Agrahara, Mysore–24

Pages: 646+144=790

First Ebition: 1988

Copies: 1000

Price Rs: Rs 8 9 /

10504



Printed by

*Jayanti Printers*
*2842, Pampapati Road, Jayanagar,*
*MYSORE–14.*

श्रीः

## अनुक्रमणी

पूर्वानुबन्धभागः—



ग्रन्थभागः—



उत्तरानुबन्धभागः—







श्रीमत्परमहंस परिव्राजकाचार्य श्रीमज्जगद्गुरु श्रीशङ्कराचार्य

परमपूज्य श्रीमद्राघवेन्द्र भारती महास्वामिनः श्रीसंस्थान गोकर्ण

श्रीमद्रामचन्द्रापुरमठ, ता· होसनगर, जि· शिवमोग्गा, कर्णाटक राज्य·



॥ प्रसीदतु रामचंद्रः ॥

श्रीराम　　　　　　मुद्रा　　　　　　गत संख्या 2755

श्रीमत्परमहंसपरिव्राजकाचार्यपदवाक्यप्रमाणपारावारपारीण
यमनियमासनप्राणायामप्रत्याहारध्यानधारण
समाध्यष्टाङ्गयोगानुष्ठाननिष्ठषड्दर्शनस्थापना-
चार्यतपश्चक्रवर्त्यनाद्यविच्छिन्न

## श्रीमज्जगद्गुरुशङ्कराचार्याशिष्य

सुरेश्वराचार्यज्येष्ठशिष्यविद्यानन्दाचार्यगुरुपरम्पराप्राप्त
सकलनिगमागमसारहृदयसांख्यत्रयप्रतिपादकवैदिक
मार्गप्रवर्तकसर्वतन्त्रस्वतन्त्रादिबिरुदाङ्कितविद्या
नगरमहाराजधानीवैभवसिंहासनाधीश्वर
व्याख्यानसिंहासनारूढश्रीमद्राजाधिराज

## श्री गुरु गोकर्णमण्डलाचार्य

श्रीमच्छतशृङ्गपुरवराधीश्वरश्रीमच्छरावतीतीरवास
श्रीमद्रामचन्द्रापुरमठस्थश्रीमद्रामचन्द्र-

चन्द्रमौलीश्वरपादपद्माराधक श्रीमद्रामचन्द्रभारती

श्रीगुरुकरकमलसञ्जात

## श्रीमद्राघवन्द्रेभारतीश्रीस्वामिभिः

श्रीमतां अस्मदत्यन्तप्रियाभिमानिनां महीशूरपुरीस्थ श्रीमन्महाराज संस्कृतमहापाठशालायां विश्रान्तालंकारशास्त्रप्रधानाध्यापकानां श्रीभाञ्जनग्रामाभिजनानाम् (नुग्गेहळ्ळि) नं 'सरस्वतीसदनम्' 290 सीताविलासाग्रहारः मैसूरू' इत्यत्र निवसतां श्रीमज्जनार्दनाचार्य ज्येष्ठ पुत्राणां अनेकविद्वत्पदवीप्रविलसताम् विद्वद्वराणां असाधारण सदाचारसंपत्तिमतां सोमयाजियांडान्. श्री. रामस्वामि ऐय्यङ्गार्य महाशयानां विषये संदिष्टोऽयं संदेशः ।

साम्प्रतम् भवद्भिः अप्पय्यदीक्षितकृतालंकारशास्त्रसम्बधिनः चित्रमीमांसाख्यग्रन्थस्य तत्वालोकनाम्नीं व्यख्यां विलिखितां वयम् अवालोकयाम ।

अस्याः सव्याख्यायाः चित्रमीमांसायाः स्मरणालंकारान्तः प्रथमो भागः मुद्रितः इति अत्यन्तं प्रमोदस्थानमस्माकम् । अस्याः तत्वालोक व्याख्यायाः मूलभूतचित्रमीमांसायाः विरचयितारः विश्वविख्याताः पद वाक्यप्रमाणपारवारपारीणाः श्रीमन्तः अप्पय्यदीक्षितमहाशयाः द्वैता द्वैत शिवा-द्वैत- विशिष्टाद्वैत ग्रन्थान् अन्योन्यमङ्कीर्णाकारेण व्यलिखन्निति महानयं विशेषः

तथैव एभिः 'मीमासायां व्याकरणे च वादानुकूलया रीत्या मीमांसा वादनक्षत्रमाला पाणिनीयतन्त्रवादनक्षत्रमाले'त्येवमादयोऽपि ग्रन्था विरचिताः ।

यद्यपि आनन्दवर्धन-मम्मट-रुय्यकादिभिः अलङ्कारविषये विचारः कृतः। तथाऽपि भामहमारभ्य विद्यानाथं यावत् यानि अलंङ्काराणां लक्षणानि लक्ष्याणि च विरचितानि तानि अवलोक्य विमृश्य दोषान् उद्धर्तुं तल्लक्षण—परिष्करणं विधाय क्वचित् नव्यलक्षणान्यपि निर्माय उचितानि लक्ष्याणि च प्रदर्श्य शास्त्रान्तरेष्विव पूर्वपक्षसिद्धान्तरीत्या घटना कृता।

एतेन अलङ्कारप्रतिपादकग्रन्थानां शास्त्रत्वं नास्तीति प्रवादः परिमृष्ट इति महदिदं सौभाग्यम्।

इयं च चित्रमीमांसा बहुभिः विचारैः सन्दब्धा सती न्यायव्याकरणमीमांसादिष्वपरिणतस्य दुर्बोधैवेति नह्यविदितं विदुषाम्।

अतः अस्याः दुरूहायाः चित्रमीमांसायाः व्याख्यानसापेक्षता आसीत्। परन्तु तदानीं मूलमन्तरा सव्याख्या चित्रमीमांसा नोपलब्धा। अतश्च भवद्भिः एतद्ग्रन्थाध्येतॄणां सुबोधो भवतु इति भावनया मूलमात्रम् अलङ्कार ग्रन्थान्तराणि च अवलोक्य ग्रन्थकाठिन्यं परिहृत्य इयं तत्त्वालोकाख्यव्याख्या विनिर्मिता।

अस्यां च व्याख्यायां ग्रन्थकृदाशयः स्फुटं प्रतिपादितः। तथैव जगन्नाथराजचूडामणिदीक्षितप्रभृतिभिः तत्र तत्र उद्भावितान् दोषान् युक्तिभिः परिहृत्य ग्रन्थकृदाशयः समीचीन इति स्थापितः।

1 यथा-चित्रमीमासायाम् " निश्शेषच्युतचन्दनम् " इति पद्ये चन्दनच्यवनादीनामसाधारण्यं ग्रन्थकृता प्रतिपादितम्, तच्च जगन्नाथेन दूषितम् तत् प्रकाशकारोक्त्यनुगुणतयोद्धृतम्। व्यञ्जनानुगुणमित्यपि स्थापितम्।

2 एवमेव काव्यप्रकाशकाराभिमतकाव्यविभागं परित्यज्य ध्वनिकाराभिमतरीत्या तद्विभागकरणे हेतुः प्रदर्शितः ।

3 उपमालक्षणे ग्रन्थकृता अव्यङ्ग्यत्वं विशेषितं तच्च दूषितं जगन्नाथेन तदपि उद्धृतं प्रकारान्तरेण ।

4 ‘पुरतः’ इति प्रयोगे असाधुत्वमापादितं परैः तच्च प्रकारान्तरेण परिहृतम् ।

5 ‘वागर्थाविव सम्पृक्तौ’ इत्यत्र रसध्वनिः इतिपाठः मूले दृश्यते तस्य उत्तरत्र वक्ष्यमाणग्रन्थानुरोधेन विरोधः (व्याघातः) परिदृश्यते सच तद्गुणसंविज्ञानोपलक्षणान्यतराश्रयणेन परिहृतः ।

6 ‘रजोभिः स्यन्दनोद्धूतैः’ इत्यत्र प्राच्यनव्यमतविमर्शपूर्वकं उपमेयोपमा युक्ता नोपमा इति औचित्यानुसारात् निर्णयः कृतः ।

7 अनन्वयस्थले स्वस्य स्वेन साहश्यनिष्पत्तिरस्ति नवेति विचार्य यथौचिति निश्चयः कृतः ।

8 सादृश्यपदार्थस्वरूपविचारः ।

9 शब्दशक्तिमूलध्वनिस्थले द्वितीयार्थस्यापि शक्त्यैव प्रतीतिः ? आहोस्वित् व्यञ्जनयेति विचारः सुदीर्घतया कृतः ।

एवं अस्याः अतिगम्भीरायाः चित्रमीमांसायाः’ महता श्रमेण अतिप्रयत्नेन च अध्ययनाध्यापनयोः आनुकूल्यं यथा स्यात् तथा तत्वालोकाख्यां अतिविस्तृतां व्याख्यां विरचय्य महानुपकारः कृतः ।

अग्रेऽपि नानाशास्त्रग्रन्थानां व्याख्यां विधाय सर्वेषां विदुषां विद्यार्थिनां च अध्यापनाध्ययनानुकूल्यं सम्पादयन्तु तथा श्रेयः-प्रेयोभाजोभवन्तु भवन्तः इति आशास्महे

इति श्रीमन्नारायणस्मृतयः श्रीः

मितिः विभवनामसंवत्सरे भाद्रपदशुक्लपूर्णिमायां भानुवासरे [दिनाङ्क 25- 9-1988]

वसतिः विद्यामन्दिरम् नं 2A. प्रथमकक्ष्यायां जे. पि. मार्गे विश्वभारतीसमुच्चये गिरिनगरे (बेंगलूरु) कल्याणनगरे 560085.

---

# FOREWORD

I have much pleasure in introducing Vidwān S. Ramaswamy Iyengarya to the world of Sanskrit Scholars. The learned scholar hails from a family known for its learning and noble bearing. He is the son of Vidwān. S. Janārdanāchārya from whom he learnt the secrets of Indian Grammar, Rhetorics and Philosophy. Later, he studied at the Mahārāja's Sanskrit College, Mysore and obtained the highest degrees in Navīna Nyāya, Alaṅkāra and Vyākaraṇa. In addition, he was trained by his father in mastering the Viśiṣṭādvaita system which he later assiduously studied at the Ubhaya Vedānta Pravartaka Sabhā Melkote, a place of pilgrimage and learning near Mysore.

The Vidwān's achievements were recognised and he was called upon to serve on the staff of the Mahārājas Sanskrit College, Mysore, where he had studied earlier under eminent Sanskrit Pandits. While on the staff as Professor of alaṅkāraśāstra, he had the oppurtunity of teaching alaṅkāra classics to students eager to learn and profit from a study of Indian poetics. His preoccupation with the exposition of the highest texts on rhetorics was never in his way to the promotion and spread of Sanskrit knowledge to the ordinary men around him to whom he taught Sanskrit in his Institute called

Śrī Rāmamiśra Samskṛta Vidyāpiṭha'. He wrote for the benefit of young boys elementary guides on Sanskrit grammar; but, his natural disposition was to be in touch with the best of Sanskrit classics; and in keeping with this inclination, he taught and wrote on them. The result was *Tattvāloka*, the commentary which he wrote on the *Cītramīmāmsā* of Appayya Dīkṣita, a reputed ālaṅkārika of the 17th century A. D.

It is clear from a study of *Tattvāloka* that Sri Ramaswamy Iyengarya was greatly influenced by the style and treatment of Appyya Dīkṣita who wrote many works in Sanskrit. His contribution to Indian poetics were three: *Vṛttivārttka, kuvalayānada, Citramīmāmsā*. And, of the three, the last one was his best displaying as it did the intellectual, analytical and critical powers of the author. Nothing could be a greater tribute to the work than the pertinent observation that "though the work is incomplete, it is delightful like the digit of the moon or like Aruṇa, the charioteer of the Sun-god." [1] Naturally Sri Iyengarya not only admired the work but also felt like bringing its glories to the scholarly world. He called his exposition of the work, *Tattvāloka*.

---

1 Apyardha Citramīmāmsā na mude kasya māmsalā
Anūruriva gharmāṁśoradhenduriva dhūrjaṭeḥ.
Kane: Introduction to Sāhityadarpaṇa. 1-35

And now *Tattvāloka,* a nice commentary on *Cītramīmāmsā* is a work having its own special features. Besides presenting clearly the views of Appayya Dīkṣita, it draws from grammar and mīmāmsā the necessary material to expound the concepts of rhetorics. The 'figures of sense' [Arthālaṅkāra] with which *Citramīmamsā* abounds make themselves very definite and clear to the reader aided by the commentary, *Tattāvloka*. Needless to say that the impeccable Sanskrit style of the commentary and its lucid exposition make it easy for the connoisseur to follow the intricacies of the original. Nor is the author of the commentary content to give an exposition of the original; he evaluates ably and critically all that Appayya Dikṣita says, all that Appayya Dikṣita's opponent, Jagannātha, the alaṅkāra stalwart says, and comes to valid conclusions of his own.

The *Tattvāloka* is a remarkable commentary and it is my hope that the authour's wish that it should delight the hearts of its readers gets fulfilment:

'Vyākhaiṣā Viduṣām modam
tanotu suhṛdām sādā'.

S. RAMACHANDRA RAO

*Mysore*
*8-10-88*

*University professor of*
*Sanskrit (Retd.) Mysore*

॥ श्री ॥

# प्रस्तावना

संस्कृतवाङ्मये हि भारतदेशसर्वस्वभूते पर्वत्रयं दृश्यते । 1) सामा न्यतः सार्धसहस्रवत्सरेभ्यः पूर्वतनम्, बौद्धैस्सह सङ्घर्षतः प्राक्तनमेकम् ।

2) तदनन्तरकालिकं पञ्चशतवत्सरेभ्यः प्राक्तनं द्वितीयम् । 3) एत दनन्तरकालिकं तृतीयम् ।

तृतीयपर्वकालिकवाङ्मयपरिशीलने श्रीमन्तः अप्पय्यदीक्षिताः असाधरणं स्थानं वहन्त्येव । नानामुखप्रतिभाशालिभिः एभिः विरचितेषु शताधिकप्रबन्धेषु इयं चित्रमीमांसा विशिष्टं स्थानं वहति ।

काव्यं ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात् त्रिविधं विभज्य, तत्र चित्र काव्यं शब्दार्थोभयचित्रमिति विभागं प्रदर्शयन्त्येते । तत्र अर्थचित्रमेव अर्थालङ्कारपदवाच्यं भवति । एतद्विचारएवात्र प्रस्तुतः । मीमांसक मूर्धन्यत्वात् ‘ मीमांसा ’ पदयोजनया अस्य ग्रन्थस्य ‘ अर्थचित्रमीमांसा ’ इति नाम दत्तमेतत्कर्तृभिः । तदेव नाम संक्षेपात् ‘ चित्रमीमांसा ’ इति संवृत्तमिति ग्रन्थारम्भप्रकरणे स्पष्टं भवति ।

विषयनिरूपणप्रौढिमदृष्ट्या अयं ग्रन्थः अलङ्कारशास्त्रवाङ्मये अत्यन्त प्रसिद्धिं लभते । तत्तादृशास्यास्य समीचीनं विस्तृतं सर्वसम्मतं च एकं व्याख्यानं न लभ्यते । इमां न्यूनतां पर्यहरन् न्यायव्याकरणालङ्का शास्त्रविद्वांसः महीसुरपुरसंस्कृतकलाशालायां विश्रान्तालङ्कारशास्त्राध्या पकाः सो. रामस्वामिऐय्यङ्गार्याः इति महदिदं प्रमोदस्थानम् । ‘ तत्वालोक ’ नाम्ना विरचितोयमेभिर्विद्वद्वरेण्यैः नूतं चित्रमीमांसातत्त्व

ज्ञानायालोकायत इति एतद्ग्रन्थाध्येतृभिः स्वयं ज्ञायेत । अलङ्कारशास्त्र वाङ्मये इदंच व्याख्यानं महतीं कीर्तिमचिरात्संपादयिष्यतीत्यत्र न संशयलेशः ।

अलङ्कारशास्त्रस्य प्राणप्रदं शास्त्रं व्याकरणशास्त्रमित्ययमंशः अस्मिन् व्याख्याने आमूलान्तं स्फुटं भाति । व्याकरणशास्त्रे प्राचीनसंप्रदायानुसारेण पाण्डित्यं संपादितवतां एतद्व्याख्याकाराणां निरूपणशैलिः, विवादविषयेषु निष्पक्षपात निर्णयः, विचारेषु गहनता इत्यादयो गुणाः प्रतिपुटं विलसंति अस्मिन् ग्रन्थे ।

गीर्वाणवाणीहृदयमलंकुर्वत्सु रत्नहारेषु नूतनममूल्यं इमं रत्नहारं संयोजितवत्सु एषु सहृदयविद्वद्वरेण्येषु नूनं संस्कृतवाङ्मयोद्यानविहाररसिकाः, विशिष्य अलंकारशास्त्ररसिकाः अत्यन्तमधमर्णा एवेति हार्दं भावयामो वयम् । एवमेव अनेकग्रन्थरचनया इतोऽप्यधमर्णयन्त्वस्मान् एते विद्वद्वरेण्या इत्याशास्महे ॥

नव्यमङ्गलाभिजनः
पण्डितरत्नं वरदाचार्यः
विश्रान्तप्राच्यविद्यासंशोधकः
ओरियण्टल् रीसर्च इन्स्टयूट्
विश्वविद्यालयः
मैसूरु



सोमयाजियाण्डान् श्री रामस्वामि ऐय्यङ्गार्यः
न्याय अलङ्कार व्याकरण विद्वान् अलङ्कार शास्त्र प्राध्यापकः
श्रीमन्महाराज संस्कृत महापाठशाला, मैसूरु

॥ श्रीः ॥

# तत्वालोकव्याख्याकृत्परिचयः

विद्यया पितृसदृशानां गुरुचरणानां परिचयः विद्वत्समाजं प्रति क्रियते मया इति यत् तदेव महत्प्रमोदस्थानम् । तत्कर्तव्यं महत्या प्रीत्या भक्त्या च कर्तुं समुत्सुकं मदीयं मनः । मदीये जीवने एतदतिरिक्तं कर्तव्यं नास्त्येवान्यत् ! विद्याभ्यासमये विद्यां तदनुगुणमानुकूल्यं च परिकल्प्य मामनुगृह्य सुखेन सन्तोषेण च जीवितुं निदानभूतानां गुरुपादानां वंशविद्यादिपरिचयकरणे बद्धादरोऽहं यथामति प्रयतिष्ये ॥

भारतं कर्मभूमिरिति प्रसिद्धम् । अत्र महान्तः ऋषयः मुनयः महाकवयः, धर्मप्रवर्तकाः, मतप्रवर्तकाः, विद्वांसश्च समुद्भूता इति विदितचरमेव समेषां विदुषाम् । तत्रापि विशेषतः दक्षिणभारतं विविधासु विद्यासु, बह्वीषु कलासु च सुविख्यातमिति सुविदितमेव खलु । तत्र दक्षिणभारते चोलमण्डलमेकम् । तस्मिन् चोळमण्डले काञ्ची विख्याता पुरी । तत्समीपवर्तिन्याः अहीन्द्रपुर्याः परिसरे श्रीमङ्गलो नामाऽग्रहारः । यस्तु वेदशास्त्रविज्ञानामावासभूमिः ॥

तत्र ९५० वर्षतः पूर्वं यज्ञदीक्षितनामानः आत्रेयसगोत्राः, आपस्तम्बसूत्राः यजुश्शाखाध्यायिनः आसन् । मङ्गवल्लीनाम्नी एतेषां सहधर्मिणी । सा च श्रीभूतपुरीस्थहारीतकुलतिलकस्य श्रीमतः केशवसोमयाजिनः पुत्री विशिष्टाद्वैतसिद्धान्तप्रतिष्ठापकानां भगवतां रामानुजाचार्याणां सोदरी च । तयोर्दम्पत्योः कलेः ४१३५ तमे शालिवाहनशकस्य ९५६ क्रि. श., १०३३ तमभाववत्सरीय मिथुनशुक्लसप्तमीशुक्रवासरयुते पूर्वफल्गुनीनक्षत्रे श्रीराममिश्रमहादेशिकाः अवतेरुः ।ये च मातुलभावमधिजग्मुषां भगवद्रामानुजाचार्याणां सकाशात् अधिगतब्रह्मविद्यावैभवाः, स्वपितुरधि

गतवेदवेदान्तन्यायव्याकरणमीमांसाशास्त्रेषु च प्राप्तान्याद्ग्रपाण्डित्याः, कुरुकेश्वरादधिगतद्राविडाम्नायभाष्याश्च । तदनु श्रीभाष्यविवरणादीन् १६ ग्रन्थाननुगृह्य श्रीभाष्यभगवद्विषयोभयसिंहासनाधिपत्ये भगवता भाष्यकृता प्रतिष्ठिताः ॥

चोलोपद्रवकारणेन भगवद्रामानुजाचार्याः कर्णाटकदेशमिमं आगत्य यादवाद्रौ[मेलुकोटे]न्यवसन् । कदाचित् हासनजिल्लायाः परिसरे कावेरीतटे वसिष्ठेन समं संस्पर्ध्य, गायत्रीं विस्मृत्य पुनरपि वसिष्ठोपदेशात् गायत्रीमुपलभ्य विश्वामित्रेण प्रत्यक्षीकृतगायत्रीके रामनाथपुरक्षेत्रे भगवद्रामानुजाचार्यसान्निध्ये सोमयागमनुष्ठाय तेरेव [शोमयाजियाण्डान् इति] शोमाशियाण्डान् इति द्राविडनाम्ना, क्रतुनाथार्यः इति संस्कृतनाम्ना च आहूताः । तदाप्रभृति एते श्रीराममिश्राः शोमाशियाण्डान् इति प्रसिद्धाः अभूवन् । एतद्वंशीयाश्च कारणान्तरेण यादवाद्रिं परित्यज्य तृणगर्तपुर्यां [हुलुगुण्डि] शान्तिग्रामे शोभाञ्जनग्रामे च न्यवसन् ।

तेषु ग्रामेषु शोभाञ्जनो नामः [नुग्गेहळ्ळि] विख्यातः, यत्र च वेद न्यायव्याकरणमीमांसावेदान्तेषु पारङ्गताः भूयांसः पण्डिताः आसन् । तस्य विद्वत्परिषदि श्रीराममिश्राचार्यनामानः [क्रि. श. १८४२–१९१५] बहुश्रुताः विद्वांसः । एते एव एतद्ग्रन्थव्याख्यातॄणां पितामहचरणाः । दक्षिणदेशे 'तार्किकसिंह: ' इति कर्णाटदेशे पुनः 'पुराणसिंह' इति उपाधिरेतेषाम् । एभिश्च पण्डितरत्नं कविवरदाचार्येभ्यः न्यायशास्त्रमधीतम् । एवं च सहाध्यायिनः श्रीजगद्गुरुशङ्कराचार्यपीठाधिकृता श्रीनृसिंह भारतीस्वामिनः [पूर्वाश्रमे] आसन् । तिरुप्पुकुळि महामहोपाध्यायाः श्रीकृष्णताताचार्यमहोदयाः एतेषां सुहृदः ॥

एषां विद्वद्वरेण्यानां श्रीनिवासराघवाचार्य-नरसिंहाचार्य-जनार्दनाचार्य

सम्पत्कुमाराचार्याः इति चत्वारः पुत्राः समजनिषत । सर्वे च वेद-वेदान्त-प्राचीनन्यायनवीनन्यायव्याकरणादिशास्त्रेषु निष्णाताः । एषु मध्ये विद्वांसः सो. जनार्दनाचार्याः श्रीराममिश्राचार्याणां तृतीयपुत्राः । वेदवेदान्तव्याकरणालङ्कारेषु निपुणाः जन्मकवयः साहितीरसिकाश्च क्रि.श १८९१–१९८१ अवधौ आसन् । 'भगवद्रामानजचरितादर्शं' इति पद्यात्मकं काव्यमेकम्, चेन्नकेशवदेवस्य पादादिकेशान्तस्तुतिः, लक्ष्मीस्तवश्चेति गद्यात्मकं काव्यद्वयं विलिखितमेतैर्महानुभावैः । एषां सहधर्मिणी श्रीमती सीताम्बा, अनयोः ज्येष्ठपुत्राः सो. रामस्वामि ऐय्यङ्गार्यमहोदयाः । एते एव अस्य चित्रमीमांसाव्याख्यानस्य तत्वालोकस्य निर्मातारः ॥

२०-८-१९२५ तमे क्रिस्ताब्दे एतेषां जन्म नुग्गेहळ्ळिग्रामे समभूत् । तातपादा एव आद्यगुरवः । तेष्वेव प्रायः व्याकरणालङ्कार-वेदान्त ग्रन्थाः अधीताः । ज्येष्ठपितृव्येषु विद्वत्सु श्रीनिवासराघवाचार्येषु वेदाध्ययनं मुक्तावलीग्रन्थाध्ययनं च कृतमेतैः । मैसूरु प्राच्यविद्यासंशोधनालये प्रधानपण्डितस्थाने तदानीं विराजिताः आस्थानविद्वांसः सो. नरसिंहाचार्याः कृष्णराजकलोदयनामकचम्पूकाराः तर्कशास्त्रे गुरवः । एते अस्य ग्रन्थकृतः द्वितीयपितृव्यपादाः ।एभिरेते बहूपकृताः । अतः सो. नरसिंहाचार्याः एषां जीवने प्रातःस्मरणीयाः ॥

एते रामस्वमिऐय्यङ्गार्याः विशेषाध्ययनार्थं बाल्ये एव मैसूरुनगरं प्रति आगताः । अत्रत्या श्रीमन्महाराजसंस्कृतपाठशालैव एतेषाम् आवासभूमिः अध्ययनभूमिः कर्मभूमिश्च । अस्यां कलाशालायां न्यायशास्त्रे विशेषतः अध्ययनं आस्थानमहाविद्वद्भ्यः धारापुरं कृष्णमूर्त्याचार्येभ्यः, आस्थान-धर्माधिकारि पण्डितरत्नं वेङ्कटेशशास्त्रिभ्यश्च कृतम् । व्याकरणशास्त्रे पुनः आस्थानविद्वद्भ्यः कृष्णदेशिकाचार्येभ्यः तथा विद्वद्भ्यः टि. सीता

**रामशास्त्रिभ्यश्च** अध्ययनं कृतम् । **अलङ्कारशास्त्रे तु आस्थानमहाविद्वद्भ्यः सङ्गीवट्टं वेङ्कटाचार्यमहोदयेभ्यः** अध्ययनं कृतम् ॥

एतेषां बोधनोपदेशमार्गदर्शनानि लब्ध्वा, तर्क-व्याकरणालङ्कारशास्त्रेषु इदमित्थमिति ज्ञानं सम्प्राप्य विद्वत्पदवीधराः समभूवन् । तदनन्तरं अत्रैव कलाशालायां १९५१ तमे क्रिस्ताब्दे अलङ्कारशास्त्रोपप्राध्यापकस्थाने नियुक्ताः सन्तः १९७६ तमक्रिस्ताब्दप्रभृति अलङ्कारशास्त्रप्राध्यापकस्थाने विराजमानाः, १९८५ आगस्ट्मासं यावत् प्रवचनादिकं कृत्वा ततः विश्रान्ता अभूवन् । चतुस्त्रिंशद्वर्षपर्यन्तं शास्त्राध्यापनकर्म प्रामाणिकतया कृतमेतैः । परस्सहस्राः विद्यार्थिनः एतेषां वर्तन्ते । असीमपाण्डित्यं, हृदयावर्जकबोधनशैली निष्कृष्टपरिज्ञानं च एतेषां विशेषता । अध्यापनकाल एव छात्राणामानुकूल्यार्थं किं कर्तव्यम् ? शास्त्रप्रसारणे कः पन्थाः अनुसर्तव्य ? इत्यादि चिन्ता एतेषां मनसि । तदर्थमेव १९६८ तमे क्रिस्ताब्दे **'श्री राममिश्रसंस्कृतविद्यापीठम्'** इति एकः संस्कृतविद्यालयः स्थापितः । तत्र **अयं जनः प्रथमः छात्रः अभवत्**। अत्र कर्णाटकसर्वकारीय प्रथमकाव्य लक्ष्ये प्रारब्धे । तद्द्वारा बहवो विद्यार्थिनः संस्कृतगङ्गायां स्नापिताः ।

बालकानां कृते, संस्कृतप्रवेशने सौलभ्यं सम्पादयितु **संस्कृतबालबोधिनी** इति बाल्य पाठ्यपुस्तकं भागत्रयात्मना विरचितम् । अधुना भागद्वयं विद्यापीठद्वारा प्रकाशितम् । तृतीयो भागः मुद्रणार्थं सिद्धः । **संस्कृतवाक्यरचना'** इति अपरं पुस्तकमेतैः कृतम् । तत्तु १९७०-१९७३ तमे अवधौ कर्णाटकसर्वकारीयकाव्यपरीक्षायाः पाठ्यपुस्तकमासीत् । अपूर्वाः व्यवहारोपयोगिनः-प्रयोगाः व्याकरणविषयाश्च अत्र भाषान्तररूपेण निरूपिताः । बाल्याभ्यासिनां इदमतीव सुलभसाधनं भवितुं योग्यमस्ति । एवमेव 'मुकुन्दमालास्तोत्रम्' इति शिरोनाम्ना स्तोत्रसङ्ग्रहरूपः कश्चन ग्रन्थः ग्रथितः मुद्रितश्च वर्तते । ग्रन्थरचनाचातुरी, निरूपणक्रमश्च अनुसरणयोग्यः इत्युक्तेः नातिशयोक्तिता ।

एषां च शास्त्रपाण्डित्यमप्यगाधम्। अप्पय्यदीक्षितविरचित **चित्रमीमांसा-ग्रन्थस्य** तत्काले उपयुक्तं व्याख्यानमेव नासीत् । तदेतन्मनसि चिन्तयित्वा १९६३ तमं वर्षमारभ्य १९६७ तमेवर्षे एतैः स्वोपज्ञतया **'तत्वालोक' इति नामकं व्याख्यानं** रचितम्। किन्तु धनाभावात् प्रोत्साहाभावाच्च तन्न मुद्रापितम् सद्रणार्थं बहुधा प्रयत्नः कृतः तत्र अथापि लाभो नाभवत । तदा औदासीन्यमेवैतैः स्वीकृतम् ॥

१९७० तमे वर्षे केरले चित्रमीमांसायाः सुधानामकं व्याख्यानं रचितं मुद्रापितं च । तत् दृष्ट्वा तद्व्याख्याशैली अन्या ममच व्याख्याशैली अपरेति ज्ञात्वापि मौनमेवाश्रितम् । अनतिक्रमणीयत्वाद्विधेः मनुष्यचिन्तायाः दैवचिन्ता हि बलीयसी । यद्भाव्यं तद्भवत्येव । अत्र नुसमयः सम्प्राप्तः । तत्वालोक व्याख्यानमिदमधुना प्रफुल्लितमस्ति केन्द्रसर्वकारसाहाय्यमप्यधुना लब्धम् । विदुषां योग्यतायाः मूल्यं प्राप्तमद्य । 'न निश्चितार्थाद्विरमन्ति धीराः' इति अस्य वाक्यस्य अन्वर्थता जाता । भगवति भारं निधाय कार्यमारब्धमेव । इदानीं तत्वालोकस्य **प्रथमो भागः प्रकाशितः** ॥

अस्मिन् प्रथमभागे **काव्यप्रकरणम्, उपमाप्रकरणम्, अनन्वयप्रकरणम्, उपमेयोपमा प्रकरणम्, स्मरणालङ्कार प्रकरणमिति** पञ्च प्रकरणानि सन्ति। प्रथमे प्रकरणे ध्वनिकाव्यम्,गुणीभूतव्यङ्ग्यकाव्यम्, द्वितीये चित्रकाव्येषु प्रधानतमायाः उपमायाः निरूपणं सप्रभेदं निरूपितम् । तृतीये अनन्वयस्य, चतुर्थे उपमेयोपमायाः पञ्चमे स्मरणस्य च निरूपणं यथा अप्पय्यदीक्षितैः-कृतम् तदनुगुणतया व्याख्यानं सम्यक् कृतमस्ति । प्राचीनालङ्कारिकाणां मतानि तत्र तत्र उद्धृत्य स्वाभिप्रायमपि अनेकत्र प्रदर्श्य ग्रन्थकृदाशयं सम्यक् प्रदर्श्य हृदयङ्गमतया व्याख्यानं कृतमस्ति । सुलभा शैली । अदीर्घसमासः । सरल-पदानि वाक्यानि इत्येते अत्रत्या विशेषाः । अलङ्कारशास्त्रे प्रसिद्धस्य चित्र-मीमांसाग्रन्थस्य व्याख्यानाभावकाले एव विस्तृतं व्याख्यानमेतैः रचितमासीत्

इति चेत् तत्तु न सुलभसाध्यं कर्म । असाध्यमपि साधितमेतैः । एतदर्थमेव अमी प्रशंसाभाजः ॥

एतेषां सामर्थ्यं पाण्डित्ये विद्याप्रसारणे च सम्यक् ज्ञात्वा श्रीमत्परमहंस परिव्राजकाचार्य श्रीमज्जगद्गुरुश्रीशङ्कराचार्यं परमपूज्य श्रीराघवेन्द्रभारती महास्वामिभिः 'पण्डितप्रवराः' इति बिरुदमेकं प्रदत्तम् । अस्य अन्वर्थभाजः एते। मन्त्रालयविद्वत्सभासु बहुवारं गत्वा स्वकीयं शास्त्रपाण्डित्यं प्रकाशितवन्तः । निवृत्त्यनन्तरमपि एतैः तूष्णीं नोपविष्टम् । यतः ज्ञानदाहः अधिकतमः आसीत्खलु । यादवाद्रिस्थ [मेलुकोटे] संस्कृतसंशोधनासंसदि उपनिषत्संशोधना विभागे मासषट्कं यावत् अध्यक्षपदव्यां कार्यं सुष्टु कृतम् । ततः देहालस्यकारणात् विरामः स्वीकृतः ।

गरीयसि श्रेयसि केन तृप्यते । एवमेव एतैरपि ज्ञानप्रसरणविषये सर्वदाऽतीवोत्साहः प्रदर्शितः । अमरसिंहकृताऽमरकोशस्य पर्यायविरामनिर्देशपूर्वक कर्णाटकटीकां विरच्य दिग्वर्गपर्यन्तं मुद्रापितमेतैः । तत्तु महताक्लेशकारणेन स्थगितमस्ति । भगवति प्रार्थयेऽहम् । सः एतेषां महतीं शक्तिम् अनुगृह्य तत्कर्म समापयतु इति । अनेन विद्वत्समाजं प्रति बहूपकारः स्यात् ।

परमकारुणिकाः विद्यापक्षपातिनश्च एते । एषां करुणाप्रवाहे निमग्नोऽयं जनः तेषामनुग्रहेण प्रोत्साहनेन च एतादृशि गौरवस्थाने वर्तते इति वक्तुमानन्दो भवति । अकिञ्चनस्यास्य जनस्यानुकूल्यं परिकल्प्य पुत्रवत् विद्यामुपदिश्य जीवनानुभवं सम्बोध्य महोपकारं कृतवन्तः एतदविस्मरणीयं चिरस्मरणीयं च । दशवर्षपर्यन्तं स्वकीये विद्यापीठे शिक्षकवृत्तिमुपकल्प्य अमुं जनं बहिः प्रकाशितवन्तः ॥

धन्योऽयं जनः । गुरुपादानां परिचयकरणे लब्धावकाशः, स्वकीयं

ऋषिऋणमेवंरीत्या प्रत्यर्पयति । एतदर्थं महानानन्दो जायते । चिरं विलसन्तु गुरुपादाः ।

एतेषामानन्दमयः संसारः । पत्नी लक्ष्मीः भाग्यलक्ष्मीरेव । गुरुचरणानां विद्याप्रसारणकर्मणि, इतरेषु विषयेषु च सहधर्मचारिण्येषा । अस्याः करुणासागरेऽपि निमग्नोऽयं जनः सकार्तज्ञं नमोवाकमर्पयति । एका पुत्री द्वौ पुत्रौ च एतेषाम् । सर्वेऽपि संस्कृतविद्वांसः संस्कृताभिमानिनश्च । तादृशः अपूर्वसंगमः अपूर्व एव ।

एतादृशगुरुचरणानामिदं सार्थकं कर्म सर्वानानन्दयतु । विदुषां समाजे अभूतपूर्वां प्रशंसां लभताम् । भगवान् लक्ष्मीरमणः सकलसन्मङ्गलानि विदधातु इति सम्प्रार्थ्य गुरूणां पादारविन्दयोः भूयांसि नमांसि समर्प्य विरमत्ययंजनः

इति सज्जनविधेयः

अलंकारव्याकरणशास्त्रविद्वान्

टि. वि. सत्यनारायणः. एम्. ए.

संशोधकः

12-10-1988

प्राच्यविद्यासंशोधनालयः

मैसूरु

॥ इति शम् ॥

श्रीः

शुभमस्तु

श्रीमते हयग्रीवाय नमः

## ॥ कृतज्ञता निवेदनम् ॥

अस्ति किल भारते **कर्णाटदेशः**। तत्र च **महीशूरपुरी नाम** नगरी चकास्ति। इयं च क्रि० श० १५६५ परतः यदुवंशीयानां राज्ञा मावासभूमिः अभूत्। इमां, च नगरीमधिष्ठाय परिपालयमानानामेषां राज्ञां वंशीयैः **मुम्मुडि कृष्णराज ओडयर् महाराजैः** १८६८ तमे क्रिस्ताब्दे अत्रत्या श्रीमन्महाराजसंस्कृतमहापाठशाला उपक्रान्ता। ततश्च तदात्वे प्रधानामात्यैः **दिवान्. रङ्गाचार्लु महोदयैः** सरस्वतीप्रासादाख्यया प्रतिष्ठापिता।

अस्यां च पाठशालायां प्रप्रथमं न्याय-व्याकरणशास्त्रयोरऽध्यापन मुपक्रान्तम्। कालक्रमेणेयं ऋग्यजुषोः शास्त्रान्तरेषु च प्रवचनमुपक्रम्य अभिवर्धितुम् आरभे।

तदात्वे च **पण्डितरत्नं कविवरदाचार्याः** न्यायादिशास्त्रेषु प्रवक्तारः आसन्। येषु न्यायशास्त्रमधीतवन्तोऽस्मत्पितामहाः **श्रीराम मिश्रार्याः**, येषां च शृङ्गेरीपीठाधिपतयः **जगद्गुरु श्रीनरसिंहभारती स्वामिनः** (पूर्वाश्रमे) सहाध्यायिनः आसन्।

अस्यामेव पाठशालायां सामवेदे वेदभाष्ये संगीतकलायम् साहित्ये आयुर्वेदे च अध्ययनाध्यापनादिकमारब्धम्। तदनु १८९० तम क्रिस्ता

न्दतः द्वैताद्वैतविशिष्टाद्वैतशाखाः उपक्रान्ताः । तदानीं च महामहोपाध्यायाः श्रीविरूपाक्षशास्त्रिणः अद्वैतेऽध्यापकाः आसन् , येषु नाल्वडि कृष्णराज ओडेयर् महाशयाः वेदान्त शास्त्रमधिजग्मुः । तत्रैव च विशिष्टाद्वैतप्राध्यापकेषु महामहोपाध्याय श्री लक्ष्मीपुरं श्रीनिवासाचार्येषु भूतपूर्व राष्ट्रपतयः डा. एस्. राधाकृष्णन् महोदयाः तथा महीशूरपुरीविश्वविद्यालय संस्कृतविभागाध्यक्षाः प्रो. एम. हिरियण्णा महोदयाश्च भारतीयतत्त्वशास्त्रं गाढतया अधिजग्मुः ।

१९०७ तम क्रिस्ताब्दे आयुर्वेमहाविद्यालयः संगीतविद्यालयश्च पृथक्कृतः ।

श्रीमन्नाल्वडि कृष्णराज ओडेयर महाशयानां शासनसमये अस्यामेव शालायां ( A D 1884--1966 समये श्री ब्रह्मतन्त्रपरकाल स्वान्यां विराजिनाः श्रीमदभिनव रंगनाथ ब्रह्मतन्त्रपरकालस्वामिनः, [पूर्वाश्रमे], एषां सुहृदः अस्मत्पितृव्यपादाः आस्थानविद्वांसः सो. नरसिंहाचार्याः, अस्मत् पितृपादाः विद्वांसः सो. जनार्दनाचार्याश्च शास्त्राणि अध्यगमन् ।

[ A D 1919–1974 ] अवधौ श्रीजयचामराजेन्द्र ओडेयर महाशयानां शासन समये १९४१ तमे क्रिस्तवर्षे अहमत्रागत्य तदानीम् अस्मत्पितृव्यपादानां चतुश्शास्त्रपण्डितानामास्थानविदुषां सो.नरसिंहाचार्याणां आश्रये वेद-प्रबन्धयोः शास्त्रेषु च किञ्चित्किञ्चिदध्ययनं कृतवान् । प्रायः साहित्य-व्याकरणालंकारवेदान्तेष प्रौढाः ग्रन्थाःअस्मत्तातपादेभ्यो विद्वद्भयः सो. जनार्दनाचार्येभ्य एव अधीताः ।

पश्चाच्च अस्यां शालायां १९४३–४४ तमे क्रिस्ताब्दे प्रवेश

परीक्षायामुत्तीर्य न्यायालङ्कारव्याकरणशास्त्रेषु क्रमात् १९४९, १९५२ १९५३ क्रिस्ताब्देषु विद्वत्परीक्षा दत्ता ।

यदा अलङ्कारशास्त्रेऽध्येतुं आस्थानमहाविद्वत्सु अस्यामेव शालायाम् अलङ्कारशास्त्रप्राध्यापकेषु **संकीघट्ट वेङ्कटाचार्येषु** उपक्रान्त तदानीमेव अधीतशास्त्रान्तरेणापि मया चित्रमीमांसाध्ययनसमये काठिन्यमनुभूतम् । अथापि व्याख्यानकरणे क्लेशो भवेतेति व्याख्यातुं प्रवृत्तिर्नासीत ।

यदा पुनरस्यामेव शालायां १९५३ **तमे** वर्षे **अलंकारशास्त्रोप प्राध्यापकस्थाने** नियुक्तः तदानीं कतिपयवत्सरेषु गतेषु प्रायः १९६२ तमे वर्षे चित्रमीमांसा अध्यापयितव्या आसीत् । तदानीं च चि॥ **हिरियण्णभट्ट--रामचन्द्रभट्टयोः** शिष्ययोः प्रेरणया तद्व्याख्याकरणे प्रवृत्तिः समुत्पन्ना ।

ततो मातृकासम्पादनार्थं यत्न आरब्धः, तिस्रो मातृकाः उपलब्धाः । तासु—

१) निर्णयसागरमुद्रिता [ संस्कृतलिपिमयी ]
२) कलकत्तामुद्रिता [ ,, ]
३) अस्मदीयपाठशालायाः सरस्वती भाण्डागारस्था तेलुगु लिपिमयी अशुद्धा च

एतन्मातृकात्रयम् अलंकारग्रन्थान्तराणि च परिशील्य १९६३- **तमे उपक्रम्य १९६७ तमे क्रिस्ताब्दे** व्याख्या परिसमापिता । मुद्रणार्थं च प्रयत्य दुष्करमिति मत्वा उदासीनेन मया स्थितम् ।

व्याख्याकरणे च प्रतिव्यक्ति उद्देशो विभिन्नो भवति । मम तु अधीयानानां विद्यार्थिनां प्राचीनरीतिमपरित्यज्य नव्यरीतिमप्यवलम्ब्य सौलभ्य

सम्पादनमेव मुख्य उद्देशः, परन्तु यत्र यत्र खण्डनकारैः व्याख्यातृभिश्च ग्रन्थकृदाशयः अन्यथाकृतः क्वचित् क्वचित् ग्रन्थकृतापि प्राचमाशयो ऽन्यथा नीतः तत्र तत्र विवेचनमपि यथामति कृतम् ।

अस्यां चित्रमीमांसायां प्राचीनलक्ष्यलक्षणपरिग्रहे तत्परित्यागे च ग्रन्थकृतः महती सूक्ष्मेक्षिका वर्तते । तदेतत्र तत्र प्रदर्शितम् ।

आग्रहगृहीतानां तत्वावगमो न सुलभः अत एवाकाण्डेऽपि खण्डने प्रवृत्तिः । तादृशस्थलेषु तत्वमधिगन्तुं यत्नः कृतः । अत एव परिश्रमाधिक्यम् ।

वस्तुत - 'कुतो वा नूतनंवस्तु वयमुत्प्रेक्षितुं क्षमाः' इत्युक्तरीत्या अभिनवविषयोल्लेखे न मम प्रवृत्तिः । किन्तु वास्तवांशाविष्करणे इति एतद्व्याख्यावलोककानां ज्ञायत एवेत्यलं विस्तरेण ।

पुनरपि कतिपयवर्षेषु गतेषु कापि [ Copy ] करणार्थं १९७७ तमे क्रिस्ताब्दे उपक्रम्य १९७८ तमे वर्षे परिसमापिता ।

तदनन्तरं च (९) नवसु वर्षेषु गतेषु १९८५ तमे क्रि शके कार्यान्तरपरेण महीशूरपुरीतः कल्याणनगरीं प्रति [ Bangalore ] गतेन मया विधानसौधे तदानीं **कर्णाटकराज्यसर्वकारीयशिक्षणमुख्यकार्यदर्शिनः सम्मान्याः ए. भरत् I.A.S महाशयाः अवलोकिताः ।**

तदनन्तरं च तेषु एतद्व्याख्याविषये मुद्राणार्थं विज्ञापना कृता । पश्चात् आलोच्य केन्द्रसर्वकारद्वारा साहाय्यं कारयितुं मनश्चक्रुः । ततश्च १९८६ तमवत्सरीय फेब्रवरीमासे एतद्ग्रन्थमुद्रणार्थं साहाय्यं केन्द्रसर्वकारद्वारा अनुमोदितम् ।

न्थापनल् कालेज् विद्यालये भूतपूर्वसंस्कृताध्यापकानां संस्कृत-हिन्दी आंग्लभाषासु निशितमतीनां विदुषां M.A. इत्युपाधिधारिणां श्रीमतां H. S. वरदेशिकाचार्याणां सविधे अभ्यस्तसंस्कृतविद्यानां एतन्मुद्रणार्थं केन्द्रसर्वकारद्वारा सुबहु साहाय्यं कारितवताम् सुसंस्कृतानाम् महाकुलीनानाम् उदारमनसाम् मृदुमनसाम् वाग्मिनाम् मेधाविनाञ्च ए. भरत् I. A.S. महाशयानाम् अनन्तानन्तान् धन्यवादान् कृतज्ञतापुरस्सरान् अर्पयामि ।

एवं एतद्ग्रन्थमुद्रणाय अत्यधिकप्रमाणेन द्रविणसाहाय्यं कृतवतां केन्द्रसर्वकारीय Ministry fo Human Resource Devlopment, Govt of India अधिकारिणाम् परश्शतं धन्यवादान् निवेदयामि ।

तथा अस्याश्चित्रमीमांसायाः स्मरणालंकारान्तं संख्याख्यं प्रथमं भागं अवलोक्य निरवग्रहेण अनुग्रहेण सुविस्तरं सन्देशं सम्प्रेष्य 'पण्डितप्रवरः' इति उपाधिप्रदानेन चानुगृह्य संभाव्य औदार्यं विद्वत्पक्षपातित्वं च प्रकाशितवताम् श्री संस्थानगोकर्णमण्डलाधीश्वराणाम् शिवमोग्गाजिल्ला होसनगरतालूकस्थितश्रीमद्रामचन्द्रापुरमठाधीश्वराणाम् पदवाक्य प्रमाण पारावारीण श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमज्जगद्गुरुशंकराचार्य परमपूज्य श्री राघवेन्द्रभारतीमहास्वामिनां चरणारविन्दयोः कृतज्ञता भक्तिपुरस्सरान् धन्यवादान् नमांसि चोपहरामि ।

तथैव अस्याः तत्त्वालोकव्याख्यायाः आङ्ग्ल भाषोपनिबद्धां प्रस्तावनां लिखित्वा अत्यन्तमुपकृतवताम्, साहित्यशिरोमणीनाम् , राज्यप्रशस्ति विजेतृणाम् महीशूरपुरी विश्वविद्यालयाद्विश्रान्तसंस्कृतप्राध्यापकानाम्

सम्पादनमेव मुख्य उद्देशः, परन्तु यत्र यत्र खण्डनकारैः व्याख्यातृभिश्च ग्रन्थकृदाशयः अन्यथाकृतः क्वचित् क्वचित् ग्रन्थकृतापि प्राचमाशयो ऽन्यथा नीतः तत्र तत्र विवेचनमपि यथामति कृतम् ।

अस्यां चित्रमीमांसायां प्राचीनलक्ष्यलक्षणपरिग्रहे तत्परित्यागे च ग्रन्थकृतः महती सूक्ष्मेक्षिका वर्तते । तदेतत्र तत्र प्रदर्शितम् ।

आग्रहगृहीतानां तत्वावगमो न सुलभः अत एवाकाण्डेऽपि खण्डने प्रवृत्तिः । तादृशस्थलेषु तत्वमधिगन्तुं यत्नः कृतः । अत एव परिश्रमाधिक्यम् ।

वस्तुत - 'कुतो वा नूतनंवस्तु वयमुत्प्रेक्षितुं क्षमाः' इत्युक्तरीत्या अभिनवविषयोल्लेखे न मम प्रवृत्तिः । किन्तु वास्तवांशाविष्करणे इति एतद्व्याख्यावलोककानां ज्ञायत एवेत्यलं विस्तरेण ।

पुनरपि कतिपयवर्षेषु गतेषु कापि [ Copy ] करणार्थं १९७७ तमे क्रिस्ताब्दे उपक्रम्य १९७८ तमे वर्षे परिसमापिता ।

तदनन्तरं च ( ९ ) नवसु वर्षेषु गतेषु १९८५ तमे क्रि शके कार्यान्तरपरेण महीशूरपुरीतः कल्याणनगरीं प्रति [ Bangalore ] गतेन मया विधानसौधे तदानीं **कर्णाटकराज्यसर्वकारीयशिक्षणमुख्यकार्यदर्शिनः सम्मान्याः ए. भरत् I.A.S महाशयाः अवलोकिताः ।**

तदनन्तरं च तेषु एतद्व्याख्याविषये मुद्राणार्थं विज्ञापना कृता । पश्चात् आलोच्य केन्द्रसर्वकारद्वारा साहाय्यं कारयितुं मनश्चक्रुः । ततश्च १९८६ तमवत्सरीय फेब्रवरीमासे एतद्ग्रन्थमुद्रणार्थं साहाय्यं केन्द्रसर्वकारद्वारा अनुमोदितम् ।

न्थापनल् कालेज् विद्यालये भूतपूर्वसंस्कृताध्यापकानां संस्कृत-हिन्दी आंग्लभाषासु निशितमतीनां विदुषां M.A. इत्युपाधिधारिणां श्रीमतां H. S. वरददेशिकाचार्याणां सविधे अभ्यस्तसंस्कृतविद्यानां एतन्मुद्रणार्थं केन्द्रसर्वकारद्वारा सुबहु साहाय्यं कारितवताम् सुसंस्कृतानाम् महाकुलीनानाम् उदारमनसाम् मृदुमनसाम् वाग्मिनाम् मेधाविनाञ्च ए. भरत् I. A.S. महाशयानाम् अनन्तानन्तान् धन्यवादान् कृतज्ञतापुरस्सरान् अर्पयामि ।

एवं एतद्ग्रन्थमुद्रणाय अस्याविक्रयप्रमाणेन द्रविणसाहाय्यं कृतवतां **केन्द्रसर्वकारीय** Ministry fo Human Resource Devlop ment, Govt of India अधिकारिणाञ्च परश्शतं धन्यवादान् निवेदयामि ।

तथा अस्याश्चित्रमीमांसायाः स्मरणालंकारान्तं संख्याख्यं प्रथमं भागं अवलोक्य निरवग्रहेण अनुग्रहेण सुविस्तरं सन्देशं सम्प्रेष्य '**पण्डितप्रवरः**' इति उपाधिप्रदानेन चानुगृह्य संभाव्य औदार्यं विद्वत्पक्षपातित्वं च प्रकाशितवताम् **श्री संस्थानगोकर्णमण्डलाधीश्वराणाम् शिवमोग्गाजिल्ला होसनगरताल्लूकस्थितश्रीमद्रामचन्द्रापुरमठाधीश्वराणाम् पदवाक्य प्रमाण पारावारीण श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमज्जगद्गुरुशंकराचार्य परमपूज्य श्री राघवेन्द्रभारतीमहास्वामिनां** चरणारविन्दयोः कृतज्ञता भक्तिपुरस्सरान् धन्यवादान् नमांसि चोपहरामि ।

तथैव अस्याः तत्त्वालोकव्याख्यायाः आङ्ग्ल भाषोपनिबद्धां प्रस्तावनां लिखित्वा अत्यन्तमुपकृतवताम्, **साहित्यशिरोमणीनाम्**, राज्यप्रशस्ति विजेतृणाम् महीशूरपुरी विश्वविद्यालयाद्विश्रान्तसंस्कृतप्राध्यापकानाम्

श्रीमताम् एस रामचन्द्रराव् M. A. महाशयानां सविनयान धन्यवादान् समर्पयामि ।

एवं बहुवित्तव्ययायाससाध्येऽप्येतद्व्याख्यासहितचित्रमीमांसाग्रन्थमुद्रण विषये औदासीन्यमवलम्बितवतो मम स्वीयमर्थक्लेशमपरिगणय्य मुद्रणसमये तत्तत्काले चितहितमितमृदुमधुरभाषणद्वारा अभिप्रायसूचनं दत्वा प्याराविभाग विषयसूचीप्रदानादिनाचोपकृतवताम् नैकशास्त्रकृतश्रमाणाम् महीशूरपुरीप्राच्य विद्यासंशोधनालये विश्रांतप्राच्यविद्यासंशोधकानाम् विमर्शकाणाम् नव्यमङ्गलाभिजनानाम् पण्डितरत्नं के. एस्. वरदाचार्याणाम् सप्र श्रयान् अनंतान् कृतज्ञतापुरस्सरान् धन्यवादानुपहरामि ।

तथा — व्याख्यातुर्मम परिचयं सविस्तरं दत्तवते तथैव अन्येषामपि मदीयग्रन्थानां प्रतिलिपिकरणे साहाय्यं च दत्तवते मत्प्रियान्तेवासिने व्याक रणा अलङ्कार विदुषे M. A. इत्युपाधिधारिणे प्राच्यविद्यासंशोधनालय संशोधकाय तलकाडु वेङ्कटदासप्पमहाशयानां पुत्राय वाग्मिने टि. वि. सत्यनारयणाय

एवं— मदीयचित्रमीमांसातत्वालोकव्याख्यायाः 1500 पुटमि तायाः प्रतिलिपिकरणाय मासत्रयाधिकसंवत्सरपर्यन्तं परिश्रान्ताय चिरञ्जीविने व्याकरणालङ्कार विदुषे M. A. पदवीधराय अस्मदीय श्रीरामिश्र संस्कृतविद्याशालायां तात्कालिकतया अध्यापकपदव्यामवस्थिताय N. R. मुरलीधराय च अनन्ता आशिषः आयुरारोग्यैश्वर्यादिकं च भगवान् प्रददातु इत्याशासे ।

एतद्ग्रन्थ मुद्रणसमये श्रीराघवेन्द्रभारतीस्वामिपादानाम् ममच प्रतिबिम्बं सम्यङ्मुद्राप्य सकाले दत्तवतां Mangala Art Printer च धन्यवादाः ।

एवं तत्त्वालोकव्याख्यासहितायाः चित्रमीमांसायाः उपमादि-स्मरणान्तं प्रथमं भागं सम्मुद्र्य उपकृतवतां जयन्तीमुद्रणालयाधिकृतानामपि धन्यवादाः ।

अत्र मदीयमतिमान्द्यप्रभवान् दोषान्, मुद्रणसमये सम्भावितांश्च दोषान् उपेक्षमाणाः अप्पय्यदीक्षितकृतग्रन्थगौरवसम्भाविनान् कांश्चिदपि वा गुणान् गृह्णन्तः तावतैव संतुष्यन्तश्च सन्तः क्षमन्तां मदीयां साहसिकीं प्रवृत्तिम् ।

तथा एतद्ग्रन्थकाठिन्यपरिजिहीर्षया कृतां व्याख्यामिमामुपयुज्य मदीयं श्रमं सार्थकयन्तु गुणगृह्याः विपश्चितः इति

प्रार्थयते

विदुषामनुचरः

सो. रामस्वामि ऐय्यङ्गार्यः

न्याय-अलङ्कार-व्याकरण विद्वान्

२९० सरस्वती सदनम्

सीताविलासाग्रहारः

मैसूरु ५७००२४

विभव. सं. पुष्य शुक्ल

द्वितीया श्रवणम्

ता 9-1-1989

॥ श्रीः ॥

# भूमिका

देवीं वाचमजनयन्त देवाः । तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना । धेनुर्वागस्मानुपसुष्टुतैतु ॥

[ तै० य० ब्रा अ २ प्र ४ अनु ६ पं ६० ]

यः पूर्वं परमेष्ठिने श्रुतिचयं दत्त्वाऽथ तस्याः श्रुतेः
सम्प्राप्ते मधुकैटभाख्यविबुधद्विड्भ्यां तदा चौर्यके ।
तावुन्मथ्य सुरद्विषौ पुनरपि प्रादाज्जगत्सृष्टये
सोऽसौ मे धिषणां दिशत्वभिनवामश्वाननः श्रेयसे ॥

अयि मान्याः वेदशास्त्रकृतश्रमाः साहित्यरसास्वादसुहिताः सहृदयहृदयतल्लजाः विदितमेवैतद्भवतां यत्सम्प्रदायप्रवर्तकाः मन्त्रद्रष्टारो वसिष्ठाद्याः देवाश्च बहुकालप्रयाससाध्येन तपसः प्रभावेण दृष्टां संस्कृतमिति नाम्ना व्यपदिष्टां वाणीं लोकहितायानुजगृहुः । अत एव अग्नावाहुतिसमये संस्कृतमन्त्ररूपां वाचमेवोपजीव्य "इन्द्राय स्वाहा, विष्णवे स्वाहा" इत्यादिरूपं सस्वरां आनुपूर्वीमुच्चार्य अस्माभिः दत्तां देवताः आहुतिं अश्नन्ति ।

सर्वेषामेव देवानां मन्त्रोच्चारणपूर्वकमेव दत्ता आहुतिः जीवितकारणम् । तयैव अवर्णात्मिकया वर्णात्मिकया च निसर्गसिद्धया निर्वहन्ति इति शास्त्रमर्यादा ।

यस्याश्च वाचः वैदिकलौकिकभेदे नभिन्नायाः अन्तं इन्द्रादयोऽपि द्रष्टुं न शक्नुवन्ति । उक्तं च **भगवतापतञ्जलिना महाभाष्ये**- एवं हि श्रूयते-" बृहस्पतिः इन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां

शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम " इति । तथा काव्यं मीमांसता राजशेखरेण चोद्धृतम्—

विद्यास्थानानां गन्तुमन्तं न शक्तो
जीवेद्वर्षाणां योऽपि साग्रं सहस्रम् ॥ इति

एवंविधा वाक् प्रथमतः परस्य ब्रह्मणो मुखात् एकपदी प्रणवात्मिका निर्गता । अनन्तरं व्याहृतित्रयरूपिणी, सावित्रीरूपिणी च निर्गता । ततो वेदचतुष्टयात्मिका चतुष्पदी विनिर्गता । तदनन्तरं च षड्भिः वेदाङ्गैः पुराणधर्मशास्त्राभ्यामष्टपदी । तदनु मीमांसा-न्याय-सांख्य-योग-पञ्चरात्र वैखानसपाशुपताद्यागमरूपैः, आयुर्वेद-धनुर्वेद गान्धर्ववेद-अर्थशास्त्रादिभिः नवाधिकपदी, ततोऽप्यनन्तवाक्यसन्दर्भैः अनन्तपदीत्याचक्षते त्रयीविदः ।

यद्वा 'एकाक्षरां द्विपदां षट्पदां च' इति श्रुतिप्रतिपादितरीत्या प्रथमं प्रणवात्मिका, ततस्संस्कृतापभ्रंशभेदेन द्वेधा तदनन्तरं च प्राकृत-शौरसेनी-मागधी-पैशाची-चूलिकापैशाची-अपभ्रंश इति भाषा भेदेन षोढा भिन्ना सर्वप्राणिनां प्राणनहेतुर्बभूवेत्यैतिह्यम् तच्च एतन्मन्त्र व्याख्यास्यता माधवाचार्येण, प्रदर्शितम् ।

समस्तेषु भूतेषु प्राणिनः श्रेष्ठाः, प्राणिनां बुद्धिजीविनः, बुद्धिजीविषु मानवाः श्रेष्ठाः, मानवेष्वपि ब्राह्मणाः, ब्राह्मणेषु च विद्वांसः, विद्वत्सु च शास्त्रेषु निश्चितज्ञानाः, निश्चितशास्त्रज्ञानिभ्योऽपि शास्त्रोक्तरीत्या अनुष्ठातारः, शास्त्रोक्तरीत्या अनुष्ठातृष्वपि ब्रह्मज्ञानिनः श्रेष्ठाः, इति उत्तरोत्तरं श्रेष्ठ्यं मनुना स्मृतम् । एवं

चतुर्थकक्ष्यामारूढो मानवोऽपि सदसद्विवेकपूर्वकं सर्वं कर्म न करोति चेत् सः आत्मोद्धरणाय न कस्मिन्नपि जन्मनि समर्थो भवेत्। अत एवच—

शुभानामशुभानां वा कर्मणां भृगुनन्दन।
सञ्चयः क्रियते लोके मनुष्यैरेव केवलम्॥

इति पारशरी स्मृति र्जागरयति।

यः मानवजन्म परिगृह्यापि विवेकशून्यः सः वाचिक मानस शारीरैः कर्मदोषैः क्रमेण—

वाचिकैः पक्षिमृगतां मानसैः अन्त्यजातिताम्।
शरीरजैः कर्मदोषैः याति स्थावरतां नरः॥

इत्युक्तरीत्या तिर्यगन्त्य-स्थावरजन्मपरिगृह्णातीति शास्त्रमेव उपदिशति। अतश्च हीनतरशरीरपरिग्रहहेतुभूतपापकर्माकरणाय शुभतरदेवादि परिग्रहहेतुभूतपुण्यकर्मकरणाय च अधिकृताः मानवाः विवेकिनो भूयासुः इति परमकृपालुः परमात्मा स्वयं स्वयम्भुवे वेदमुपदिश्य, तस्मिन् स्वयमन्तर्यामी भूत्वा —

सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥

इत्युक्तरीत्या नामरूपे व्याकृत्य,

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत्।
द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः॥

इत्युक्तरीत्या कर्तव्याकर्तव्यविवेकार्थं धर्मेण सुखम्, अधर्मेण दुःखं

चायोजयत् तद्विवरीतुं प्रवृत्ताः महर्षयः—

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात् ।

इत्यपि जन्मातरमनुभाव्यं भवतीति स्पष्टमभ्यधुः । तत्र तपोज्ञानयज्ञ दानात्मकचतुष्पाद्धर्मके सत्ययुगे सत्त्वप्रधाना मानवाः स्वं स्वं धर्मं बहुमन्यमानाः सुखदुःखे समे विभाव्य अनुभूयमानाः अवर्तन्त । रजो बहुले च त्रेतायुगे कालकर्मसंयोगात् चपलप्रकृतयः एकान्ततः सुखलिप्सवः दुःखपरिहाणेच्छवश्च अभूवन् । तदानीं च शास्त्रविहित कर्मसु दण्डधरेण राज्ञा प्रेरिता एव प्रवृत्ता आसन् ।

एवमेव वर्तमाने प्रेरणामन्तरा जनाः सन्मार्गे शिक्षिताः यथा स्वयं प्रवर्तेरन् तथाविधः कश्चनमार्गः अन्वेषणीयस्समापतितः ।

तदा महेन्द्रमुखैर्देवैः अभ्यर्थितो ब्रह्मा अभिनयप्रधानं नाट्य मार्गमवतारयामास । अवतारितं च नाट्यशास्त्रं भरतायोपदिदेश । भरतश्च स्वानुचरैः सह अभिनीय सर्वानापि मानवान् सुशिक्षितान् विधाय स्वस्वकर्मनिरतांश्चकार । अथापि कालक्रमेण सृष्टौ प्रतिचतुर्युगमध्य-यनानुष्ठानविषयकशक्तिह्रासदर्शनात् पारम्पर्येण सम्यगनुवृतोऽपि वेदवेदार्थोपदेशादिः कामक्रोधादिभिराक्रान्तः, अश्रद्धामलकलङ्कितः प्रत्यहमपचीयमानः परिदृश्यते । अस्य च कारणमुक्तं न्यायकुसुमाञ्जलौ उदयनाचार्यैः-

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ॥ इति

अतएव च वैदिके कर्ममार्गे प्रजानां सुखं खद्योतकल्पमेव अभवत् । यद्यपि

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात् तस्माद्धर्मं समाचरेत् ॥

इत्युक्तरीत्या धर्मस्य सुखमूलत्वज्ञानं जनानां नोदियाय । तथापि 'सुखं मे भूयात् दुःखं मे माभूत्' दिति मतिस्सुदृढैवासीत् । यदा जनाः सुखसाधनधर्मस्वरूपपरिज्ञानासमर्थाः अभवन् तदा शास्त्राणामुपक्रम आसीत । शास्त्रज्ञानेन च गुणदोषविचारः, युक्तायुक्तविचारः कर्तुंशक्यो नान्यथेति निश्चित्यैव आचार्यदण्डिना—

गुणदोषानशास्त्रज्ञः कथं विभजते जनः ।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥

इत्युक्तम् , अतश्च सर्वशास्त्रहृदयप्रतिपादकर्क कमनीयं लघु च साहित्यापरनामधेयं अलङ्कारशास्त्रम् अवतरणीयं संवृत्तम् ।

अस्मिश्चालङ्कारशास्त्रे प्रवेशः न्याय व्याकरण मीमांसादिष्वपरिणतस्य दुष्कर एव । अयमेवाभिप्रायः काव्यमीमांसायां राजशेखरेण "शास्त्रपूर्वकत्वात्काव्यानां पूर्वं शास्त्रेष्वभिनिविशेत । न ह्यप्रवर्तिदीपास्तमसि तत्वार्थसार्थमध्यक्षयन्ति " इति प्रकटितः ।

अत एव च शास्त्रकाव्यकवीनामावश्यकता संजाता । न पुनः केवलशास्त्रकवीनाम् । ये च केवलं शास्त्रकवयस्ते काव्ये रससम्पदं विच्छिन्दन्ति । रससम्पद अविच्छेदायैव वाल्मीकि व्यासाद्याः शास्त्रकाव्यकवयः अस्यां कर्मभूमौ भारते आविरभवन् ।

## कविः

अयं च कविशब्दः परमात्मनि विधातरि वाल्मीकौ च प्रयुक्तः। तदेतत्कथं युज्यते ? परमात्मव्यतिरिक्तास्सर्वेऽपि नादिकविव्यपदेश्याः भवितुमर्हन्ति इति न पर्यनुयोगः कार्यः। आदिसृष्टौ यः कविः सः परमात्मैवेति 'कविर्मनीषी परिभूः स्वयम्भूः' इति, ईशावास्यश्रुतिरेव बोधयति। व्याख्यातंच ईशावास्यभाष्यकृद्भिः 'कविर्मनीषी परिभूः' इत्यत्र 'कविशब्देन परमात्मैव बोध्यते। अन्यत्र वाल्मीकि व्यास प्रभृतिषु परतत्वबोधानुगुणप्रबन्धनिर्मातृत्वेन तथा व्यवहार इति।'

भगवता वसुदेवसुतेनैव गीतम् 'कविं पुराणमनुशासितारम्' [भा-गी-८-९] इति। अत्र व्याख्यास्यद्भिः भगवद्रामानुजाचार्यैः श्रीमन्निगमान्तगुरुभिश्च 'कविम् सर्वज्ञम्, क्रान्तदर्शी हि कविरुच्यते, अत्र तु कविशब्दः ईश्वरविषयत्वात् सर्वदर्शित्वपरः इति, अयमेवार्थः 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' 'यमन्तस्समुद्रे कवयो वयन्ति' इत्याद्युपनिषद्गतकविशब्देनापि विवक्षितः। एतद्भाष्येपि 'कवयः-अतीन्द्रियार्थसाक्षात्कारसमर्थाः' इति विवृतम्॥

आदिकविशब्दः चतुर्मुखे च प्रयुक्तः तद्यथा श्रीमति भागवते-'तेने ब्रह्म हृदा य आदिकवये' इति।
ध्वनिस्थापकपरमाचार्येणानन्दवर्धनेन तु ध्वन्यालोके-

'काव्यस्यात्मा स एवार्थः तथाचादिकवेःपुरा'

इति वाल्मीकिः आदिकविशब्देन व्यवहृतः। तथान्यत्र च—

आदिकाव्यमिदं कृत्स्नं पुरा वाल्मीकिना कृतम्।

इत्यनेन वाल्मीकिमुनौ आदिकवित्वं तत्कृते काव्ये आदिकाव्यत्वं

चाभिहितम् । वाल्मीकिसमनन्तरं च व्यपदेश्यवाक् पाराशर्यो व्यासः समवातरत् । यमेव व्यासं **बाणभट्टः** स्वकीये हर्षचरिते–

"नमस्सर्वविदे तस्मै व्यासाय कविवेधसे ।"

इति कविस्रष्टेति व्यपदिदेश । तदनन्तरं कालिदासाद्याः महाकवयः समभवन् ।

कविव्यपदेशश्च तत्रैव घटते यत्र–

स कविः कथ्यते स्रष्टा रमते यत्र भारती ।
रस-भाव-गुणीभूतैरलङ्कारैर्गुणोदयैः ॥

इत्युक्त्यनुसारेण शृङ्गारादिरसैः भावैः गुणीभूतव्यङ्ग्यैः अनुप्रासादिशब्दालङ्कारैः उपमादिभिरर्थालङ्कारैः माधुर्यादिभिःरससमवायिभिर्गुणैः तादृशरसाभिव्यक्त्यनुगुण वर्ण-पद-समासरचनादिभिरुपलक्षिता वाणी–

'कविता वनिता चैव स्वयमेवागता वरा'।

इत्याभाणकमनुसरन्तो बलात्कारमन्तरा स्वयमेव रमते यश्चैव निरर्गलतया अन्याचुम्बितार्थसार्थस्य प्रतिभाबलेन निष्पादयिता स कविरिति व्यपदेष्टुं युज्यते । अत एव च एवंविधाः कवयो नाधिकसंख्यासंख्याता इति ध्वनिकारेणैव–'येनास्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयः द्वित्राः पञ्चषा वा महाकवयः इति गण्यन्ते" इति । स्पष्टमभिहितम् ।

किञ्च ऋषयो यथा तपसा ब्रह्मचर्येण श्रमेण चाप्रत्यक्षानपि मन्त्रानपश्यन् तथा महाकवयोऽपि प्रतिभाबलात् अप्रत्यक्षमपि शब्दग्रामम्, अर्थराशिम, अलंकारयोगम् रसावियोगम्, उक्तिमार्गं च प्रत्यक्षयन्ति स्म । एवंविधानां चर्मचक्षुर्नातीव सहकारि । अतएव च

मेधाविरुद्रकुमारदासादयोजात्यन्धा अपि कवय इति श्रूयन्ते इत्यै तिह्यम्। एवंविधानामपि छन्दो व्याकरणादि परिज्ञानम्, कर्मब्रह्म विचारचातुर्यम्, लोकवृत्तान्तवेदितृत्वम्, प्रशान्ततेत्येवमादीनामावश्यकता अस्त्येव, अन्यथा अशेषैरपि जनैः हास्यस्पदतां नीयेतैव।

## काव्यम्

कवेः कर्म काव्यम् इति विग्रहवाक्यम्, व्युत्पत्तिस्तु— **माधवीयधातुवृत्त्यनुसारेण कौति** शब्दायते इत्यर्थविवक्षायां शब्दना र्थकात् अदादिगणपठितात् 'कु' (शब्दे) इति धातोः 'अचइः' उ णा. ५८८) इत्यसादिकारप्रत्यये 'कविः' इति, तस्मात्कवेः कर्म इत्यर्थे 'गुणवचनब्राह्मणादिभ्यः कर्मणि' च (पा० सू० ५-१-(२२४) इत्यत्र ब्राह्मणादेराकृतिगणत्वात् ष्यञ्प्रत्यये 'काव्यम्' इति रूपम्। अथापि नात्रशास्त्रे शब्दोच्चारणस्य उच्चार्यमाण शब्दस्यवा काव्यत्वव्यपदेशः, किन्तु

वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः॥

इति **ध्वनिकृदुक्तरीत्या** वाच्यवाचकयोः रसभावाद्यभिव्यक्त्यनु गुणतया योजितयोः शब्दार्थयोः, तादृशार्थविशिष्टे शब्दे वा तद्व्यपदेशः। तच्च काव्यं प्रभुसम्मितम्, सुहृत्सम्मितम्, कान्तासम्मितमिति त्रेधा।

## प्रभुसम्मितम्

तत्र परमात्मनो यन्निश्श्वासरूपं ऋग्यजुस्सामाथर्वरूपेण चतुर्विधं तदेव वेदजातं प्रभुसम्मितमिति व्यवह्रियते। अस्य च हिता

हितप्रवृत्ति योजकत्वेन , प्रमाणान्तरागोचरधर्माधर्मलक्षणार्थलम्भकत्वेन अन्यत्राविचारितविचारकत्वेन च वेदत्वम् क्रान्तदर्शिभिः संगृहीतत्वात् काव्यत्वं च ।

1 अयं च वेदशब्दः बहुभिः बहुधा व्युत्पादितः । तुदादिगण पठितात् लाभार्थकाद्विद् धातोः परिनिष्पन्न इति । अयमेवार्थः मानवधर्म शास्त्रं व्याख्यास्यता मेधातिथिना ' विदन्ति अन्यप्रमाणावेद्यं धर्मलक्षणमर्थं यस्मादिति वेदः इति ' व्युत्पत्तिपूर्वकं प्रदर्शितः ।

2 विदन्त्यनेन धर्ममिति वेदः इति क्षीरस्वामिना,

3 वेदयति धर्मं विन्दत्यनेन वा धर्ममिति वेदः इति सत्याषाढ श्रौतसूत्रव्याख्याता वैजयन्त्याम् ।

4 इष्टानिष्टप्राप्तिपरिहारयोः अलौकिकमुपायं यो वेदयति स वेदः इति कृष्णयजुर्वेदभाष्यभूमिकायां सायणाचार्येण चेति एवमेव व्युत्पत्त्य तराणि तैस्तैः प्रदर्शितानि अवगन्तव्यानि ।

अस्य च वेदस्य ' अन्यथाकरणेचास्य बहुभ्यस्स्यान्निवारणम् ' इत्युक्तरीत्या स्वरवर्णादि विपर्यासे कृते सति अध्येता प्रत्यवैति प्रायश्चित्तीयते च । अत इदानीन्तनेकाले स्वामिनः आज्ञानुवर्तिनो विरलाः आज्ञा प्रधानाश्च प्रभुवद्वेदाः । अतएव च वेदानां प्रभुसम्मितत्वम् ।

वेदविहितकर्मादिषु प्रत्यवायभीत्या प्रजाः न प्रवर्तन्ते । वेद विहितं स्वं स्वं कर्म अकृत्वा शाश्वतः क्षेमः जन्मनां सहस्रेणापि लब्धुं न शक्य इति आस्तिकानां नाविदितम् ! यतश्च जन्मस्थितिमोक्ष हेतुः कर्मैवेति महर्षिभिः स्मर्यते—

आब्रह्मस्तम्बपर्यन्तजगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ इति ।

श्रूयते च ईशावास्योपनिषदि—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँसमाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

इति च ।

शास्त्र

मुख्यं च काव्यत्वं वेदस्यैव, साक्षाद्धिताहितप्रवृत्तिनिवृत्ति प्रयोजकत्वात्, गौणतया तु अन्यत्र न्यायादिषु । उक्तं च श्लोक वार्तिके कुमारिलभट्टैः—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

[ श्लोक० वार्ति० शब्द. प्र. ४ ] इति ॥

एवमाज्ञाप्रधाने वेदे प्रवर्तके निवर्तके च सति कुतो वा सुहृत्संम्मितरामायणादि महाकाव्यप्रणयने वाल्मीकि व्यासादीनां प्रवृत्तिरिति चेत् आज्ञाप्रधानवेदार्थज्ञानस्य बहुश्रमकालव्ययसाध्यत्वात् प्रत्यवायभिया च न दृढा प्रवृत्तिः स्वस्वकर्मस्विति, सुहृत्संमितकाव्यकरणे प्रवृत्तिः पण्डितपामरसाधारण्येन प्रवृत्तिनिवृत्तिप्रयोजिका भवतीति रामायण महाभारतादिसुहृत्सम्मित काव्यकरणे प्रवृत्तिः तेषाम् ।

## सुहृत्सम्मितम्

पूर्वं प्रतिपादितस्य प्रभुसम्मितस्य वेदस्य अर्थावगमने काठिन्यात्, अयोग्यतायाश्च वर्तमानतया मितबुद्धीनां योग्यतारहितानामपि अभ्युदय

निः श्रेयसयोः लाभाय सुहृत्संम्मितं काव्यमतीवावश्यकम् । उक्तं च भगवता व्यासेन—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
इति भारतमाख्यानं मुनिना सम्प्रकीर्तितम् ॥ इति ।

किञ्च वेदादर्थनिश्चये मीमांसाश्रौतगृह्यादिसूत्रशिक्षादिषडङ्गज्ञानमपेक्षितम् तज्ज्ञानंच न सुलभम् । तादृशज्ञानाश्चात्यन्तं विरलाः । अत एवञ्च वेदार्थोपबृंहणाय इतिहास-पुराणानामावश्यकता सञ्जाता । उक्तं च—

इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदः मामयं प्रतरिष्यति ॥ इति ।

महाभारते च— काव्यत्वकञ्चुकितो हि वेदार्थः सर्वजनबुध्युपारोहायात्र प्रतिपादितः इत्यभिधाय,

बिभेति गहनाच्छास्त्रात् नरस्तीव्रादिवौषधात् ।
भारतश्शास्त्रसारोऽयमतः काव्यात्मना कृतः ॥

इति चोपसंहृतम् ।

एवं च कठिनतममपि कार्यार्थं सुहृद्यथा तत्तत्कालोचितयुक्तिभिः अनुनीय सुहृदं सत्कार्ये प्रवर्तय । अकार्याच्च निवर्तयति तद्वदेव वाल्मीकिव्यासमुख्याः रामायणमहाभारतादिद्वारा पुरातनराजादिकथाशरीरवर्णनेन 'रामादिवद्वर्तितव्यं न रावणादिवत्' इत्युपदिशन्ति इति सुहृतस्सम्मितं काव्यं नान्यथासिद्धम् ।

अथापि कान्तासम्मितं कान्तस्य मनस आकर्षणाय यथा कान्ता सर्वात्मना प्रभवति न तथा सुहृत् इति सुहृत्सम्मितमपि काव्यं कलिकाला-

हलाकृष्टानां चार्वाकाणामिव आत्मानात्मविवेकविरहिणां शरीरसंरक्षण मात्रकृतश्रमाणां जनानां मनस आकर्षणाय न भवतीति मत्वा सर्वथा दुःखान्धकारे निमज्जतां प्रजानां उद्दिधीर्षया बृहत्कायान् वेदान् इतिहासादींश्च पर्यालोड्य—

अनन्तपारं बहुवेदितव्यमल्पश्चकालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपाददीत हंसो यथा क्षीरमिवाम्बुमिश्रम् ॥

त्यभिहितरीत्या वेद शास्त्रे-तिहास-पुराणादीनां सारं संगृह्य वेदादिषु पृथक्पृथक् अवस्थितां रीतिं परित्यज्य सुकुमारसन्दर्भां रीतिमवलम्ब्य यत्काव्यजातं कालिदासप्रभृतयो रचयामासुः तदेव कान्तासम्मितं काव्यमिति व्यपदिश्यते ।

## कान्तासम्मितम्

काव्यस्य चास्य कान्तासम्मितमिति व्यवहारेऽयं हेतुः । यत् सुकान्ता यथा स्त्रीस्वभावसमागतां अशाब्दीं कटाक्षवीक्षणहावभावात्मिकां सुकुमारसन्दर्भां रीतिमवलम्ब्य तावन्मात्रेणैव कान्तं वशयन्ति सन्मार्गे च प्रर्तयति तद्वदेवेदमपि कान्तासम्मितं काव्यं श्रवणादिसमनन्तरमेव शृङ्गारादि नवरसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दमुत्पाद्य सरसतापादनेन जनानभिमुखीकृत्य ' रामादिवद्वर्तितव्यं न रावणादिवत् ' इत्युपदेशम् ' कीर्तिम् , धनम्, व्यवहारज्ञानम् , अनर्थनिवारणं च करोति। अतएवचोपदेशान्तरमतिशेते । ईदृशी घटना नैवशास्त्रे न च वेदे परिदृश्यते ।

उक्तं चालङ्कारिकैः—

वेदशास्त्रपुराणानां रीतयो हि पृथक्पृथक् ।
रीतिरन्यैव काव्यानां लोकोत्तरपदप्रशाम ॥

रस-भाव-गुणौ-चित्यघटनालंक्रियादयः ।
काव्यादन्यत्र दृश्यन्ते कुत्र वा वेदशास्त्रयोः ॥ इति

एतावता चेदमुक्तं भवति शास्त्र विद्या कला लोकवृत्तसिद्धान्तरत्नानां महदेव निधानं काव्यमिति ।

अस्य काव्यस्यैवंविधत्वादेव प्रभुसम्मितसुहृत्सम्मितकाव्याभ्यामतिशयितत्वम् । दिङ्मात्रतयोदाहरणं प्रदर्श्यते—

दानं वित्तात् ऋतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायात् असारात्सारमुद्धरेत् ॥ इति ।

दानविषये कुशवत्सलिलोपेतं दानं सङ्कल्पपूर्वकम् । इति च स्मृतिः ।

अत्रैवार्थे नैषधीयं पद्यम्–

अर्थिने न तृणवद्धनमात्रं
किन्तु जीवनमपि प्रतिपाद्यम् ।
एवमाह कुशवज्जलदायी
द्रव्यदानविधिरुक्तिविदग्धः ॥ इति ।

याचमानजनमानसवृत्तेः
पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं
न द्रुमैर्नगिरिभिर्नसमुद्रैः ॥

यशोविषये अब्रवीत्तमनलः क नलेदं लब्ध
मुज्झसि यशश्शशिकल्पम् ।

कल्पवृक्षपतिमर्थिनमित्थं
नाप कोऽपि शतमन्युमिहान्यः ॥ इत्यादि ।

**विप्रलम्भदशानुभवविषये—**

त्वामालिख्य प्रणयकुपितां धातुरागैश्शिलाया
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैः दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संङ्गमं नौ कृतान्तः ॥

**स्त्रीणां पुरुषमवलम्ब्यैव सौभाग्यसंम्पदित्यस्मिन् विषये —**

स्त्रियो न पुंसामुदयस्य साधनं
त एव तद्धार्मविभूतिहेतवः ।
तटिद्वियुक्तोऽपि घनः प्रजृम्भते
विना न मेघं विलसन्ति विद्युतः ॥ इति

**पारिहास्य विषये—**

काले माषं सस्ये मासं वदति शकासं यश्च सकाशम् ।
उष्ट्रे लुम्पते ष वा रं वा तस्मै दत्ता विकटनितम्बा ॥ इति

**लोकानुभव प्रदर्शन विषये--**

साहित्ये सुकुमारवस्तुनि, दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि परं लीलायते भारती ।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा, हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥

इत्यादिषु लोकानुभवमपि क्रोडीकृत्य वेदार्थः धर्मादिशास्त्रार्थश्च सुकुमार प्रकृतीनां मन्दमतीनां च बुद्ध्युपारोहक्षमतया संग्रथ्यते कविभिः। अत एव च केनचित् कविना सुकुमारसन्दर्भयोजनाकुशलेन न्यायशास्त्रमध्येतु-मारभ्य वादग्रन्थानधीत्य प्रामाण्यवादे अध्येतुमारब्धे स्वस्य सरसकाव्य घटनानुकूला शक्तिः एतदध्ययनेन लुप्येतेति भिया–

'नमः प्रामाण्यवादाय मत्कवित्वापहारिणे'

इति प्रामाण्यवादाध्ययनमुपसंहृतमित्यैतिह्यम् ॥

काव्यस्य सुहृदिव, कान्तेव च सरसतापादनेन सदुपदेशकत्वादेव दाशरथिना रामचन्द्रेण अश्वमेधानुष्ठानसमये एकैकस्मिन् विषये परिनिष्ठित मतीन् पण्डितान् समाहूय तैस्सहैव श्रीमद्वाल्मीकिमहर्षिणा चित्रितं रामयणाख्यं महाकाव्यं कुश-लव-मुखाच्छ्रावितमिति वाल्मीकीये रामायणे उत्तरकाण्डे चतुर्णवतितम सर्गगतेन पद्यजातेन स्फोरितम्। तद्यथा–

अथ कर्मान्तरे राजा समाहूय महामुनीन्।
पार्थिवांश्च नरव्याघ्रः पण्डितान् नैगमांस्तथा ॥ ४ ॥

पौराणिकाञ्शब्दविदः ये वृद्धाश्च द्विजातयः।
स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजसत्तमान् ॥ ५ ॥

लक्षणज्ञांश्च गान्धर्वान् नैगमांश्च विशेषतः।
पदाक्षरसमासज्ञान् छन्दस्सु परिनिष्ठितान् ॥ ६ ॥

कला-मात्राविशेषज्ञान् ज्योतिषे च परंगतान्।
क्रियाकल्पविदश्चैव तथा कार्यविशारदान् ॥ ७ ॥

हेतूपचारकुशलान् हैतुकांश्च बहुश्रुतान् ।
छन्दोविदः पुराणज्ञान् वैदिकान्द्विजसत्तमान् ।। ८ ।।

चित्रज्ञान् वृत्तसूत्रज्ञान् गीतनृत्यविशारदान् ।
शास्त्रज्ञान् नीतिनिपुणान् वेदान्तार्थप्रकाशकान् ।। ९ ।। इति

अनेनच अशेषविद्यास्थानं काव्यमिति फलति । काव्यस्यापि विद्यास्थानेषु अवकाश प्रदानमवश्यकमिति मन्वानेन राजशेखरेण काव्यमीमांसायाम् 'सकलवि स्थानैकायतनं पञ्चदशं विद्यास्थानमिति तु यायावरीयः' इति स्वमतमुद्ट ङ्कितम् । एवंविधस्य काव्यस्य कान्तासम्मिततया सुकुमारक्रमेण धर्मादि साधनोपायानां प्रतिपादकत्वात् अभिजातानां हृदयाह्लादकत्वमस्त्येव ।

व्यतीतसज्जनराजादि सच्चरितं निदर्शयितुं कान्तासम्मितं काव्यं अनुभवशालिनामुपदेष्टृणां सहकारेण इदानीन्तनेऽपि काले ऽत्यन्तमुप करोतीति न तिरोहितं प्राज्ञानाम् । अतश्चास्य काव्यबन्धस्य शास्त्रातिरिक्तं प्रगुणं प्रयोजनमस्त्येवेति प्रभुसम्मितं सुहृत्सम्मितं च काव्यमपेक्ष्य कान्ता सम्मितं काव्यं हृदयङ्गमम् । एतद्रचयितार एव कवयः तेषां कृतिरेव काव्यमिति व्यपदिश्यते तदिदं यादवाभ्युदये 'सकविः कथ्यते स्रष्टा' इत्यादिना प्रागेवावेदितम् । सम्प्रति साहित्यमधिकृत्य किञ्चिद्विचारयामः

## साहित्यम्

साहित्यं नाम किं? शब्दार्थयोस्सहभावः? उतान्यः?

यदि शब्दार्थयोः अवियुक्ततया सर्वदा प्रतीतौ स्फूर्तिकारणं साहित्य-पदव्यपदेश्यं तदा सिद्धसाधनतापातः । यतश्च—"औत्पत्तिकस्तु शब्दस्य अर्थेन सम्बन्धः" इति वदद्भिः पूर्वमीमांसकैः शब्दार्थयोर्नियतः सहभावः समर्थित एव न पुनस्साध्यतामपेक्षते । तयोस्साहित्यस्य निसर्गसिद्धत्वात् ।

किञ्च—"पूर्वोक्तार्थस्य साहित्यपदार्थत्वे" गाङ्कुटादिभ्यो ऽञ्णिन्ङित् [पा.सू. १-२-१ ] इत्यादि वैयाकरणवाक्यानां शाकटिकप्रयुक्त वाक्यानां च साहित्यव्यपदेश्यत्वं स्यात्। नह्येवमादि वाक्यानां साहित्य-रूपत्वं सहृदयानामभिमतम्। अतश्च पद-वाक्य-प्रमाण-व्यतिरिक्तं तत्प्रति-पाद्यविषय-संयुक्तम् किमपि तत्वान्तरमेव साहित्यम्। यदेतत् जन्मान्तरकृत-सुकृतपरिपाकसमासादितनिरवग्रहदैवानुग्रहलब्ध शक्ति व्युत्पत्ति प्रतिभा पवित्रित वाल्मीकि व्यास प्रमुख-मुखारविन्दबिन्दुसन्दोहसुन्दराणां वचसां अन्तरामोदमञ्जुलतया परिस्फुरत्, सहृदय सुमनष्षट्पदास्वादगोचरतां प्रतिपद्यते, तदेवास्माभिः साहित्यमिति व्यपदिश्यते।

अयं चांशः—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्वज्ञैरेव केवलम्॥ इति
तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्वार्थदर्शिन्यां झटित्येवावभासते॥

इति चानन्दवर्धनेनैवाभिहितः॥

राजानकाचार्यकुन्तकेन तु साहित्यपदार्थ एवं निरूपितः—

समसर्वगुणौ सन्तौ सुहृदाविव संगतौ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते॥ इति।

एवं चैतदुक्तं भवति-न्याय-व्याकरण-मीमांसा-लोकव्यवहारेषु निपुणैः समास

व्यासधारणधुरीणैः अल्पपरिमाणेऽपि दर्पणे यथा महागजाः प्रतिबिम्बन्ते तद्वदेव महान्तः शास्त्रार्थाः सरसतामापन्नाः यत्र प्रतिबिम्बन्ते तादृशार्थ विशिष्टः शब्दराशिः साहित्यमिति ः एवंविधार्थविशिष्ट शब्द निवेशने यस्य सामर्थ्यं तस्यैव वाग्देवी प्रसीदति । स च न सीदति ।

तदेतदुक्तम्—

पदवाक्यप्रमाणेषु तदेतत्प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥ इति ।

यस्य चेदृशी सङ्घटनशक्तिर्नास्ति तस्य शास्त्रवेदनमफलमिति स्पष्टमेव प्रत्यपीपदद्भामहः—

अधनस्येव दातृत्वम्, क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥ इति ।

इदं च साहित्यं पञ्चमी विद्येति **राजशेखरः काव्यमीमांसायाम्**— "आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतिश्चेति चतस्रो विद्याः इति कौटल्यः । पञ्चमी साहित्यविद्या इति यायावरीयः । सा हि चतसृणामपि निष्यन्दः । आभिर्धर्मार्थौ यद्विद्यात् तद्विद्यानां विद्यात्वम्" इत्याह । एतेन सर्वशास्त्र सारतमांशस्य सुकुमारक्रमेण प्रतिपादकस्याप्यस्य साहित्यापरपर्यायस्य अलंकार शास्त्रस्य विषये यैरवज्ञा प्रदर्श्यते ते नूनमनभिज्ञाः साहित्यरसस्येत्येव वक्तव्यं भवति ।

तत्र तावत् व्याकरणज्ञानमावश्यकं, व्याकरणं च अनेक विशेषांश गर्भिते पदे प्रकृति-प्रत्ययोपाधि निपातादि भेदान् विभज्य पदान्वाख्यान करणम् ।

उक्तं च अभिधानचिन्तामणौ—

प्रकृति-प्रत्ययो-पाधि-निपातादिनिबन्धनम् ।
पदान्वाख्यानकरणं शास्त्रं व्याकरणं विदुः ॥ इति ।

भामहेनापि सर्वैः दार्शनिकैः सर्वकुलप्रसूतैः, सर्वैरेव पुरुषैः प्रमाणभूतं व्याकरणं श्रद्धेयमेवेत्यभिप्रायः—

विद्यानां सततमपाश्रयोऽपरासां
तामूक्तान्नच विरुणद्धि कांश्चिदर्थान् ।
श्रद्धेयं जगति मतं हि पाणिनीयं
माध्यस्थ्याद्भवति न कस्यचित्प्रमाणम् ? ॥

इत्यनया कारिकया प्रदर्शितः । आनन्दवर्धनेनापि "प्रथमे हि विद्वांसो वैयाकरणाः व्याकरणमूलत्वात् सर्वविद्यानाम्" इति व्याकरणस्य प्राधान्यं प्रदर्शितम् । न चैतावता स्फोटपरिग्रहप्रसङ्गः । स्फोटपरिकल्पनं तु व्याख्यातॄणामपराधः न भगवतः पाणिनेः । अत एव"—

"शपथैरपि चादेयं वचो न स्फोटवादिनाम् ।

इति भामहोऽप्याह ।

किंच — प्रकृति - प्रत्ययादिप्रविभागमवलम्ब्यैव साहित्यसाम्राज्ये— "न्यक्कारो ह्ययमेव मे यदरयः" इत्याद्युदाहृतिषु—"सुप्-तिङ् वचन-सम्बन्ध-कारक-शक्ति-कृत्तद्धित-समासानामसंलक्ष्यक्रमव्यञ्जकत्वं ध्वनिस्थापकपरमाचार्यैरानन्दवर्धनाचार्यैरभिहितमेव ॥

पदशास्त्रव्यपदेश्यस्य व्याकरणस्यात्यन्तोपादेयत्वाभिधानमात्रेण मीमांसापरपर्यायस्य वाक्यशास्त्रस्य अनुपादेयत्वप्रकाशनं सुतरां न युज्यते । यतश्च पदानां परस्परान्वयलक्षणसम्बन्धनिबन्धनमेतद्वाक्यार्थ-तात्पर्यमित्यत्र वाक्य विचारलक्षणमीमांसाया उपयोगः स्पष्टं प्रतीयते एव । आलंकारिकाण तावन्मीमासा शास्त्रमतीवोपयुक्तम्, सर्वस्यापि विद्याप्रपञ्चस्य वाक्यरूपत्वात्। इयं च मीमांसा बहुविधविद्याश्रया इति **कुमारिलभट्टपादैः** प्रतिज्ञासूत्रवार्तिके–

"मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रया"

इत्युक्तम् । अमुमेव विषयमवलम्ब्य **लोचनकारोऽपि** "मीमांसायाः शब्दार्थ निर्णयोपजीव्यतामाह- ''ततश्च अभिधावृत्ती वैयाकरणमीमांसकैर्निरुपिते' इति ।

एवं च अमीमांसकस्य तलस्पर्शिता न सुलभा । यतश्च व्याकरणादि शास्त्रान्तराश्रयेण व्युत्पन्नपदतदर्थस्य वाक्यार्थसंशयनिवर्तिका हि मीमांसा' असम्पादितमीमांसापरिचयस्य अनेकेषु स्थलेषु स्खालित्यमपरिहार्यमेव । इत्थं सत्यपि मीमांसायाः साहित्ये नोपयोग इति ब्रुवाणाः देवानांप्रिया एव । एवं पद–वाक्ययोः अवगतस्यार्थस्य युक्तितः प्रतिष्ठापनार्थं युक्तिशास्त्रापरनाम्नि प्रमाणशास्त्रे परिचयवत एव कवेः साहित्यं प्रसन्नरमणीयं भवति"

इत्याचार्यकुन्तयोऽप्याह —

पदवाक्यप्रमाणेषु तदेतत्प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥ इति ।

एवंविधशास्त्रकाव्यपरिपक्वबुद्धयोऽत्यन्तं विरलाः इति श्रीमन्निगमान्तदेशक वर्णनावसरे **आत्रेयवेङ्कटाध्वरिणा** विश्वगुणादर्शचम्प्वामुट्टङ्कितम्—

"नानाम्नायपरिश्रमं कलयतां नास्त्येव शास्त्रेषु धीः
सत्योरप्युभयोस्तयोः न सुलभा साह्यक्षता साहिती ।
अप्येतासु सतीषु नास्ति विनयः नाचारभक्तिक्षमा
चातुर्यैः सच-साच साच-सच-ताश्चालम्व्य खेलन्त्यमुम् ॥

इत्यलम्, प्रसक्तमनुसरामः ।

अमुं साहित्यशब्दार्थमवलम्ब्य विवरीतुं प्रवृत्तेषु **भोजराजः** स्वीये **शृङ्गारप्रकाशे**—

अभिधा-विवक्षा-तात्पर्य-प्रविभाग-व्यपेक्षा-सामर्थ्यान्वयैकार्थीभाव-दोषहान-गुणादानालंकारयोग-रसावियोगरूपं शब्दार्थयोः द्वादशसम्बन्धं साहित्य मित्युच्यते" इत्याह । एतद्विस्तरतु—शृङ्गारप्रकाशे द्रष्टव्य इति सः नेह प्रतन्यते । किन्त्वस्य अत्यन्तमभिमत एकोंऽश उल्लिख्यते, यः साहित्य जीवनभूतः रसावियोगो नाम प्रकृष्ट उपायः । एतदभावे, पत्यौ प्रणयिनि प्रेम्ण एवाभावे दोषाभाव-गुणालंकारादीनां सद्भावेऽपि नायिकाया यथा न सौभाग्यातिशयः निष्पद्यते, तद्वदेव रसवियोगे काव्यनायिकायाः दोषराहित्य-गुणयोगालंकारयोगे सत्यपि नास्वादयोग्यताप्रकर्षः इत्यत्र दृष्टन्त उक्तः

कल्या मूर्तिः, कुलममलिनम्, यौवनम्, रूपसम्पत्
सौभाग्यर्द्धिः, प्रियवचनता, शीलवैदग्ध्ययोगः ।
शालीनत्वम् विनयपरत्येत्यङ्गनाभूषणं यत्
तत्प्रेमार्द्रं प्रणयिनि मनो नास्तिचेन्नास्ति किञ्चित् ॥ इति ॥

## अलंकारशास्त्रम्

अयमलङ्कारशब्दः भगवता **पाणिनिना** तद्धित प्रकरणे कर्णललाटात्कन् अलङ्कारे [पा.सू. ४–३–६५] इत्यत्र प्रयुक्तः ।

"अलङ्कृञ्निराकृञ्" इति सूत्रे "अलङ्कृञोमण्डनार्थात् युचः पूर्व विप्रतिषेधेनेष्णुज्वक्तव्यः" इति कात्याय नेनचोक्तः ।

न्यासकारेण च—"कन्प्रत्ययविधायकसूत्रे कर्णिकाशब्दश्च आभरण विशेषे रूढः" इत्युक्तम् । एतेन चेदं ज्ञायते, अलंपूर्वः करोतिर्मण्डनार्थे वर्तते, मण्डनं च आभरणम् इत्युक्तं भवति । इदानीं अलंकारशब्द व्युत्पत्ति प्रकारो विचार्यते । अलमित्यव्ययं सामर्थ्यसम्पादने पर्याप्तमित्यर्थेवर्तते । यतः "नमः स्वस्ति-स्वाहा-स्वधालं वषड्योगाच्च" [पा. सू. २–३–१६] इति सूत्रवृत्तौ अलमिति पर्याप्त्यर्थग्रहणम् इति, तथा' तस्मै प्रभवति सन्तापादिभ्यः' [पा.सू. ५–१–१०२] इत्यत्र अलमर्थे तच्छब्दात् चतुर्थी इति च काशिकाकारेण वामनेन विवृतम् । तस्मात् अलमित्यव्ययं प्रभवति इत्यर्थेऽपि वर्तत इत्यपि वक्तुं शक्यम्। अलङ्करोतीत्यस्य सम्पादनसमर्थो भवति इत्यर्थः ।

अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।

इत्यमरकारः,

अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे ।

इति यादवप्रकाशश्च ।

परन्तु—भावे करणे च व्युत्पत्तिरत्रापेक्ष्यते । सा च दण्डिनोऽर्वाचीनेन काव्यालंकारसूत्रकृता वामनेन प्रदर्शितः । "सौन्दर्यमलङ्कारः [अ. १. अध्या १. सू. २] इतिसूत्रे अलङ्कृतिरलंकारः इति, करणव्युत्पत्या पुनः अलंकारशब्दोऽयमुपमादिषु वर्तते' इति च ।

ननु करणेघञो दुर्लभत्वम्, ल्युटा बाधात् । न च वासरूपविधिः '' क्तल्युट्-तुमुन्खलर्थेषु वासरूपविधिः नेष्यते'' ''इति परिभाषानुसारतः घञं बाधित्वा ल्युट एव प्राप्तत्वादिति शङ्क्यम्। 'प्रयुक्तानामिदमन्वाख्यानं खल्वपि भवति' इति महाभाष्यानुसारेण कटकमुकुटादिषु यथा अलंकारशब्द प्रयोगः तद्वत् यमकोपमादिषु ।

'दुःखेन बुबुधे सीतां हनूमाननलंकृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥'

इत्यादि वाल्मीकिप्रभृत्यविगीतशिष्ट प्रयोगदर्शनानुरोधेन 'अध्यायन्यायोद्याव संहाराधारावायाश्च [पा.सू.३-३-१२२] इत्यत्र चकारात्, कृत्यल्युटो बहुलम् [पा.सू. ३-३-११३] इति सूत्रे बहुलग्रहणाद्वा करणसाधनोयमलंकार शब्दः युज्यते । शिष्टप्रयोगे दृष्टे व्युत्पत्तिरन्विष्यते । न पुनः व्युत्पत्तिर स्तीति शब्दः प्रयुज्यते । अन्यथा पङ्कजादयश्शब्दाः पद्मादिष्विव कुमुदा- दिष्वपि प्रयुज्येरन् पङ्कजननस्याविशेषादिति स्यादेवातिप्रसङ्गः। तस्मात् पद्मादिषु पङ्कजादिशब्दवत्, कटकमुकुटादिषु अलंकारशब्दवत्, उपमादिष्वपि अलंकारशब्दः योगरुढ इत्येव शास्त्रकाराणां मर्यादा ।

अयं चालंकारशब्दः नाट्यशास्त्रकृता **भरतेन** नाट्यशास्त्रे प्रथमा ध्याये—'नाट्यालंकारचतुराः' इति कैशिक्यादिषु लीलादिषु दशसु भावेषु, शोभादिषु सप्तसु पाठ्यादिषु षट्सु, सन्ध्यङ्गवृत्त्यङ्गादिषु च प्रयुक्त इति ज्ञायते ।

पूर्वोल्लिखितं भरतवाक्यं विवृण्वता **अभिनवगुप्ताचार्येण** अभिनव भारत्याम्—' नाट्यस्य योऽलंकारः वैचित्र्यहेतुः कैशिकी ' इति प्रति पाद्य लीलादीन् दशभावान् शोभादींश्च सप्त अलंकाराः इति विदुरिति मतान्तरत्वेन उपन्यस्तम् ।

एवं पाठ्यालंकाराः नेपथ्यालंकाराः नाट्यालंकाराः प्रयोगालंकाराः एवमादयः वर्णालंकारा इति अलंकाराः रसमय काव्यत्वसम्पादकाः सन्ध्यङ्गादयस्सर्वेऽपि अलंकार शब्देन व्यपदिष्टाः। अत एव दण्डिना—

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।
व्यावर्णितमिदंचेष्टं अलंकारतयैव नः॥

इत्यभिहितम्।

किञ्च भरतेनैव अलंकाराणां गुणानां च पार्थक्यं उभयोरलंकारकत्वं च—

'अलंकारैः गुणैश्चैव बहुभिस्समलंकृतम्।'

इत्यप्युक्तम्। अस्यैवालंकारविधेः इतिहासकाले **क्रियाकल्पः** इति नाम आसीत् इति, 'चतुष्षष्टिकलासु अयं क्रियाकल्पः अन्तर्भावित इत्यंशमुपादाय **वात्स्यायनीयकामशास्त्रव्याख्यायां जयमङ्गलायां** 'काव्यक्रियाकल्प' इत्यस्य काव्यकरणविधिः काव्यालंकार इत्यर्थः इति विवरणं दत्तम्।

काव्यादर्शकारोऽपि **दण्डी**—

अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः।
वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्॥

इत्यत्र अलंकारविधौ क्रियाविधि शब्दमेव प्रायुङ्क्त। एवंप्रयोगे च मूलभूतः प्रयोगः श्रीमति वाल्मीकीये रामायणे उत्तरकाण्डे-(९४-७१) दृश्यते।

क्रियाकल्पविदश्चैव तथकाव्यविदो जनान्।

इत्यत्र च अलंकारयोजनैव क्रियाकल्पशब्देन विवक्षितः। परन्तु रामायण व्याख्यात्रा **गोविन्दराजेन** अयं क्रियाकल्पशब्दः अन्यथा व्याख्यातः। अथापि पूर्वोक्तएवार्थः साम्प्रदायिक वात्स्यायनादिसम्मतश्च।

**भामहादयः** प्राचीना खल्वालंकारिकाः गुणालंकारयोः भेदं न प्रतिपादयन्ति। अत एव च भूषणादीनां निरूपणे **प्रवृत्तः** भामहादपि परमप्राचीनो भरतस्तयोर्भेदं नैव गणयतीति वक्ष्यमाणेन पद्येन ज्ञायते–

अलंकारैर्गुणैश्चैव बहुभिस्समलंकृतम्।
भूषणैरिव चित्रार्थैः तद्भूषणमितिस्मृतम्॥

षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै
भूषणसम्मतानि " इति "

भामहवदेव–**–भोज––कुन्तक––भट्टनायक––काव्यकौतुककारादयोऽपि** गुणालंकार वर्गं लक्षणान्तर्गतं भावयन्ति। भूषणालंकारा शब्दौ पर्यायौ इति न कश्चिन्न जानाति।

परन्तु **भामहोद्भटरुद्रटाद्याः** काव्ये बाह्यालंकारविश्लेषकाः। दण्डिवामनाद्याः रीति गुणयो र्विश्लेषकाः। तत्र गुणालंकारयोः काव्यशोभाकरत्वतदतिशयाधायकत्वाभ्यां भेदं वामनः, दण्डी तु–

काव्य शोभाकरान् धर्मानलंकारान् प्रचक्षते।

इतिकाव्यशोभाकरत्वमात्रमलंङ्कारस्याभिप्रैति। अयमेव पक्षः **अप्पय्य दीक्षितैः** परिगृहीतः। **भरतस्यापि** अयमेव पक्षः हृद्गतो भवेदिति प्रत्येमि। **यैरालङ्कारिकैः** रीतिगुणालंकाराणां पार्थक्यं निरूपितं तत्र तादात्विकी व्यवस्थैव नियामिका। लक्ष्ये च प्रज्ञया परिशील्यमाने प्राचामालंकाराः काव्यशोभाकरा एव अन्ततो गत्वा रसोपस्कारकाः।

अत एव च—

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥

इति वदन्नानन्दवर्धनः रसादीनामात्मत्वं निकृष्य रूपकादीनां रसोपस्कारकत्वेनैव अलङ्कारत्वमन्वर्थमिति उपपादयामास ।

प्राचीनैः भामहादिभिः रसस्वरूपं न ज्ञातमिति न समर्थयितुं शक्यम् । यतश्च महाकाव्यस्वरूपं लक्षयन् भामहः—'सर्गबन्धो महाकाव्यम्' इत्यारभ्य सालंकारं सदाश्रयं युक्तंलोकस्वभावेन रसैश्च सकलैः पृथक् ' इत्यनेन रसस्वरूपम् . रसविभागम् . तदाश्रय काव्यमिति स्पष्टीचकार । मनुजाः तावत् बुद्धिमत्सु वराः । मनुजेषु वाग्मिनो वराः, वाग्मिषु महान्तः कवयः वरतराः. कविषु च तेषां वाचः वरतमाः । तत्रापि सर्गबन्धकृतं काव्यम् । तत्रापि सालंकारम् । तत्रापि भूम्ना हितोपदेशकारि । लोकानुभवानुसारेण असंकीर्णवृत्तिभीरसैर्युक्तम् इत्युपसञ्जहार । तेन च काव्यं सर्वमेव रसावियुक्तं भवेदिति ज्ञायते ।

अत एव 'विनेयजनहितार्थमेव नाटकादिगोष्ठी अवतारिता योगिभिः इत्यानन्दवर्धनः । वस्तुतो विमृश्यमाणे रसैः अलंकाराणां अलंकारैश्च रसानां भूषणभूष्यभावः आत्मना शरीरधृतानामलंकारणां शोभा, अलङ्कारैश्च शरीरस्य आत्मनश्च शोभा "परस्परो भूषणभूष्यभावः" इति न्यायात् इत्यभिप्रायोऽपि विद्यते । तदपि युक्तमिव-यतश्च रसवदादौ रसभावादेः वाच्यशोभाधायकत्वम्, यत्र विभावादिभिः रत्यादेः परिपोषः तत्र रसादीनां भूष्यत्वं अलंकाराणां भूषणत्वमिति ।

उद्भटादिभिस्तु गुणालंकाराणां प्रायशस्साम्यमेव सूचितम् । विषय

मात्रेण भेदप्रतिपादनात् । संघटनाधर्मत्वेनचेष्टेः । तदेवमलंकार एव काव्ये प्रधानमिति प्राचां मतम् ।

वक्रोक्तिजीवितकारः आनन्दवर्धनान्नन्योऽपि अवलोकितध्वनिग्रन्थोऽपि राज्ञानकमहिमवत् प्रतिबन्दितया प्रवृत्तः वक्रोक्तेः काव्यात्मतामाह ।

**ध्वनिकारः** पुनः अभिधा तात्पर्य-लक्षणाख्यव्यापारत्रयोत्तीर्णस्य ध्वनन-द्योतनादि शब्दाभिधेयस्य व्यञ्जनाव्यापारस्य वाक्यार्थस्वाऽभावात् वाक्यार्थस्यैव व्यङ्ग्यरूपस्य गुणलंकारोपस्कर्तव्यत्वेन प्राधान्याद्विश्रान्तिधामत्वेनात्मत्वं सिद्धान्तितवान् । रसादयस्तु काव्यजीवितभूताः नालंकारभावभाजः इति व्यञ्जनाव्यापारस्य सर्वैरपि दार्शनिकैः अनपह्नवनीयत्वे । तदालम्बनस्य रसस्यैव काव्यात्मतेति अलंकारिकाणां सिद्धान्तः ।

**काव्यप्रकाशकारोऽपि** ध्वनिकारसम्मतं रसात्मवादमेव उररीचकार। अलंकारांश्च रसोपस्कारकानाह—

उपस्कुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकाराः तेऽनुप्रासोपमादयः ॥ इति ॥

रसस्वरूपविषये बहुविचारणीयमस्ति । यतश्च रसादयो वस्तुतः ज्ञानप्रभेदा एव ।

यदा बुद्धेरात्मस्वरूपत्वं तदा आत्मैव रस उच्यते
यदा बुद्धेरात्मगुणत्वं तदा आत्मनो गुणा एव रसः ।
यदा बुद्धेः चित्तस्वरूपत्वं तदा सत्त्वोद्रेको रसः ।
यदा बुद्धेः स्वयंप्रकाशत्वं तदा स्वयंवेद्यो रसः ।

यदा बुद्धेः मानसत्वं तदा रसोऽपि मानसः ।
यदा बुद्धेः अनुमेयत्वं तदा रसोऽप्यनुमेयः ।           इति ।

वस्तुतो विचार्यमाणे—

आत्मधर्मभूतज्ञानपरिणामभूतो रस इत्यौपनिषदं मतम् । परंतु सिद्धान्तभेदेन रसस्वरूपमपि भिद्यते । अतश्च अनुभवमनुरुध्य आत्मनो रसस्य च ग्राह्यग्राहक भवाः (कर्तृकर्मभावः) आस्वाद्यास्वादकभावो वा अभ्यपगन्तुं युक्त इति तद्विचारः नेह प्रतन्यते किन्त्वन्यत्र ।

सहृदयहृदयाह्लादकारी कश्चन शब्दार्थधर्मत्वेन प्रसिद्धो यः सः अर्थात् शब्दसन्निवेशरूपतया, अर्थविशेषरूपतया च द्विधाभावमात्मनि लभते । प्रायस्तन्निरूपणप्रधानाः अलंकारनिबन्धाः ।

अस्यैव साहित्यस्य प्रवृत्तिनिमित्तिप्रयोजकसुकुमारोपदेशकतया —

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

इति **भट्टकुमारि**लोक्तशब्दपरिच्छेदगतश्लोकवार्तिकरीत्या शास्त्रत्वम् । मुख्यं शास्त्रत्वं तु परमप्रमाणभूतस्य वेदस्यैवेति सर्वसम्मतमिति पूर्वमुक्तमेव अन्यत्र तु गौणतया शास्त्रत्व वेदाङ्गेषु व्याकरणादिषु यथा तथात्रापि अबाधितम् ।

अस्यैव शास्त्रस्य **अलंकारशास्त्रमिति** व्यपदेशः प्रथते । तत्रचेदं निदानम् । यदा भामह दण्डि उद्भट रुद्रट वामनान्ताः प्राचीनाः आलंकारिकाः अलंकारशास्त्रनिर्मातारः ध्वन्यमानस्यापि अर्थस्य रसभावादेः वाच्योपस्कारकतया अलंकारकुक्षिनिक्षिप्तत्वमित्यभिमन्यमानाः अलंकारा एव काव्ये प्रधानभूताः

''इति सिद्धान्तस्थापनं कृतवन्तः तदा प्रभृति ''प्राधान्येन व्यपदेशा भवन्ती'' इति न्यायेन एतच्छास्त्रस्य अलंकारशास्त्रमिति व्यपदेशः कृतः ' अत एव च स्वीयकाव्यालंकारीय तृतीयपरिच्छेदे रसवदलंकारनिरूपणावसरे—

रसवद्दर्शितस्पष्टश्रृङ्गारादिरसं यथा ।
देवीसमागमच्छद्मम्कस्करिण्यतिरोहिता ।

इति रसवदलंकारं लक्षयतो भामहस्य

इतो गमिष्याम्यथवेति वादिनी
चचाल बाला स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
निक्षेपणाय पदमुद्धृतमुद्वहन्ती !
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥

इति महाकविना **कालिदासेन** ग्रथिता श्रृङ्गारस्राविणी **सूक्तिः** हृदयमधिरूढा भवेत् । अत्र च श्रृङ्गारः काष्ठामधिरूढः । स एवात्र विवक्षितः । एवं दण्डिनापि—

मृतेति प्रेत्य संगन्तुं यथा मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैवजन्मनि ॥

वेदइत्युपाहृत्य—

प्राक् प्रीतिर्दर्शिता सेयं रतिः श्रृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥

इत्युपपादयता ' वासवदत्ता लावाणकेन वह्निना दग्धेति'' दाहप्रवादमाकर्ण्य दुःखपंकनिमग्नः पुनस्तां प्राप्य नितान्तमानन्दमनुभवता वत्सराजेनोदयनेन यां वासवदत्तां मृतेत्याकर्णनमात्र एव तया सह संगन्तुं मरणमेव प्रार्थनीयमासीत् सैवावन्ती वासवदत्ता अत्रैव जन्मनि मया लब्धेत्यद्भुतेन परिपोषं नीता वासवदत्ताविषयिणी नायकनिष्ठा रतिः श्रृङ्गारतां गता अतश्च रसवदलंकारः इत्यभिप्रायमाविष्कुर्वता पण्डितपामरसाधरण्येन यथा गानरसस्य आस्वाद्यत्वं तद्वत् काव्यस्यापीति रसवतः काव्यस्य श्रवणेन अर्थानुसन्धानेनच आनन्दानुभव इति आत्मकस्यापि सुन्दरशरीरस्य अवलोकनेन नेत्रानन्दानुभव इति न निरात्मत्वं तद्वत् अलंकारस्य प्राधान्यं सूचितम् । न चैतावता दण्डी रसस्वरुपं न विवेचितवानिति विभावयितुं साम्प्रतम् । ध्वनिकारेण तत्स्वरुपं सुपरिशोध्य निष्कर्षः कृत इति तु परं अतीव श्लाघ्यम् ।

एवं च ''प्राधान्येन व्यपदेशा'' इति न्यायेन, 'छत्रिणो यान्ति' इति न्यायेन वा अस्य अलंकारशास्त्रमिति व्यपदेशो घटते ।

अलंकारस्वरुपनिरुपणेदम्परैरपि लोके यथा कटकमुकुटादिषु प्रयुक्तोऽलंकारशब्दः तथा उपमादिष्वपिप्रयुक्तः, तद्वदेव गुणादिषु तथैव तदभिधानि निबन्धे च । उक्तं च **राजानककुन्तकेन**— अलंकारशब्दः शरीरस्य शोभातिशयकारित्वात् मुख्यतया कटकमुकुटादिषु प्रयुज्य तत्कारित्वसाम्यात् उपचारेण उपमादिषु वर्तते । तद्वदेव गुणादिषु । तथैव च

तदभिधायिनि ग्रन्थे । शब्दार्थयोः एकयोगक्षेमत्वात् अर्थे शब्दे अलंकारे च ऐक्येन व्यवहार '' इति ।

अलंकारादिप्रतिपादके चास्मिन् "अलंकारशास्त्रमिति व्यवहारः बहुभिरालंकारिकैरेव कृतः । तद्यथा—

वामनः काव्यलंकारे— '' काव्यं ग्राह्यं सौन्दर्यात्' इत्यसूत्रयित्वा "काव्यं ग्राह्यमलंकारात्" इत्यलंकारशब्दघटितं सूत्रयामास। तेन ज्ञायते काव्यग्रहणहेतुभूतालंकारव्युत्पादकेऽपि अस्मिन् शास्त्रे अलंकारनाम्ना व्यपदेशो भवतीति भावेन। उत्तरत्र "शास्त्रतस्ते" इतिसूत्रयित्वा विवृण्वन् ते=दोषगुणालंकारहानादाने शास्त्रतः=शास्त्रादस्मात्, शास्त्रतो हि ज्ञात्वा दोषान् जह्यात्, गुणान् अलंकारांश्च आददीत इति, तथा तत्रैव प्रथमाध्यायान्तेऽपि

'' काव्यालंकारशास्त्रार्थः प्रसाद्यः कविपुंगवैः ''इत्यप्याह सः एवं।

तदनन्तरकालिको विद्यानाथश्च– रस शब्दा र्थ गुणा लंकार वृत्ति-रीतयः अस्यालंकारशास्त्रस्य प्रमेयम्। इति बहुविषय प्रतिपादकमपीदं शास्त्र-मलंकाशास्त्रमिति व्यवृणोत् । प्रतिज्ञावाक्येऽपि—

वक्ष्ये सम्यगलंकारशास्त्रसर्वस्वसंग्रहम् ।

इत्यनेन कारिकार्धेन अस्य शास्त्रत्वमुरीचकार। अतश्चास्यालंकारशास्त्रव्यपदेशः बहुसम्मत इति युक्तमुत्पश्यामः ॥

## अलङ्कारिकाः

1 भरत-मेधाविरुद्र-कुमारदासादयः भामहात्प्राचीनतमा आलंकारिकाः !

2 भामह-दण्डि-रुद्रट-वामन-उद्भटाद्याः प्राचीनाः ।

3 आनन्दवर्धन-अभिनवगुप्त-धनञ्जय-भोज-क्षेमेन्द्र-मम्मट-जयरथ-जयदेव-विद्याचक्रवर्ति-विद्यानाथ-विद्याधर-विश्वनाथव्यम्बकसूरि-मल्लिनाथप्रभृतयः मध्यकालिकाः ।

4 अप्पय्यदीक्षित,-राजचूडामणिदीक्षित-जगन्नाथ-वैद्यनाथ-गंगाधराध्वरि-नागेशप्रभृतयः आधुनिका इति सामान्यतः आलंकरिका इति विभक्तु शक्यम् ।

तेषु **अप्पय्यदीक्षिताः** पूर्वपक्षसिद्धान्तरीत्या लक्षणपरिष्करणे लक्ष्य विमर्शे, प्राचीनोदाहरणं परित्यज्य नव्योदाहरणसंयोजने न्यायशास्त्रपद्धति मनुसृत्य निरूपणे च पटीयांसः बहुविचारचतुराः अलंकारशास्त्रेऽपि शास्त्रान्तरे ष्विव वादसरणिनिर्मातारः इत्यत्र नास्ति सन्देहलेश इति चित्रमीमांसा-कुवलयानन्दाद्यवलोककानां न तिरोहितम् ।

एतैश्च दीक्षितैः ध्वनि गुणीभूत व्यङ्ग्य काव्यस्वरूपोदाहरण प्रत्युदाहरणा दीनि वृत्तिवार्तिके अन्यत्र ग्रन्थान्तरे निरूपितानि भवेयुः । अस्यां तु चित्रमीमांसायां अर्थचित्रकाव्यप्रभेदस्य प्राचीनालंकारिकाभिमतलक्षणेषु अव्याप्त्यादिदोषमवलोक्य यत्र यत्र लक्षणान्तर प्रणयनावश्यकता तत्र तत्र लक्षणान्तरमेव प्रणीयते यथा उपमा अनन्वय उपमेयोपमा रूपकादीनाम् । यत्र तु किञ्चित् परिवर्तनेन परिष्कर्तुं शाक्यं तत्र प्राचीनानां लक्षणमेव परिष्क्रियते। यथा विद्यानाथाभिमतं उत्प्रेक्षालक्षणम् इत्यादि एतद् ग्रन्थाव लोकनत एव ज्ञायते ।

ग्रन्थारम्भप्रकरणे यो विशेषः प्रदर्शितः स इदानीं स्थालीपुलाकन्यायेन

विविच्य दिक्प्रदर्शनविधया विलिख्यते—

प्रकाशकारेण काव्यं तावदुत्तम-मध्यमा-धम-भेदेन विभक्तम् । तत्र अस्वरसं मनसि निधाय आनन्दवर्धनाभिमतरीत्या ध्वनिगुणीभूतव्यङ्ग्यचित्र भेदेन विभक्तम् ।

तथाविभागे चेदं निदानम्– यत्र असहृदयैः रसादिकं नास्वादयितुं शक्य तत्र सहृदयाः रसमास्वादयन्त्येव, तत्रयदि रसानुभवानुगुणा रचना स्यात् ।

किञ्च अर्थचित्रोदाहरणेषु शब्दचित्रोदाहरणापेक्षया चमत्कारातिशयः उल्लसत्येव, अतश्च मम्मटलक्षितरीत्या उभयचित्रं अधमकाव्यत्वाभ्युपगमो नोचित इति अत एव हि–

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद्यत् तच्चित्रमभिधीयते ॥

चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चित् शब्दचित्रं वाच्यचित्रमतःपरम् ॥

इत्येव विभागः प्रदर्शितः संगच्छते ।

अपरं च – यत्र शब्दालंकारघटना क्रियते तत्र रसाभिव्यक्तौ उत्तमत्वमेव, गुणीभावेन मध्यमत्वं वा वक्तव्यं भवति न पुनरधमत्वम् । यथा वा–

"धनुरधिज्यमनाधिरुपाददे नरवरो रवरोषितकेसरी ।"

इत्यादौ शब्दचित्रयमकघटितोदाहरणेषु उत्साहस्थायिनो वीररसस्य प्रकरणाव. गतस्य परिपोषकत्वं यमकादेर्दृष्टम् तावता चित्रस्य अधमत्व वक्तुं मनो नाभिलषति अत एव च – शृङ्गार प्रकशे भोजराजः–उपमाद्यर्थालंकार राहित्ये सत्यपि शब्दलंकार योजनायां काव्यशोभायाः न हानिरित्याह –

"उपमादि विमुक्तापि राजते काव्यपद्धतिः ।
यद्यनुप्रासलेशोऽपि हन्त तत्र निवेश्यते ॥

कुण्डलादिविमुक्तापि कान्ता किमपि शोभते ।
कुंकुमेनाङ्गरागश्चेत् सर्वाङ्गीणः प्रयुज्यते ॥

यथा ज्योत्स्ना चन्द्रमसं, यथा लावण्यमंगनाम् ।
अनुप्रासस्तथा काव्यमलंकर्तुमयं क्षमः ॥ इति ।

तत्र तावत् चित्रपदव्यपदेश्यमलंकारप्रस्थानं कदा उपक्रान्तमिति कालविशेषनिर्धारणं न चाञ्जसा कर्तुं शक्यम् । यतश्च वेदेऽपि रसालंकारादीन घटना परिदृश्यते तद्यथा—

1. "इयं यका शकुन्तिका हलमिति सर्पति" इत्यदौ शृङ्गारादेः ।

2. यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते ।
यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते ॥

इत्यस्मिन् श्रुतिवाक्ये अर्थव्यक्तेः ।

3. यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव "इत्यादौ उपमायाः ।

4. त्रिंशदस्या जघनं योजनानि "इत्यदावतिशयोक्तेः ।

5. "प्राणाउपरवाः हनू अधिषवणे, जिह्वा चर्म, ग्रावणो दन्ताः इत्यादौ रूपकस्य। एवं उपनिषद्यपि.

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥

इन्द्रियाणि हयान्याहुः विषयांस्तेषु गोचरान् ।

इत्यदिषु रूपकस्य दर्शनात्। एवं राजशेखरेणापि "द्वासुपर्णा सयुजा सखाया" इति उपनिषद्वाक्यमुद्धृत्य उपकारकत्वादलंकारः (वेदस्य) सप्तममंगम् ऋते च तत्स्वरूपपरिज्ञानाद्वेदार्थानवगति "रित्युक्तम्। मन्त्रे चास्मिन् रूपकेण अतिशयोक्त्या वा जीवात्मपरमात्मनोरत्यन्तसाम्यज्ञानमत्यन्तसुलभम् । तथोत्तरार्धे व्यतिरेकालंकारज्ञाने जाते जीवाद्वैलक्षण्यं परमात्मनि सुलभतया ज्ञातुं शक्यम् । ज्ञानगौरवपरिहारार्थमेव पण्डितानां प्रवृत्तिः। क्वचित्क्वचित् आग्रहादिनापि प्राचीनलक्षणखण्डने प्रवृत्तिर्दृश्यते । तत्र यदि प्राचीनैरुक्तं लक्षणं लक्ष्यं च समीचीनमिति विभाव्यते तदा वस्तुतस्त्वित्यादिना तत्सामीचीन्यं सम्पाद्यतेऽस्माभिः ॥

क्वचिद्रसगंगाधरकृता दुराग्रहेण दीक्षितोक्तरीतिः खण्डयते । तत्रापि यदि रसगंगाधरकृदुक्तिषु वैपरीत्यं, अनौचित्यंवा ज्ञायते तदपि खण्डयत एव। परन्तु विषयविवेचनमनुभवविपरीतं न भवेत् । केनापि यस्य कस्यापि विषयस्य आग्रहकृतं खण्डनं न प्रतितिष्ठति। खण्डनसमये च आग्रहागृहीत-मनसा भाव्यं नोचेचत्वापहारस्स्यात् ।

यद्यपि अप्पय्यदीक्षित-जगन्नथौ विमर्शकौ । अथापि निपुणतरोप-पादनशैली जगन्नाथस्येति नाविदितं विदुषाम् ।

## ग्रन्थकाराणां देश कालादिः

काञ्चीपुरीपरिसरे आर्काट् जिल्ला आरणिग्रामसमीपे 'अडयप्पलम्' नाम ब्राह्मणाग्रहारः एषामप्पय्यदीक्षितानां जन्मभूमिः । एषां च गोत्रर्षिः भरद्वाजः । सामशाखाधीतिनश्चैते । एतेषां पितामहः आचार्यदीक्षितः इति, वक्षस्स्थलाचार्य इति च नाम्ना प्रथितः । अस्य आच्चान् दीक्षित इति च द्रविडनाम ।

विजयनगराधीश्वरे कृष्णदेवराये, काञ्चिवरदराजस्य वसन्तोत्सवसमये पट्टमहिष्या सह कदाचित् काञ्चीपुरीं प्राप्य वरदराजं सेवमाने सति राज्ञः पट्टमहिषीं साक्षात् लक्ष्मीमिव परिदृश्यमानां विलोक्य संशयग्रस्तमनाः वरदराजः आत्मनः वक्षःस्थले स्थिता लक्ष्मीः तत्रैवास्ति नवेति सन्दिहान एव स्ववक्षःस्थलमवलोकयामास इत्यर्थबोधकेन—

काञ्चित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।
वरदः संशयापन्नः वक्षःस्थलमवैक्षत ॥

इति पद्येन एते आचार्यदीक्षिताः उपश्लोकितवन्तः । तदेतत् श्रुत्व सन्तुष्टः कृष्णदेवरायः एतानेवाचार्यदीक्षितान् "वक्षःस्थलाचार्य" इति सबहुमानमाहूय स्वीयास्थाने गुरुत्वेनावृणोत । अत्र च विषये पद्यमिदं श्रूयते ।

श्रीमन्तं भगवन्तमेनमवनीनाथाधिनाथस्तदा
विद्यारण्य यतीन्द्रबोधितनिगूढार्थागमाभ्यागमः ।
श्रीविद्यामनुराजवैभवसुखप्राप्तक्ष्मामण्डलः
श्रीमान् कृष्णनरेश्वरो गुरुवरं वव्रे बुधाराधितम् ॥ इति ।

पूर्वोक्तं "काञ्चित्काञ्चनेतिपद्यं चित्रमीमांसायामप्पय्यदीक्षितैरेव सन्देहालंकार

ध्वन्युदाहरणावसरे" यथा–अस्मत्कुलकूटस्थवक्षस्स्थलाचार्यकृते वरदराज-वसन्तोत्सवे-इत्यभिधायोद्धृतम् ।

एतेषामाचार्यदीक्षितानां द्वे पत्न्यौ बभूवतुः ।

तयोराद्या शैवमतावलम्बिनां दुहिता । तस्यां चत्वारः पुत्रा बभूवुः । द्वितीया तु तोतारम्बनाम्नी अतिप्रसिद्ध वैकुण्ठाचार्यवंशीयानां श्रीवैष्णवानां रंगराजाचार्याणां दुहिता । कालक्रमेण अस्यामपि चत्वारः पुत्रा बभूवुः । चतुर्षु पुत्रेष्वेषु ज्येष्ठ एव "**श्रीरङ्गराजध्वरी** (श्रीरङ्गराजमखी) । सोऽय-मात्मनः पितुस्सकाशादेव विद्यामभ्यस्य" अद्वैतविद्यामुकुरम्, विवरणदर्पणम् इत्येवमादीन् ग्रन्थान् जग्रन्थ ।

अस्य च द्वितीयः पुत्रः नीलकण्ठविजयचम्पूकारस्य **नीलकण्ठ** दीक्षीतस्य पितामह इत्यैतिहासिकाः । सोऽयं रङ्गराजाचार्यदौहित्रः आचार्यदीक्षितानां पुत्रः रङ्गराजाध्वरी श्रीकृष्णदेवरायभूपोत्तरकालिकस्य बोम्मनरेन्द्रस्य सचिवो भूत्वा चत्वारिंशद्वत्सरेषु गतेष्वपि अनपत्यतय निर्विण्णः सचिवपदं विहाय चिदम्बरक्षेत्रे नटराजं षड्वत्सरमाराध्य तदनु ग्रहात् पुत्रानवाप ।

तदुक्तं **शिवानन्दीये**—

"षट्शतत्रिंशदुत्तंसचतुस्साहस्रवार्षिके ।
कलौ नृपस्स्वयातो थ रसा बोम्मवशाभवत् ॥

सोऽपि बोम्मनृपः श्रीमद्रङ्गराजगुरूक्तितः ।
शशास वसुधामिन्द्रस्त्रिलोकीमिव सत्यतः ॥

आचत्वारिंशदायुस्तनयसुखमनाः मोक्षकांक्षीव कामान्
त्यक्त्वात्युग्रं तपस्यन् विबुधजनवचः प्रार्थ्यमानो नितान्तम् ।
स्वान्ते सम्भाव्य नित्यं किमपि किमपि संभ्रान्तबालग्रहार्त–
प्रायः श्रीपुण्डरीकेश्वरमभजदसौ रंगराजो मखीन्द्रः ॥

षड्वत्सरेण भगवान् शशिखण्डमौलिः
सन्तुष्टधीर्निजजनानुजिघृक्षुरस्मै ।
अस्मिन् कलाभिरयमेव पतञ्जलिस्ते
पुत्रो यदोर्हरिरिवास्त्विति वाचमूचे ॥

तत्प्रसादमुपलभ्य जायया
सार्धमेष निजसद्मसंगतः ।
इष्टदेवमभितर्पयन् गुणैः
इष्टसिद्धिमगमद्द्विजोत्तमः ॥ इति ।

एषां कालश्च क्रि.श. १५५०–१६२५ इति केचित् । क्रि.श. १५५२-१६२७ इत्यपरे । सिद्धान्तलेशसंग्रह-भूमिकायां श्रीनारायणशास्त्रिणस्तु क्रि.श. १५८७-१६६० इत्याहुः । नीलकण्ठदीक्षितविरचितचम्पूनिर्माणान्तिमकालनिर्देशं जनजनितकथां च आधृत्य क्रि.श. १५५०-१६२३ इत्यन्ये ।

अरिवीलिमङ्गलम् नाम शासनजातं प्रकाशयद्भिः क्रि.श. १५५४-१६२६ दीक्षितानां काल इति जगदे । हालस्यनाथशास्त्रिणश्च कुवलयानन्द-भूमिकायां दीक्षितानां कालः क्रि.श. १५५२-१६२७ इति आहुः ।

परन्तु आधुनिकाः इतिहास संशोधकाः चरित्रशास्त्राद्याधारेण क्रि श. १५२०-१५९३ दीक्षितानां कालः इति अभिप्रयन्ति । तथापि मुद्रितदीक्षितग्रन्थभूमिकासु क्रि.श. १५५३-१६२६ इत्यवलोक्यते ।

वस्तुतः अप्पय्यदीक्षितानां कालः श्रीचिन्नतिम्म-चिन्नबोम्म-वेङ्कटपति रायाणां राज्यभारसमये तदाश्रयेणावस्थानोक्त्या एषां विद्याभ्यासवर्षाणि च क्रोडीकृत्य पर्यालोचनायां कृतायां क्रि.श. १५२०-१५९२ पर्यन्त इति सामान्यतो निष्कर्ष्टुं शक्यम् । यदि चित्रमीमांसाकरणं वीरनरसिंहभूपसमये भवेत् तदा क्रि.श. १५१५-१५८५ भवेत् ।

परन्तु-यत् महीशूरपुरी प्राच्यविद्यासंशोधनालय-मुद्रितयादवाभ्युदय भूमिकायां— दीक्षितकृत चित्रमीमांसायां—परिणामोत्प्रेक्षालंकारप्रकरणयोः क्रमेण —

द्विर्भावः पुष्पकेतोः, विबुधविटपिनां पौनरुक्त्यं, विकल्प-
श्चिन्तारत्नस्य, वीप्सातपनतनुभुवो, वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याभिमथनकलाकेलिकारस्य कुर्वन्
आनन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥

(एका॰ २—उन्मेषे)

नरसिंहमहीपाल विदुस्त्वां मकरध्वजम् ।
मार्गणास्तव सञ्जाताः कथं सुमनसोऽन्यथा ॥

(एका॰ 8 उन्मेषे)

इति पद्ययोर्दर्शनात् चिन्नबोम्मभूपाग्रज नरसिंहभूपालसमकालिका इति नरसिंहभूपालोऽप्याश्रयदातेति ज्ञायत इति मुद्रितमस्ति । सत्यम्—

अथापि तयोः न नरसिंहसमकालितत्वं साधयितुं प्रमाणता । यतः एकावलीकारस्याश्रयदाता नरसिंहभूपतिर्नाम कश्चन आसीत् । स च विद्याधरेण एकावल्यामभिष्टुतः । एकावल्यामिमे पद्ये दृश्येते ।

परंतु "परिणामप्रकरणे—

"नरसिंह धरानाथ के वयं तवर्णने ।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥"

इति विद्याधरेणोदाहृतम् "इति दीक्षितैरेव स्पष्टमुक्तं न तु–

नरसिंह महीपालविदुस्त्वां मकरध्वजम्" इति पद्यम् ।

किन्तु नरसिंहमहीपाल" इति पद्यमुत्प्रेक्षाप्रकरणे उद्धृतम् । द्विर्भावः पुष्पकेतोः "इति पद्यं परिणामालंकारे यथा वैयधिकरण्येनाऽपि परिणामस्तथा रूपकमपि वैयाधिकरण्येन सम्भवतीति "तारानायकशेखरायेति" पद्यमुदाहृत्य विद्याधरेण निर्मितमपि पद्यमुदाहरणान्तरप्रदर्शनार्थमेकावल्याः उद्धृत्योदाहृतं न पुनः दीक्षितैर्निर्मितम्, दीक्षितानामपेक्षया बहोः कालात्पूर्ववर्तिनं नरसिंहनृपमाश्रितो विद्याधर इति दीक्षतानामाश्रयदाना चिन्नबोम्मभूपालग्रजः नरसिंह इत्यत्र प्रमापकं गवेषणीयमेव ॥

एषां नाम(करणम्)–

सौहार्देन यदप्प इत्यनुदिनं पित्रर्पितं तद्बहि–
र्नामासीत् अथ नामकर्मणि गणेशाख्या कृता तेन च ॥

इत्युक्तरीत्या "गणेशः" इति नामकरणं कृतम् । तदनु पित्रा प्रेम्णा "अप्प" इति, तदेव च द्राविड कर्णाटान्ध्रादि देशादि व्यवहाराय पूज्यार्थे

केन आर्यपदपर्यायेण अय्यपदेन, अयपदेन वा संयुतं ''अप्पय्य इति अप्पय वा व्यवहृ(तम्) तः ।

पश्चाद्यज्ञानुष्ठाननिबन्धनेन दीक्षितपदेन च संहृत्य ''अप्पय्यदीक्षित'' इति अप्पय्यदीक्षित इति अप्पदीक्षित इति च नाम्ना व्यवहृत इति

लीढालीढपुराणसूक्तिशकलावष्टम्भसंभावना
पर्यस्त श्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् ।
श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मनेवाच्युतः
श्रीमानप्पयदीक्षितस्स जयति श्रीकण्ठविद्यागुरुः ॥

इति **नीलकण्ठविजयचम्पू**स्थपद्येन, अप्पयदीक्षित इति,

तथा— हेमाभिषेकसमये परितो निषण्ण-
सौवर्णसंहतिमिषच्चिनबोम्मभूपः ।
अप्पय्यदीक्षितमणेरनवद्यविद्या-
कल्पद्रुमस्य कुरुते कनकालवालम् ॥

इति समरपुंगवदीक्षितकृतयात्राप्रबन्धगतपद्यात् अप्पय्यदीक्षित इति, तथा

''अमुं कुवलयानन्दमकरोदप्पदीक्षितः''
इति स्वकृत कुवलयानन्दान्तिमपद्यतः
अप्पदीक्षित इत्यपि व्यवहृतः इति ज्ञायते ॥

## **विद्याग्रहणम्**

यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्
तद्दर्शनादखिलदर्शनपारभाजः !

तं सर्ववेदसमशेषबुधाधिराजम्
श्रीरंगराजमखिनं पितरं नतोऽस्मि ॥

इति शिवार्कमणिदीपिकायाम् न्यायरक्षामणौ च ।

प्राचीनैर्व्यवहारसिद्धिविषयेष्वात्मैक्यसिद्धौ परं
संनह्यद्भिरनादरात् सरणयो नानाविधा दर्शिताः ।
तन्मूलानिह संग्रहेण कतिचित्सिद्धान्तभेदानधियः
शुद्धयै संकलयामि तातचरणव्याख्यावचः ख्यपितान् ॥

इति सिद्धान्तलेश संग्रहस्थ पद्यात्—

सर्वविद्यालतोपघ्नपारिजातमहीरुहान् ।
महागुरून्नमस्यामि सादरं सर्ववेदसः ॥

महतामपि मान्यतमं विदुषां
विनिवेश्य गुरुं हृदि वैश्वजितम् ।
नयसंहतिशालिनि कल्पतरौ
विवृतश्चरणः प्रथमः प्रथितः ॥

इति परिमलग्रन्थस्थवाक्यादपि एकस्मादेवगुरोस्सकाशात् (पितुस्सकाशात्) विद्याग्रहणमिति ज्ञायते ।

## परिणयः

विद्याग्रहणान्तरंच एकां परिणीय, तदनु द्वितीयामपि उपयेमिरे । अतएवच अप्पय्यदीक्षितानामपि भार्याद्वयमासीत् इति प्रथा । तयोः द्वितीया

कुण्डीरमण्डलान्तर्गत चेङ्गींपुरात्पश्चिमतो वर्तमाने सत्यमङ्गलनाम्नि अग्रहारे निवसतां पण्डितमूर्धन्यानां सत्यमङ्गलरत्नखेट श्रीनिवासदीक्षितानां पुत्री मङ्गलाम्बा विदुषी आसीत् ।

अत्रेदमैतिह्यम् — सत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिताः पण्डित प्रकाण्डा आसन् । कर्णाटसिंहासनप्रतिष्ठापकस्य पोतनायकवेङ्गलाम्बयोः पुत्रस्य शूरप्पनायकस्य राज्ञः आस्थाने यदा एते आसन्, तदा एतैः रत्नखेट-दीक्षितैः सह वादार्थं नानादिगन्तेभ्यः विद्वांसः आयान्ति स्म । तदानीं च एषां गृह एव बहवश्शिष्याः गुरुं शुश्रूषमाणाः विद्यामभ्यस्यन्त आसन् । इत्थं विद्यालयवद्वर्तमानेऽस्मिन् गृहे कुमार्योऽपि सहजतयेव पाण्डित्यं अलभन्त ।

इत्थं सति कदाचित् कस्मिंश्चिद्दिने उपसि एषां दीक्षितानां पुत्री मङ्गलाम्बा देहलीमुपलिम्पन्ती तत्रागतान् विदुषः अपश्यत् । पप्रच्छ च यूयं के? किमर्थं कुत आगताः? इति । तदा वयं रत्नखेटदीक्षितैस्साकं वादार्थं देशान्तरादागता इति ते उत्तरं ददुः । तच्छ्रुत्वा देहलीं छगण जलेन उपलिम्पन्ती —

''विपश्चितामपश्चिमे विवादकेलिनिश्चले
सपत्नजित्प्रयत्नतस्तु रत्नखेटदीक्षिते ।
बृहस्पतिः क्वजल्पति प्रसर्पति क्व सर्पराट्
असम्मुखस्तु षण्मुखश्चतुर्मुखोऽपि दुर्मुखः ॥

इति तालानुसारेण प्रत्यवदत् तदैव ते विमुखाः प्रत्यगच्छन् । एतादृशकवि-चातुर्या मङ्गलाम्बा । अस्याश्च सोदरः रुक्मिणीपरिणय-काव्यदर्पणादीनां कर्ता राजचूडामणिदीक्षितः । येन च पूर्वोक्तं पद्यं काव्यदर्पणे क्रिया गुणयोः

वयधिकरण्येन समुच्चयस्योदाहरणत्वेनोपन्यस्तम् । एवंविनृधभ्रामती अप्पय्य-दीक्षितानां पत्नी बभूवेति श्रुतवतां मनः मुदमुपयाति । अस्याश्च ''अच्चा'' इत्यपि प्रसिद्धिरास ।

एवमेव गते काले दीक्षिताः देशसञ्चारं कृत्वा स्वपाण्डित्यं प्रदर्श्य राजभिस्संमानमुपलभ्य, श्वशुरगृहं प्रति गन्तव्ये सति परश्शतं शिष्यैः परिवृताः यदा सत्यमङ्गलग्रामं प्रविविशुः । तदा रत्नखेटदीक्षित गृहप्रति-वेशिनी काचन तरुणी क एते इति कयाचित्पृष्टा ''नः अच्चम्मनाम्न्याः पति'' रिति उत्तरितवती । तदेतद्वचः अप्पय्यदीक्षितानामपि श्रोत्रपथं गतम् । तदनु स्वशिष्यैस्सह एवमवोचन् (दीक्षिताः) 'अहं भरतखण्डे प्रख्यातिं यद्यपि गतः अथापि अत्र ग्रामे अच्चा प्रख्यातिं गता'' इति ॥

अन्यश्च अप्पय्यदीक्षितस्यालकेन राजचूडामणि दीक्षितेन अप्यय्य दीक्षितकृता चित्रमीमांसा वृत्तिवार्तिकं च परिशीलित तत्र तत्र खण्डितं च ।

## राजाश्रयः ग्रन्थविशेषरचना च

एषां दीक्षितानां प्रायो विंशतिवर्षाणामनन्तरं राजाश्रयावस्थानमित्यूह्यते । यतश्च वीरनरसिंह्मस्य राज्ञः समये प्रथमतः '' **चित्रमीमांसायाः** रचनं चेत्प्रथमाश्रयदाता वीरनरसिंह्मः भवेत् ।

प्रथमा (द्वितीया) श्रयदातुः '' श्रीतिम्मराजस्य समये कदा-चित्साहित्यगोष्ठीमातिष्ठन्तः एते राज्ञा तिम्मराजेन नियुक्ताः कवितार्किक सिंहस्य कृतिषु यादवाभ्युदयं काव्यरत्नं न्यवृण्वन् इति—

कवितार्किकसिंहस्य काव्यमेतद्यथाविधि ।
विवृणोमि महीपालनियोगबहुमानतः ॥

इति **यादवाभ्युदय व्याख्यो**पक्रमपद्यतो ज्ञायते । द्वितीया (तृतीया) श्रयदातुः चिन्नबोम्मनृपतेः नियोगात्- **चतुर्मतलेशसंग्रहः** व्यधायीति—

सर्वेषामपि पूजनी सुमनसामव्याहताज्ञाञ्चिता
श्लाघ्यश्लोकपरम्पराधिकरणेष्वासादित प्रौढिमा ।
एषा मत्कृतिरेधतामनुकलं ब्रह्मप्रतिष्ठापिनी
राज्यश्रीरिव चिन्नबोम्मनृपतेराचन्द्रसूर्यं क्षितौ ॥

आनन्दतीर्थमुनिलक्ष्मणदेशिकेन्द्र
श्रीकण्ठयोगिपदवीरदवीयसीर्नः ।
आचार्यपादसरणिं च विविच्य बोद्धुं
संगृह्यते मतचतुष्टयसारलेशः ॥

इति पद्याभ्यां ज्ञायते । तथैव शिवार्कमणिदीपिकादयः कृता इत्यपि

भाष्यमेतदनघं विवृण्वति स्वप्नजागरणयोरसमंप्रभुः
चिन्नबोम्मनृपरूपभृत्स्वय मां न्ययुङ्क्तमहिलार्धविग्रहः ॥

इत्यनेन **शिवार्कमणिदीपि**कास्थेन पद्येन ज्ञायते ।

परन्तु—श्रीकण्ठभाष्यकर्ता तदानीं कोऽपि नासीत् । तथापि तदानीं ईश्वरपारम्यमसमानाः विष्णुपारम्यप्रतिपादकाः ''पञ्चमतभञ्जनं ताताचार्यमुखाः पण्डितप्रकाण्डाः आसन् । तेषां ईश्वद्वेषभावलोकयितुमसहमानाः स्वयमेव श्रीकण्ठनामकं ब्रह्मसूत्रभाष्यकर्तारं परिकल्प्य तन्नाम्ना श्रीकण्ठभाष्यं शिवपरं रचयित्वा तद्व्याख्यारूपतया शिवार्कमणीदीपिकां विदधुः इति ब्रह्मतन्त्र परकालमठ मुद्रिते श्रीकण्ठसमालोचनात्मके विमर्शात्मकग्रन्थे सविस्तरं समर्थित मेव ।

यतश्च विष्णुपारम्यप्रतिपादकैः " नहि निन्दान्यायेन " ईशद्वेषे प्रतिपादितेऽपि तदसहमानैः एभिः विष्णुद्वेषो ममाप्यस्तीति जनाः सन्दिहेयुरिति स्वयमेवाशङ्कय.

शिवो वा विष्णुर्वा श्रुतिशिखरगिरामस्तु तात्पर्यभूमिः
नास्माकं तत्र वादः प्रसरति किमपि स्पष्टमद्वैतभाजाम् ।
किन्त्वीशद्वेषगाढानलकलितहृदां दुर्मतीनां कुयुक्तीन
भङ्क्तुं यत्नो ममायं नहि भवति ततो विष्णुविद्वेषशंका ॥

इति,

शिवं वा विष्णुं वा यदभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यं नः सगुणमपि तद्ब्रह्म भजताम् ।
विरोधो नातीव स्फुरति नहि निन्दानयविदां
न सूत्राणामर्थान्तरमपि भवद्भार्यमुचितम् ॥

इति पद्याभ्यां समादधुः इति ज्ञायते ।

तथैव– हरि हरावुभावपि

वस्त्रं पिशङ्गं वसनं दिशो वा
गरुत्मता यातु ककुद्मता वा ।
निद्रातु वा नृत्यतु वाधिरङ्गे
भेदो न मेस्यात्परमस्य धाम्नः ॥

इत्यनेन पद्ये नरतोंत्रयामासुः ।

चिदम्बरे एकत्र गोविन्दराजम्, अपरत्र नटराजञ्च स्थापयित्वा उभावपि—

मारमणमुमारमणं फणितल्पं फणाधरालकपम् ।
मुरमथनं पुरमथनं, वन्दे बाणारिमयुगबाणारिम् ॥

इत्यनेनपद्येनस्तोत्रयामासुरित्यैतिह्यम् ।

एवमपि–यत् ग्रन्थकृतः कुवलयानन्दान्ते अद्वैतविद्याचार्यश्रीमद्भ द्वाजकुलजलधिकौस्तुभ श्रीरंगराजाध्वरीन्द्रवरसूनोः अप्पय्यदीक्षितस्य कृतिः कुवलयानन्दः समाप्तः इति परिदृश्यते ।

नीलकण्ठविजयेतु एकैकस्याप्याश्वासस्यान्ते अप्पय्यदीक्षितसोदा श्रीमदाच्चान्दीक्षितपौत्रेण नारायणदीक्षितात्मजेन नीलकण्ठदीक्षितेन एते अप्पय्यदीक्षिताः श्रीकण्ठमतप्रतिष्ठापनाचार्या इति उल्लिख्यते । तदेत दुभयमवलोकयतां विमर्शकाणां इमे अप्पय्यदीक्षिताः किं शैवाः ? उत शाङ्करा इव नारायणाद्वैतिनः इति सन्देहो जायते । तस्मिंश्च सति निर्णायक मपेक्ष्यते । उच्यते इमे दीक्षिता, चतुरधिकशतप्रबन्धनिर्मातरः । तेषु केचन

1 ) अद्वैतसिद्धान्तावलम्बिनः 2 ) केचन सगुणसिद्धान्ताव लम्बिनः 3 ) केचन विशिष्टाद्वैतसिद्धान्तवलम्बिनः
4 ) केचन द्वैतमताबलम्बिनः 5 ) केचन आलंकारिकसिद्धा न्तावलम्बिनः 6 ) केचन वैयाकरणसिद्धान्तावलम्नः
7 ) केचन मीमासासिद्धान्तावलम्बिनः 8 ) केचन काव्य व्याख्यानरूपाः ।

एषु 29 ग्रन्थाः शिवोत्कर्षप्रतिपादकाः । तेन ज्ञायते शिवपारम्य प्रतिपादन एवैषां परमतात्पर्यमिति ।

किञ्च तत्र कालकण्ठेश्वरदेवालय, सुन्दरेश्वरदेवालय निर्माणस्य चिदम्बरे नटराजस्थपनस्य च कृतत्वात् शैवा इत्येव निर्णयः ।

एतैश्च तृतीयाश्रय ( चतुर्थाश्रय ) दातुर्वेङ्कटपतिरायस्य समये विधि-सायनम्, कुवलयानन्दश्चेत्येवमाद्याः ग्रन्थाः विरचिता इति

प्राप्तं तत्प्रापणीयं किल यदिह कियान् पूराणीयोऽस्तिनांशः
नानिष्टं वा निवर्त्यं निजविषयतया दृश्यते किञ्चिदत्र ।
किन्तु व्यापरमेष प्रथयति फलसंयोजनार्थं परेषां
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेङ्कटक्षोणिपालम् ॥

इति विधिरसायनोक्त्या—

अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेः निरुपाधिकृपानिधेः ॥

इति कुवलयानन्दोक्त्या च ज्ञायते ॥

एभिःविरचिताः अनेके प्रबन्धाः--

### 1 तेषु 29 प्रबन्धाः सगुणनिष्ठाः—

1. शिखरिणीमाला
2. " व्याख्या शिवतत्त्वविवेकः
3. ब्रह्मतर्कस्तवः
4. " व्याख्या
5. आदित्यस्तवरत्नम्
6. " व्याख्या
7. शिवध्यानपद्धतिः
8. " व्याख्या
9. शिवार्चनचन्द्रिका
10. " व्याख्या बालचन्द्रिका
11. पञ्चरत्नस्तवः
12. " व्याख्या
13. आत्मार्पणस्तुतिः
14. शिवानन्दलहरी
15. " व्याख्या

16. दुर्गाचन्द्रकलास्तुतिः
17. " व्याख्या
18. शिवमहिमकलिकास्तुतिः
19. अरुणाचलेश्वरस्तुतिः
20. आपीतकुचाम्बास्तवः
21. शिवकर्णामृतम्
22. रत्नत्रयपरीक्षा
23. शिवपूजाविधिः
24. आनन्दलहरी
25. मानसोल्लासः
26. शिवार्कमणिदीपिका
27. नयमणिमाला
28. " व्याख्या
29. शिवाद्वैतनिर्णयः इति

2 निर्गुणवस्तुप्रतिपादनपराः 5 प्रबन्धाः—

1. परिमलः
2. सिद्धान्तलेशसंग्रहः
3. वेदान्तवादनक्षत्रमाला
4. न्यायरक्षामणिः
5. नयमञ्जरी ( अनुपलभ्या )

3 पौराणिकतात्पर्यसंग्रहरूपौ 2 प्रबन्धौ—

1. रामायणतात्पर्यसंग्रहः
2. भारततात्पर्यसंग्रहः

4 विशिष्टाद्वैतमतानुयायिनः ४ प्रबन्धाः

1. नयमयूखमालिका
2. " व्याख्या
3. यादवाभ्युदयव्याख्या
4. पादुकासहस्रव्याख्या

5. वरदराजस्तवः
6. " व्याख्या
7. श्रीकृष्णध्यानपद्धतिः
8. " व्याख्या

5 द्वैतमतानुयायिनौ 2 प्रबन्धौ

1. न्यायरत्नमाला
2. " व्याख्या

6 व्याकरणे 1 प्रबन्धः

पाणिनीयनक्षत्रवादावली

7 अलंकारशास्त्रे 3 प्रबन्धाः

1. अर्थचित्रमीमांसा
2. कुवलयानन्दः
3. वृत्तिवार्तिकम्

8 साहित्ये 1 प्रबन्धः

नामसंग्रहमाला

9 मीमांसायाम्

1. उपक्रमपराक्रमः
2. पूर्वमीमांसावादनक्षत्रमाला
3. विधिरसायनम्
4. " व्याख्या
5. चित्रपुटः-इत्येवमाद्याः

मध्व-रामानुजमतखण्डनपरावपिग्रन्थौ लिखितौ

प्राकृतग्रन्थः—प्राकृतमणिदीपः एकः

एषु न्यायमुक्तावली, नयमयूखमालिका, नयमणिमाला नयमञ्जरी इति ग्रन्थचतुष्टयं चतुर्मतसंग्रहनाम्ना प्रसिद्धम् ।

## आलयनिर्माणादिः

चिन्नबोम्मस्य राज्ञः समये ( चिन्नबोम्मेन ) राज्ञा प्रेरिताः अप्पय्य दीक्षिताः शिवार्कमणिदीपिकांव्यदधुः । तदनन्तरं सन्तुष्टः एष कनकाभिषेकं कृतवान् । अयं च कनकाभिषेकः प्रायः क्रि॰ श॰ 1582 तमे वत्सरे निर्वर्तितो भवेत् इति ज्ञायते । अतएव **समरपुंगवदीक्षितेन** विचिते-तीर्थयात्रा प्रबन्धे ( द्वितीयाश्वासान्ते )

कर्णः श्रीचिन्नबोम्मक्षितिपतिरभितो लम्भयन् शातकुम्भ
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिः प्रशस्या ।
रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिरत्नप्रसूतेः
विद्याकल्पद्रुमस्य स्वयमिव कल्यन् जातरूपालवालम् ॥

इत्युक्तम् ।

अन्यत्र संस्कृतकविचरित्रसम्पादकेन एम्॰ एन्॰ श्रीनिवासैयङ्गार्येणां च—शिवार्कमणिदीपिकावसानलब्धकनकस्नानाः प्रशंसितास्समरपुङ्गवयज्वना यथा—

हेमाभिषेकसमये परितो निषण्ण-
सौवर्णसंहतिमिषाच्चिनबोम्मभूपः ।
अप्पय्यदीक्षितमणेरनवद्यविद्या
कल्पद्रुमस्य कुरुते कनकालवालम् ॥ इति

एवं—**नीलकण्ठदीक्षितस्य** नलचरितनाटके च—

नानादेशनरेन्द्रमण्डलमहायत्नातिदूरीभवत्
कादाचित्कपदारविन्दविनतेरप्पय्ययज्वप्रभोः ।

शैवोत्कर्षपरिष्कृतैरहरहस्सूक्तैस्सुधालालितैः
फुल्लत्कर्णपुटस्य बोम्मनृपतेः पुण्यानि गण्यानि किम् ? ॥

इत्युल्लेखात् , अन्येन च

' येन श्रीचिन्न बोम्मक्षितिपलवभिदः कीर्तिरव्याहता स्यात् । ' इति क्रि. श. 1582 तमवत्सरीय अडयप्पल शासने उल्लेखाच्च एतेषां जीवित कालः ( क्रि० श० 1520-1590 ) इति ऊह्यते, परंतु विप्रतिपत्त्योरेशः । पूर्वोद्धृतशासनेन च मुख्यतया—अप्पय्यदीक्षिताः स्वजन्मभूमिभूते अड़यापलनाम्न्यग्रहारे कालकण्ठेश्वरदेवालयं निर्मितवन्तः इत्युक्तौ समालोचितायां कनकाभिषेकानन्तरं तेनैव कनकेन देवालयो निर्मितो भवेत् , इत्यूह्यत इत्यप्युक्तं संगच्छते ।

एवमेव–विरिञ्चिपुरे-मीनाक्षी-सुन्दरेश्वरदेवालयम् , चिदम्बरे नटराजम् गोविन्दराजं च स्थापयामासुः । एषु देवालयेषु, विरिञ्चिपुरस्य मीनाक्षी सुन्दरेश्वरदेवालयं काञ्ची उपनिषद्ब्रह्मसरस्वतीवंशीयाः महादेवेन्द्रसरस्वतयः अप्पय्यदीक्षितवंशजैः राजदीक्षितैस्सह क्रि॰श॰ 1890 समये जीर्णोद्धारमकुर्वन्निति किंवदन्ती ।

## एषां सन्तानभाग्यम्

एषां नव पुत्राः । ते च शास्त्रज्ञाः विनयोज्वलाश्च आसन् । एवमेव अतिक्रामति च काले दीक्षितेन्द्राणां वर्षाणां सततिः व्यतीयाय. ततः कस्मिंश्चित् समये कर्म-ज्ञानमार्गानवलम्ब्य परश्शतं प्रबन्धान् प्रणिन्युः । पश्चाद्विरक्ताःनटराजानुग्रहमात्रप्रतीक्षा अवर्तन्त ।यदा च नटराजानुग्रहकालः सन्निहितस्तदा पुत्रानाहूय भवतां किमपेक्षितमिति पर्यपृच्छन् ।

तदा तेषु पुत्रेषु एकः वैराग्यं प्रार्थयामास ।
तद्वंशजा एव क्रि० श० 1947 तमे वर्षे महीशूरपुरीमध्यविद्योतमानां जय चामराजेन्द्रओडेयरमहाराजःसंरक्षितां श्री म न्म हा रा ज संस्कृतमहापाठशालां अवलोक्य तत्र योगशास्त्रविषये स्वीयां प्रक्रियां प्रदर्शितवन्तो महाभागा हृषीकेशनिवासिनः श्रीशिवानन्दस्वामिनः ।

अपरः पुत्रः विद्यां प्रार्थयामास । तद्वंशीया अद्यापि प्राड्विवाका प्राध्यापकाश्चासन् ।

एवमेव अन्यःपुत्रः क्षेत्रारामादिकमर्थितवान्, तद्वंशीया इदानीमपि क्षेत्रिणो वर्तन्त इति प्रथा ।

इतरः न्यायशास्त्रपाण्डित्यमर्थितवान् । तदाप्रभृति तद्वंशीयाः न्यायशास्त्र निपुणाः । एतद्वंशीया एव सर्. सि. पि. रामस्वामि ऐय्यर् महाशयाः सुप्रसिद्धाः अवर्तन्त । ते तु परं क्रि०श 1967 तमे वत्सरे स्वर्गताः इति श्रुतम् ॥

## एषामवसानवृत्तम्

इत्थं तत्तदभीष्टं प्रदाय नटराजपदैक्यमधिगन्तुं चिदम्बरक्षेत्रं गत्वा नटराजपादतले शिरो निधाय प्रार्थनां कर्तुमुपक्रम्य

चिदम्बरमिदं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्वलाः सुकृतयश्च काश्चित्कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
नकिञ्चिदहमर्थये शिवपदं दिदृक्षे परम् ॥

इति प्रार्थयमानाः—

आभाति हाटकसभानटपादपद्म
ज्योतिर्मयो मनसि मे तरुणारुणोऽयम् ।

इत्येतावता उपश्लोकिते नटराजे तत्पादयोरैक्यं गताः ।
तदनु च दुःखोदधौ निमग्नैः तत्पुत्रैः—

नूनं जरामरणघोरपिशाचकीर्णा
संसारमोहरजनी विरतिं प्रयाता ॥

इत्युत्तरार्धपूरणंकृतम् । एवंविधाः पुरस्परस्त्रीत्याख्यां लब्धाः एते अप्पय्यदीक्षिताः, इत्यादयः केचन विषयाः डा. एस. श्रीकण्ठशास्त्रिमहोदयानां लेखनतः उद्धृतः ।

## अप्पय्यदीक्षित--जगन्नाथौ

अप्पय्यदीक्षित–जगन्नाथयोः कालविषये चारित्रिकविषये च अस्ति विवादः ।

1 अप्पय्यदीक्षितास्तावत् ( क्रि० श० 1542–1550 ) वत्सर स्थितचिन्नतिम्मसमये, ( क्रि० श० 1549–1578 ) वत्सरस्थित चिन्नबोम्मसमये तथा (क्रि० श० 1585–1598 ) स्थितवेङ्कटपति रायसमये स्थिताः इति निर्विवादम् । तेषामेव समये यादवाभ्युदय शिवार्कमणिदीपिका कुवलयानन्दादि ग्रन्थनिर्माणादिकमभूत् ।

तथा क्रि० श० 1588 तम वत्सरस्थितमीमांसकमूर्धन्यखण्डदेवसमयेऽप्येते आसन् । यतः दीक्षितैः कृतं विधिरसायननामकं मीमांसाग्रन्थमव

लोक्य खण्डदेवेन कस्मिंश्चिद्विषये अप्पय्यदीक्षितापादितं दूषणं मीमांसा कौस्तुभे उद्धृतम् । अतश्च खण्डदेवाप्पय्यदीक्षितौ समसामयिकौ ।

तथा कर्णाटभूभृतः कृष्णराजस्य गुरोः काञ्चीमण्डलमाण्डनस्य पञ्च मतभञ्जनं तातार्यस्य च समसामयिकाः एतेदीक्षिताः । एषां च समयः— क्रि० श० 1530–1614 ।

एवं राजचूडामणिदीक्षितानां पितृचरणाः रत्नखेटश्रीनिवास दीक्षिताः एषां श्वशुराः ( अप्पय्यदीक्षितद्वितीयपत्न्याः मङ्गलाम्बायाः पितृपादाः ) एषां च समयः क्रि० श० 1540–1625 । एवं च क्रि० श० 1520–1600 समयोऽप्पय्यदीक्षितानां तदुपरिवर्तमानता तु न सुलभ मनुमेया ।

" एवं च पूर्वमुल्लिखितास्सर्वेऽपि 16 शतकस्थाः । "

जगन्नाथस्तु—जहांगिरराजस्य समनन्तरं (1628_1658 क्रि० श०) राज्यं शासतः षहाजहान् नरपतेः समये, तत्पुत्रस्य दाराशिकोहस्य क्रि० श० 1659 तमे राज्यं शासतः समयेपि आसीत् इति

" दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः "

इति भामिनीविलासपद्यतो ' ज्ञायते । ' जगदाभरणम् नाम षहाजहान् नरपतेः पुत्रस्य ' दाराशिकोहस्य ' वर्णनार्थं प्रवृत्तम् । एवं पण्डित राजस्य बाल्यं च क्रोडीकृत्य गणनायां क्रि० श० 1600_1675 पर्यन्तं जीवितदशा भवेत् ।

यतश्च उपमानिरूपणावसरे—गज इव गच्छति इत्यत्र जादिसाद श्यस्य गमनादिकर्तर्यन्वयः आख्यातवादशिरोमणिव्याख्यातृभिरपि सिद्धान्तितः

इत्यनूद्य एवंरीत्या अन्वयोपगमे सादृश्यस्य विधेयताप्रतीतेरपलापापत्तिरि गदाधरभट्टाचार्यादिभिरभ्युपगतोंऽशः दूषितः। तेन ज्ञायते क्रि० श० 1650 तमस्थितगदाधरभट्टाचार्यसमकालिकः वयसा किञ्चित् न्यूनो भवेत्। अयमेव समयः हरिदीक्षितस्यापि इति ज्ञायते।

एवमेतत्समसामयिकः नीलकण्ठविजयचम्पूकारः, (क्रि० श० 1650–1675), आत्रेयवेङ्कटाध्वरी विश्वगुणादर्शचम्पूकारश्च (क्रि० श: 1608–1675) सहाध्यायिनौ। परन्तु राजचूडामणिदीक्षितः (क्रि (श० 1580–1636) अप्पय्यदीक्षितस्यालकः अप्पय्यदीक्षितकालिक० तदनन्तरकालिकश्च। यतः अनेन स्वीये काव्यदर्पणे–चित्रमीमांसा-वृत्ति वार्त्तिकयोर्विषयमुद्धृत्य निराकृतं वर्तते। अतश्च जगन्नाथः तदा युवा भवेत्।

तथा भट्टमथुराशास्त्रिणां पूर्वजेषु नारायणभट्टो नाम विद्वान् 17 शतके जगन्नाथपण्डितात् शास्त्रमधीतवान् इति भट्टमथुरानाथशास्त्रि सम्पादित साहित्यवैभवस्थवंशवीथ्यां लिखितेन—

लब्ध्वा विद्याः निखिलाः पण्डितराजाज्जगन्नाथात्।
नारायणस्तु दैवादल्पायुः स्वःपुरीमगमत्॥

इति पद्यतो ज्ञायते। काशीतः यदा जगन्नाथः जयपुरमाजगाम। तदा प्रभृति जयपुरमहाराजाश्रितैः भट्टमथुराशास्त्रिणां पूर्वजैः साकं कश्चन सम्बन्ध आसीदिति मुम्बामुद्रित भट्टमथुराशास्त्रिलिखितभूमिकातो ज्ञायते।

एवं च जगन्नाथः 17 शतकस्थः इत्यत्र न संशयलेशोऽपि। इत्थं सति जगन्नाथविषयकाणां किंवदन्तीनां का गतिः।

उच्यते – वस्तुस्थितिपरामर्शः सर्वस्याप्यपेक्षितः—

अप्पय्यदीक्षितास्तावत् द्रविडदेशीयाः काञ्चीपरिसरावासाः इति शिवानन्दयतिप्रणीताप्पय्यदीक्षितचरितस्थेन–

श्रीमत्काञ्चीनगरनिकटे पूर्वपुण्यैकलभ्ये
श्रीमानास्तेऽडयपलमित्यग्रहारः सुदीप्तः ।

इति पद्यभागेन ज्ञायते । तथैव पण्डितराजजगन्नाथोऽपि तैलङ्गदेशीयो ब्राह्मणः इति–

'तैलङ्गकुलावतंसेन पण्डितराजजगन्नाथेने'ति आसफविलासारम्भ वाक्येन ज्ञायते । एवं चानयोः द्रमिडान्ध्रदेशीयत्वं सिद्धम् ।

तैलङ्गाभिजनः वेगिनाडकुलोत्पन्नः पेरुभट्टाख्यो ब्राह्मणः वारणासीं गत्वा तत्रस्थात् प्रक्रियाप्रकाशकाराणां पुत्रात् श्रीशेषवीरेश्वरात् व्याकरण शास्त्रम्, महेन्द्रपण्डितात् न्यायवैशेषिकदर्शने, खण्डदेवात् मीमांसाः शास्त्रम्, ज्ञानेन्द्रभिक्षोः ( प्रायस्तत्त्वबोधिनीकारात् ) ब्रह्मविद्यां अधिगतवान इति तत एव पेरुभट्टनाम्नः पितुः सकाशादेव जगन्नाथस्य सर्वविद्याधिगति रिति च रसगंगाधरगताभ्यां —

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि च गहनगिरो यो महेन्द्रादवेदीत् ।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ॥

पाषाणादपि पीयूषं स्यन्दते यस्य लीलया ।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥

इत्याभ्यां पद्याभ्यमिति चावगतं भवति । श्रीशेषवीरेश्वरपण्डितादपिव्याकरण

मधिजगौ जगन्नाथ इति मनोरमाकुचमर्दनगतया अस्मद्गुरुपण्डितवीरेश्वराणामित्युक्त्या ज्ञायते ।

### अप्पय्यदीक्षित-जगन्नाथयोः विरोधः

अत्र च कारणमिदं भवेत्—गच्छता कालेन वामनजयादित्यादिविरचितवृत्त्यादिग्रन्थानामध्ययनालस्येन अञ्जसा पदप्रक्रियामधिजिगमिषमाणानामुपकाराय प्रायः क्रि० श० 1393 स्थेन रामचन्द्रबुधेन्द्रेण प्रक्रियाकौमुदी उपनिबद्धा । तदनु एतत्पौत्रेण विट्ठलाचार्येण तद्वधि वैयाकरणैरुद्भावितानां दोषाणां उपशमाय प्रक्रियाप्रसादः क्रि० श० 1435 समये उपनिबद्धः । पश्चात् पारसीकस्य भारतसाम्राटः अकबरमहीपतेः मन्त्रिणो वीरवरसूनोः कल्याणमल्लस्य अध्यापनाय प्रक्रियाकौमुदीप्रकाशः श्रीभट्टोजिदीक्षित गुरुभिः श्रीशेषश्रीकृष्णपण्डितैः व्यरचि । एतां प्रक्रियाकौमुदीप्रकाशव्याख्यामवलम्ब्य भट्टोजिदीक्षितैः सिद्धान्तकौमुदी विनिर्मिता ( क्रि० श० 1592 )

अस्याः प्रचारसमनन्तरं वृत्ति-प्रक्रियाकौमुदी-प्रकाशादि प्राचीन प्रबन्धानां नामान्यपि जनानां मनसः अपससिरे ।

तादृशीं प्रसिद्धिं सिद्धान्तकौमुद्याः विज्ञाय मुदमुपयन्तः स्वबुद्धिवैभवम्, परमतखण्डनचातुरीं च विद्वत्सु ख्यापयितुमभिलषन्त आसन् तावत्येव काले सिद्धान्तकौमुद्या' खण्डनं यस्मिन् यस्मिन् विषये सञ्जातं तस्य तस्य समीकरणार्थंच प्रौढमनोरमानाम्नीं सिद्धान्तकौमुदीव्याख्यां निरमासिषुः । तस्यां च यत्तु प्राचा, यत्तु तत्पौत्रेण इत्युपयुज्य प्रक्रियाकौमुदीप्रसादयोः खण्डनं कृतम् ।

एवमच्युसन्धिमनोरमायां-साक्षाद्गुरवः शेषश्रीकृष्णभट्टाः दूषिताः लोके तावद्गुरूक्तयः यदि विरुध्येरन् तदा प्रौढिवादमात्रत्वेन वा परमतावलम्बनपरत्वेन वा समाधीयन्ते न पुनः खण्डयन्ते ।

एवं सत्यपि गुरूक्तीनां खण्डनैदम्पर्यं यद्दृष्टं तदसहमानैः श्रीशेषश्रीकृष्णविदुषां पौत्रैः वीरेश्वरविदुषां पुत्रैः चक्रपाणिदत्तैः तथा वीरेश्वरप्रशिष्येण जगन्नाथेन च मनोरमाकुचमर्दने खण्डनोद्धरणं कृतम् । एवं च जगन्नाथस्य भट्टोजिदीक्षितानां सिद्धान्तकौमुदीकाराणां ग्रन्थोपरि दूषणाभिधाने-स्वपरमगुरूक्तिखण्डनैदम्पर्येण कौमुदीकाराणां प्रवृत्तिरेव कारणम् ।

एवंविधखण्डने प्रवर्तकत्वं अप्पय्यदीक्षितानां भवेत् । यतश्च औत्तराहाणां दक्षिणात्येषु दाक्षिणात्यानां औत्तराहेषु च विद्वत्सु अहम्प्राथमिकता जागर्ति । तत्रापि वैयाकरणाः अप्पय्यदीक्षिताः भट्टोजिदीक्षितानां वेदान्ते गुरवः । एषु भट्टोजिदीक्षितानां महती भक्तिः ।

अत एव च एते—

यत्कृतिबोधाबोधौ विद्वदविद्वद्विभाजकोपाधी ।<br>
अप्पय्यदीक्षितेन्द्रानशेषविद्यागुरूनमस्यामः ॥

इत्यभिष्टुवन्ति ।

किञ्च—अप्पय्यदीक्षिताः शैवाः । जगन्नाथस्तु वैष्णवः । तयोः मतभेदनिबन्धनः मतिभेदो विरोधहेतुः भवेदपि ।

यदि तु—अप्पय्यदीक्षितेषु वयोधिकेषु ज्ञानानुष्ठानभागेन च अधिकेषु च सत्सु प्रौढसदसि म्लेच्छेति भट्टोजिना प्रयुक्ते सति तत्र अप्पय्यदी

क्षितकृतप्रेरणा हेतुः स्यादिति मत्वा गुरुद्रुहां तत्पक्षपातिनां च ग्रन्थानां खण्डने उपक्रान्तो जगन्नाथः चित्रमीमांसाखण्डनम्, रसगङ्गाधरम्, मनोरमाकुचर्दमनं च प्रणिनाय । तदेवं कर्णाकर्णिकया श्रूयते—

दृप्यद्द्राविडदुर्ग्रहग्रह वशान्म्लिष्टं गुरुद्रोहिणा
यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना ।
तत्सत्यापितमेव धैर्यनिधिना यत्स व्यमृद्नात्कुचं
निर्बध्याऽस्य मनोरमामवशन्नप्यप्पयाद्यान् स्थितान् ॥

इति । एवमादयः आपादनाः जगन्नाथोपरि पण्डितराजपदवीदानादि निमित्ताः कल्पिताः भवेयुः । यदि अप्पय्यदिक्षितानां जीवितं 17 शतकाद्विभागपर्यन्तं भवेत् । तत्रैव न नैर्भर्यम् । अतश्च जगन्नाथोपरि यद्दूषण जालं आरोप्यते तत् न सम्पूर्णतया विश्वासार्हमिति प्रतीमः ।

दीक्षितजगन्नाथयोः कालविषये यावज्ज्ञातं तावदत्रोपक्षिप्तम् । तदुपरि विवेचकैः सत्यासत्ये सयुक्तिकं विभज्य प्रदर्श्यते चेन्महान् सन्तोषो जायते ॥

इति विद्वज्जनवशंवदः
**सो. रामस्वामि ऐय्यङ्गार्यः**
विश्रान्तालंकारशास्त्रप्राध्यापकः
श्रीमन्महाराजसंस्कृतमहापाठशाला, मैसूरु

विभव सं, आश्वयुज शुक्ल नवमी
19—10—1988

---

# ग्रन्थऋणम्


1 तैत्तरीय ब्राह्मणम्

2 श्रीमद्वाल्मीकिरामायणम्

3 विष्णुपुराणम्

श्रीमन्महाभारतम्

5 भगवद्गीता

6 सनत्कुमारसंहिता

7 स्कान्दपुराणम्

8 वायवीयसंहिता

9 वामनपुराणम्

10 शुक्रनीतिसारः

11 यास्कनिरुक्तम्

12 जैमिनीयपूर्वमीमांसा सूत्राणि

13 वात्स्यायनीयम्

14 पालकाप्यम् (गजशास्त्रम्)

15 अष्टाध्यायी (व्याकरणसूत्राणि)

16 वार्तिकम् (कात्यायनप्रणीतम्)

17 महाभाष्यम्

18 वाक्यपदीयम्

19 किरातार्जुनीयम्

20 काशिकावृत्तिः

21 महाभाष्यप्रदीपः

22 सेतुबन्धः

23 कुमारसम्भवम्

24 विक्रमोर्वशीयम्

25 मेघसन्देशः

26 गाथासप्तशती

27 नामलिङ्गानुशासनम्

28 रूपमाला

29 मेदिनी कोशः

30 विश्वप्रकाशः

31 भामहीयकाव्यालङ्कारः

32 काव्यादर्शः

33 शाश्वतकोशः

34 हर्षचरितम्

35 मीमांसाश्लोकवार्तिकम्

36 उत्तररामचरितम्

37 ब्रह्मसूत्रशांकरभाष्यम्

38 भामती

39 साङ्ख्यतत्वकौमुदी

40 शिशुपालवधम्

41 कल्पतरुः

42 लघुवृत्तिः

43 उद्भटकाव्यालङ्कारः

44 रुद्रटकाव्यालङ्कारः

45 वामनकाव्यालङ्कारः
46 काव्यकौतुकम्
47 ध्वन्यालोकः
48 न्यायमञ्जरी
49 लोचनम्
(ध्वन्यालोकव्याख्या)
50 वक्रोक्तिजीवितम्
51 काव्यमीमांसा
52 सरस्वतीकण्ठाभरणम्
53 काव्यप्रकाशः
54 अलंकारसर्वस्वम्
55 साहित्यदर्पणम्
56 सम्प्रदायप्रकाशिनी
57 विमर्शिनी
58 सर्वस्वसञ्जीविनी
59 काव्यानुशासनम्
60 रघुवंशसञ्जीविनी
61 सर्वंकषा
62 वैजयन्ती
63 भगवद्रामानुजभाष्यम्
64 प्रतापरुद्रयशोभूषणम्
65 रसार्णवसुधाकरः
66 नैषधकाव्यम्
67 नयद्युमणिः
68 श्रुतप्रकाशिका
69 तत्त्वटीका
70 दयाशतकम्
71 रहस्यशिखामणिः
72 माधवीयधातुवृत्तिः
73 शास्त्रदीपिका
74 न्यायरत्नाकरः
75 एकावली
76 " तरला
77 भाट्टदीपिका
78 चन्द्रालोकः
79 साहित्यचूडामणि
80 कुवलयानन्दः
81 वृत्तिवार्तिकम्
82 नयमयूखमालिका
83 परिमलः
84 वरदराजस्तवः
85 शिवार्कमणिदीपिका
86 रसगङ्गाधरः
87 चित्रमीमांसाखण्डनम्
88 अलंकारसुधानिधिः
89 सिद्धान्तकौमुदी
90 प्रौढमनोरमा
91 काव्यदर्पणम्

| | | | |
|---|---|---|---|
| 92 | वैय्याकरणभूषणम् | 99 | लघुमञ्जूषा |
| 93 | अलंकाररत्नाकरः | 100 | शब्देन्दुशेखरः |
| 94 | रसिकरञ्जनी | 101 | कुवलयानन्दचन्द्रिका |
| 95 | रसगङ्गाधरमर्मप्रकाशः | 102 | काव्यप्रदीपप्रभा |
| 96 | काव्यप्रकाशोद्योतः | 103 | शिवतत्वरहस्यम् |
| 97 | महाभाष्यप्रदीपोद्योतः | 104 | अलंकारकौस्तुभः |
| 98 | परिभाषेन्दुशेखरः | 105 | अलंकारमणिहारः |

चित्रमीमांसायाः

विषयसूची

विषयाः पृ सं

# चित्रमीमांसातत्त्वालोकयोः
# विषयसूची

---


1
उपमा
वाच्योपमा
व्यङ्ग्योपमा
पूर्णा
लुप्ता
अनुगामितया
वस्तु-प्रतिवस्तु भावेन
बिंबप्रतिबिंब भावेन
श्लेषेण
उपचारेण
समासभेदाश्रयेण
मिश्रणेन
सावयवा
निरवयवा
परम्परिता
समस्त वस्तु विषया
एकदेश विवर्तिनी
केवला
माला
श्लिष्टशब्द निबन्धना
अश्लिष्टशब्द निबन्धना
केवला
माला
केवला
माला
उपस्कारकोपमा
उपस्कार्योपमा
वस्तु ध्वनि
अलंकार ध्वनि
रस ध्वनि
शब्दशक्ति मूला
अर्थशक्ति मूला
वस्तुव्यङ्ग्या
अलंकारव्यङ्ग्या
वस्तुव्यङ्ग्या
अलकारव्यङ्ग्या


2
लुप्तोपमा
एकलुप्ता
द्विलुप्ता
त्रिलुप्ता
धर्मलुप्ता
वाचकलुप्ता
उपमानलुप्ता
धर्मोपमानवाचकलुप्ता
समासगा
वाक्यगा
समासगा
तद्धितगा
द्वित्वगा
वाक्यगा
समासगा
तद्धितगा
धर्मवाचलुप्ता
धर्मोपमानलुप्ता
धर्मोपमेयलुप्ता
वाचकोपमेयलुप्ता
समासगा
सुब्धातुप्रत्ययगा
तद्धितगा
क्विप्प्रत्ययगा
समासगा
तद्धितगा
क्यच्प्रत्ययगा
समासगा
तद्धितगा
क्यच्प्रत्ययगा
क्यङ्प्रत्ययगा
क्विप्प्रत्ययगा

॥ श्रीः ॥

श्रीमदप्पय्यदीक्षितविरचिता

# चित्रमीमांसा

तत्त्वालोकव्याख्यासहिता



अभिवन्द्य चन्द्रशेखरमाद्यं गौरीसखं परं ज्योतिः ।
वितनोमि विपुलविषयां विशदार्थामर्थचित्रमीमांसाम् ॥ १ ॥

सोमयाजियाण्डान् रामस्वामि ऐय्यङ्गार्यशर्मणा विरचितः

## तत्त्वालोकः



श्रुत्यञ्चलैकवेद्यं चिदचित्कायं हयशिरःपुरुषम् ।
वन्देय लोकवन्द्यं निखिलजनाज्ञाननाशनं श्रीशम् ॥ १ ॥

यदिच्छामात्रेण त्रिभुवनजनिस्थेमविलयाः
भवेयुर्यश्चैव प्रथयति गिरं स्वाश्रितजने ।
यदीयात्कारुण्यादिह कविवराणां सुकृतयः
विजृम्भन्ते लोके तमिह महयाम्यश्ववदनम् ॥ २ ॥

यदुशैलधरावासं नृसिंहं प्रणताश्रयम् ।
तथा शोभाञ्जनपुरीमन्दिराधिष्ठितं परम् ॥ ३ ॥

लक्ष्मीनृसिंहं नौमीड्यं प्रणतार्तिविनाशनम् ।
श्रीराममिश्रमात्रेयमस्मत्कूटस्थपूरुषम् ॥ ४ ॥

## तत्त्वालोकः

येन श्रीभाष्यविवृतिराद्या विरचिताभवत् ।
सोमेनेष्ट्वा य एवेह सोमयाजीत्युपाधिभाक् ॥ ५ ॥

तं प्रणम्य निधिं वाचां लब्धश्रीमङ्गलोदयम् ।
आत्रेयवंशसद्रत्नराममिश्रतनूभवम् ॥ ६ ॥

जनार्दनगुरुं वन्दे पितरं ज्ञानदेशिकम् ।
पदवाक्यप्रमाणज्ञं साहित्यामृतवर्षिणम् ॥ ७ ॥

नृसिंहार्यगुरुं वन्दे पितृव्यं ज्ञानवारिधिम् ।
तथैव मान्यानन्यांश्च गुरून्नत्वा विपश्चितः ॥ ८ ॥

पदवाक्यप्रमाणेषु पारीणस्यास्य धीमतः ।
अप्पय्यदीक्षितेन्द्रस्य वादमार्गप्रदर्शिनीम् ॥ ९ ॥

मीमांसामर्थचित्राणां पूर्वपक्षविशोधिनीम् ।
तत्वालोकव्याख्ययाहमलंकुर्वे यथामति ॥ १० ॥

व्याख्यैषा विदुषां मोदं तनोतु सुहृदां सदा ।
विमर्शश्च कृतोऽस्माभिस्तत्र तत्र यथोचितम् ॥ ११ ॥

आत्रेयराममिश्रेण जनार्दनतनूभुवा ।
शिष्यप्रेरणया तत्वालोकव्याख्या विनिर्मिता ॥ १२ ॥

अथ तत्रभवान् अप्पय्यदीक्षितः ध्वनि-गुणीभूतव्यङ्ग्य-चित्रभेदात् त्रिधावस्थितेषु काव्येषु ध्वनि-गुणीभूतव्यङ्ग्ययोः प्रपञ्चः अन्यत्र कृत इति, शब्दार्थचित्रयोर्मध्ये शब्दचित्रस्य प्रायो नीरसत्वात्तदपहाय अर्थचित्रस्वरूपं विचारयितुं ग्रन्थारम्भे समयानुमितश्रुतिबोधितकर्तव्यताकं ग्रन्थसमाप्तिप्रतिबन्धकदुरित

तत्त्वालोकः

निवारकं स्वाभीष्टदेवतानमस्कारवस्तुनिर्देशोभयात्मकं मङ्गलं शिष्यशिक्षायै उपनिबध्नाति— **अभिवन्द्येति** ।

आद्यं गौरीसखं परं ज्योतिः चन्द्रशेखरम् अभिवन्द्य विपुलविषयां विशदार्थाम् अर्थचित्रमीमांसां वितनोमीति पदयोजना ।

आदौ भवः, आद्यः तम् इत्यर्थः । 'दिगादिभ्यो यत्' [पा.सू. ४-३-५४] इति यत्प्रत्ययः । मूलकारणमिति यावत् । गौरीसखं–गौर्याः शब्दस्वरूपधारिण्याः सखा–सहचरः तमित्यर्थः । 'राजाहःसखिभ्यष्टच्' [पा.सू. ५.४.९१] । इति समासान्तष्टच् । एतेन शब्दार्थयोस्साहचर्यं सूचितं भवति ।

'न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

इति वाक्यपदीये **भर्तृहरिणा** च अभिहितम् । परं-ज्ञानेनोत्कृष्टम् इत्यर्थः, 'ज्ञानमिच्छेन्महेश्वरात्' इत्युक्तेः । ज्योतिः–प्रकाशरूपं द्योतत इति ज्योतिः 'द्युतेरिसन्नादेश्च जः' [उ. २.११०] इत्यौणादिकः इसन् प्रत्ययः दस्य जकारश्चादेशः ।

चन्द्रशेखरम्–चन्द्रः शेखरे यस्य सः इति व्यधिकरणबहुव्रीहिः । अस्य च 'सप्तमी विशेषणे बहुव्रीहौ' [पा. सू. २-२-३५] इति सूत्रे सप्तमी ग्रहणं कुर्वता **पाणिनिना** व्यधिकरणबहुव्रीहेः ज्ञापनात् ।

**वस्तुतः** 'शेखरे' इत्यस्य कारकत्वेन कर्तृद्वारकसंबन्धेन अस्तिक्रियायामन्वये सामर्थ्यमस्त्येवेति ज्ञापनपर्यन्तानुधावनमनपेक्षितम्, अथापि अवर्ज्यो बहु-

तत्त्वालोकः

व्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः [वा.का.सू ५ २·२९] इति काव्यालङ्कार सूत्रकृता वामनेनापि सूत्रितमिति तथोपपादितम्। अभिवन्द्य–नमस्कृत्य विपुल विषयां–विपुलः शाखोपशाखतया विस्तृतः विषयः विचारणीयोंऽशः यस्यां सा ताम् इत्यर्थः। विशदार्थाम्–विशदः–परिस्फुटः अर्थः प्रतिपाद्यो यस्यां सा तां इति विग्रहः। अर्थचित्रमीमांसां–अर्थालङ्काराणां मीमांसां–विचारं वितनोमि–विषशेतो विस्तृणामि। विस्तरे विशेषश्च प्राचीनैर्दण्डि-प्रभृतिभिर्यादृशो विस्तरः विचारे परिदृश्यते तदपेक्षया सति औचित्ये विलक्षणतया विशदीकरणमेवेति भावः॥

**यद्वा** अर्थचित्रमीमांसाम्–अर्थालङ्कारस्वरूपनिर्णयोपयोगिन्यायग्रथन-परवाक्यसन्दर्भात्मिकामित्यर्थः।

**यद्वा** 'वेदार्थोपकारकत्वादलङ्कारस्सप्तममङ्ग' मित्युक्तरीत्या पूजित-विचारवाची मीमांसाशब्दः तदुपयोगिनि वाक्यसन्दर्भे वर्तते।

**ननु** अत्र मीमांसाशब्दः कथं पूजितविचारवचनः, यतश्च 'मान्बध-दान्शान्भ्यो दीर्घश्चाभ्यासस्य' (पा.सू. ३-१-६) इति सूत्रे **काशिकावृत्तौ**– 'अत्रापि सन् अर्थविशेष इष्यते' इत्युपक्रम्य 'मानेर्जिं-ज्ञासायम्' इत्युक्तम्। तथा माधवार्येण धातुवृत्तौ 'एते च गुपादयः इत्युप-क्रम्य 'गुप्तिज्किद्भ्यः' 'मान्बधदान्शान्भ्यः' इति नित्यसन्नन्ताः। तथा च भाष्यम् 'नैतेभ्यः प्राक् सन आत्मनेपदं परस्मैपदं वा दृष्टम्' इति। अयं च सन् 'गुपेः निन्दायां' 'मानेर्जिज्ञासायां' 'तिजेः क्षमायाम्' 'बधेर्वैरूप्ये' इति वृत्तावुक्तत्वात्' इत्यनूद्य, अत्र अपतितेष्वर्थेषु न च सनस्तीत्युक्तम् इति [मा. धा. ९५७]। एवं च मीमांसाशब्दस्य जिज्ञासायामेव साधुत्वमिति शङ्क्यम्।

तत्त्वालोकः

सत्यम्, अथापि मीमांसा-जिज्ञासयोर्नैक्यं सर्वसम्मतम्। यतश्च शाङ्करभाष्यभामत्यां वाचस्पतिमिश्रैः 'न च जिज्ञासा मीमांसा, ज्ञानेच्छावाचकत्वाज्जिज्ञासापदस्य, प्रवर्तिका हि मीमांसायां जिज्ञासा स्यात्, न च प्रवर्त्यप्रवर्तकयोरैक्यम्; एकत्वे तद्भावानुपपत्तेः। अतश्च नान्तत्वं निपात्य माङ्माने इत्यस्माद्वा मानपूजयामित्यस्माद्वा धातोः मान्बध इत्यादिना अनिच्छार्थे सनि व्युत्पादितस्य मीमांसाशब्दस्य पूजितविचार वचनत्वात्, इत्युक्तत्वात् [शां.भा.भाम. ४८ पु.]।

एवं भामतीकल्पतरौ अमलानन्दसरस्वतीभिः 'मान्-बध-दान्-शान्भ्यः दीर्घश्चाभ्यासस्य' [पा.सू. ३-१-६] इति सूत्रे 'माङ्माने' इत्यस्य ङानुबन्धस्य धातोर्नान्तत्वं निपातितम्। अस्य च पूजितविचरार्थत्वं प्रसिद्धि बलात्। स्वतो नान्तस्य तदर्थत्वम्। मान् इत्यादिधातुभ्यः सन् भवति अभ्यासस्य च दीर्घ इत्यर्थः। धातोः कर्मणः [पा.सू. ३-१.७] इत्युत्तर सूत्रे इच्छार्थे सन्विधानादनिच्छार्थ इति गम्यते इत्युक्तम् [ब्र.शां.भा.क. ४८ पु.]।

एवं न्यायरत्नाकरे पार्थसारथिमिश्रैश्च 'श्रोतृक्रिया हि ज्ञानेच्छा, वक्तृक्रिया तु विचारात्मिका मीमांसा इति जिज्ञासामीमांसयोर्नैक्यम्' इति [मी. श्लो. प्रतिज्ञा सू. २२ श्लो] उक्तं च विरुध्येत। न च तैर्विरोधो युक्तः। विशिष्टोक्त्यनुसारेण हि व्युत्पत्तिः स्मर्यते। भाष्यकृता पतञ्जलिनापि 'प्रयुक्तानामिदमन्वाख्यानं खल्वपि भवति' इति अभिहितम्। एवं स्थिते भाष्यादिष्वदृष्टस्य मानेर्जिज्ञासायां इत्यादेः उपगमापेक्षया वाचस्पत्यादिसम्मतोऽर्थ एव युक्तः। न पुनर्जयादित्यादिसम्मतः। विशिष्टप्रयोगविरोधापातात्।

तत्त्वालोकः

अत एव **तत्त्वटीकायां श्रीमन्निगमान्तगुरुभिः**—

'विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः'

[तत्व. ७ पु.] इत्यभिहितम्।

**यद्वा**— तत्रैव 'मीमांसापूर्वभागज्ञातस्ये'ति**भगवद्रामानुजभाष्यस्थं** मीमांसापदमुपादाय वाचस्पत्यभिप्रेतरीत्यैव व्युत्पत्तिं प्रदर्श्य **वृत्तिकारादि** प्रदर्शितव्युत्पत्तिप्रदर्शनस्य अदूरविप्रकर्षपरत्वेन उपपत्तिः प्रदर्शिता—'माङ्माने' इत्यत्र नान्तत्वं निपात्य वा 'मान पूजायां' इत्यत्र वा 'मान्बध' इत्यादिना अनिच्छासन्नन्तोऽयं शब्दः। 'मानेः जिज्ञासायाम्' इति वैयाकरणोक्तिस्तु अदूरविप्रकर्षात्। जिज्ञासाविशेषोत्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः। तादृशन्याय-निबन्धात्मनि तु शास्त्रे भाक्तो मीमांसाशब्दः' इति [ तत्वटीका २६ पु. ]

**अत एव च मीमांसकैः** जिज्ञासापदस्य इच्छायां वृत्तिः, विचारे तु लक्षणोपगता। एवं च जिज्ञासापदलक्ष्यार्थस्य, मीमांसापदमुख्यार्थस्य चैकरूपता सम्पद्यते।

**यदप्यभिहितं परिमले ग्रन्थकृता** 'यद्यपि मीमांसापदस्य पूजित-विचारवचनत्वं न स्मृतिसिद्धम्। 'मान पूजायांम्' इति धातोः पूजामात्रवाचि-त्वात्। 'मान विचारे' इति चुरादिपठितस्य विचारमात्रवाचित्वात्, तथापि तयोरन्यतरस्य धातोर्ग्रहणे विशेषणविशेष्यान्यतरलाभो भवतीत्यभिप्रायेणैव-मुक्तम् इति। तदपि चिन्त्यम्।

यतः इदानींतनधातुपाठे 'मान पूजायाम्' इति भ्वादौ, 'माङ् माने शब्दे च' इति जुहोत्यादौ माङ्माने इति दिवादौ, मानस्तम्भे इत्येवं चुरादौ

## तत्त्वालोकः

दर्शनात्। विचारार्थकस्य धातोः चुरादौ अदर्शनात् इति चेत्सत्यम्;

अथापि अप्पय्यदीक्षितशिष्यैः **भट्टोजिदीक्षितैः** सिद्धान्तकौमुद्यां चुरादौ मानपूजायां मानयति–ते। विचारणे तु भौवादिको नित्यसन्नन्तः इत्यभिधानानुसारेण मानधातोः विचारे सन्नन्तस्य वृत्तिरस्तीति कथंचित्परिमलोक्तिः सङ्गननीयेति दिक्।

**अथ** 'अर्थचित्रमीमांसाम्' इत्यत्र किं शेषषष्ठ्या समासः? अथवा प्रतिपदविहितषष्ठ्या समासः? अनयोः कतरया षष्ठ्या समास उपपन्नो भवति? प्रतिपदविहितषष्ठ्या समासे एष प्रयोग उपपन्नो भवति। शेष षष्ठीसमासे का अनुपपत्तिः?

उच्यते—'षष्ठी शेषे' [पा.सू. २-३-५०] इतिसूत्रेण षष्ठीति पक्षे यद्यपि सन्प्रकृतेर्मानधातोस्सकर्मकत्वात् प्रथमं कर्मणः आकांक्षा उदेति। तथा च कर्तृव्युदसनद्वारा कर्मत्वरूपे सम्बन्धविशेषे अर्थतः पर्यवसानं भवति। सम्बन्धसामान्यस्य विशेषे पर्यवसानात्।

अथापि आक्षेपतः प्रासादाभिधानिकस्यैव ग्राह्यत्वम्। तस्यैव अविलम्बितधीजनकत्वात्। अतश्चात्र न शेषषष्ठ्या समासः। अपितु 'कर्तृकर्मणोः कृति' [पा. सू. २-३-६५] इति सूत्रेण विहिता या षष्ठी तया समासः। कृद्योगे खलु कर्मणि षष्ठ्या भाव्यम्। न पुनश्शेषषष्ठ्या। अस्ति ह्यत्र कृद्योगः। मीमांसापदस्य 'अप्रत्ययात्' इति [पा. सू. ३-२-१०२] प्रत्ययान्तधातूपरि विहिताकारप्रत्ययान्तत्वात्। अकारप्रत्ययस्य च 'कृदतिङ्' [पा. सू. ३-१-९३] इत्यनेन कृत्संज्ञाविधानात॥

न चात्र–कर्तृकर्मणोः कृति [पा. सू. २-३-६५] इति सूत्रेण

तत्त्वालोकः

कर्मत्वरूपसम्बन्धविशेषपुरस्कारेण कृत्संज्ञकप्रत्ययान्तसमभिव्याहारे सति षष्ठ्या विधानात्प्रतिपदविधित्वम्, प्रतिपदविधित्वाच्च 'प्रतिपदविधाना षष्ठी न समस्यते' इति निषेधात् कर्मषष्ठ्यन्तं न समस्यत इति शङ्क्यम्। 'कृद्योगा च षष्ठी समस्यत' [वा. १३१७] इति कात्यायनेन कृद्योगनिमित्तक षष्ठ्या समासस्य प्रतिप्रसवरूपेण कल्पितत्वात् प्रतिपदविहितषष्ठीसमास उपपन्नो भवति॥

**न चैवमपि**—कृद्योगलक्षणषष्ठ्या समासो नोपपद्यते। कर्मणि या षष्ठी सा न समस्यते 'कर्मणि च' [पा. सू. २-२-१४] इति तन्निषेधात् इति वाच्यम्।

'कर्मणि च' इति सूत्रेण कर्मषष्ठीसामान्यस्य समासो न प्रतिषिद्धः किन्तु 'कर्मणि' इति शब्दमुच्चार्य या षष्ठी विहिता तस्याः समासो निषिद्धः। तादृशी च षष्ठी 'उभयप्राप्तौ कर्मणि' [पा. सू. २-३-६६] इति सूत्रेण विहिता। तादृशषष्ठ्यन्तं पदं अन्येन पदेन समासं न लभते इत्येव 'कर्मणि च' इति सूत्रस्यार्थः। अत एव निपातानामनेकार्थत्वमुपगम्य 'कर्मणि च' इति सूत्रस्थः चकारः इतिशब्द-स्यार्थे वर्तमानः स्वसमभिव्याहृतामानुपूर्वीमाहेति 'कर्मणि' इति शब्दमु-च्चार्य या विहिता षष्ठी सा न समस्यत इत्यर्थः प्रदर्शितः संगच्छते।

अन्यथा—'अपां स्रष्टा वज्रस्य भेत्ता', 'ओदनस्य पाचकः' इत्यादावपि 'कर्मणि च' [पा. सू. २-२-१४] इति सूत्रेणैव समासनिषेधः सिद्ध्यत्येवेति तदर्थं 'तृजकाभ्यां कर्तरि' [पा. सू. २-२-१५] इति सूत्रमनर्थकं स्यात्।

## तत्त्वालोकः

किञ्च—'इध्मव्रश्चनः' इत्यादौ समाससिद्धये वचनं कर्तव्यं स्यात्। इत्थं च 'कर्तृकर्मणोः कृति' इति विहितषष्ठ्या समासो न दुष्यतीति अर्थचित्राणां मीमांसा इति प्रतिपदविहितषष्ठीसमास एव युक्तः, न पुनश्शेषषष्ठ्येति विभावनीयमिति दिक् ॥

अत्र चिकीर्षितं प्रतिजानन्नेव प्रयोजनादिकमपि ध्वनयति। तत्र 'अर्थचित्रमीमांसाम' इति अर्थालङ्काराणां विषयत्वम्, निर्दुष्टालङ्कारज्ञानं सामान्यप्रयोजनं विशेषप्रयोजनं तु काव्यप्रकाशिकादौ यदुक्तं यशःप्रभृति तदेवात्राऽपि इति बोध्यम्। सम्बन्धश्च विचारविषयत्वं, तथा च विचार्यविचारकभावः, निकृष्यनिष्कर्षकभावो वा सम्बन्ध इति बोध्यम्। अत एव मीमांसाकर्मतया अर्थचित्राणामुपादानं कृतम्। अधिकारी च अलङ्कारस्वरूपावगतिकामः इति विषय-प्रयोजन-सम्बन्ध-अधिकारिणः प्रतिपादिताः इत्यवधेयम। अन्यथा श्रोतुः प्रवृत्त्यनुपपत्तेः। उक्तं च अभियुक्तैः—

शास्त्रारम्भेषु सर्वत्र सम्बन्धः कथ्यते बुधैः।
असम्बद्धप्रलापत्वे न प्रवर्तेत बुद्धिमान् ॥ इति ॥

मीमांसा चात्र विचारः। स च उद्देशलक्षणपरीक्षारूपो विवक्षितः। उद्देशश्च—तत्तदलङ्काराणां नाम्ना निर्देशः। लक्षणं च उद्दिष्टानाम् इतरालङ्कारव्यावृत्तधर्मप्रदर्शनम्। परीक्षा च सामान्यतः परैः लक्षितस्य इदं इत्थं नेति न्यायतः समर्थनम्। गदाधरभट्टाचार्यास्तु परमतनिराकरणपूर्वकं स्वमतव्यवस्थापनं परीक्षेत्यभ्यधुः ॥

अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः। गौरीसख-

तत्त्वालोकः

मित्यत्र षष्ठीतत्पुरुषेण प्रतीयमाना शिवयोः रतिः कविगतां रतिं पुष्णातीति व्यज्यमानभावस्य भावाङ्गत्वात्प्रेयोऽलङ्कारः । तदुक्तम्—

'रतिर्देवादिविषया व्यञ्जिता भाव उच्यते ।' इति

'प्रेयः पराङ्ग भावस्य यदि भावरसाङ्गता ।'

इति च । गीतिर्नामात्र छन्दः ।

अत्र च चित्रमीमांसां वितनोमीति स्फुटमभिधानात् अभिधेयमपि कथितम्भवति ! तत्कथनमपि चित्रमीमांसासाध्यालङ्कारपरिच्छेदरूपप्रयोजनोपपादनायैव । अन्यथा—

'अभिधेयफलज्ञानविरहास्तमितोद्यमाः ।
श्रोतुमल्पमपि ग्रन्थ आद्रियन्ते न सूरयः ॥'

इति उक्तरीत्या ग्रन्थाध्ययने प्रवृत्तिर्न स्यादित्यलं विस्तरेण ॥

यद्यपि—अर्थचित्रमीमांसां वितनोमीति प्रतिज्ञानुगुणतया अर्थालङ्कार स्वरूपतद्विभागयोः प्रदर्शनमुचितम् । तथाऽपि दण्ड्याद्यभिमतं

'गद्यं-पद्यं-मिश्रं च तत् त्रिधैव व्यवस्थितम् '[ द.का.१-११ ]

इति काव्यविभागमपेक्ष्य व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितः काव्य प्रकारः । गुणीभावे तु गुणीभूतव्यङ्ग्यता, ततोऽन्यद् रसभावादितात्पर्य रहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्य मात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदा भासते तच्चित्रम् [ ध्व. ३-४५ [ इति आनन्दवर्धनाद्यभिहितकाव्यविभागस्य चारुतामाविष्कर्तुं तत्प्रकारं प्रदर्श

चित्रमीमांसा

त्रिविधं तावत् काव्यम्, ध्वनि-गुणीभूतव्यङ्ग्य-चित्रभेदात् ।

तत्त्वालोकः

यति — त्रिविधमिति । तावत्-प्रथमतः, काव्यं-कौति-शब्दायते विमृशति रसादिस्वरूपम् इति कविः । स च लोकोत्तरचमत्कारवर्णना निपुणः । तद्व्यापारविषयीभूतं काव्यमिति ज्ञेयम् । अत एव 'मेघ दूतादि कालिदासकृतम्' इत्यादिव्यवहारोऽपि युज्यते ।

यद्यपि सूत्रपुष्पयोः साधारण्येऽपि सूत्रे ग्रथनमात्रं यथा माला-कारस्य व्यापारः, तथात्रापि शब्दार्थयोः साधारण्येऽपि इन्दुमन्दानिलादीनां भावानां लोकसीमातिवर्तिरीत्या वर्णनैव कविव्यापार इति सैव काव्य व्यपदेशार्हा, अथाऽपि कविव्यापारविषयभूते शब्दे काव्यपदप्रयोगात्, शब्दार्थयोर्वा तत्प्रयोगात् तथा व्यपदेशः ।

एतेन —

'शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्'

इति प्राचीनैरभिहितं नातीव रमणीयम् । अनुभवविरोधापातात् ।

त्रिविधमिति ॥ उत्तममध्यमाधमभेदात् त्रिविधमिति भावः ।

अत्रेदं चिन्त्यते—काव्यत्वं किं व्यापारमात्रे पर्यवस्यति ? अथ शब्दमात्रे ? आहो शब्दार्थयोः ? उत शब्दविशिष्टेऽर्थे ? किमु अर्थ-विशिष्टे शब्दे ? इति । अत्र मतभेदानुल्लिखामः ।

## तत्त्वालोकः

1) तत्र कविव्यापारे काव्यत्वमिति साहित्यचूडामणावुद्धृतम् —

शब्दप्राधान्यमाश्रित्य तत्र शास्त्रं पृथग्विदुः ।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः ॥
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत् ।

2) इतिवृत्तं तु काव्यशरीरम् इति **भरतः**–
इतिवृत्तं तु काव्यस्य शरीरं परिकीर्तितम् ॥ इति [भर.अ.२१.२]

3) 'शब्दार्थौ सहितौ काव्यमिति' शब्दार्थयोर्मिलितयोः काव्यत्वं पर्याप्तमिति **भामहः** [ भाम.का. १.१६ ]

4) रसभावाद्यनुगममनोहरपदावली काव्यमिति **आचार्यदण्डी**—
'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली' [ का.१.१० ] इति ।

5) गुणालङ्कारसंस्कृतयोः शब्दार्थयोः काव्यत्वं पर्याप्तमिति **वामनः**–
'काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोश्शब्दार्थयोर्वर्तते । भक्त्या तु शब्दार्थमात्रवचनः' इति [ वा.का.सू.१.१.१]

6) 'ननु शब्दार्थौ काव्यमिति' **रुद्रटः** [ रु.का. २.१]

7) रसभावाद्यभिव्यञ्जकशब्दार्थयोः काव्यत्वं पर्याप्तमिति **आनन्दवर्धनः** —

'शब्दार्थशरीरं तावत्काव्यम् ।' 'नीरसस्तु प्रबन्धो यस्सोपशब्दो महान् कवेः' । 'यत्रार्थः शब्दो वा, यत्रार्थौ वाच्यविशेषः वाचकविशेषश्शब्दो वेति तत्र तत्र उल्लिखन् प्रागभिहितमर्थमभिव्यनक्ति ।

तत्त्वालोकः

8) अर्थप्रतिपादके चमत्कारिणि सात्मनि काव्यत्वमिति **आचार्याभिनवगुप्तपादाः** —

'शब्दार्थशरीरं तावत्काव्यम्' इति यदुक्तं तत्र शरीरग्रहणादेव केनचिदात्मना भवितव्यम्। शब्दस्तावच्छरीरभाग एव सन्निविशते। सर्वजनसंवेद्यधर्मत्वात्, स्थूलकृशादिवत्। अर्थःपुनस्सकलजनसंवेद्यो न भवति। न ह्यर्थमात्रेण काव्यव्यपदेशः लौकिकवैदकवाक्येषु तदभावात् इत्युक्तवन्तः।
[ ध्व. लो.उ.१.२ ]

9) नियमेन रसाभिव्यक्तिप्रयोजकविभावादिसंयोजनस्वरूपः कविव्यापारः काव्यम् इति **राजानकमहिम भट्टः** —

'कविव्यापारो हि विभावादिसंयोजनात्मा रसाभिव्यक्त्यव्यभिचारी काव्यम् उच्यते' इत्युक्त्वा 'गुणालङ्कारसंस्कृतशब्दार्थमात्रशरीरं न तावत्काव्यं [व्य. वि. १. विमर्शे] इति गुणालङ्कारमात्रयुक्ते काव्यत्वं निषिषेध।

10) 'अनुभाव-विभावानां वर्णना काव्यमुच्यते' इति **काव्यकौतुककारः**।

11) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि इत्युक्त्वा अदुष्टत्व-सगुणत्व–सालंकारत्वरूपधर्मत्रितयविशिष्टशब्दार्थयुगलं काव्यमिति **मम्मटभट्टाः**।

काव्यप्रकाशव्याख्यातृभिश्च बहुधा काव्यलक्षणमुद्धृतम् —

क) अदुष्टसगुण–सालङ्कारशब्दार्थयुगलं काव्यमिति केचित्।

ख) रसाभिव्यञ्जकत्वम् काव्यलक्षणमित्यपरे।

तत्त्वालोकः

ग) निर्दुष्टत्वे सति सगुणत्वे सति सालङ्कृतित्वे सति रसाभिव्यञ्जकशब्दार्थोभयत्वम् इत्येके ।

घ) अदुष्टत्वे सति गुणालङ्कारान्यतरवत्त्वमेव लक्षणम् , न तु विशिष्टमेकं लक्षणमित्यन्ये ।

ङ) रसाभिव्यञ्जकशब्दार्थयुगलत्वमेव काव्यलक्षणमिति परे ।

12) निर्दुष्टत्वे सति गुणाभिव्यञ्जकत्वे सति स्फुटालङ्काररसान्यतरवत्वं काव्यलक्षणमिति **काव्यप्रदीपकारः** ।

13) वाक्यं रसात्मकं काव्यमिति **साहित्यदर्पणकारो विश्वनाथः** ।

14) रमणीयार्थप्रतिपादकः शब्दः काव्यमिति **पण्डितराजः** ।

एषु कस्य प्रतिष्ठेति विचार्यते —

तत्र तावन्न प्रथमस्य 'मेघदूतादिकाव्यम् 'मिति व्यवहारविदूरत्वात् ।

न द्वितीयस्य–यतो न वस्तुमात्रं काव्यव्यपदेशमर्हति, काव्यमेतदगायताम् ' इति वाल्मीक्यादिसंमतगानकर्मताऽनुपपत्तेः ।

न तृतीयस्य–पूर्वोक्तहेतोरेव । अत एव 'काव्यं श्रुतं, अर्थो न ज्ञातः' इत्येवं व्यवहारस्य अनुभवसिद्धत्वेन तदनुरोधाच्छब्दार्थयो र्व्यासज्यवृत्तित्वमभ्युपगन्तुं न शक्यम् ।

न पञ्चमस्य–गुणानां रसोपस्कारकत्वमेव, न पुनः शब्दसंस्कारकत्वम् इति उपगमात् । नाऽपि केवलालंकृतशब्दार्थयोः काव्यत्वं वक्तुं शक्यम्, रस–भावादिकस्य अत्यन्तमस्फूर्तौ अलंकार्यस्यैवा-

तत्त्वालोकः

ऽभावात् अनुप्रासोपमादिषु केवलेष्वलंकारत्वं वा कथं सम्भवति। उक्तं च ध्वनिकृता—

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्याशानुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥इति [ध्व ३ उद्योते]

नापि षष्ठस्य—लौकिकवैदिकवाक्येषु तदर्थेषु वा तत्वस्याप्रसिद्धेः।

नापि सप्तमस्य—द्वितीयलक्षणोक्तदोषस्यात्रापि प्रसक्तेः।

नापि नवमस्य—प्रथमपक्षोक्तदूषणस्यैवात्राप्युत्थानात्।

नापि दशमस्य—व्यभिचारिभावादि(स्थाय्यादि)वर्णनादावपि अव्याप्त्यापत्तेः 'औत्सुक्येन कृतत्वरा' इत्यादौ संचारिणां वर्णनात्।

नाप्येकादशस्य—श्लोकवाक्यं न काव्यं इति व्यवहारापत्तेः। शब्दार्थयोर्व्यासज्य काव्यत्वं वर्तते इत्यत्र मानाभावात्।

नापि द्वादशस्य—गुणाभिव्यञ्जकत्वसामानाधिकरण्येन स्फुटालंकार रसान्यतरवत्वमित्यस्य असङ्गतत्वात्। यत्र गुणाः अभिव्यज्यन्ते तत्र रसाः अभिव्यज्यन्त एव। गुणानां रसाव्यभिचारित्वात्। इत्थं सति यत्र रसो नाभिव्यज्यते परन्तु अलङ्कारमात्रं स्फुटम्, तत्र शब्दार्थयोरन्यतरस्य गुणाभिव्यञ्जकत्वमपि नास्तीति अव्याप्तिः। यथा वा प्रदीपकृदुदाहृतपद्ये —

'मध्ये व्योम स्फुरति सुमनोधन्विनश्शाणचक्रम्'

इत्यत्र [का. प्र. १ उल्लास]। तेनैवात्र रूपकमात्रमुपगतम्। न तु, रसादिरिति [का. प्र. १९ पु]।

**तत्त्वालोकः**

नापि त्रयोदशस्य—

वाहि वात ! यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश।
त्वयि मे गात्रसंसर्गः चन्द्रे दृष्टिसमागमः ॥

इत्यादौ चन्द्रे सीतामुखसादृश्यादिकमेव केवलं (वस्तु) अलंकारो वा प्रतीयत इत्यव्याप्तिस्स्यात्।

**अतश्च**—लोकोत्तराह्लादजनकार्थप्रतिपादकशब्दः काव्यमित्येव रमणीयम्। अत एव 'इष्टार्थव्यवच्छिन्ना पदावली शरीरम्' इति **दण्डिना** सम्यगभिहितम्। इदमेव काव्यलक्षणं पण्डितराजस्याप्यभिमतम्। अत एव 'रमणीयार्थप्रतिपादकश्शब्दः काव्य'मिति **रसगंगाधरे**ऽभिहितम् इत्यवगन्तव्यम्। प्रकाशकारलक्षणं युक्तमिति **नागेशभट्टप्रभृतयस्तु** मन्वते। प्रकाशकारोऽपि शब्दार्थयोर्मध्ये शब्दस्यैव प्राधान्यं ध्वनितवान्। अन्यथा 'उष्ट्र-शशकम्' इत्यादाविव अर्थशब्दस्य अजादित्वाददन्तत्वाच्च 'अजाद्यदन्तम्' [पा.सू. २-२-३३] इति पूर्वनिपातप्रसङ्गः। प्राधान्यविवक्षायां तु अजाद्यदन्तलक्षणं परनिपातं बाधित्वा 'मातापितरौ' इतिवत् अभ्यर्हितं पूर्वं निपतति इति वार्तिकात् शब्दपदस्य पूर्वनिपातस्साधुर्भवति ॥

**ध्वनि·गुणीभूतेति**। यद्यपि,

'नीरसस्तु प्रबन्धो यस्सोपशब्दो महान् कवेः'

इति [ध्व. उ. ३] यत्र रसादीनामप्रतिपत्तिः न तादृक् काव्यप्रकारोऽस्तीति [ध्व.] **ध्वनिकृदुक्तरीत्या** काव्यविभागप्रसक्तिरेव नास्ति। तथाऽपि रसरहितकाव्यनिर्माणपराङ्मुखताप्रतिपत्तये तथोक्तमित्यवगन्तव्यम् ॥ अन्यथा तेनैव —

चित्रमीमांसा

यत्र वाच्यातिशायि व्यङ्ग्यं स ध्वनिः ॥

तत्त्वालोकः

वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ [ध्व. ३ उ.] इति

प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत् ॥ [ध्व. ३ उ.] इति

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते ॥ [ध्व. ३ उ.]

इति विभागकरणमसङ्गतं स्यादतश्च काव्यं त्रिविधमिति सिद्धमिति भावः ॥

अथ ध्वनिप्रधानानि काव्यान्यपि पञ्चषाण्येव। तन्निर्मातारश्च द्वित्रा पञ्चषा वा श्रूयन्ते । अत एव **ध्वनिकृता**–येनास्मिन्नतिविचित्रकविपरम्परा वाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते इत्युक्तं प्रथमोद्योते [ध्व. २९ पु] ।

त्रिविधे काव्ये ध्वनिसंज्ञितं काव्यं लक्षयति—**यत्रेति** ॥ यत्र–काव्ये, व्यङ्ग्यं–व्यञ्जनावृत्तिवेद्यं, वाच्यातिशायि, इदमुपलक्षणम् लक्ष्यातिशायिनो व्यङ्ग्यस्यापि । एवं च वाच्यं लक्ष्यं चातिशेते "चमत्कारत्वेन, चमत्कारजनकत्वेन वा उत्कृष्यते ताच्छील्येनेति एवंरूपं भवेत् तदा सः ध्वनिः । ध्वनति अर्थमिति कर्तृव्युत्पत्या ध्वनिशब्दः शब्दात्मके काव्ये वर्तते । **वैयाकरणैः** पदार्थोपस्थित्यनुकूले शब्दे वाक्यार्थानुभवानुकूले वाक्ये च स्फोटो वर्तते । स्फोटाभिव्यञ्जकश्शब्दो ध्वनिरित्युक्तः ।

चित्रमीमांसा

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥

तत्त्वालोकः

व्यञ्जकत्वसाम्यादस्माभिरपि ध्वनिरिति व्यपदिश्यते । अतश्च नायं ध्वनिरिति व्यवहारः स्वकपोलकल्पित इति ध्वनितं भवति ।

स ध्वनिर्द्विधा—1) विवक्षितान्यपरवाच्यः 2) अविवक्षितवाच्यश्चेति । आद्यः अभिधामूलः, द्वितीयो लक्षणामूलः । अभिधा मूलके ध्वनौ वाच्य विवक्षितमपि व्यङ्ग्ये पर्यवसितं भवति । अतश्चैनं विवक्षितान्यपरवाच्यमाहुः । लक्षणामूलके ध्वनौ तु वाच्यमविवक्षितं भवति । अतस्तं अविवक्षितवाच्यमित्याचक्षते । पूर्वोक्तेऽभिधा मूलकध्वनौ वाच्यस्य विवक्षितत्वं आकांक्षायोग्यतावत्वरूपमेव । न पुनः वक्तुमिष्टत्वम्, अविवक्षितवाच्येऽपि तत्सत्वात् । नापि वाच्यार्थमात्र विश्रान्ततात्पर्यकत्वम्-व्यङ्ग्यप्रधानत्वेनाऽस्यात्राऽसंभवात् इति बोध्यम् ॥

**एतेन**–'किञ्च यदविवक्षितवाच्यः' इत्याद्युपक्रम्य, 'ध्वनेःसामान्यं रूपमुक्तमेव' इत्यन्तेन [व्य. वि. १४३–१४७ पु] प्रयोगदुष्टताविभागानुपपत्ती ये **ध्वनिकारोपरि व्यक्तिविवेककृता** प्रदर्शिते तेऽलग्नके वेदितव्ये ।

अभिधामूलध्वनिं विवक्षितान्यपरवाच्यलक्षणमुदाहरति—**स्थिताः क्षणमिति** ॥

**तत्त्वालोकः**

ईश्वरं वशयितुं वरीतुं वा तपश्चरन्त्याः पार्वत्याः समाध्यवस्थां वर्णयति। प्रथमोदबिन्दवः क्षणं तस्याः पक्ष्मसु स्थिताः ततस्ताडिताधराः ततः पयोधरोत्सेधनिपातचूर्णिताः तदनु वलीषु स्खलिताः चिरेण नाभिं प्रपेदिरे इति योजनाक्रमः।

उदस्य – उदकस्य बिन्दवः–पृषन्ति, प्रथमे – प्रथमं पतिताः उद बिन्दवः प्रथमोदबिन्दवः। अत्र उदकशब्दस्य "मन्थौदनसक्तु–बिन्दु . . [पा. सू. ६-२-६०] इत्यादिना उदादेशः। तस्याः तपश्चरन्त्याः देव्याः, पक्ष्मसु– नेत्रलोमसु 'पक्ष्म सूत्राद्यवयवे किञ्जल्के नेत्ररोमसु' इति **वैजयन्ती**। क्षणं किञ्चित्कालं "क्षणो व्यापारवैकल्ये, कालभेदाल्पकालयोः। उत्सवे परतन्त्रत्वे मध्यावसरपर्वसु" इति **वैजयन्ती**। ततः ताडिताधराः ताडितः अधरः अधरोष्ठो यैः ते प्रतिहताधराः इत्यर्थः। ततः पयोधरयोः स्तनयोः, उत्सेधे उपरि, निपातेन–पतनेन चूर्णिताः–विशकलिताः, तदनु वलीषु–कुक्षिरेखासु, स्खलिताः–गलिताः चिरेण–किञ्चित्कालमतीत्य प्रतिबन्धक बाहुल्यात् न तु शीघ्रं नाभिं प्रपेदिरे–प्रविष्टाः इत्यर्थः॥

अत्र उदबिन्दुषु प्राथम्योक्त्या बिन्दूनां विरलता, तेषामेव बहुत्वोक्त्या अनतिविरलत्वं च गम्यते। पक्ष्मसु क्षणं उदबिन्दूनां अवस्थानोक्त्या पक्ष्मणां सान्द्रत्वम् क्षणमित्यनेन मसृणत्वं च गम्यते। तेषाम् अधर ताडनोक्त्या तस्य मार्दवातिशयो गम्यते। पयोधरपतनेन चूर्णनोक्त्या तयोः काठिन्यं गम्यते। बिन्दूनां पतने कालविलम्बात् नाभ्यन्तरगमनं निर्व्यूढं भवति। नाभिप्रवेशेन तस्या निम्नत्वं च गम्यते।

**तत्त्वालोकः**

किंच अत्रोदाहरणे एकेषामेवोदकबिन्दूनां पक्ष्माधरादिक्रमेण अनेकाधारसंश्रयणवर्णनात् पर्यायालङ्कारः । तल्लक्षणम्—

'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः' इति ।

यद्यपि अत्र जलबिन्दूनां पक्ष्मस्वेव क्षणस्थितिरुक्ता न पुनरधरादिषु तथापि अनेकवस्तुसंश्रयणस्य अनेकपदार्थसम्बन्धपरत्वेन ताडननिपतनस्खलननाभिसमाश्रयणानामभिधानाच्च अनेकाधारसंश्रयणम् अव्याहतम् ॥

नन्वत्र एकेषामेवोदविन्दूनां अनेकेष्वाधारेषु स्थितिकथनाद्विशेषालङ्कारतापि स्यात्,

'विशेषस्सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते'

इति तल्लक्षणानुरोधादिति शङ्क्यम् । पर्यायालङ्कारस्यैवात्र वक्तुं युक्तत्वात् । यतश्चात्र एकमाधारं परित्यज्य आधारान्तरसमाश्रयणे क्रमो विवक्षितः । स चात्र वर्तते इति 'पक्ष्माधारादिपतनक्रमकथनेन' इत्युपपादयता ग्रन्थकारेणैव स्फुटमभिधानात् ॥

विशेषालंकारे तु पारिशेष्याद्यौगपद्यं सिध्यति । अत एव

'अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपि सैव मे'

इत्युदाहरणं विशेषप्रभेदस्य दत्तम् । पर्यायस्य तु

'पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा'

इत्युदाहृतं च चन्द्रालोके । साभिप्रायविशेषणविन्यासात्परिकर इति **मल्लिनाथाद्याः** ।

एवं तपस्यन्त्याः देव्याः चिरनिदाघतप्तदेहोपरि प्रप्रथमं जलबिन्दुनिपातेपि समाधेरविघातोक्त्या—

## चित्रमीमांसा

अत्र तपस्यन्त्या देव्याः देहोपरि निपततां प्रथम वृष्टिविन्दूनां क्रियास्वभाववर्णनेन देव्याः समाध्युचितावस्थानाऽभिव्यक्तिद्वारा चिरनिदाघतप्तदेहोपरि निपतनेन सुखपारवश्यसंभ्रमहेतौ प्रथमवृष्टावपि अविहता समाध्यवस्था व्यज्यते ॥

## तत्त्वालोकः

'कार्याजनिर्विशेषोक्तिस्सति पुष्कलकारणे'

इति विशेषोक्तिः ध्वन्यते । अयं चांशः ग्रन्थकृतैव सूचितो भविष्यति ।

एवं च पर्यायविशेषोक्तिभ्यामुपस्कृतो व्यङ्ग्योऽर्थः प्रतीयत इति प्रतिपादयति—**अत्र तपस्यन्त्या इति** । अत्र—स्थिताः क्षणमित्युदाहृतपद्ये तपस्यन्त्याः—तपश्चरन्त्याः, तपश्शब्दात् 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः [पा.सू. ३-१-१७] इति तपश्चरतीत्यर्थे क्यङः तदन्तात् शतरि, उगितश्चेति ङीप् । न तु क्यच् तस्य 'कर्तुः क्यङ् सलोपश्च' इत्यतः पूर्वमेव निवृत्तेः । देव्याः—पार्वत्याः इत्यर्थः । प्रथमवृष्टिबिन्दूनां—प्रथमपतितवृष्टिविन्दूनां इत्यर्थः । प्रथमे वृष्टिबिन्दवः इति विशेषणसमासः 'प्रथमपतिताः उदबिन्दवः' इति मध्यमपदलोपी समासो वा । क्रियास्वभाववर्णनेन क्षणावस्थानताडनचूर्णीभावस्खलननाभिप्रवेशानां तात्त्विकानां प्रतिपादनेन, समाध्युचितावस्थानाऽभिव्यक्तिद्वारा—समाधिः—ध्येयालम्बनप्रत्ययस्य तत्सजातीयप्रत्ययान्तरेण अपरामृष्टत्वे सति अर्थमात्रनिर्भासनम् , तस्य उचितं अनुगुणं यदवस्थानं नासाग्रन्यस्तनयनतादि तदभिव्यञ्जनद्वारा इत्यर्थः ।

समाधिस्वरूपं पातञ्जले विभूतिपादे निरूपितम् 'तत्र प्रत्ययैकतानता

**चित्रमीमांसा**

**तथाहि —**

**'नासाग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः ।**
**ध्यायीत मनसा देवं उरो विष्टभ्य चाग्रतः ॥'**

**इति समाधिगतामवस्थामाहुः । तत्र पक्ष्मसु स्थिताः इत्यनेन नासाग्रन्यस्तनयनतारूपमर्धनिमीलनं व्यज्यते सर्वथो-**

**तत्त्वालोकः**

ध्यानम्' 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यामिव समाधिः' इति [पा- योग. वि.पा.२·३.सू] । निदाघो–ग्रीष्मः । सम्भ्रमः अत्यादरो भयं वा तद्धेतौ –तत्कारणे सत्यपि इति यावत् । 'संभ्रमोऽत्यादरे भये' इति वैजयन्ती । 'प्रथमवृष्टावपि' इत्यपिः विरोधं द्योतयति । तपस्यतामुपरि सहसा जलबिन्दुनिपाते समाधिमतां तद्भङ्गो जायत एव तथापि नास्याः समाधिभङ्गः इति तस्याः लोकोत्तरं स्थैर्यमभिव्यज्यते । तद्द्वारा अप्रतिहता समाध्यवस्था चेति ।

समाधिमतां अवस्था कीदृशी या अत्रत्यैः पदैः अभिव्यज्यते इत्युपपादयति–**तथाहि** इत्यारभ्य **पतनासम्भवात्** इत्यन्तेन । नासाग्रन्यस्तनयनत्वादयः समाधिमतां बाह्यावस्थानविशेषाश्चत्वारः । मनसा ध्यानं प्रधानमवस्थानमान्तरमित्यत्र प्रमाणमपि प्रदर्शयितुमाह —**नासाग्रेत्यादिना** । तथा च नासाग्रावेक्षणास्यसंवरणोरोविष्टम्भनिश्चलताः पक्ष्मादिष्ववस्थानादिभिरर्थैरभिव्यज्यन्त इत्युपपादयति—**तत्रेति** । पक्ष्मसु तेषां स्थितेः कथं नासाग्रन्यस्तनयनताभिव्यञ्जकत्वमित्याशङ्कायां अन्वयव्यतिरेकाभ्यां तद्दृढीकरोति— **सर्वथेत्यादिना** । जलबिन्दूनां अवस्थानं अर्धनिमीलन एव

चित्रमीमांसा

न्मीलने पक्ष्मणामूर्ध्वाग्रत्वेन च तेषु जलविन्दूनां स्थित्यसंभवात् । पक्ष्मभ्यश्च्युतानां तेषां आस्याऽप्रवेशेन अधरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते, ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनेन तूरोविष्टम्भः, अलसवदवनतावस्थाने हि स्तनयोरन्तस्संकुचिताकारतया तदुत्सेधयोस्तेषां पतनं न स्यात् । कथंचित् तयोः पतित्वा वलित्रयं प्राप्तानामपि वलीषु तिर्यगेव गमनं स्यात् न नाभिदेशप्राप्तिः । नाभौ च संवृतायां प्रवेशो न स्यात् । पक्ष्माधरादिपतनक्रमकथनेन च निश्चलत्वं व्यज्यते । मुखादिचलने सति पक्ष्मपतितानां तेषामधरपयोधरादिक्रमेण पतनासम्भवात् ॥

तत्त्वालोकः

संभवति न तु सर्वथोन्मीलने सर्वथा निमीलने वेति भावः । समाधिमताम् अवस्थानेषु द्वितीयावस्थानप्रकारम् उपपादयति--**पक्ष्मभ्य इति** । **विवृतास्यत्वे** तु पक्ष्मभ्यश्च्युतानां तेषां आस्यप्रवेशे सति स्तनोत्सेधे निपातोक्तिरनुपपन्ना स्यादिति भावः । तेन च संवृतास्यत्वं व्यज्यते । समाधिमता मवस्थानेषु चतुर्थम् उरोविष्टम्भाभिव्यक्तिप्रकारम् उपपादयति-**ततश्च्यु-तानाति** । असत्युरोविष्टम्भे जलबिन्दूनां नाभिदेशप्राप्तिर्न स्यात् । नाभिदेशप्रवेशे न च उरोविष्टम्भः अभिव्यक्तो भवतीति भावः ॥

उक्तैस्त्रिभिरवस्थानैः निश्चलत्वमभिव्यज्यते । एषाममावे क्रमिकपतनं न भवेदिति भावमाविष्करोति-**पक्ष्माधरादीत्यादिना** ।

चित्रमीमांसा

किं च एभिरेव विशेषणैः देव्याः लोकोत्तरं सौन्दर्य-मभिव्यज्यते ।

स्थिता इत्यनेन पक्ष्मणामविरलतायाः, क्षणमि-त्यनेन तेषां मसृणतायाः, पक्ष्मपतनशिथिलवेगैरुदबिन्दु-भिस्ताडनोक्त्या अधरसौकुमार्यस्य, पक्ष्माधरपतनादिभिः शिथिलवेगानां तेषां स्तनोत्सेधे चूर्णीभाववर्णनेन तयोः अतिकाठिन्यस्य, उरोविष्टम्भेऽपि वलीषु तेषां स्खलनोक्त्या वलीनां विस्पष्टतायाः, सर्वबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगभीरतायाश्चाभिव्यञ्जनात् ॥

तत्त्वालोकः

अत्रैव वाच्यस्य विवक्षितत्वे सति गूढार्थोऽन्योऽपि व्यज्यत इत्यव तारयति— किंचेति । अयं भावः — पूर्वोक्तप्रकारेण समाध्यवस्थाभि व्यक्त्यनन्तरं उक्तैरेव विशषणैः कालदेशक्रियादीनाम् आर्थसमाजे सति संहत्य अर्थान्तरव्यञ्जकत्वमस्तीति प्रतिपादयति—'एभिरेव विशेषणैः' इति बहुवचनेन, सौन्दर्यम् इत्येकवचनेन च इति अवगन्तव्यम् ॥

सम्प्रति क्रियादीनां प्रत्येकं विलक्षणार्थाभिव्यञ्जकत्वे सहकारित्वमुप-पाद्य अभिव्यज्यमानार्थानप्युल्लिखति— **स्थिता इत्यनेनेति** । पक्ष्मसु जल-बिन्दूनामवस्थानवर्णनरूपक्रियावैशिष्ट्यात् पक्ष्मणामविरलतायाः, अवस्थाने क्षणमिति कालवैशिष्ट्यात् पक्ष्मणां मसृणतायाः, शिथिलवेगैरप्युदबिन्दुभि-स्ताडनरूपक्रियावैशिष्ट्यात् अधरगतसुकुमारतायाः, पक्ष्माधरपतनादिभि-श्शिथिलवेगानामपि स्तनोन्नतप्रदेशे चूर्णीभावरूपक्रियावैशिष्ट्यात् स्तनयो-

चित्रमीमांसा

एवं च वाच्यातिशायि व्यङ्ग्यमत्रेति ध्वनेरुदाहरणम् ॥

तत्त्वालोकः

रतिकाठिन्यस्य, उरसो विष्टम्भे सत्यपि तेषामेव जलबिन्दूनां त्रिवलीषु स्खलनरूपक्रियावैशिष्ट्यात् तासां विस्पष्टतायाः, समस्तानामपि जलबिन्दूनां नाभिप्रवेशरूपक्रियावैशिष्ट्यात् नाभेरतिनिमग्नतायाश्चाभिव्यक्तिः ।

व्यज्यमानैरेभिः पार्वत्याःलोकातीतं सौन्दर्यम् अभिव्यज्यते। लोकातीतसौन्दर्यवतीषु हि पक्ष्मसु नैरन्तर्यस्य, मसृणतायाः, अधरसुकुमारतायाः स्तनकाठिन्यस्य, निमग्ननाभितायाश्च सामस्त्येनावस्थानं नान्यासामिति सामुद्रिकशास्त्रमर्यादेति बोध्यम् ।

अत्र देव्याः देहोपरि निपततां जलबिन्दूनां क्रियास्वभावोक्त्या यः स्वभावोक्तिरलङ्कारः, यश्च पर्यायालंकारः, यश्च परिकरालंकारः तैः यश्चमत्कारः तदपेक्षाया समाध्यवस्थायाः, लोकोत्तरसौन्दर्यं चाभिव्यज्यमानाच्चमत्कारातिशयः इति वाच्यातिशायित्वनिबन्धनस्य ध्वनिकाव्यस्य विवक्षितान्यपरवाच्यलक्षणस्योदाहरणमिदं निगमयति--एवंचेति ।

उक्तं च ध्वनिकृता—

तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ ।
ध्वनेस्स एव विषयो मन्तव्यस्सङ्करोज्झितः ॥

चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ।
रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥ इति ।

## चित्रमीमांसा

यथा वा —

निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः
　नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
　वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

### तत्त्वालोकः

अभिधामूलध्वनिं सोदाहरणं प्रदर्श्यापि काव्यप्रकाशोदाहृते निश्शेष-च्युतेतिपद्ये तदभिप्रायाननुगुणरीत्या व्यङ्ग्यांशम् उपपादितवतः **साहित्य-दर्पणकारस्य** मतं निरस्य प्रकाशकारोक्तरीत्या व्यङ्ग्यांशाभिव्यञ्जनमेव युक्तमिति सिद्धान्तयितुं तदीयमुदाहरणान्तरम् आह — **निश्शेषेति** ।

अयि मिथ्यावादिनि बान्धवजनस्य अज्ञातपीडागमे दूति त्वम् इतः वापीं स्नातुं गतासि, न पुनस्तस्याधमस्यान्तिकम्, यतस्तव स्तनतटं निश्शे-षच्युतचन्दनम्, अधरो निर्मृष्टरागः, नेत्रे दूरमनञ्जने, तथा इयं तव तनुः तन्वी पुलकिता वर्तते इत्यन्वयक्रमः ।

एषा हि वल्लभमानेतुं प्रेषितवतीं दूतीं 'स्त्रियः कामितकामिन्यः' इति न्यायेन तेनैवोपभुक्तामवगत्य उपालम्भन्त्याः विदग्धोत्तमनायिकायाः उक्तिः ।

अयि मिथ्यावादिनि—मदीयवल्लभसमीपमगत्वैव 'मया बहुधा प्रसादितोऽपि नायातः' इति मिथ्यावादशीले, दूति ननु सखि मत्प्रतारिणीत्यर्थः । बान्धवजनस्य अज्ञातपीडागमे अज्ञातः अगोचरः पीडायाः व्यथायाः आगमः

**तत्त्वालोकः**

प्राप्तिः यया तस्याः संबुद्धिः। अनवगतमदीयव्यसने इति पर्यवसितोऽर्थः। अज्ञातपीडागमे इत्यत्र यद्यपि पीडापदार्थस्य बान्धवजनपदार्थसापेक्षत्वमस्तीति अखण्डशक्त्यैकार्थबोधकत्वरूपं सामर्थ्यं नास्तीत्यागमशब्देन समासो नोपपद्यते। अथापि चैत्रस्य दासभार्या इतिवत् सम्बन्धिशब्देन नित्यसापेक्षत्वात्समासः साधुरेव। अत एव **वैयाकरणाः**—

'सम्बन्धिशब्दस्सापेक्षो नित्यं सर्वः समस्यते।
स्वार्थवत्सा व्यपेक्षा च वृत्तावपि न हीयते'॥ इत्याहुः।

त्वम् इतः-मत्सकाशात्, वापीं–दीर्घिकां स्नातुं गतासि, स्नानकालात्ययभयात् नदीमदीयप्रिययोरन्तिकमगत्वैव स्नानार्थं गतासि इति वाच्योऽर्थः। तस्य–वल्लभस्य, कीदृशस्य–अधमस्य-परवेदनानभिज्ञस्य नायिकातद्दूतीविभागानभिज्ञस्य वा अन्तिकम्–सकाशं न पुनर्गतासि नैव गतासि। पुनश्शब्द एवकारार्थे। उक्तार्थे साधकमाह— **निश्शेषेत्यादिना**।

तत्र वक्त्रादिवैशिष्ट्यज्ञानोद्बोधात्पूर्वं वाच्यपक्षे १. यतस्तव स्तनयोः तटं–प्रान्तदेशः निश्शेषं–निरवशेषितं यथा स्यात्तथा च्युतं–गलितं चन्दनं यस्मात्तथाभूतं, न तु उरःस्थलं, नापि स्तनसन्ध्यादि। २. अधरः–अधरोष्ठः निर्मृष्टरागः–नितरां अत्यन्तं मृष्टः रागो यस्य तथाभूतः अधरस्योत्तानतया बहुलजलसम्बन्धात् दन्तशोधनसमये अङ्गुल्यादिना अधिकसम्मर्दाच्च अधर एव लुप्तरागो जातः न पुनरुत्तरोष्ठः तस्य न्युब्जतया अङ्गुल्यादिना घर्षणस्य मान्द्यात् त्वरापारवश्येन सम्यगक्षालनाच्च। तथा ३. नेत्रे–अक्षिणी दूरं प्रान्तामग एव अनञ्जने–अञ्जनरहिते, स्नानकाले नेत्रमुद्रणान्मध्ये जलसम्पर्कायोगात्। ४. तथा तन्वी–स्वभावकृशा इयं तव तनुः

## तत्त्वालोकः

शरीरं कृशा, स्नानात्परं शैत्याधिक्यात् वापीसमीपस्थितयुवजनसान्निध्य निमित्तकापत्रपापारवश्याद्वा सङ्कुचिता अत एव पुलकिता सञ्जातरोमविक्रिया वर्तते इति ।

अत्र उक्तरीत्या वाक्यार्थज्ञानानन्तरं वक्तृबोधयितव्यककुवाक्यप्रस्ता वादिवैशिष्ट्यज्ञानसहकारेण अर्थान्तरमभिव्यज्यते— तत्र वक्त्री विदग्धोत्तमा नायिका, बोधयितव्या दूती, वापीं स्नातुं इतो गतासि न पुनस्तस्याधमस्या न्तिकमित्यत्र नञ्काकुः, दूतीं प्रति कोपकालिकी उक्तिरिति प्रस्तावः, इत्येतेषा मुपसर्जनतया अधमपदार्थस्यैव प्राधान्येनाभिव्यञ्जकत्वमिति विवेकः ।

व्यङ्ग्यपक्षे तु—त्वं मत्सकाशात् वापीं स्नातुं न गतासीति निषेधो व्यज्यते, तथा तदन्तिकमेव रन्तुं गतासीति विधिश्च व्यज्यते। अयमेव हि वाच्याद्व्यङ्ग्यस्यातिशयः अधमपदार्थपर्यालोचनाऽवलम्बनेन यत् वापीं स्नातु-मितो गतासीति विधौ वाच्ये न गतासीति निषेधो व्यज्यते, यच्च न पुनस्तस्या-धमस्यान्तिकमिति निषेधे वाच्ये तदन्तिकमेव रन्तुं गतासीति विधिर्व्यङ्ग्य-इति । उक्तार्थाभिव्यञ्जने सहायकान्युद्घाटयति—**निश्शेषेति** ।

यतः तव स्तनयोस्तटं निश्शेषच्युतचन्दनं न तु स्तनसन्ध्यादीति, तत्र नायककरपरामर्शायोगात् स्तनयोस्तटे एव मर्दनाधिक्यादिति भावः । अधरः निर्मृष्टरागः 'उत्तरोष्ठं अन्तर्मुखं नयनान्तमिति मुक्त्वा चुम्बनदशनन-खस्थानानी'ति वात्स्यायनीयकामशास्त्रोक्तरीत्या उत्तरोष्ठे चुम्बननिषेधात् अधरोष्ठ एव ताम्बूलरागस्य निश्शेषमृष्टतेति भावः । नेत्रे दूरं प्रान्त एव अनञ्जने कज्जलरहिते न तु अत्यर्थं 'नयनान्तं मुक्त्वा' इति निषेधात्प्रान्त एव चुम्बनं जातमत एव तत्र अञ्जनलोपः इति भावः । तथा तवेयं तनुः

चित्रमीमांसा

अत्र वापीं स्नातुं गतासि न तु तत्सकाशं इति वाक्यार्थे स्थिते तत्सकाशमेरन्तुं गतासीत्यधमपदेन प्राधान्येन व्यज्यते ॥

तत्त्वालोकः

पुलकितापि तन्वी कृशेति रतिश्रमाज्जातौ तानवपुलकोद्गमौ प्रत्यक्षवेद्यौ अनपलपनीयाविति भावः ॥

अत्र साहित्यदर्पणकृता 'तदन्तिकगमनस्य विपरीतलक्षणयावगतिः रमणस्य तु दूतीरूपबोद्धव्यवैशिष्ट्यादभिव्यक्तिः'। [सा. द्वि. प] इति लक्ष्यार्थेन स्वतस्संभविना वस्तुना तदन्तिकमेव रन्तुं गतासीति वस्तु ध्वन्यते। तत्र अधमपदस्य द्योतकत्वमित्युक्तम् [सा. च. प] तदयुक्त मिति मनसि निधाय व्यज्यमानमर्थं निष्कृष्य प्रदर्शयति—अत्रेति। अत्र वापीं स्नातुं गतासि, न तु तस्यान्तिकमिति अन्वयबोधे जाते वक्त्रादिवैलक्षण्योद्बोधनबलादधमपदप्रयोगौचित्यपरिशीलनात्परं बाधोदयाद्विपरीतार्थाभिव्यक्तिः व्यञ्जनयैव न पुनर्लक्षणया। उक्तं च—

'क्वचिद्बाध्यतया ख्यातिः, क्वचित्ख्यातस्य बाधनम।
पूर्वत्र लक्षणैव स्यात् उत्तरत्राभिधैव तु' इति ॥

एवं च यत्र खलु विधिनिषेधौ उत्पत्स्यमानावेव निषेधविध्योः पर्यवस्यतः तत्रैव लक्षणावसरः। यत्र पुनः प्रकरणादिपर्यालोचनया निषेधविधी अवगम्येते तत्र अभिधैवेति। अभिधापदस्य—पदस्य अभिधामूलव्यञ्जनयेत्यर्थः।

**तत्त्वालोकः**

किंचात्र साहित्यदर्पणकारोक्तदिशा 'न पुनस्तस्याधमस्यान्तिकम्' इत्यत्र विपरीतलक्षणया (नञ्पदे) तदन्तिकं गतासीति लक्ष्यत इत्युच्येत तदा स्नातुमितो गतासीत्यस्यान्वयो नोपपद्येत ।

न च 'स्नातुमितो गतासि' इत्यत्रापि गमनाभावो लक्षणयावगम्यत इति वाच्यम् , अप्रसक्तप्रतिषेधापत्तेः ।

यदि तु–तात्पर्यानुपपत्तेः मुख्यार्थबाध इति विपरीतलक्षणोच्येत–तदा 'भ्रम धार्मिक विस्रब्ध' इत्यादिध्व**निकाराभिमत**निषेधाभिव्यक्तिस्थले निषेधस्य लक्ष्यता स्यात् । न चैवमिष्टं ध्वनिकारादीनाम् । अत एव 'स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्र–अलंकारा रसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते । स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः' इत्यभिधाय – 'भ्रम धार्मिक' इति पद्यमेव उदाहृतम् [ध्व. प्र. उ] । तत्रैव **लोचनकृता**– 'तात्पर्यानुपपत्त्या विपरीतलक्षणामाशङ्क्य अन्वयविरोध एव लक्षणावसरः नान्यत्र' इत्यन्तेन लक्षणाया विषयनिमित्तं व्यवस्थाप्य इत्थमभिहितम्–'समयार्थावगमनशक्तिरभिधाशक्तिः । तदन्यथाऽनुपपत्तिसहायार्थावगमनशक्तिः तात्पर्यशक्तिः । मुख्यार्थबाधादिसहकार्यपेक्षार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः । तच्छक्तित्रयोपजनितार्थावगममूलजाततत्प्रतिभापवित्रितप्रतिपत्तृप्रतिभाससहायार्थद्योतनशक्तिः ध्वननव्यापार इति [ध्व. लो १६+१८ पु]।

**अपरं चात्र**–दूत्याः प्रसाद्यकामुकादिसम्भोगस्य प्रत्यक्षादिप्रमाणान्तरेण अवगतौ सत्यां मुख्यार्थबाधोऽपि स्यात् । न चात्र तथा । अपि तु तदभिहितवाक्यज्ञानजन्यज्ञानमहिम्नैवेति कथमत्र लक्षणा । अत एव प्रकाशकृताऽपि 'साहेन्तीसहि' 'उपकृतं बहु' इत्यादावेव विपरीतलक्षणोपगता ।

चित्रमीमांसा

तथाहि —

अधमत्वमपकृष्टत्वं, तच्च जात्या कर्मणा वा भवति। तत्र जात्यापकर्षं न उत्तमनायिका नायकस्य वदति। नापि स्वापराधपर्यवसायिदूतीसम्भोगात्प्राचीनं सर्वं सोढमेवेति नोद्घाटनार्हम्। अन्यथा स्वयं दूतीसम्भोग प्रेषणानुपपत्तेः। तदनन्तरं च स्वप्रेषितदूतीसंम्भोगरूपमेव स्वयं सन्निहितचिह्नैः ज्ञातुं शक्यं हीनकर्म सम्भवतीति तत्पर्यवसायिनाऽधमपदेन तस्यान्तिकमेव रन्तुं गतासीति व्यज्यते॥

तत्त्वालोकः

निश्शेषमिति पद्ये तु वाच्यार्थबोधे जाते बाधावगतिः। न तावता लक्षणा अपि तु व्यञ्जनैवार्थान्तरावगमने शक्ता। उक्तं च 'उत्पन्नेऽपि वाक्यार्थ-बोधे भवन्नपि बाधोऽकिंचित्कर एव' इति एतदभिप्रायेणैवाभिधामूलध्वनि-स्थले निश्शेषेति पद्यमुदाहृतमिति बोध्यम्।

**अधमपदेनेति**—बाधानवतारेऽपि अधमपदार्थपर्यालोचनया 'तत्स-काशमेव रंतुं गतासीति' यथोक्तं व्यङ्ग्यं प्रतीयते। अधमत्वं यदि नायिकयाऽनुल्लिखितं स्यात्तदा उक्तार्थाभिव्यक्तिर्न स्यादित्येवं प्राधान्यमधम पदस्य। तस्मात् 'साहेन्ती' इत्यादौ यदि व्यञ्जना तदा लक्षणा-मूलैव। तत्रापि सख्यादेः प्रसाद्यकामुकादिसम्भोगः न प्रमाणान्तरेण प्रतिपन्नः तदा न विपरीतलक्षणा व्यङ्ग्यार्थप्रतीतिर्वा। अत्र तु न नियमः। एतेन अधमपदस्याधमपदसहायानां चन्दनच्युतादिपदानां च व्यञ्जकत्वमि

**चित्रमीमांसा**

निश्शेषच्युतचन्दनं स्तनतटम् इत्यादीनि वाच्यानि सम्भोगचिन्होद्धाटनेन तत्र साहायकमाचरन्ति ॥

**तत्त्वालोकः**

त्येपोऽर्थः शक्तिमूलः वाक्यप्रकाशो ध्वनिरिति कैश्चिदभिहितं न युक्तं पदप्रकाश्यध्वनित्वाभिधानस्यैव युक्तत्वादित्यभिप्रायः फलति ।

अधमपदप्राधान्यमुपपादयति— **तथाहीति** । अधमपदार्थमाह— **अधमत्वमिति** । अधमत्वं अपकर्षः स च जात्या कर्मणा वा भवेत् । जात्या अपकर्षं उत्तमनायिका नायकस्य न वक्ति । अन्यथा आत्मन उत्तमतैवापसारिता भवेत् । अतश्च दूतीसमक्षमुल्लिखितमधमत्वं न जात्यपकर्षरूपम् । किंतु कर्मकृतापकर्षरूपम् । तदपि कर्म दूतीसंभोगाद्भिन्नं न भवितुमर्हति, तस्य सर्वस्यापि सोढत्वेन प्रकटयितुमनुचितत्वात् । अन्यथा स्वयमेव तदानयनाय दूतीसम्प्रेषणाऽनुपपत्तेः । एवं च वक्तृबोद्धव्यादिवैशिष्ट्यबलात् उत्तमनायकापराधपर्यवसायि दूतिसंभोगरूपं कर्म अपकर्षप्रयोजकमिति नायिकया प्रयुक्तमधमपदमेव तदन्तिकमेव रन्तुं गतासीत्यर्थमभिव्यञ्जयतीति भावः ।

एतेत न पुनस्तस्याधमस्यान्तिकमिति निषेधे वाच्ये तदन्तिकमेव रन्तुं गतासीति विधिर्व्यज्यत इति प्रकाशकाराभिप्रायः आविष्कृतो भवति ॥

नन्वेवं तर्हि–निश्शेषेत्यादिविशेषणानां आनर्थक्यं प्रसज्यते अधमपदेनैवोक्तार्थाभिव्यक्तेरित्याशङ्क्य तेषां सार्थक्यं प्रतिपादयितुं उपक्रमते— **निश्शेषच्युतेत्यादि** । स्तनयोस्तटे निश्शेषं चन्दनच्युतिः, अधरे निर्मृष्ट

चित्रमीमांसा

कथम् ?

निश्शेषच्युतचन्दनं स्तनतटं इत्यत्र तावत् वापीं स्नातुमितो गतासीति वाच्यार्थमुपपादयितुम् इहोत्तरीयकर्षणेन चन्दन च्युतिरित्यन्यथासिद्धिपरिहाराय निश्शेषविशेषणं कृतम् ।

ततश्चन्दनच्युतेः स्नानसाधारण्यव्यावर्तनेन सम्भोग चिह्नोद्घाटनाय तटग्रहणम् । स्नाने हि सर्वत्र चन्दनं

तत्त्वालोकः

रागता, नेत्रयोः प्रान्तेऽञ्जनलोपः, तनौ रोमाञ्चसम्भवेऽपि कार्श्यम् इत्येवं-रूपाणि यानि वाच्यानि वक्त्रादिवैलक्षण्याऽविमर्शदशायां वाच्यार्थ साधारणानि, तान्येव वक्त्रादिवैलक्षण्यविमर्शदशायां सम्भोगचिह्नोद्घाटनेन सम्भोगासाधारण्याविष्करणद्वारा, तत्र व्यज्यमानेऽर्थे साहायकम्—उपोद्बलनम् इत्यर्थः । योपधात [५-१-१३२] इति वुञ् । सहायताम् इत्यर्थो वा ॥

ननु चन्दनच्यवनादेः स्नानादिनैव सम्भव इति न नियमः । उत्तरीयकर्षणादिनाऽपि तत्संभवादित्यन्यथासिद्धिमपनेतुमाह—**कथमित्यादिना** । अयंभावः-निश्शेषं चन्दनच्युतिरुत्तरीयकर्षणमात्रेण न भवति अपि तु स्नानत इति चन्दनच्युतेः स्नानोपपादकत्वमतश्च न प्रकारान्तरेण तत्सिद्धिः । अत एव तस्यां निश्शेषविशेषणमुपात्तमिति ।

**तत इति**—वाच्यार्थोपपत्तिसमनन्तरमित्यर्थः । एवं चात्र ‘ निश्शेष च्युतचन्दनौ स्तनौ ’ इत्येतावतापि वाच्यार्थोपपत्तौ सत्यां किमर्थं नायिकया

चित्रमीमांसा

च्युतिस्स्यात् । तव तु स्तनयोः तटे—उपरिभागे एव दृश्यते, इयमाश्लेषकृतैवेति ॥

तथा 'निमृष्टरागोऽधरः' इत्य ताम्बूलग्रहणविलम्बात् प्राचीनरागस्य किञ्चिन्मृष्टतेत्यन्यथासिद्धिपरिहाराय 'निर्मृष्ट रागः' इति रागस्य निश्शेषमृष्टतोक्ता ॥

पुनः स्नानसाधारण्यव्यावर्तनेन संभोगचिह्नोद्घाटनाय अधर इति विशिष्य ग्रहणम् । उत्तरोष्ठे सरागेऽधरोष्ठमात्रस्य निर्मृष्टरागता चुम्बनकृतैवेति ॥

तत्त्वालोकः

तटग्रहणं कृतमिति चेत् इयं चन्दनच्युतिः न वापीस्नानकृता, अपि तु आश्लेषकृतैवेति प्रकटयितुम् । अत एव स्तनयोरुपरिभाग एव चन्दनच्युतिः न सर्वत्र । स्नाने हि सर्वत्र क्षालनमेव स्यात् न तु स्तनयो स्तट एव च्युतिः इति व्यङ्ग्यार्थोपपादकत्वमस्याः इति भावः ।

ओष्ठे रागापगमस्य न स्नानोपपादकत्वं नापि संभोगोपपादकत्वम् न्यथासिद्धत्वादिति शङ्कामपनेतुमाह—तथेत्यादिना ।

ताम्बूलचर्वणात्परं कतिपयघटिकावधि ओष्ठयोः रागानुवृत्तिः पश्चात् किंचिद्रागापगमोनुभवगोचरः न पुनः निश्शेषं तदपगमः । अत्र च निश्शेषं तदपगम इति निश्शेषं रागापगमस्य स्नानोपपादकत्वमस्त्येवेति न स्नानम् अन्तरा तत्सिद्धिरित्यन्यथासिद्धिपरिहारः ॥

पुनरिति । ओष्ठयोः निरवशेषेण रागापगमोक्तेरेव स्नानोपपत्तौ

## चित्रमीमांसा

'नेत्रे दूरमनञ्जने' इत्यत्र प्रातर्दन्तमज्जनकाल विलम्बेन किञ्चिद्विलुप्तमित्यन्यथासिद्धिपरिहाराय दूरमित्युक्तम्। दूरं–अत्यर्थमित्यापाततोऽर्थः।

कालतः स्नानेन वा सर्वतोञ्जनलोपस्स्यात्, तत्र तु लोचनयोः क्वचित्प्रान्त एवानञ्जनत्वम्। इदं चुम्बनकृतमेवेति ॥

## तत्त्वालोकः

अधरोष्ठे रागापगमोक्तिः संभोगविशेषाभिव्यञ्जनार्थम्।

इत्थंच ताम्बूलचर्वणात्परं दूत्या अधर एव रागापगमो दृष्टः न पुन उत्तरोष्ठ इति इयं निर्मृष्टरागता चुम्बनकृतैवेति व्यङ्ग्यार्थासाधारण्यम्।

नन्वेवमपि नेत्रयोरनञ्जनत्वं यदुपात्तं तदपि न स्नानसाधारणं नापि संभोगगमकम्, अन्यथासिद्धत्वादित्याशंकामपनीय स्नानसाधारण्यं प्रतिपादयति – **नेत्रे दूरमनञ्जनेत्यादिना**। प्रातस्स्नानानन्तरं लिप्तमञ्जनं कालापगमात्किंचिल्लुप्तं भवेत् तत्र तु नेत्रयोरत्यर्थमञ्जनं लुप्तमितीदमनञ्जनत्वं स्नानकृतमिति स्नानसाधारण्यम्। अतश्च कालान्यथासिद्धिनिरासः अत्यर्थमिति अत्यन्तमित्यर्थः भृशमत्यन्तमत्यर्थम्' इति वैजयन्ती।

अत्र नायिकया प्रयुक्तं दूरपदं आपाततो भृशार्थकमपि वक्तृप्रयोगवैशिष्ट्यात् प्रान्तदेशपरम्। एवंचेदमनञ्जनत्वं यन्नेत्रप्रान्ते परिदृश्यते तत् चुम्बनकृतमित्यभिव्यनक्ति। तदेतदाह–**कालत इति**। तेनास्यापि विशेषणस्य संभोगासाधारण्यं उपपादितं भवति ॥

### चित्रमीमांसा

पुलकिता तन्वी तवेयं तनुः इत्यत्रापाततः 'तन्वी' इति सहजतानवकीर्तनेन पुलकितेति स्नानचिह्नोपन्यासः ॥ पुलकिताऽपि तन्वी वर्तत इति हृदि स्थितोऽन्वयः। तेन च स्नानेन पुलकिता तनुः किंचिदुच्छ्वसिता भवति इयं तु न तथेति रतिक्लेशजनितावेव तानव पुलकोद्गमाविति मर्मोद्घाटनम् ॥

### तत्त्वालोकः

एवं चतुर्थमपि विशेषणं स्वाभाविककार्श्यसहभावेन पुलकोद्गमरूपं स्नानोपपादकमिति प्रतिपाद्य गाढं पर्यालोचिते सति तयोस्सम्भोगाऽसाधारण्यमिति प्रतिपादयति–**पुलकितेति** ।

एवं च शरीरे कार्श्यं स्वभावसिद्धमपि पुलकोद्गमस्य स्नानोपपादकत्वमापाततः प्रतीयते। तथापि वैलक्षण्यावगतिदशायां पुलकोद्गमे सति किञ्चिदुच्छ्वसितेन शरीरेण भाव्यम्, न चास्यास्तथा दृश्यते शरीरम्। अतश्च तानवपुलकोद्गमावपि उभौ संभोगनिबन्धनावेवेति व्यङ्ग्यासाधारण्यं तयोरिति भावः ॥

इत्थं स्नानसाधारण्येनावगतानां विशेषणानां वक्त्रादिवैशिष्ट्योद्बोधसमनन्तरं सम्भोगासाधारण्येऽवगते वाच्यार्थप्रतीत्यनुगुणतया 'अयि मिथ्यावादिनि' इति सम्बोधनमपि तदन्तिकमेव रन्तुं गतासि इति व्यङ्ग्यानुगुण्येन स्नातुं तमनुनेतुं वा त्वं न गता, अपि तु तदुपभोगार्थमेव, तथापि बहुधाप्रसादितोऽपि नायत इति यद्वदसि तदेतन्मिथ्या इत्यर्थे

## चित्रमीमांसा

एवमेभिर्व्याक्यैरुपस्कृतेनाधमपदेन ‘तस्यान्तिकमेव रन्तुं गतासीति’ व्यज्यमाने प्राग्वाच्यार्थतादशायां वापीं स्नातुं गतासीत्येतदनुगुणार्थतयान्वितं ‘मिथ्यावादिनि’ इति सम्बोधनमपि व्यङ्ग्यानुगुण एवार्थे पर्यवस्यति ॥

ततश्च न्यग्भावितवाच्यमस्यापि व्यङ्ग्यं वाच्यातिशायीति* इदमपि ध्वनेरुदाहरणम् ॥

## तत्त्वालोकः

पर्यवस्यति । प्रधानानुगुण्येनान्येषां पर्यवसानस्यौचित्यादित्याशयेनाह—**एवमेभिरिति** ।

उक्तपद्ये वापीं स्नातुमितो गतासि इति विधौ वाच्ये तदपेक्षया वापीं स्नातुं न गतासीतिं व्यङ्ग्यस्य न पुनस्तस्याधमस्यान्तिकम् इति निषेधे वाच्ये तदन्तिकमेव रन्तुं गतासीति व्यङ्ग्यस्य च चमत्कारातिशयाधायकत्वं वक्तृबोद्धव्यादिवैलक्षण्यानुसन्धानवतां सहृदयानां अनुभवगोचरमिति इदमप्युदाहरणमुत्तमकाव्यस्येति निगमयति—**ततश्चेति** । ततश्च—वाच्यार्थान्विततयाऽवगतानां व्यङ्ग्यार्थोपसर्जनतया अवस्थानतः, न्यग्भावितवाच्यम्—उपसर्जनीकृतवाच्यम्, वाच्यातिशायि—वाच्यार्थापेक्षया अधिकचमत्कारजनकम् इति इदमपि पद्यं ध्वनेः—ध्वनिकाव्यस्य उदाहरणम् लक्ष्यमित्यर्थः ॥

उक्तं च **ध्वनिकृता**—

‘यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥ इति ।

## तत्त्वालोकः

एतेन 'न्यग्भावितवाच्यमित्यस्य तिरस्कृतवाच्यम्' इति केनचित् व्याख्यातं चिन्त्यमेव। काव्यप्रकाश-तद्व्याख्याऽननुगुणत्वात् अनौचित्याच्च। प्रकाशकारेण हि-प्रथमोल्लासे 'न्यग्भावितवाच्यव्यङ्ग्य व्यञ्जनक्षमस्य शब्दार्थयुगलस्येत्युक्त्वा निश्शेषेति पद्यमुदाहृतम्। न्यग्भावितेति प्रतीकमुपादाय व्याख्यातं **विद्याचक्रवर्तिना** 'न्यग्भावितवाच्यः उपसर्जनीकृतवाच्यः यो व्यङ्ग्योऽर्थः तद्बीजननक्षमस्येति [का.प्र.सं२ ३ पु] ॥

नात्र वाच्यार्थस्य तिरस्कारः, वाच्यार्थस्यान्वययोग्यतायाः अभाव एव तत्सम्भवात्। अत एव प्रकाशकृता 'उपकृतं बहु तत्र' इति पद्यं अत्यन्ततिरस्कृतवाच्यस्योदाहरणतया प्रदर्शितम्। भवति चात्र विरोधिनि उपकारबाधाद्वाच्यार्थस्यान्वययोग्यताया अभावः। अत एव च विरोधि लक्षणया उपकारेणापकारः, सौजन्येन दौर्जन्यम्, विधानेनाऽविधानम्, सख्येन शात्रवम्, सौख्येन दुःखिता, इत्येवं वैपरीत्यं लक्ष्यते। विरोधिलक्षणामूलं चात्र [उपकृतं बहु] पद्ये सख्यादेः प्रसाद्यकामुकादि सम्भोगस्य प्रमाणान्तरेण नायिकाया अवगम एव। न च तथा निश्शेषेति पद्ये, अपि तु नायिकाभिहितवाक्यजनितप्रत्ययमाहात्म्यादेवेति न मुख्यार्थान्वयायोग्यता। वाक्यार्थबोधोदयात्परं वक्त्रादिवैशिष्ट्यबलाद्बाधे उदितेऽपि न लक्षणा। अकिंचित्करत्वात्। अत एव

'क्वचिद्बाध्यतया ख्यातिः क्वचित्ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यात् उत्तरत्राभिधैव तत्॥'

इत्युक्तं संगच्छते। अत एव च प्रकाशकृता 'अधमपदेन व्यज्यते' इत्येतावदेवोक्तम्॥

### तत्त्वालोकः

**अत्रेदमप्यवधेयम्** — निश्शेषेति पद्ये प्रियविरहरूपेण विभावेन, दूत्यवयवपरिदृश्यमानचन्दनच्यवनाद्यवलोकनावगततत्सम्भोगज्ञानाक्षिप्तपश्चात्तापेनानुभावेन, स्वाभीष्टासिध्यादिज्ञानजन्येन व्यभिचारिणा अमर्षेण च अभिव्यज्यमानः दूतीधर्मविरुद्धकार्यकारिण्याः मिथ्यावादिनीत्याद्याक्षेपजन्यः दीर्घनिश्वासादिकारी 'अकृतज्ञायां त्वयि यद् बान्धवधिया विश्वासः कृतः, यच्च त्वय्यीव अधमे तस्मिन् मया गाढानुरागः कृतः, एवंविधाया मम त्वया तेन च या वञ्चना कृता तज्जनितपश्चात्तापपात्रत्वं युक्तमेवेति, प्रथमं परस्परानुरागेण संयुक्तयोः मानप्रवासशापातिरिक्तात्कुतोपि हेतोर्विरहो जात इति विरहहेतुकविप्रलंभव्यभिचारी निर्वेदाख्योऽपि भावो ध्वन्यते ॥

**यदत्र काव्यप्रकाशोद्योते नागेशभट्टैः** ईर्ष्याहेतुकविप्रलंभसञ्चारि निर्वेदभावध्वनिरित्युक्तम् । तच्चिन्त्यम् । यत्र गोत्रस्खलनान्यसंभोगादिना कृतापराधे सति यो विरहः तत्र ईर्ष्याहेतुकविप्रलंभस्य वक्तुम् उचितत्वात् । अत एव **प्रकाशकृता** – ईर्ष्याहेतुकविप्रलम्भस्य 'सा पत्युःप्रथमापराधसमये' इत्युदाहृतम् । अत्र तु कारणान्तरतो विरहे जाते पश्चात् दूतीसंभोगज्ञानोत्पन्नः निर्वेदो ध्वन्यते । न चैतावता ईर्ष्याहेतुकत्वं तन्निर्वेदस्य, विरहात्प्रागीर्ष्यायाः अनभिव्यक्तेः । प्रत्युत विरहात्परमेव तदभिव्यक्तेश्चेति ॥

**यत्तूक्तं रसगङ्गाधरकृता** – निश्शेषेति पद्ये स्तनतटादौ चन्दनच्यवनादीनां सम्भोगाव्यभिचारित्वं यदुपपादितम , तत् पञ्चमोल्लासशेषे निश्शेषेप्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति. यतश्चात्रैव स्नानकार्यत्वेन उपात्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि इति व्यञ्जकानां साधारण्यं प्रतिपादयतां प्राभाणिकानां ग्रन्थैस्सहासङ्गतं भवतीति,

**तत्त्वालोकः**

तच्चिन्त्यम् – यतश्चन्दनच्यवनादीनां साधारण्यप्रतिपादनावसरे नायिकया नायके अधमत्वं किमर्थमुपन्यस्तमिति चिन्ता न कृता ।

अत एव च संभोगेन यथा तथा उत्तरीयाकर्षणादिनापि चन्दनच्युत्यादिः संभवति इत्यभिप्रायेण साधारण्यं प्रथमतः उपपादितम् । अधमपदार्थपर्यालोचनसमनन्तरं तु असाधारण्यं संभवति । तर्हि व्यञ्जकानां चन्दनच्यवनादीनां व्यङ्ग्येन सम्भोगेन सम्बन्धनैयत्यस्य व्याप्तिरूपत्वेन अनुमानानुकूलतैव स्यादिति शङ्कां मनसि निधायैव काव्यप्रकाशकारः—'न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमान'मिति प्रतिपादितवान् । यद्यधमत्वपर्यालोचनसमनन्तरमपि साधारण्यमेव तेषां विशेषणानां स्यात् तदा अनुमानप्रसक्तेरेवाभावात् तन्निवारणप्रयासो निष्फलः स्यात् । एवं च अधमपदार्थपर्यालोचनात्प्राक् तेषां साधारण्यज्ञानं तत्पर्यालोचनात्परमसाधारण्यज्ञानं जायते, अथापि नायिकाप्रोक्ताधमत्वोल्लेखस्य कोपकालीनतया अर्थाव्यभिचारित्वानिश्चयेन अनुमानप्रमाणप्रसक्त्यभावात् ।

व्यञ्जनया तु संभाव्यमानादपि तादृशादर्थात् अर्थान्तरप्रतीतिर्जायत इत्यत्रैव तत्तात्पर्यात् । न चैतावता व्यङ्ग्यसाधारण्यमेव व्यञ्जकस्य भवेदित्याग्रहः प्रकाशकृत इति पण्डितराजकल्पना युक्तिमती । तथोपगमे विवक्षितान्यपरवाच्यत्वं गौणं स्यात् । दीक्षितरीत्याश्रयणे तु विशेषणानां वाच्यव्यङ्ग्योभयसाधारण्ये प्रतीयमानेऽपि पर्यवसाने व्यङ्ग्यतात्पर्यकत्वलक्षणं विवक्षितान्यपरत्वं मुख्यमुपलभ्यते । अत एव **प्रकाशकृता चतुर्थोल्लासे**–

## तत्त्वालोकः

अर्थशक्तिमूलध्वनिषु वस्तुध्वनिमुदाहरता आपाततः वाच्यव्यङ्ग्योभयसाधारणाकारेण विशेषणानां अन्वये प्रतीतेऽपि वक्त्राद्यौचित्यविमर्शे कृते व्यङ्ग्यासाधारण्ये पर्यवसानाऽनुगणतया इदमुदाहरणं प्रदर्शितम् —

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमूलमम्बरमणिः विस्रब्धमत्रागतिः
आश्चर्यं तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम् ।। इति ।

अत्र च सायमित्यादीनां त्रयाणां विशेषणानां सौकुमार्यातिश-यपरपुरुषोपभोगसाधारण्यं प्रतीयते । अथापि अधुनापदोपादानवैशिष्ट्यात्-परपुरुषोपभोगासाधारण्यप्रतिपादनपरत्वं तेषां इत्यत्रैव वक्तुस्तात्पर्यमित्युन्नयामः ।

यतश्च सायं स्नानमिति पद्ये 'स्नानमुपासितम्' इत्युक्तौ प्रातस्स्नानानन्तरं कार्यान्तरकरणात् क्लम इत्यन्यथासिद्धिपरिहाराय 'सायम्' इति विशेषितम् । तेन च स्नानोत्तरं इतरकार्याकरणेऽपि अयं क्लमः सौकुमार्यातिशयकृत इति साधारण्यं प्रतीयते । पर्यवसाने तु सायं स्नानस्य श्रमनिवृत्तिमात्रफलकत्वेऽपि क्लमः सम्भोगकृत एवेति तत्संभोगासाधारण्यमेव सायं स्नानादीनां ।

एवं मलयजेनाङ्गं समालिप्तमित्यनुक्त्वा समालेपितमित्यनेन मलय चन्दनस्य स्वयमङ्गेषु लेपनात् क्लमः इत्यन्यथासिद्धिपरिहारः । तेन चन्दनानुलेपनप्रयुक्तोऽपि क्लमः नास्तीति अयं सम्भोगजनित एवेति ज्ञायते ।

**तत्त्वालोकः**

तथा—'अस्ताचलमम्बरमणिर्गतः' इत्यनुक्त्वा अस्ताचलमूलमित्युक्त्या सायमपि उष्णसद्भावात्क्लमः इत्यन्यथासिद्धिपरिहारद्वारा सौकुमार्यातिशय-साधारण्यं प्रत्याय्य संभोगासाधारण्यं अस्य क्लमस्येति ज्ञायते ।

एवं अत्रागतिः इत्येतावन्मात्रोक्तौ मार्गे त्वरया आगमनात्क्लमः इत्यन्यथासिद्धिः संभाव्येत, तत्परिहाराय विरब्धमिति विशेषणम् । तेन मार्गायासप्रयुक्तोऽपि क्लमो नैव, अपि तु सौकुमार्यत इति क्लमस्य साधारण्यम् । पश्चात् अधुनेतिपदस्वारस्यात् संभोगादेव क्लम इति ज्ञायत इति तदसाधारण्ये पर्यवसानं युक्तमेवेति न पुनर्वाच्यम् । इत्थं चैतादृशोदाहरण-दर्शनेन प्रकाशकृतोऽपि व्यञ्जकस्य साधारण्यमेव भवेदित्याशय इत्यपि न शक्यं वक्तुं युक्तं वा वक्त्राद्यौचित्यानुसारात् । एवं सति कुतः काव्य-प्रकाशादिविरोधः ॥

**किंच**—व्यञ्जनास्थापनपरमाचार्येण **आनन्दवर्धनेनाऽपि ध्वन्यालोके**-न व्यञ्जकानां साधारण्यमेव भवेदित्यभिप्रेतम् । प्रत्युत—आसाधारण्येना-पीत्याविष्कृतम् । तथाहि—'तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गित्वेन, कदाचिद्रूपा-न्तरेण शब्दानां वाचकानामवाचकानां च सर्ववादिभिरप्रतिक्षेप्यमित्यस्माभिर्यत्न आरब्धः' इत्युक्तम् । इत्थं च व्यञ्जनाया अनुमानापेक्षया व्यापकत्वात् अनुमानस्याप्यत्रान्तर्भावेण असाधारण्येऽपि बाधकाऽभावात् । व्यञ्जनायाः प्रसृतौ व्यञ्जके व्यङ्ग्यासाधारण्यज्ञानमात्रमप्यलं भवति । अनुमायां तु साध्यव्याप्यहेतुमान् पक्ष इति परामर्शनिश्चयोऽपेक्ष्यते । अत एवानिश्चिते-नापि व्यञ्जकेन व्यञ्जनं व्यङ्ग्यस्य भूषणमेव न पुनर्दूषणम् । अत एव च **साहित्यचूडामणौ** अनुमानमपि व्यङ्ग्यव्यञ्जकभाव एवोपनिषत इत्युक्तम् । [सा. चू. २७७पु] ।

**तत्त्वालोकः**

वस्तुतस्तु अनुमितिध्वन्योः महदन्तरम्। यतश्च अनुमितिः मस्तिष्कप्रसरणमात्राश्रयिणी, ध्वनिस्तु सहृदयहृदयसंवादाश्रयिणी। अत एव,

(१) वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिव अप्रगीतानां गान्धर्वलक्षणविदामगोचर-एवासावर्थः इति

(२) 'चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किञ्चित् यन्न चित्तवृत्तिविशेषमुपजनयति' इति।

(३) वैकटिका एव हि रत्नतत्त्वविदः, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः'

इति च वदता **ध्वनिकारेण** अयमंशः समर्थितो भवति।

यथा— 'रत्नविशेषाणां मूल्यनिर्धारणं सामान्यजनैः सामान्याकारेणैव क्रियते विशेषाकारेण तन्निर्धारणन्तु वैकटिकैरेवेति तथा प्रतिपत्तृभिः अर्थज्ञानं सामान्याकारेण सम्पाद्यमानमपि, अर्थविशेषभूतरसादीनामनुभवः सहृदयैरेव सम्पाद्यते नान्यैरिति व्यक्तमेव प्रतिपादितम्।

इत्थं सत्यपि यत् **जयन्तभट्टेन न्यायमञ्जर्याम्**—अर्थापत्तेरनुमानान्तर्भावप्रतिपादनप्रासङ्गिकतया आलङ्कारिकाभ्युपगतध्वनिनिराकरणं कुर्वता—

अथवा नेदृशी चर्चा कविभिस्सह शोभते।
विद्वांसोऽपि विमुह्यन्ति वाक्यार्थगहनेऽध्वनि॥

इति अनास्थया अभिहितं तत् केवलमस्तिष्कमात्रसहायेन विषयचर्चाः कुर्वतां

तार्किकाणां शोभते, न पुनः सहृदयसंवादसहकारेण रसास्वादं कुर्वताम् आलङ्कारिकाणाम् ।

अथवा नेदृशी चर्चा तार्किकैस्सह शोभते ।
क्व तर्ककर्कशधियः क्व रसास्वादिनो बुधाः ॥

एवं च निश्शेषेति पद्ये 'उक्तविशेषणानां पर्यवसानेऽसाधारण्येऽपि तावच्छेदकरूपेणाऽनुपस्थितत्वादनुमानानुकूलत्वं नास्त्येवेति रसगंगाधराद्यभिहितं दूषणमज्ञानकमेव, ग्रन्थकृदुपपादितस्यासाधारण्यस्य प्राचीनग्रन्थकारानुमतत्वाभावात् ॥

**यदपि**–दूषणान्तरमभिहितं 'निश्शेषेति पद्ये विशेषणानां निश्शेषच्युतचन्दनत्वादीनां संभोगाऽसाधारण्ये प्रतिपादिते तेषां वापीस्नानपक्षे बाधितत्वेन विरोधिलक्षणया 'गता' न गता' इति शब्दाभ्यां न गता गतेति निषेधविध्योः प्रतीत्या तदन्तिकगमनांशस्य व्यङ्ग्यता दुरुपपादा । लक्षणाफलीभूतरमणांशस्य तु परं व्यङ्ग्यता स्यादिति' ।

**तदपि चिन्त्यमेव**–तथाहि-वाच्यार्थस्य बाधो द्विधा–अन्वयबोधात्प्राक् तदनन्तरं चेति । तयोराद्यरीत्या बाधे विपरीतलक्षणायाः प्रसरः । न चात्र पदार्थानां अन्वयबोधसमये विरोधप्रतीतिलक्षणो बाधः प्रमाणान्तरेण श्रोतुः प्रतीतिमुपगतः, येन 'साधयन्ती सखि' इत्यादाविव विरुद्धलक्षणोपेयेत । किन्तु नायिकाभिहिताधमपदार्थपर्यालोचनसमनन्तरं वक्त्रादिवैशिष्ट्य बलात् बाधावतार इति तदानीं न विपरीतलक्षणायाः प्रसरः । अत एव–

'क्वचित् बाध्यतया ख्यातिः, क्वचित् ख्यातस्य बाधनम् ।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु ।'

तत्त्वालोकः

इत्यभिहितम् । एवंचान्वयबोधसमनन्तरं जातेऽपि बाधे न विरोधिलक्षणायाः प्रसरः, अपितु व्यञ्जनायाः एव ।

अत एव च **काव्यप्रदीपकृता** 'उत्पन्नेऽपि वाक्यार्थबोधे बाधोऽकिञ्चित्कार एव । तदभिप्रायेण वापीं स्नातुमित्युदाहृतम् । अत एवोक्तं 'अधमपदेन व्यज्यत इती'ति । [का. प्रदी. २६पु]

इत्थं सति वाक्यार्थबोधादनन्तरं प्रसक्तेऽपि बाधे विरोधिलक्षणाया अनवतारस्य आलङ्कारिकसम्मतत्वे सति असांधारण्यप्रतिपादनमात्रं कथं वा विरोधिलक्षणामूलं स्यात् ।

**किंच**–तस्यान्तिकं न गतासि इत्यत्र नञ्पदे विपरीतलक्षणाया उपगमेन तदन्तिकगमनस्य लक्ष्यत्वे परिकल्पिते 'स्नातुमितो गतासि' इत्यस्य अनन्वयापत्तिः । न च 'गतासि' इत्यत्र गता इत्यनेन गमनाभावो लक्षणयावगम्यते इति वाच्यम् । अप्रसक्तप्रतिषेधापतेः । अतश्च नूनं इदं दूषणं **साहित्यदर्पणकृदनुसरणनिबन्धनमेव** इति साहित्यदर्पणावलोकव्यक्तमेव ।

**यदप्यत्र**–दृष्टान्ततया

'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः'

इति उदाहरणमुपन्यस्तम् । तदपि विषमम् ।

निश्शेषेति पद्ये वाच्यार्थबोधादनन्तरं बाधः स्यादपि । 'अहो पूर्णं यदि' इत्यत्र तु अन्वयबोधात्प्रागेव बाधो जागरूकः । सरः पूर्णं यदि

तत्त्वालोकः

स्यात्तदा मानवाः कथं लुठन्तः स्नातुं शक्नुयुः, लुठनं च सरस अपूर्णत्वे एवेति पूर्णशब्देन अपूर्णत्वं विरोधिलक्षणया प्रतीयत इति स्फुटमेवावगतेः ।

एवं च निषेधविध्योः विधिनिषेधाभ्यां प्रतीत्युत्पादनं विमर्शकाणामहृदयङ्गममेव ।

यच्चाप्यत्रैव—'अधमत्वमपकृष्टत्वं तच्च जात्या कर्मणा वा भवति । तत्र जात्या अपकर्षं नोत्तमनायिका नायकस्य वक्ति' इत्यादिना सन्दर्भेण 'रमणस्य अर्थापत्तिवेद्यतायाः भवतैव स्फुटमभिधानात्तस्यापि न व्यङ्ग्यत्व'मिति दूषणमभिहितम् । तदपि चिन्त्यम् । अर्थापत्तेरनुमानसमानशीलायाः प्रकृते उपपादयितुमशक्यत्वात् । तथाहि—

अर्थापत्तिर्द्विधा—श्रुतार्थापत्तिः, दृष्टार्थापत्तिश्चेति । तत्राद्या तत्र प्रवर्तते यत्र अर्थान्यथानुपपत्तिः वाक्यप्रतिपन्ना । तत्र अर्थान्तरपरिकल्पकं वाक्यं कल्प्यते । यथा गृहेऽसन् देवदत्तः बहिरस्तीत्यादौ । तत्र च देवदत्तस्य शतवर्षजीवित्वं सम्प्रतिपन्नात् ज्योतिश्शास्त्रादवगतम् । जीवतो देवदत्तस्य गृहासत्त्वं बहिस्सत्वं विनाऽनुपपन्नमिति बहिस्सत्त्वप्रतिपादकं 'बहिरस्ती'ति वाक्यं 'शाब्दी ह्याकांक्षा शब्देनैव प्रपूर्यते' इति न्यायेन परिकल्प्यत इति श्रुतार्थापत्तिः । श्रुतार्थापत्तिरिति व्यवहारश्च श्रुतस्य—वाक्यादवगत—स्यार्थस्य अर्थान्तरपरिकल्पकं वाक्यमरिकल्प्य अनुपपन्नत्वात् हेतोः ।

एवं 'पीनो देवदत्तः दिवा न भुङ्क्ते' इत्यादौ देवदत्तवृत्तित्वेन पीनत्व दिवाऽभोजनयोः प्रत्यक्षप्रमाणेनावगतयोः दिवा अभुञ्जानत्वे सति पीनत्व—मनुपपन्नं सत् रात्रिभोजनरूपमर्थं परिकल्पयतीति दृष्टार्थापत्तिः ।

**तत्त्वालोकः**

तत्र नायिकाप्रयुक्तेन अधमपदेन दूतीसंभोगव्यतिरिक्तजातिकर्मादिना अपकर्षविवक्षायाः अनौचित्येन कल्पयितुमशक्यत्वात् अनुपपन्नं सत् दूती-सम्भोगरूपमेवार्थं उपपादकं परिकल्पनीयमिति रन्तुं इति पदं परिकल्प्यते इति श्रुतार्थापत्त्यैव तत्सिद्धिरिति रमणांशस्याऽपि व्यङ्ग्यत्वं न स्यात् इत्यापद्यते ।

अत्रोच्यते—सर्वसम्प्रतिपन्नत्वात् ज्योतिश्शास्त्राद्देवदत्तस्य शतवर्ष-जीवित्वं निश्चितमिति तदनुरोधेन गृहासत्त्वं बहिरस्तीति वाक्यं परिकल्पय-तीति युक्तम् । निश्शेषेत्यादिपद्ये तु अधमपदप्रयोक्त्र्याः कुपितकामिनीत्वे तत्प्रयुक्तमधमपदं न सम्प्रतिपन्नमिति नायकेऽधमत्वं न निश्चितमिति ईदृशमेवा-धमत्वं इति वक्तुमशक्यत्वेन तत्सम्भोगप्रतिपादकस्य 'रन्तु'मित्यस्य कल्पयितु मशक्यत्वात् अर्थापत्तिः न प्रभवति । व्यञ्जना तु संशयविशेषात्मक संभावनायामपि व्यङ्ग्यमर्थमभिव्यनक्त्येव । अत एव—

भ्रम धार्मिक ? विस्रब्धं स शुनकोऽद्य मारीतस्तेन ।
गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन ।

इत्यत्र वचनजन्यज्ञानस्य च वक्तुः सम्प्रतिपन्नत्वसन्देहेन अप्रामाण्यशङ्काकलं-कितत्वेन गोदावरीतीरे सिंहसद्भावस्य हेतोः सन्दिग्धासिद्धत्वेऽपि तत्र न भ्रमि-तव्यमिति व्यञ्जनया बोधः । न पुनरनुमानेन । तद्वदेव सन्दिग्धेऽर्थे अर्था-पत्तेरप्रसरात् । अन्यथा अयं स्थाणुर्वा पुरुषो वेत्यादावपि अर्थापत्तिः प्रसज्येत ।

तथाचात्र देवदत्तबहिस्सत्त्वप्रकल्पकज्योतिश्शास्त्रवाक्यवत् कुपितका-मिनीप्रयुक्तवाक्ये प्रामाण्यनिश्चयाऽभावेन अर्थापत्तिसंभवाभावात् । अत एव **व्यक्तिविवेककृतो मतं व्याचक्षाणेन प्रकाशकृता** पञ्चमोल्लासशेषे

तत्त्वालोकः

न चात्राऽधमत्वं प्रमाणप्रतिपन्न'मिति अनुमानार्थापत्तिवेद्यत्वं स्फुटमेव निराकृतम्। ग्रन्थकृता एवमुक्तं तु सम्भावनामात्रादेव न पुनः निश्चयादिति ॥

**नन्वत्र** वक्त्री प्रामाणिकी भवतु मा वा तत्प्रयुक्तं वाक्यम् उपपाद्योपपादकभावयोग्यं चेदर्थापत्तिः प्रसरति। 'अत एव' न हि वक्तृप्रामाण्यं वाक्यप्रामाण्ये उपयुज्यते लौकिकवाक्येषु किंतु कारणदोषबाधकाभावः इति **अभियुक्तैरभिहितमिति** शङ्क्यम्।

सत्यम्—अत्र वक्त्र्याः अप्रामाणिकत्वेऽपि तत्प्रयुक्तोपपाद्योपपादकयोः व्याप्यव्यापकभावो भवेच्चेत् वाक्यं प्रामाणिकं स्यात्। न चात्र अधमत्वदूत्युपभोगयोः व्याप्तिः। यत्र यत्र अधमत्वं तत्र तत्र दूतीसंभोग इति व्याप्तेर्वक्तुमशक्यत्वात्। दूतीसम्भोगमन्तराप्यधमत्वस्य दृष्टत्वादिति अर्थे न व्याप्त्यभावो वाक्याप्रामाण्यमापादयतीति कथमपि नार्थापत्त्या तत्सिद्धिः। अन्यथा —

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥

इत्यादौ 'एवंवादिनि' इत्यंशमपहाय 'पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास' इति एतावन्मात्रोक्तावपि प्रकरणबलात् अधोमुखीत्वलीलाकमलपत्रगणने लज्जां गमयत एव। अथापि तयोः बालभावादिनापि संभवोऽस्तीति तद्व्यावृत्यर्थं लज्जाभिव्यक्त्यर्थं च 'एवंवादिनि' इत्यभिहितमिति देवर्षिकर्तृकोक्तिकालिकाधोमुखत्वविशिष्टपद्मपत्रसंख्यानं लज्जामन्तरा नोपपद्यत इति तादृशपद्मपत्रगणने लज्जाख्यं व्यभिचारिभावं कल्पयतीति वक्तुं शक्यत्वे सत्यपि **ध्वनिकारादिभिः** उक्तोदाहरणे—

चित्रमीमांसा

यत्र व्यङ्ग्यं वाच्यानतिशायि तद्गुणीभूतव्यङ्ग्यम् ॥

तत्त्वालोकः

अर्थशक्त्युद्भवस्त्वन्यः यत्रार्थस्सम्प्रकाशते ।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः ॥ (ध्व.उ. २.२२)

इति लक्षयित्वा अर्थशक्तिमूलध्वनित्वं लज्जाख्यव्यभिचारिभावस्येत्युपपादितमसङ्गतं स्यात् । अतश्चैवंविधे विषये अर्थापत्तिवेद्यत्वाभिधानमाग्रहमूलमेव जगन्नाथस्येति नाविदितं विदुषाम् ।

यदपि तेनैव–निश्शेषच्युतचन्दनत्वादीनां दूतीसम्भोगमन्तरा अनुपपद्यमानत्वमसाधारण्यकथनेनावेदितं भवति । तथासति वाच्यभूतमधमत्वं–व्यङ्ग्यदूतीसंभोगज्ञानाधीनमिति गुणीभूतव्यङ्ग्यत्वप्रसङ्ग इति दूषणमुपात्तम्, तदपि न युक्तम्, वक्त्रादिवैशिष्ट्यज्ञानसहायेनाधमपदार्थपर्यालोचनेनैव तेषां सिद्धिरिति न तदर्थं व्यज्यमानसंभोगसापेक्षतेति कुतो गुणीभावो व्यङ्ग्यस्येति बोध्यम् ॥

एतेन, असाधारण्यमुपपादितवत उपरि प्राचीनग्रन्थविरोधोद्भावनम्, अनुमानानुकूलत्वापादनम्, विरोधिलक्षणया अन्यथासिद्धिप्रदर्शनम्, तत्र दृष्टान्तोपन्यसनम्, अर्थापत्तिवेद्यत्वापादनम्, गुणीभूतव्यङ्ग्यतापत्तिकथनम् इत्येवं उद्भाविताः षडपि दोषाः निर्मूलिताः इत्यवगन्तव्यम् ॥

इत्थं ध्वनिकाव्यं सोदाहरणं प्रदर्श्य सम्प्रति उद्देशक्रमेण गुणीभूतव्यङ्ग्यलक्षणं काव्यभेदं लक्षयति–यत्रेति ।

यत्र–काव्ये व्यङ्ग्यम्–व्यञ्जनावृत्तिवेद्यम्, वाच्यानतिशायि–अभि–

तत्त्वालोकः

धेयात् लक्ष्याद्वा अतिशयितचमत्कारानाधायकम् अगूढाद्यन्यतमं वा तत् काव्यं गुणीभूतव्यङ्ग्यम् मध्यमं काव्यमिति कथितमित्यर्थः। गुणम्–अप्रधानम् अगुणम्–प्रधानम्। व्यङ्ग्यम् गुणभूतं यत्र तद्गुणीभूतव्यङ्ग्यम्। तेन व्यङ्ग्यस्य प्राधान्यं स्वाभाविकम्, औपाधिको गुणभावः इति च्विप्रत्ययेन सूचितं भवति।

**ननु**–वाच्यानतिशायिव्यङ्ग्यकत्वम् अधमकाव्येऽप्यस्तीत्यतिव्याप्ति–रिति वाच्यम्। इष्टापत्तेः। उपधेयसङ्करेऽप्युपाधेरसाङ्कर्येणादोषादिति केचित्समादधते। अन्ये तु अगूढत्वाद्यन्यतमत्वमेव वाच्यानतिशायित्व–मित्याचक्षते।

**ध्वनिकारस्तु—**

> प्रकारोऽन्योगुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
> यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्॥ [ध्व.३.३५]

इत्यलक्षयत्। व्यवृण्वोच्च 'तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता। अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन चारुत्वापेक्षया गुणीभावे सति गुणीभूत–व्यङ्ग्यता। तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणभावः। रसादिरूप-व्यङ्ग्यस्य गुणीभावे रसवदलङ्कारो दर्शित' इति **तृतीयोद्योते**। एवं च ग्रन्थकृतोऽपि अगूढत्वाद्यन्यतमत्वमेव वाच्यानतिशायित्वरूपं गुणीभूतव्यङ्ग्यत्वं विवक्षितमिति 'गच्छाम्यच्युत' इत्युदाहरणप्रदर्शनतो ज्ञायते। तच्च प्रकाशकृता गुणीभूतव्यङ्ग्यकाव्यलक्षणप्रभेदप्रदर्शनावसरे प्रकाशितम्।

## चित्रमीमांसा

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुं(नुः) गोपीं हरिः पातु वः ॥

### तत्त्वालोकः

गुणीभूतव्यङ्ग्यता चाष्टधा सम्भवति (१) सहृदयासहृदयवेद्यत्वेन (२) स्वनैरपेक्ष्येण सिद्धो यो वाच्यार्थस्तदुपकारकत्वेन (३) सापेक्षवाच्यार्थोपस्कारकत्वेन, (४) सहृदयानामप्यतिदुःखवेद्यव्यङ्ग्यकत्वेन, (५) वाच्यापेक्षया व्यङ्ग्यप्राधान्यसन्देहेन, (६) वाच्यव्यङ्ग्ययोस्समप्राधान्येन (७) काकाक्षिप्तत्वेन, (८) वाच्यापेक्षया निकर्षवत्त्वेनेति । एषु तृतीयप्रकारं गुणीभूतव्यङ्ग्यमुदाहरति—**गच्छामीति** ।

भक्तानामनुरक्तानामनुग्रहान्न च्यवस इति, धैर्यान्न च्यवस इति वा, अन्यविषये परित्यक्तहृदयकाठिन्योऽपि मद्विषयेऽपरित्यक्तहृदयकठिनहृदय इति वा अच्युत इति सोल्लुण्ठनोक्तिः । इत्थं च मदवस्थानं व्यर्थमेव यतो भवतो दूरतो दर्शनेन—दर्शनमात्रेणेति सावधारणोक्तिः । 'असति बाधके सर्वं वाक्यं सावधारणम्' इति न्यायात् । तृप्तिः—आकांक्षाशान्तिः उत्पद्यते किम् ? उत्पन्नेत्यतो न गच्छामि, यावज्जीवं पश्यन्त्या अपि न कश्चिदलंभावः अतो न गच्छामीति । यद्वा गच्छामीति काकुप्रश्नः । तेन दर्शनमात्रेण तृप्तिरुत्पन्नेति न गच्छामि । तर्हि कुतो गच्छसीत्यत्राह—**किन्त्वेवमिति** । किन्तु प्रत्युत एवंविजनस्थयोरेकान्तदेशं प्राप्तयोस्सतोरावयोर्विषये, हतजनो दोषग्रहणमात्रप्रवणोऽयं जनः, अन्यथा सम्भावयति वस्तुस्थितिमनवगम्यैव रत्यर्थं गताविति संभावयेत्—ऊहेत्, इति उक्तप्रकारेण यन्नायिकायाः आमन्त्रणम्—

तत्त्वालोकः

स्यात्तदा मानवाः कथं लुठन्तः स्नातुं शक्नुयुः, लुठनं च सरस अपूर्णत्वे एवेति पूर्णशब्देन अपूर्णत्वं विरोधिलक्षणया प्रतीयत इति स्फुटमेवावगतेः।

एवं च निषेधविध्योः विधिनिषेधाभ्यां प्रतीत्युत्पादनं विमर्शकाणामहृदयङ्गममेव।

यच्चाप्यत्रैव—'अधमत्वमपकृष्टत्वं तच्च जात्या कर्मणा वा भवति। तत्र जात्या अपकर्षं नोत्तमनायिका नायकस्य वक्ति' इत्यादिना सन्दर्भेण 'रमणस्य अर्थापत्तिवेद्यतायाः भवत्येव स्फुटमभिधानात्तस्यापि न व्यङ्ग्यत्व'मिति दूषणमभिहितम्। तदपि चिन्त्यम्। अर्थापत्तेरनुमानसमानशीलायाः प्रकृते उपपादयितुमशक्यत्वात्। तथाहि—

अर्थापत्तिर्द्विधा—श्रुतार्थापत्तिः, दृष्टार्थापत्तिश्चेति। तत्राद्या तत्र प्रवर्तते यत्र अर्थान्यथानुपपत्तिः वाक्यप्रतिपन्ना। तत्र अर्थान्तरपरिकल्पकं वाक्यं कल्प्यते। यथा गृहेऽसन् देवदत्तः बहिरस्तीत्यादौ। तत्र च देवदत्तस्य शतवर्षजीवित्वं सम्प्रतिपन्नात् ज्योतिश्शास्त्रादवगतम्। जीवतो देवदत्तस्य गृहासत्त्वं बहिस्सत्वं विनाऽनुपपन्नमिति बहिस्सत्त्वप्रतिपादकं 'बहिरस्ती'ति वाक्यं 'शाब्दी ह्याकांक्षा शब्देनैव प्रपूर्यते' इति न्यायेन परिकल्प्यत इति श्रुतार्थापत्तिः। श्रुतार्थापत्तिरिति व्यवहारश्च श्रुतस्य—वाक्यादवगतस्यार्थस्य अर्थान्तरपरिकल्पकं वाक्यमरिकल्प्य अनुपपन्नत्वात् हेतोः।

एवं 'पीनो देवदत्तः दिवा न भुङ्क्ते' इत्यादौ देवदत्तवृत्तित्वेन पीनत्व दिवाऽभोजनयोः प्रत्यक्षप्रमाणेनावगतयोः दिवा अभुञ्जानत्वे सति पीनत्वमनुपपन्नं सत् रात्रिभोजनरूपमर्थं परिकल्पयतीति दृष्टार्थापत्तिः।

**तत्त्वालोकः**

तत्र नायिकाप्रयुक्तेन अधमपदेन दूतीसंभोगव्यतिरिक्तजातिकर्मादिना अपकर्षविवक्षायाः अनौचित्येन कल्पयितुमशक्यत्वात् अनुपपन्नं सत् दूती-सम्भोगरूपमेवार्थं उपपादकं परिकल्पनीयमिति रन्तुं इति पदं परिकल्प्यते इति श्रुतार्थापत्त्यैव तत्सिद्धिरिति रमणांशस्याऽपि व्यङ्ग्यत्वं न स्यात् इत्यापद्यते ।

अत्रोच्यते—सर्वसम्प्रतिपन्नत्वात् ज्योतिश्शास्त्राद्देवदत्तस्य शतवर्ष-जीवित्वं निश्चितमिति तदनुरोधेन गृहासत्त्वं बहिरस्तीति वाक्यं परिकल्पयतीति युक्तम् । निश्शेषेत्यादिपद्ये तु अधमपदप्रयोक्त्र्याः कुपितकामिनीत्वे तत्प्रयुक्तमधमपदं न सम्प्रतिपन्नमिति नायकेऽधमत्वं न निश्चितमिति ईदृशमेवाधमत्वं इति वक्तुमशक्यत्वेन तत्सम्भोगप्रतिपादकस्य 'रन्तु'मित्यस्य कल्पयितुमशक्यत्वात् अर्थापत्तिः न प्रभवति । व्यञ्जना तु संशयविशेषात्मक संभावनायामपि व्यङ्ग्यमर्थमभिव्यनक्त्येव । अत एव—

भ्रम धार्मिक ? विस्रब्धं स शुनकोऽद्य मारीतस्तेन ।
गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन ।

इत्यत्र वचनजन्यज्ञानस्य च वक्तुः सम्प्रतिपन्नत्वसन्देहेन अप्रामाण्यशङ्काकलंकितत्वेन गोदावरीतीरे सिंहसद्भावस्य हेतोः सन्दिग्धासिद्धत्वेऽपि तत्र न भ्रमितव्यमिति व्यञ्जनया बोधः । न पुनरनुमानेन । तद्वदेव सन्दिग्धेऽर्थे अर्थापत्तेरप्रसरात् । अन्यथा अयं स्थाणुर्वा पुरुषो वेत्यादावपि अर्थापत्तिः प्रसज्येत ।

तथाचात्र देवदत्तबहिस्सत्त्वप्रकल्पकज्योतिश्शास्त्रवाक्यवत् कुपितकामिनीप्रयुक्तवाक्ये प्रामाण्यनिश्चयाऽभावेन अर्थापत्तिसंभवाभावात् । अत एव व्यक्तिविवेककृतो मतं व्याचक्षाणेन प्रकाशकृता पञ्चमोल्लासशेषे

### तत्त्वालोकः

न चात्राऽधमत्वं प्रमाणप्रतिपन्न'मिति अनुमानार्थापत्तिवेद्यत्वं स्फुटमेव निराकृतम्। ग्रन्थकृता एवमुक्तं तु सम्भावनामात्रादेव न पुनः निश्चयादिति ॥

नन्वत्र वक्त्री प्रामाणिकी भवतु मा वा तत्प्रयुक्तं वाक्यम् उपपाद्योपपादकभावयोग्यं चेदर्थापत्तिः प्रसरति। 'अत एव' न हि वक्तृप्रामाण्यं वाक्यप्रामाण्ये उपयुज्यते लौकिकवाक्येषु किंतु कारणदोषबाधकाभावः इति अभियुक्तैरभिहितमिति शङ्क्यम्।

सत्यम्—अत्र वक्त्र्याः अप्रामाणिकत्वेऽपि तत्प्रयुक्तोपपाद्योपपादकयोः व्याप्यव्यापकभावो भवेच्चेत् वाक्यं प्रामाणिकं स्यात्। न चात्र अधमत्वदूत्युपभोगयोः व्याप्तिः। यत्र यत्र अधमत्वं तत्र तत्र दूतीसंभोग इति व्याप्तेर्वक्तुमशक्यत्वात्। दूतीसम्भोगमन्तराप्यधमत्वस्य दृष्टत्वादिति अर्थे न व्याप्त्यभावो वाक्याप्रामाण्यमापादयतीति कथमपि नार्थापत्त्या तत्सिद्धिः। अन्यथा —

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥

इत्यादौ 'एवंवादिनि' इत्यंशमपहाय 'पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास' इति एतावन्मात्रोक्तावपि प्रकरणबलात् अधोमुखीत्वलीलाकमलपत्रगणने लज्जां गमयत एव। अथापि तयोः बालभावादिनापि संभवोऽस्तीति तद्व्यावृत्त्यर्थं लज्जाभिव्यक्त्यर्थं च 'एवंवादिनि' इत्यभिहितमिति देवर्षिकर्तृकोक्तिकालिकाधोमुखत्वविशिष्टपद्मपत्रसंख्यानं लज्जामन्तरा नोपपद्यत इति तादृशपद्मपत्रगणने लज्जाख्यं व्यभिचारिभावं कल्पयतीति वक्तुं शक्यत्वे सत्यपि ध्वनिकारादिभिः उक्तोदाहरणे—

## चित्रमीमांसा

### यत्र व्यङ्ग्यं वाच्यानतिशायि तद्गुणीभूतव्यङ्ग्यम् ॥

### तत्त्वालोकः

अर्थशक्त्युद्भवस्त्वन्यः यत्रार्थस्सम्प्रकाशते ।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः ॥ (ध्व.उ. २.२२)

इति लक्षयित्वा अर्थशक्तिमूलध्वनित्वं लज्जाख्यव्यभिचारिभावस्येत्युपपादितमसङ्गतं स्यात् । अतश्चैवंविधे विषये अर्थापत्तिवेद्यत्वाभिधानमाग्रहमूलमेव जगन्नथास्येति नाविदितं विदुषाम् ।

**यदपि तेनैव**—निश्शेषच्युतचन्दनत्वादीनां दूतीसम्भोगमन्तरा अनुपपद्यमानत्वमसाधारण्यकथनेनावेदितं भवति । तथासति वाच्यभूतमधमत्वं—व्यङ्ग्यदूतीसंभोगज्ञानाधीनमिति गुणीभूतव्यङ्ग्यत्वप्रसङ्ग इति दूषणमुपात्तम्, तदपि न युक्तम्, वक्त्रादिवैशिष्ट्यज्ञानसहायेनाधमपदार्थपर्यालोचनेनैव तेषां सिद्धिरिति न तदर्थं व्यज्यमानसंभोगसापेक्षतेति कुतो गुणीभावो व्यङ्ग्यस्येति बोध्यम् ॥

**एतेन,** असाधारण्यमुपपादितवत उपरि प्राचीनग्रन्थविरोधोद्भावनम्, अनुमानानुकूलत्वापादनम्, विरोधिलक्षणया अन्यथासिद्धिप्रदर्शनम्, तत्र दृष्टान्तोपन्यसनम्, अर्थापत्तिवेद्यत्वापादनम्, गुणीभूतव्यङ्ग्यतापत्तिकथनम् इत्येवं उद्भाविताः षडपि दोषाः निर्मूलिताः इत्यवगन्तव्यम् ॥

इत्थं ध्वनिकाव्यं सोदाहरणं प्रदर्श्य सम्प्रति उद्देशक्रमेण गुणीभूतव्यङ्ग्यलक्षणं काव्यभेदं लक्षयति—यत्रेति ।

यत्र—काव्ये व्यङ्ग्यम्—व्यञ्जनावृत्तिवेद्यम्, वाच्यानतिशायि—अभि—

तत्त्वालोकः

धेयात् लक्ष्याद्वा अतिशयितचमत्कारानाधायकम् अगूढाद्यन्यतमं वा तत् काव्यं गुणीभूतव्यङ्ग्यम् मध्यमं काव्यमिति कथितमित्यर्थः। गुणम्–अप्रधानम् अगुणम्–प्रधानम्। व्यङ्ग्यम् गुणभूतं यत्र तद्गुणीभूतव्यङ्ग्यम्। तेन व्यङ्ग्यस्य प्राधान्यं स्वाभाविकम्, औपाधिको गुणभावः इति च्विप्रत्ययेन सूचितं भवति।

**ननु**–वाच्यानतिशायिव्यङ्ग्यकत्वम् अधमकाव्येऽप्यस्तीत्यतिव्याप्तिरिति वाच्यम्। इष्टापत्तेः। उपधेयसङ्करेऽप्युपाधेरसाङ्कर्येणादोषादिति केचित्समादधते। अन्ये तु अगूढत्वाद्यन्यतमत्वमेव वाच्यानतिशायित्वमित्याचक्षते।

**ध्वनिकारस्तु—**

प्रकारोऽन्योगुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्॥ [ध्व.३.३५]

इत्यलक्षयत्। व्यवृण्वोच्च 'तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता। अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन चारुत्वापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता। तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणभावः। रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदलङ्कारो दर्शित' इति **तृतीयोद्योते**। एवं च ग्रन्थकृतोऽपि अगूढत्वाद्यन्यतमत्वमेव वाच्यानतिशायित्वरूपं गुणीभूतव्यङ्ग्यत्वं विवक्षितमिति 'गच्छाम्यच्युत' इत्युदाहरणप्रदर्शनतो ज्ञायते। तच्च प्रकाशकृता गुणीभूतव्यङ्ग्यकाव्यलक्षणप्रभेदप्रदर्शनावसरे प्रकाशितम्।

चित्रमीमांसा

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किन्त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्
आश्लिष्यन् पुलकोत्कराञ्चिततनुं(नुः) गोपीं हरिः पातु वः ॥

तत्त्वालोकः

गुणीभूतव्यङ्ग्यता चाष्टधा सम्भवति (१) सहृदयासहृदयवेद्यत्वेन (२) स्वैनैरपेक्ष्येण सिद्धो यो वाच्यार्थस्तदुपकारकत्वेन (३) सापेक्षवाच्यार्थोपस्कारकत्वेन, (४) सहृदयानामप्यतिदुःखवेद्यव्यङ्ग्यकत्वेन, (५) वाच्यापेक्षया व्यङ्ग्यप्राधान्यसन्देहेन, (६) वाच्यव्यङ्ग्ययोस्समप्राधान्येन (७) काकाक्षिप्तत्वेन, (८) वाच्यापेक्षया निकर्षवत्त्वेनेति । एषु तृतीयप्रकारं गुणीभूतव्यङ्ग्यमुदाहरति—**गच्छामीति** ।

भक्तानामनुरक्तानामनुग्रहान्न च्यवस इति, धैर्यान्न च्यवस इति वा, अन्यविषये परित्यक्तहृदयकाठिन्योऽपि मद्विषयेऽपरित्यक्तहृदयकठिनहृदय इति वा अच्युत इति सोल्लुण्ठनोक्तिः । इत्थं च मदवस्थानं व्यर्थमेव यतो भवतो दूरतो दर्शनेन—दर्शनमात्रेणेति सावधारणोक्तिः । 'असति बाधके सर्वं वाक्यं सावधारणम्' इति न्यायात् । तृप्तिः—आकांक्षाशान्तिः उत्पद्यते किम् ? उत्पन्नेत्यतो न गच्छामि, यावज्जीवं पश्यन्त्या अपि न कश्चिदलंभावः अतो न गच्छामीति । यद्वा गच्छामीति काकुप्रश्नः । तेन दर्शनमात्रेण तृप्तिरुत्पन्नेति न गच्छामि । तर्हि कुतो गच्छसीत्यत्राह—**किन्त्वेवमिति** । किन्तु प्रत्युत एवंविजनस्थयोरेकान्तदेशं प्राप्तयोस्सतोरावयोर्विषये, हतजनो दोषग्रहणमात्रप्रवणोऽयं जनः, अन्यथा सम्भावयति वस्तुस्थितिमनवगम्यैव रत्यर्थं गताविति संभावयेत्—ऊहेत्, इति उक्तप्रकारेण यन्नायिकायाः आमन्त्रणम्—

तत्त्वालोकः

अन्यत्र गमनार्थमभ्यनुज्ञा प्रार्थना तस्याः या भङ्गिः अभिव्यञ्जनवैचित्री तया सूचितं यद्वृथावस्थानमुपभोगमन्तरेण विफलावस्थानं तन्मूलो यः खेदः दैन्यं च ताभ्याम् अलसाम्–मन्दाम्. गोपीं–गोपकुमारीम्, आलिङ्गन्, पुलकोत्कराञ्चिततनुः रोमाञ्चनिकरकरम्बितदेहः हरिः–पापापनोदको वासुदेवः वः–युष्मान् पातु–संरक्षतु ।

**नन्वत्र**–'गोपीम' इत्यस्य कथं गोपकुमारीमित्यर्थे साधुता ? यतः अपत्यार्थविवक्षायामपि वृद्धौ अण्णन्तलक्षणेन ङीपा भाव्यम् 'कैकेयि कामाः फलितास्तवे'तिवत् गौपी इति, न पुनर्गोपीति ।

**उच्यते**–यद्यपि या स्वयं गाः न पाति तस्यां दम्पतिभावरहितायां गोपकन्यायां च 'गोपी' इत्यादि शब्दः न मुख्यः । अथापि 'देवकीपूर्वसन्ध्यायाम्' इति **व्यासप्रयोगे** 'प्राक्केकयीतः भरतस्ततोऽभूत्' इत्यादि **भट्टिप्रयोगे च** प्रामाण्यमुपगम्य दाम्पत्यस्येव जन्यजनकभावादेरपि पुंयोगरूपताऽस्त्येवेत्यकामेनाप्यङ्गीकार्यत्वात् गौणप्रयोगः अभ्युपेयत इति गोपकन्यायां गोपीत्यादिशब्दः पार्वत्यां नारायणीशब्दवत् साधुरेव । एवं चात्र 'पुंयोगादाख्यायाम्' [पा.सू.३-१-४८] इति ङीष् । अत एव **भट्टोजिदीक्षितैः** उक्तसूत्रे 'या पुमाख्या पुंयोगात् स्त्रियां वर्तते' इत्येतावदेव विवृतं न पुनरीदृश एव पुंयोग इति ।

अत एव **वैयाकरणसिद्धान्तलघुमञ्जूषायां नागेशभट्टैः** – गोपीत्यादौ प्रक्रियादशायां गोपेति प्रातिपदिकस्य गोपत्वारोपेण तत्स्त्रीबोधकत्वानुमानं 'पुंयोगादाख्यायाम्' इति शास्त्रतः इत्युपपादितं संगच्छते । एवं च गोपालनरहितायां गोप्यां गोपशब्दस्य वृत्तौ दम्पतिभाव एव निमित्तमिति वदतः **कुञ्जिकाकारस्योक्तिश्चिन्त्यैव** ॥

**तत्त्वालोकः**

अत्र अच्युततृप्त्यादिपदेभ्योऽस्खलितत्वसंभोगमात्रतृप्त्यादीनां व्यज्यमानतेति तेषामेव कविनिबद्धवक्तृवाक्यार्थानां वृथावस्थानेत्यादि कविवाक्यार्थनिष्पादकत्वेन वाच्यसिध्यङ्गत्वम्। 'व्यङ्ग्येन येन विना वाच्यं न द्धसिध्यति तद्वाच्यसिद्ध्यङ्गम्' इति ह्युच्यते। एव च रिरंसालक्षणं वस्तु व्यज्यमानं वृथावस्थानादिलक्षणवाच्यसिद्धावुपकारकम्। अतश्चात्र गुणीभूतव्यङ्ग्यता।

किंचात्र आर्थी व्यञ्जनया लभ्य एवार्थः तृतीयपादेन कविनैवाविष्कृत इति विवृतोक्त्यलङ्कारोऽपीति ग्रन्थकृदाशयः। अत एव कुवलयानन्दे 'विवृतोक्तिः श्लिष्टगुप्तम्' इति लक्षणघटकं श्लिष्टपदमुपलक्षणतया नीत्वा अर्थशक्तिमूलतया लभ्यमपि वस्तु कविनाऽऽविष्कृतं चेद्विवृतोक्तितां न त्यजतीति सूचितं ग्रन्थकृतैव।

एवमादौ च ध्वनित्वं निराकृतं ध्वनिकारेणैव — तद्यथा तृतीयोद्योते—'अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद्वाच्यप्राधान्येन चारुत्वापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यते'ति तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणभावः इति यदुक्तं तदुभयमस्मिन् उदाहरणे लङ्घितमिति ध्वन्यते। उक्तं च तेनैव प्रथमोद्योते —

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।
समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः॥

व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते॥ [ध्व. १३] इति

चित्रमीमांसा

अत्र 'गच्छाम्यच्युत' इत्याद्यामन्त्रणेन त्वया रन्तुं एतावत्कालं स्थितम्, तन्न लब्धम् इति व्यङ्ग्यम्। तत्तु 'इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसाम्' इत्येतद्वाच्यस्य सिद्धिं करोतीति तदङ्गत्वान्न वाच्यातिशायि। अतो गुणीभूतव्यङ्ग्यमिदम्।

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथ (परेण) वा
किमुत सकले याते वाह्नि प्रिय त्वमिहैष्यसि।

तत्त्वालोकः

शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः॥

इति च। 'तदेतत्सर्वं मनसि निधायाह–अत्रेति। हे प्रिय! त्वं प्रहरविरतौ, अह्नः मध्ये, अथवा ततोऽपि परे, उत सकले अह्नि याते इह एष्यसि? इति सबाष्पगलज्जलैः आलापैः दिनशतप्राप्यं देशं यियासतः प्रियस्य गमनं बाला हरतीत्यन्वयः।

अनेकदिनप्राप्यं देशं जिगमिषोः प्रियस्य प्रस्थानं मुग्धा निषेधति — **प्रहरेति**। हे प्रिय–प्रेमशालिन् प्रहरविरतौ–प्रथमयामावसाने इह मत्समीपम् एष्यसि किम् अथवा अह्नः–दिवसस्य मध्ये आगमिष्यसि? अथवा ततोऽपि परे तृतीययामावसाने आगमिष्यसि? अत्र अपि शब्दः हे निष्करुण मध्याह्नात् परं बहिः स्थातुं न युज्यते इत्यभिसन्धिमाविष्करोति। एवं पर्यनुयोगे कृतेऽपि यदा नायकः मौनेनैवास्त तदा प्रिया पुनः पर्यनुयुङ्क्ते — **किमुतेति**। सकले अह्नि याते सर्वस्मिन्नेव

### चित्रमीमांसा

इति दिनशतप्राप्यं देशं प्रियस्य यियासतः
हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥

अत्र सकलमहः परमावधिः। ततः परं प्राणान् धारयितुं न शक्नोमि इति व्यङ्ग्यं प्रियगमननिवारण रूपस्य सिद्धिं करोतीति तदङ्गत्वाद्वाच्यानतिशायि। अत इदमपि गुणीभूतव्यङ्ग्यम्।

### तत्त्वालोकः

दिवसेऽतिक्रान्ते वा इह एष्यसि इति। एतावता पर्यनुयोगेनोक्तिरुप-संहृता। तेन मुग्धायाः मर्मस्पर्शिनी विरहासहिष्णुता व्यज्यते। अत एव रात्रौ व्यतीतायाम्, उदिते वा सूर्ये आगमिष्यसि इति न पृष्टम्। इत्थं सबाष्पगलज्जलैः—भविष्यद्विरहदुःखानुचिन्तनसमुत्पन्नाश्रुधारासंमिश्रैः आलापैः सम्बोधनपुरस्कृतवचोभिः दिनशतप्राप्यम् अनेकदिनगन्तव्यं देशं प्रति यियासतः जिगमिषोः प्रियस्य गमनं बाला—मुग्धा हरति—निषेधतीति यावत्।

अत्रत्यैः नायिकायाः वचोभिः इदं व्यक्तं भवति—हे प्रिय मां विहाय यत्र क्वचन गन्तुमिच्छसि चेत्सैवानुचिता, यद्यवश्यं गन्तव्यं तदा गम्यतां परन्तु एकयामावसान एवाऽगन्तव्यम्, यदि विलम्बो भविता तर्हि द्वितीययामे वा अवश्यमागन्तव्यम्, अथापि यदि कार्यवशात् विलम्बो भवेत्, तृतीययाममतीत्य न स्थातव्यम्। अतःपरमपि स्थातव्यं चेदशेषं दिवसमतीत्य कथमपि आगमनं युज्यते ततः परमनागते त्वयि क्षण-

तत्त्वालोकः

मात्रमप्यहं न जीविष्यामीति दृढं निश्चीयतामित्यभिप्रायाविष्करणद्वारा विरहाऽसहिष्णुतात्मको विप्रलंभोऽपि व्यज्यते ।

अत्र व्यज्यमानोऽर्थः वाच्यार्थं नातिशेते । अथ च वाच्यमर्थं निष्पादयतीति वाच्यसिद्ध्यङ्गत्वरूपगुणीभूतव्यङ्ग्यतेत्युपपादयति –**अत्र सकलेति** ।

अत्र '**ततोऽपि परेण वा**' इति पाठान्तरम्, प्रहरविरतौ इत्यादि–सप्तम्यन्तप्रायपदानामन्तरा तृतीयान्तपाठे सति प्रक्रमभङ्गदोषावहतया परिहृतम् ।

**यद्वा**—भविष्यत्प्रवासहेतुकविप्रलम्भाभिव्यञ्जनतत्परस्य कवेः प्रक्रम भङ्गः कामिनीनां मदविह्वलतेव न दोषाय भवति, प्रत्युत स्पृहणीय एव भवति । **उक्तं च प्राचीनैः**—

पदविह्वलता क्वापि स्पृहणीया भवति रसकवीन्द्राणम् ।
घनजघनस्तनमण्डलभारालसकामिनीनां च ॥ इति ।

अत्र च भविष्यत्प्रवासहेतुकविप्रलम्भः 'सकलमहः परमावधिः' इत्यादिरूपं वस्तु च अभिव्यज्यते । तयोर्मध्ये समस्तवाक्यावगतं विभावादिकमादाय **ध्वनित्वम्** । आन्तरालिकं व्यङ्ग्यमादाय गुणीभूतव्यङ्ग्यतेति ध्वनिगुणभूत व्यङ्ग्ययोः सांकर्यम् । 'उपधेयसंकरेऽप्युपधेरसांकर्यादिति' न्यायात् । अत एव **ध्वनिकृता**—ध्वनिगुणभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संसृष्टिः, संकरो वा सर्वत्र सम्भवति तथापि 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेन यत्र यत्कृतश्चमत्कारः प्रथमं स्फुरति तत्र तेन व्यपदेशः' इत्युक्तम् । अत्र तु व्यज्यमानेन वस्तुना सिद्धस्य वाच्यस्य पुरस्स्फूर्तिकचमत्कारजनकत्वमित्येवात्र गुणीभूतव्यङ्ग्यताऽभिहितेति बोध्यम् ॥

**तत्त्वालोकः**

**इत्थं च**—नायिकादेर्विभावस्य, सबाष्पालापादेरनुभावस्य, चिन्ताऽवेगादेश्च व्यभिचारिणः संयोगात् भविष्यत्प्रवासहेतुकविप्रलंभो ध्वन्यते । तस्य च 'सकलमहः परमावधिः ततः परं प्राणान् धारयितुं न शक्नोमी'ति व्यज्यमानोऽर्थः परिपोषकः । ध्वन्यमानार्थपरिपोषकव्यङ्ग्य-वाच्ययोर्मध्ये वाच्यासिद्धिरान्तरालिकं व्यङ्ग्यमर्थं विना नैव भवतीति अनतिशायि च वाच्यदिति हेतुभ्यां गुणीभूतव्यङ्ग्यता । न चैतावता पूर्वोक्तविभावादि-व्यज्यमानप्रवासहेतुकविप्रलंभस्य ग्रन्थकृता सर्पमारो दण्डनिवारणं वा कृतम् इत्यपि बोध्यम् ॥

**यत्तूक्तं चित्रमीमांसाखण्डने जगन्नाथेन** — 'यत्तु प्रहरविरतौ इत्यत्र सकलमहः परमावधिः ततः परं प्राणान् धारयितुं न शक्नोमीति व्यङ्ग्यं प्रियगमननिवारणरूपवाच्यसिध्यङ्गमिति मध्यमकाव्योदाहृतिप्रसङ्गे निगदितम् । तच्चिन्त्यम् । सबाष्पगलज्जलानां प्रहरविरतावित्याद्यालापानामेव प्रियगमननिवारणरूपवाच्यसिध्यङ्गतया व्यङ्ग्यस्य गुणीभावाभावात्' इति

**तच्चिन्त्यम्**—सबाष्पगलज्जलानामालापानां 'प्रहरविरतौ' इत्यादीनां न नियमेन गमननिवारणाऽसाधारणकारणत्वं, गमननिवारणोद्देशं विनाऽपि तादृशालापस्य दृष्टेः । तथाहि परस्परस्नेहशालिन्योर्भगिन्योरेकस्यां पतिगृहं प्रस्थितायां सत्यामपि तादृशालापानामनुभवगोचरत्वेऽपि न तेषामत्रेव इष्ट-व्यक्तिगमननिवारणोपयोगित्वम्, किंतु बहुतिथसन्निधानपरित्यागासहिष्णुता-प्रदर्शनमात्रोपयोगित्वं इति व्यभिचारदर्शनात् । अतश्च वक्तृबोद्धव्य-वैलक्षण्यबलात् अभिव्यज्यमानस्यैव 'सकलमहः परमावधिः ततः परं प्राणान्

**तत्त्वालोकः**

धारयितुं न शक्नोमि' इत्यस्य प्रकृतप्रियगमननिवारणोपयोगित्वमिति व्यङ्ग्यस्य वाच्यसिद्ध्यङ्गत्वोपपादनं युक्तिमत् ।

**यदपि**–आलापैरिति करणतृतीयेत्यभिहितम्, तन्न युज्यते । सकलमहः परमावधिः । ततःपरं प्राणान् धारयितुं न शक्नोमि, इत्येवंविधादेव भावात् बाह्याः तादृशा अलापाः क्रियन्ते प्रेमिभिरिति उक्तस्यैव व्यङ्ग्यस्य प्रियगमननिवारणरूपफलायोगव्यवच्छिन्नकारणत्वात् । एवं च तादृशालापानां हेतुत्वमेवेति हेतुतृतीयैव न करणे तृतीयेत्यपि बोध्यम् । इत्थं च तादृशालापानामनुमितौ परमर्शस्यैव व्यापारत्वमात्रत्वम् इति हेतौ तृतीयोपपद्यते।

**मर्मप्रकाशकारस्तु**–'अस्तु वा' इति ग्रन्थावतरणप्रसङ्गेन सबाष्पगलज्जल–तदुक्तालापानां गमनोत्तरचिरकालावस्थितिनिवारकतयाऽप्युपपद्यत इत्युक्तव्यङ्ग्यसहितानामेव तेषां गमननिवारकत्वमित्याह ।

**यदपि रसगङ्गाधरे**–'अस्तु वा . . ध्वनित्वं को निवारयेत्' इत्यन्तेनोक्तं तदपि दत्तोत्तरम् । यतोऽत्र ध्वन्यमानविप्रलम्भपरिपोषकतया व्यज्यमानमर्थमात्रमादाय गुणीभूतव्यङ्ग्यत्वमुपपादितं न पुनरेतत्परिपोष्यः भविष्यत्प्रवासहेतुको विप्रलम्भो निराकृतः । तस्येष्टत्वात ।

**अन्यथा**– 'तेषां गोपवधूविलाससुहृदां राधारहस्साक्षिणाम्' इति पद्ये 'विलाससुहृदां, राधारहस्साक्षिणा'मित्यनयोः गुणीभूतव्यङ्ग्यत्वं **ध्वनिकाराभिमतं** न सिध्येत । एवं च तत्र यथा ध्वनिसत्वेऽपि 'जाने' इत्यनेनोत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनाऽपि वाच्यस्यैव रमणस्य प्राधान्येन चमत्कारहेतुत्वमिति गुणीभूतव्यङ्ग्यता तथात्राऽपि समुदायावगतविभावाद्यभिव्यज्यमानभविष्यत्प्रवासहेतुकविप्रलंभस्य ध्वनेस्सत्वेऽपि आन्तरालिकव्यङ्ग्यसिद्धस्य

**तत्त्वालोकः**

वाच्यस्य पर्यनुयोगस्यैव चमत्कारहेतुत्वेन गुणीभूतव्यङ्ग्यतोपपादनमप्पय्यदीक्षितैः कृतं युक्ततरमेव ॥

**परन्तु**—एवमादौ शंकाद्वयं समुदेति । आन्तरालिकं व्यङ्ग्यमादाय गुणीभूतत्वमिति मध्यमकाव्यत्वम्, वाक्यार्थीभूतं विप्रलम्भादिकमादाय उत्तम काव्यत्वमिति एकत्र मध्यमोत्तमकाव्यत्वव्यवहार इत्येका, व्यङ्ग्यस्य गुणप्रधानभाव इत्यपरा चेति ।

अनयोराद्यशंकाया इदमुत्तरम्— उपधेयसंकरेऽप्युपधेरसांकर्यादिति । तथाचाभ्युपगतमेवालंकारिकमूर्धन्यैः—तथाहि—

'सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः ।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ [ध्व–३–१६]

इत्यनेन सुबादिभिरभिव्यक्तस्य अनुस्वानोपमव्यङ्ग्यस्य अलक्ष्यक्रमो रसादिर्द्योत्यः । एवं च सुबाद्यभिव्यक्तानामभिप्रायविशेषणानां यथास्वं विभावाद्यात्मताद्वारा रसाद्यभिव्यञ्जकत्वमिति ध्वनिगुणीभूतव्यङ्ग्ययोरङ्गाङ्गिभावेन संकर इष्ट एव । तद्यथा—

न्यक्कारो ह्ययमेव मे यदरयः तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिक्-धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥

इत्यत्र समस्तवाक्यव्यङ्ग्यस्य वीररसध्वनेः सुप्तिङादिकदम्बकप्रकाशितैः गुणीभूतव्यङ्ग्यैः उपकारकैः सह अङ्गाङ्गिभावेन संकरः । तथाहि-

तत्त्वालोकः

**मे यदरयः** इत्यत्र षष्ठी अरिभिस्सह वध्यघातकभावसम्बन्धं बोधयति, अरिशब्दात्परं श्रूयमाणं **बहुवचनम्**, **अयमेव** इत्यत्र **एवकारश्च** सम्भूय तिरस्कारान्तरासंभवद्वारा रावणे पराक्रमातिरेकं लोकत्रयातीतविक्रमेणात्मना सह एकस्य वध्यघातकभावानौचित्यम् इत्थं सति किं पुनर्बहूनामिति चावगमयति ।

तथा **तत्राप्यसौ तापसः** इत्यत्र अण्प्रत्ययः, अपीत्यव्ययम्, असौ इति सर्वनाम च अतिशक्तिशालिनो नृपतेः पर्यवस्थातृत्वे कथंचिदभ्युपगम्यत्वस्य, तपोमात्रसाधनस्य युद्धानभिज्ञतया शोचनीयत्वमेव न पुनर्युद्धाभिज्ञराक्षसजनपरिपन्थित्वानौचित्यस्य, प्रत्युत नराणां राक्षसाशनत्वादत्यन्तानौचित्यस्य च व्यञ्जकम् ॥

एवं **निहन्ति जीवति** इत्युभयत्र 'नि' इत्युपसर्गस्य 'जीव'धातोः **'अत्र'**इत्यधिकरणशक्तेः, **'राक्षसकुलम्'** इति कर्मत्वशक्तेः **'अहो'** इत्यव्ययस्य, **रावणः** इति सुबन्तस्य च ,सदधिष्ठितदेशे यदि रामः तिष्ठेत्, अत्रस्थितोऽपि यदि तूष्णीं भवेत्, तूष्णीमनवस्थानेऽपि राक्षसान् यदि न हन्यात्, कथंचिदेकस्य कस्यचिद्धननेऽपि राक्षसकुलमेव यदि सम्प्रत्येव न हन्यात्, राक्षसहननं भवदपि लोकत्रयातीतविक्रमस्य मम रावणस्य प्राणा यदि नष्टा भवेयुः तदा एतत् कथमपि संघटेत, न तु अन्यथा तस्मात् तदपेक्षया विश्वविख्यातविक्रमस्य मम सर्वमिदं प्रतीपं जातमित्यद्भुतमेवेदम्' इत्यादिव्यञ्जकत्वम् ॥

तथा **धिक् धिक्** इत्यव्ययस्य, **शक्र** इति प्रकृति-प्रत्यययोः, **जित** इति क्तप्रत्यय-क्विपोः, **प्रबोधितवता** इत्यत्र प्रेत्युपसर्गस्य, प्रेरणार्थक-

तत्त्वालोकः

णिचः, क्तवतुप्रत्ययस्य, **ग्रामटिका** इत्यत्र टिकचस्तद्धितस्य, **स्वर्गग्रामटिका** इति समासस्य, स्वर्गे ग्रामटिकात्वरूपणस्य, **भुजैः** इति बहुवचनस्य च शक्रजेतर्यपि मेघनादे विजयालाभप्रयुक्तगर्हणीयतमत्वाभिव्यञ्जकत्वम् । शक्नोतीति शक्र इति व्युत्पत्त्या शक्रे दुर्जयत्वाभिव्यञ्जकत्वम् । तथा शक्रं जितवान् इति शक्रजित् इति क्विपः शक्रविजयस्य कृतपूर्वताभिव्यञ्जकत्वम् । तेन रामस्य मनुष्यस्य विजये सौकर्याभिव्यञ्जकत्वम् ।

एवं णिचः, क्तवतोः, उपसर्गस्य च कुम्भकर्णजागरणे जयरूपफलविशेषाकांक्षया अधिकायासस्य, प्रबोधस्य प्राक्कालिकत्वेन सिद्धतायाः, कुम्भकर्णनिद्राराहित्यस्य, ततश्च क्षुद्रतापसविजेयत्वस्य, किं शब्देन क्षुद्रतापसस्याप्यजयात् सर्वनैष्फल्यस्य , तेन निन्द्यतातिरेकस्य स्वर्गे ग्रामटिकात्वारोपेण सुजयत्वस्य विलुण्ठनेति व्युपसर्गेण लुण्ठनव्याप्तेः, तद्द्वारा स्वर्गस्य स्तम्भमात्रावशिष्टतायाः, भुजैः इति बहुवचनेन उच्छूनतया च भुजानामेकतमेनाऽपि रामविजयप्राप्तेरावश्यकत्वे सत्यपि परस्परसहचरैरपि तदप्राप्त्या वृथायुद्धकण्डूतिवहनाच्च भुजानां भारायमाणत्वस्य च प्रतीत्या रावणे निन्द्यतातिशयस्य, समस्तवाक्येन निन्दाधिक्यप्रतीतिपूर्वकं पुनर्युद्धोत्साहाभिव्यक्तिद्वारा वीररसो ध्वन्यते ।

एवं चात्र 'न्यक्कार' इत्यादीनां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादकत्वमिति गुणीभूतव्यङ्ग्यत्वे सत्यपि अखण्डश्लोकप्रतीतं वीररसं व्यङ्ग्यमादाय ध्वनित्वम् आलङ्कारिकसंमतमेव । अत एव ध्वनिकृता उक्तपद्ये 'एवंस्थिते च न्यक्कारो ह्ययमेव मे' इत्यादिश्लोके निर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्य प्रतिपादकत्वेऽपि एतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्वमुक्तम् [ध्व. उ. ३. २९५] । तेन च सङ्कीर्णकाव्यतात्रेत्युक्तं भवति ।

चित्रमीमांसा

यदव्यङ्ग्यमपि चारु, तत् चित्रम् ।

तत्त्वालोकः

**एतावतापि**- मध्यमोत्तमकाव्यत्वव्यवहारप्रसङ्गो न दूरीकृत इति चेत् उच्यते-ग्रन्थकृता काव्यं ध्वनिः-गुणीभूतव्यङ्ग्यम्-चित्रमित्येवमेव विभागः कृतः न पुनः प्रकाशकारादिवत् । यतश्च गुणीभावो व्यङ्ग्यस्य यत्र भवति तत्र मध्यमकाव्यताऽपि स्यात् न पुनर्मध्यमकाव्यतैवेति । व्यभिचारात् आलंकारिकसमयविरोधाच्च । यथा चोदाहृत [ प्रहरविरतौ ] पद्ये गुणीभूतव्यङ्ग्यत्वे सत्यपि गुणीभूतव्यङ्ग्यपरिपुष्टं वाक्यार्थीभूतं विप्रलम्भ शृङ्गारमादाय ध्वनित्वेनोत्तमताया वक्तुमुचितत्वात् ।

किंच-एवमादौ विप्रलंभादिरसतात्पर्यपर्यालोचनेन पुनर्ध्वनिरूपताया एव सम्पत्तेः । उक्तं च-ध्वनिकृता-तृतीयोद्योते—

'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः ॥ [ध्व. उ ३-४०] इति ।

यत्र तु परं वाक्यस्य रसादितत्परता नास्ति तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः । 'प्रहरविरतौ' इत्यत्र तु गुणीभूतव्यङ्ग्यतैवेति न वक्तुं शक्यं विप्रलम्भस्य सहृदयहृदयवेद्यत्वात् । परं तु आन्तरालिकं व्यङ्ग्यमादाय वाच्यसिद्धिरित्येतावतात्रोदाहृतमिति दिक् ॥

एवं ध्वनि-गुणीभूतव्यङ्ग्याख्यकाव्यप्रभेदौ उदाहृत्य सम्प्रति चित्राख्यं तृतीयं काव्यप्रभेदं लक्षयति-**यदव्यङ्ग्यमिति** ।

तत्त्वालोकः

अल्पः—अस्फुटः व्यङ्ग्यः यस्मिन् तत् अव्यङ्ग्यमिति बहुव्रीहिः। अनुदरा कन्या इतिवत् अव्यङ्ग्यत्वं व्यङ्ग्यगताल्पत्वे पर्यवस्यति। अत एव **प्रकाशकारेण**—अव्यङ्ग्यमित्यस्य स्फुटप्रतीयमानार्थरहितम् इति विवृतम्।

**यद्वा**—कवितात्पर्यविषयीभूतव्यङ्ग्यराहित्यमेवाव्यङ्ग्यपदेन विवक्षितम्। उक्तं च **ध्वनिकृता**—

रसभावादिविषयविवक्षाविरहे सति।
अलंकारनिबन्धो यस्स चित्रविषयो मतः॥ [ध्व.उ. ३] इति।

एवं च 'स्वच्छन्दोच्चल'दिति प्रकाशोदाहृतपद्ये मन्दाकिनीविष—यिण्याः रतेरभिव्यक्तावपि तत्र कवेस्तात्पर्यं नास्तीति चित्रता। नापि अस्फुटाख्यगुणीभूतव्यङ्ग्यप्रभेदेऽतिव्याप्तिः। अत एव च—**अलंकारसुधानिधौ**-

अनुल्बणत्वाद्व्यङ्ग्यानामव्यङ्ग्यं चित्रमीरितम्।
व्यङ्ग्यस्यात्यन्तविच्छेदः काव्ये कुत्राऽपि नेष्यते॥ इत्युक्तम्।

एतेन **दीक्षितस्य** ध्वनिकारानुयायित्वं सुव्यक्तमुपपादितम्। **ध्वनिकृतापि**—'यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतं अवश्यं कस्यचिद्रसस्य अङ्गत्वं प्रतिपद्यते। अन्ततो विभावत्वेन। तस्मान्नास्त्येव तद्वस्तु यत्सर्वात्मना रसतात्पर्यवतः कवेः तदिच्छया तदभिमतरसाङ्गतां न धत्ते। तथोपनिबध्यमानं वा चारुत्वातिशयं न पुष्णातीत्युक्तम्॥

एवं च अव्यङ्ग्यमित्यस्य कवितात्पर्यविषयव्यङ्ग्यरहितमिति पर्यवसितोऽर्थः।

चारु—गुणालङ्कारमात्रसंबन्धनिबन्धनचमत्कारजनकम्, गुणाभिव्यञ्जकवर्णालङ्कारमात्रनिबन्धनचमत्कारजनकं वा इत्यर्थः। प्राथमिकं चारुत्वं

चित्रमीमांसा

तत् त्रिविधम्—शब्दचित्रम्, अर्थचित्रम्, उभयचित्रमिति ॥

तत्त्वालोकः

गुणस्य शब्दार्थनिष्ठतेति वदतां वामनादीनामनुरोधेन। द्वैतीयकं तु गुणानां रससमवायित्वमिति वदतां ध्वनिकारादीनामनुरोधेन। अस्मिंश्च मते गुणानां रससमवायित्वे गुणोत्कर्षेण रसोत्कर्षावश्यंभावात् अव्यङ्ग्यत्वा संभवात् इदमेव मतं युक्तम्। अत एव ध्वनिकृता—यस्मादवस्तु संस्पर्शिते त्याद्युक्तम् सङ्गच्छते।

तत् काव्यं, चित्रम्—चित्रवत् वास्तविकरूपहीनमपि प्रतिकृति-रूपं चित्रमभिधीयते। उक्तं च ध्वनिकारेण—'व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिसंज्ञितः काव्यप्रकारः। गुणभावे तु गुणीभूतव्यङ्ग्यता। ततोऽन्यत् रसभावादितात्पर्यहीनं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं केवलवाच्यवाचक वैचित्र्याश्रयेणोपनिबद्धम् आलेख्यप्रख्यं यत् आभासते तच्चित्रम् तन्न मुख्यं काव्यं काव्यानुकारो ह्यसौ' इति।

इत्थं चित्रकाव्यस्य स्वरूपमभिधाय, आलङ्कारिकेषु शब्दालंकारैकतात्पर्यशालिनाम् अर्थालंकारैकतात्पर्यशालिनां च मतं न तावत्समीचीनम्। एतदुभयभिन्नस्य उभयचित्रस्यापि लक्ष्ये दर्शनात् इत्यभिप्रायेण तत् त्रेधा विभजते—तत् त्रिविधमिति। अयं विभागः मम्मटस्यापि संमतः।

यत्र वाचकवैचित्र्यमात्रप्रकाशकयमकादिशब्दालंकारनिबन्धने नियमेन यत्नान्तरमापतति तत् समानानुपूर्वीकसमानार्थकशब्दविशेषान्वेषणादि क्लेशनिर्मेयमिति तच्चित्रमिति व्यवह्रियते।

## तत्त्वालोकः

शब्दचित्रस्थलेषु यद्यपि अर्थवत एव शब्दस्य काव्यत्वम्, न तु शब्दमात्रस्य। अन्यथा मर्दलशब्दादावपि काव्यत्वप्रसङ्गात्। अथापि शब्दालंकारमात्रनिबन्धनचारुतातिशयविशेषवत्वे शब्दस्य प्राधान्यात् शब्द चित्रतेति बोध्यम्।

एवं यत्र वाच्यवैचित्र्यमात्रप्रकाशकरूपकाद्यर्थालंकारनिबन्धने तदनु-गुणार्थविशेषान्वेषणक्लेशनिर्मितत्वं तत्र अर्थचित्रता।

यद्यप्यत्रार्थचित्रस्थले शब्दानुपस्थापितस्यार्थस्य चमत्कारजनकत्वाभावेन शब्दमुखप्रेक्षितृत्वं विद्यते, अथापि अर्थालंकारमात्रनिबन्धनचारुतातिशयविशेषवत्वे अर्थस्य प्राधान्यादर्थचित्रतेति बोध्यम्। अत एव **भामहेनोक्तम्** —

'शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः' [भा.का. १–१५] इति।

यत्र शब्दार्थचित्रयोर्द्वयोरपि समं प्राधान्यं तत्रापि तृतीयः प्रकारः विनिगमनाविरहात् उभयचित्राख्योऽप्यवश्यमाश्रयणीय इत्याह — **उभय-चित्रमिति**।

**ननु** ध्वनिकारेण तदनुयायिना प्रकाशकृता वा उभयचित्रं न लक्षितमिति कथमिदं युज्यते?

सत्यम्–अथापि

'चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्' (ध्व.३.४२)

इति अनुक्तसमुच्चायकं चकारं प्रयुञ्जानेन **ध्वनिकृता** चित्रकाव्यस्य तृतीयोऽपि प्रभेदस्संभवतीति सूचितो भवति।

तत्त्वालोकः

यदपि प्रकाशकृता —

'शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्'

इत्यभिहितम्। तदपि द्वैविध्यकथनं न्यूनताव्यवच्छेदकमेव न पुनरधिकव्यवच्छेदकमपि। ततश्च शब्दार्थचित्रयोर्द्वयोरपि प्राधान्ये उभयचित्रमिति त्रेधा विभागः उपपद्यत एव। अत एव च प्रकाशकृता प्रथमोल्लासे चित्रद्वैविध्ये प्रदर्शितेऽपि षष्ठोल्लासे चित्रभेदप्रयोजकमनुभाष्य प्राधान्याप्राधान्याभ्यां शब्दार्थचित्रयोर्व्यवस्थायाः दिक् प्रदर्शिता। उक्तदिशा शब्दार्थालंकारयोः तुलाधृतवच्चमत्कारजनकत्वेऽवगते तुल्यप्राधान्यगुणीभूतव्यङ्ग्यस्येव अतिरिक्ततायाः उपगमे न किमपि बाधकमिति भावः। इत्थं च चित्रकाव्यं त्रिविधमिति सिद्धम्।

यद्वा **भट्टोद्भटमतेन** एवं विभागः, तेन ह्युक्तम् —

'शब्दार्थवर्त्यलंकाराः वाक्य एकत्र भासिनः॥' इति।

विवृतं चेत्थं **भट्टेन्दुराजेन लघुवृत्तौ**–यत्रैकस्मिन् वाक्ये शब्दवर्तिनोऽर्थवर्तिनश्च अलंकाराः संसर्गमुपयान्ति तत्र शब्दार्थालंकार इति। य एवोभयालङ्कार इति भट्टेन्दुराजेन विवृतस्स एव **सर्वस्वकृता** उभयसंसृष्टिरिति परिगणितः। उदाहृतश्च उभयसंसृष्टिर्यथा—

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य।
पादाम्बुजं भवतु वो(ते) विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः॥

## चित्रमीमांसा

शब्दचित्रं यथा —

नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥

### तत्त्वालोकः

अत्रोपमानुप्रासयोः संसृष्टिरिति । अथाऽपि सर्वस्वकृता अलंकारान्तरताभ्युपगतैव, 'यथा बाह्यालंकाराणां सौवर्णमणिमयप्रभृतीनां पृथक् चारुत्वहेतुत्वेऽपि संघटनाकृतं चारुत्वान्तरं जायते, तद्वत्प्रकृतालंकाराणामपि संयोजने चारुत्वान्तरमुपलभ्यते । तेनालंकारान्तरता' इति । एवं च संसृष्टेः पृथगलंकारत्वे उभयचित्रमिति व्यपदेशभेदमात्रं विशेष इति दिक् ॥

तत्राद्यमुदाहरति—शब्दचित्रं यथेति । माघे इन्द्रप्रस्थाद्रैवतकगिरिमासादितवता कृष्णेन अवलोक्यमानं वनरामणीयकं कविर्वर्णयति — नवपलाशेति ।

सः ततः नवपलाश-पलाशवनम्, स्फुटपराग-परागतपङ्कजम्, मृदुलतान्त-लतान्तं सुमनोभरैः सुरभिं सुरभिम् अलोकयदिति अन्वयः ।

सः श्रीकृष्णः ततः इन्द्रप्रस्थाद्रैवतकपर्वतसमीपमासाद्य सेनानिवेशानन्तरम् पुरः अग्रे परिदृश्यमानम् । 'पुरतस्तु पुरोऽग्रतः' इति वैजयन्ती । पुर इत्यव्ययम् । नवपलाशानि—नूतनकिंशुकपत्रघटितानि पलाशवनानि—किंशुकाख्यानि यस्मिन् तं वसन्तसमयमित्यर्थः । अत्र च बहुव्रीहिपूर्वपदो

तत्त्वालोकः

बहुव्रीहिः । 'पलाशः किंशुके पत्रे पलाशम्' इति **विश्वप्रकाशकोशः।** स्फुटानि–विकचानि परागैः पुष्परजोभिः परागतानि–व्याप्तानि च पङ्कजानि –कमलानि यस्मिन् तम्, स्फुटपरागपरागतपङ्कजम्। तथा मृदुलाः –कोमलाः अत एव तान्ताः–आतपसमये किंचित्क्लान्ताः लतान्ताः–पल्लवाः यस्मिंस्तम् मृदुलतान्तलतान्तम्, सुमनोभरैः पुष्पसमृध्या, सुरभिम् सुगन्धिम् सुरभिं–वसन्तसमयम् अलोकयत्- ददर्श ज्ञातवानिति यावत्। 'सुरभिः वाच्यवत्सौम्ये सुगन्धौ स्त्रीत्वसौ गवि। पुमांश्चैत्रे वसन्ते च' इति वैजयन्ती।

अत्र —

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।
क्रमेण तेनैवावृत्तिं यमकं विनिगद्यते ॥

इत्युक्तरीत्या पलाश–पलाशेति, सार्थकपदावृत्तियमकं शब्दचित्रम्। तथा मृदुल–तान्त–लतान्तेति, पराग–परागतेति निरर्थकपदावृत्तियमकं प्राधान्येनोपनिबद्धं कविना। आद्यन्तयोस्तेनैव निर्वाहात् ॥

अत्र कृष्णकर्तृकलोकोत्तरवसन्तसमयसमासादितवनरामणीयकावलोकन-जन्मा चित्तविकासरूपोऽद्भुतस्थायी विस्मयस्सन्नपि कविविवक्षानुपारूढत्वात् परिदुर्बल इति अनेन प्रकारेण नीरसत्वं (अव्यङ्ग्यत्वं) परिकल्प्य शब्द चित्रतेति भावः। अत एव **ध्वनिकृता**– 'यदा रस–भावादि विवक्षाशून्यः कविः शब्दालंकारमर्थालंकारं वोपनिबध्नाति तदा तद्विव क्षापेक्षया रसादिशून्यता अर्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि शब्दानामर्थ इत्युक्तम् [ध्व.तृ. उ.२२१ पु]।

चित्रमीमांसा

अर्थचित्रं यथा—

स च्छिन्नमूलः क्षतजेन रेणुः
तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य
पूर्वोत्थितो धूम इवावभासे ॥

तत्त्वालोकः

शब्दचित्रमुदाहृत्य अर्थचित्रमुदाहरति–अर्थचित्रमिति । रघुवंशे इन्दुमतीमुदूह्य अयोध्यां प्रस्थितस्य राज्ञोऽजस्य शत्रुभिस्सह सङ्ग्राम वर्णनमिदम् । सः रेणुः क्षतजेन छिन्नमूलः उपरिष्टात् पवनावधूतः सन् अङ्गारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इव आवभासे इत्यन्वयः ।

सः –रेणुः सा धूलिः क्षतजेन–शस्त्रक्षताश्व–द्विप-वीरजन्मना रुधिरेण, छिन्नमूलः–त्याजितमूलसंबन्धः, युद्धभूमेः रजोमयत्वात् अवर्षाच्च द्रववस्तुसंसर्गमात्रेणैव निबद्ध इति भावः । तस्य रक्तस्य, उपरिष्टात् ऊर्ध्वभागे, पवनावधूतः–वाताऽऽकम्पितः, सः रेणुः, अङ्गारशेषस्य–अर्ध दग्धदारुणि अवशिष्टस्य, हुताशनस्य–अग्नेः सकाशात् पूर्वं उत्थितः धूम इव आवभासे– दिदीपे । अङ्गारशब्दः अर्धदग्धे, अग्निशून्ये च दारुखण्डे प्रयुज्यते । तद्यथा 'ज्वलदङ्गारसन्निभम्' तप्ताङ्गारसमः पुमान, 'अङ्गारे शतधौतेऽपि मालिन्यं नैव गच्छति' इत्यादि प्रयोगदर्शनात् । अत्र तु अङ्गारशब्दः पूर्वोत्थितधूमसंबन्धविवक्षानुसारेण अर्धदग्धकाष्ठवाचक इति ज्ञायते । अन्यथा तद्विशेषणोपादानमनर्थकं स्यात् ।

तत्त्वालोकः

अत्र प्रकृतो रेणुः अप्रकृतधूमवृत्तिच्छिन्नमूलत्व,–पवनावधूतत्व,–रक्त-धूसरवर्णमिश्रितत्वरूपधर्मसंबन्धेन निमित्तेन अप्रकृतधूमरूपत्वेन संभावित इत्युपात्तविषया स्वरूपोत्प्रेक्षेति केचित् ।

अर्थान्तारातिशयानाधायकत्वे सति स्वतश्चमत्कारिणी उपमेति दीक्षितानामाशयः । अत एव उपमासिद्धान्ते इदमेव पद्यमुदाहृत्य स्ववैचित्र्यमात्रविश्रान्तोपमा उपपदिता ।

तेन च 'विनिर्गतं मानदमात्ममन्दिरात्' इति यत् अर्थचित्रमुदाहृतं प्रकाशकृता–तन्न सभीचीनम्, तत्र हयग्रीवाख्यासुरप्रभावातिशयस्य प्रतीत्या तत्कृतचमत्कारस्य पूरस्फूर्तिकतया चित्रमात्रोदाहरणतायाः वक्तुम् अशक्यत्वदिति भावः ।

यद्वा–प्रकाशोदाहृतपद्ये हयग्रीवप्रभावातिशयस्य प्रतीतौ सत्यामपि भयानकव्यभिचारिणो भयस्य स्वशब्देनोपादानात् मुख्यार्थहतिरिति अभिप्रेत्यैव प्रकाशकृता चित्रोदाहरणत्वेन उपन्यस्तम् । उक्तं च प्रकाशकृता –

'व्यभिचरि–रसस्थायिभावानां शब्दवाच्यता'

.प्र.उ.८.३०] इति ।

इत्थं च अपकृष्टव्यङ्ग्यकत्वेनाधमत्वमित्यदोषादिति परे । एवं च संदिग्धमुदाहरणमित्यभिप्रायेणैवोदाहरणान्तरप्रदर्शनादरो ग्रन्थकृत इति मतभेदेन विभावनीयम् ॥

## चित्रमीमांसा

उभयचित्रं यथा —

वराहः कल्याणं वितरतु स वः कल्पविरमे
विनिर्धुन्वन्नौदन्वतमुदकमुर्वीमुदवहत् ।
खुराघातत्रुट्यत्कुलशिखरिकूटप्रविलुठ-
च्छिलाकोटिस्फोटस्फुटघटितमाङ्गल्यपटहः ॥

### तत्त्वालोकः

शब्दचित्रार्थचित्रयोः प्रत्येकमुदाहरणं प्रदर्श्य उभयचित्रमुदाहरति उभयचित्रमिति ।

सः वराहः वः कल्याणं मङ्गलं वितरतु । कः स वराह इत्याशंकायामाह — यः कल्पविरम इति । यः आदिवराहः कल्पविरमे–ब्रह्मणः प्रथमपरार्धावसाने द्वितीयपरार्धस्योपक्रमे, सनकसनन्दनाद्यैः परमयोगिभिः अभिष्टुतः, वराहरूपं आस्थाय, औदन्वतं सामुद्रमुदकम् , विनिर्धुन्वन् क्षोभयन् , उर्वी–भूमिम् , उदवहत्–उज्जहार उदुवाह वा, यश्चैव खुराणां–शफानामाघातेन कुट्टनेन, त्रुट्यतां विशीर्यमाणानां कुलपर्वतत्वेन प्रसिद्धानां हिमवदादीनाम् ,

‘ हिमवान् निषधो विन्ध्यः माल्यवान् पारियात्रिकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ’

इत्युदाहृताः कुलपर्वताः । तेषां कूटेषु–शिखरेषु

‘ मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥ ’ **इत्यमरः ।**

## तत्त्वालोकः

अत्र प्रकृतो रेणुः अप्रकृतधूमवृत्तिच्छिन्नमूलत्व,-पवनावधूतत्व,-रक्त-धूसरवर्णमिश्रितत्वरूपधर्मसंबन्धेन निमित्तेन अप्रकृतधूमरूपत्वेन संभावित इत्युपात्तविषया स्वरूपोत्प्रेक्षेति केचित् ।

अर्थान्तरातिशयानाधायकत्वे सति स्वतश्चमत्कारिणी उपमेति दीक्षितानामाशयः । अत एव उपमासिद्धान्ते इदमेव पद्यमुदाहृत्य स्ववैचित्र्यमात्रविश्रान्तोपमा उपपदिता ।

तेन च 'विनिर्गतं मानदमात्ममन्दिरात्' इति यत् अर्थचित्रमुदाहृतं प्रकाशकृता-तन्न समीचीनम्, तत्र हयग्रीवाख्यासुरप्रभावातिशयस्य प्रतीत्या तत्कृतचमत्कारस्य पूरस्फूर्तिकतया चित्रमात्रोदाहरणतायाः वक्तुम् अशक्यत्वदिति भावः ।

यद्वा-प्रकाशोदाहृतपद्ये हयग्रीवप्रभावातिशयस्य प्रतीतौ सत्यामपि भयानकव्यभिचारिणो भयस्य स्वशब्देनोपादानात् मुख्यार्थहतिरिति अभिप्रेत्यैव प्रकाशकृता चित्रोदाहरणत्वेन उपन्यस्तम् । उक्तं च प्रकाशकृता –

'व्यभिचरि-रसस्थायिभावानां शब्दवाच्यता'

.प्र.उ.८.३०] इति ।

इत्थं च अपकृष्टव्यञ्जकत्वेनाधमत्वमित्यदोषादिति परे । एवं च संदिग्धमुदाहरणमित्यभिप्रायेणैवोदाहरणान्तरप्रदर्शनादरो ग्रन्थकृत इति मतभेदेन विभावनीयम् ॥

उभयचित्रं यथा —

वराहः कल्याणं वितरतु स वः कल्पविरमे
विनिर्धुन्वन्नौदन्वतमुदकमुर्वीमुदवहत् ।
खुराघातत्रुट्यत्कुलशिखरिकूटप्रविलुठ-
च्छिलाकोटिस्फोटस्फुटघटितमाङ्गल्यपटहः ॥

तत्त्वालोकः

शब्दचित्रार्थचित्रयोः प्रत्येकमुदाहरणं प्रदर्श्य उभयचित्रमुदाहरति उभयचित्रमिति ।

सः वराहः वः कल्याणं मङ्गलं वितरतु । कः स वराह इत्याशंकायामाह — यः कल्पविरम इति । यः आदिवराहः कल्पविरमे-ब्रह्मणः प्रथमपरार्धावसाने द्वितीयपरार्धस्योपक्रमे, सनकसनन्दनाद्यैः परमयोगिभिः अभिष्टुतः, वराहरूपं आस्थाय, औदन्वतं सामुद्रमुदकम् , विनिर्धुन्वन् क्षोभयन् , उर्वी-भूमिम् , उदवहत्-उज्जहार उदुवाह वा, यश्चैव खुराणां-शफानामाघातेन कुट्टनेन, त्रुटयतां विशीर्यमाणानां कुलपर्वतत्वेन प्रसिद्धानां हिमवदादीनाम् ,

'हिमवान् निषधो विन्ध्यः माल्यवान् पारियात्रिकः ।
गन्धमादनमन्ये च हेमकूटादयो नगाः ॥'

इत्युदाहृताः कुलपर्वताः । तेषां कूटेषु-शिखरेषु

'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ॥' **इत्यमरः ।**

चित्रमीमांसा

**तदेवं त्रिविधे ध्वनिगुणीमतव्यङ्गयोः प्रपञ्चः अन्यत्रास्माभिः कृतः ॥**

तत्त्वालोकः

प्रविलुठताम् इतस्तत उपावृत्तानां दृषदग्रभागानाम्, स्फोटेन–विशरणेन स्फुटं–व्यक्तं घटितः सम्पादितः माङ्गल्यपटहः–जयसूचक ध्वनियुक्तः, अस्य वराह इत्यनेनान्वयः। इयमत्र पौराणिकी कथा—

चतुर्मुखस्य प्रथमपरार्द्धस्यादौ मत्स्य-कूर्मात्मकं वपुरास्थितो भगवान् विष्णुः तस्यैव द्वितीयपरार्द्धस्यादौ सनकादिवन्दितः वराहरूपमास्थाय महार्णवनिमग्नाम् उर्वीम् उद्धधारेति।

'तोयान्तस्थां महीं ज्ञात्वा जगत्येकार्णवीकृते।
उज्जहार क्षितिं क्षिप्रं न्यस्तवांश्च महाम्भसि ॥ इति विष्णुपुराणे
'उद्धृतासि वराहेण कृष्णेन शतबाहुनेति' श्रुतौ च दृश्यते।

लोके यथा नियुद्धादिषु लब्धविजयानां जयसूचकः पटहध्वनिः तथात्रापि भूम्युद्धरणेन लब्धविजयस्य भगवत आदिवराहस्य इतस्तत उपावृत्तशिलास्फोटनमेव जयसूचकमिति शिलास्फोटेष्वेव मङ्गलवाद्यध्वनेः अध्यवसायात् अतिशयोक्तिः रूपकं वा अर्थालंकारः। 'एकस्य वा व्यञ्जनस्य द्विः बहुकृत्वो वा सादृश्ये वृत्त्यनुप्रासः' इत्युक्त्यनुरोधेन वृत्त्यनुप्रासश्शब्दालंकारः। चमत्कारस्तु उभयथेति उभयचित्रोदाहरणमिति बोद्धव्यम् ॥

इत्थं ग्रन्थारम्भप्रकरणं त्रिविधकाव्यस्वरूपोदाहरणप्रदर्शनपूर्वकम् उपसंहरति—**तदेवमिति**।

**चित्रमीमांसा**

शब्दचित्रस्य प्रायो नीरसत्वात् नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यते इति शब्दचित्रांशमपहाय अर्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते ॥

**तत्त्वालोकः**

एवं उक्तरीत्या, त्रिविधे ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदेन भिन्ने काव्ये ध्वनिगुणीभूतव्यङ्ग्ययोः, ध्वनेः

'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥'

इति ध्वनिकारोक्तरीत्या गुणीकृतवाच्यवाचकविशेषश्चमत्कारी व्यङ्ग्योऽर्थः तस्य, तथा औपाधिकमप्रधानभावमनुभवतो (गुणीभूत)व्यङ्ग्यस्य चेत्यर्थः । प्रपञ्चः—विस्तरः अन्यत्र—ग्रन्थान्तरे कृतः—विवेचितश्चेति भावः । वृत्तिवार्तिक ग्रन्थे निरूपितो भवेदित्यूह्यम् । यतश्च दीक्षितप्रणीतेषु तत्रैव व्यञ्जनायाः विषयो विवेचितः । सोऽपि नोपलब्ध इति ज्ञायते । एतेनैतदुक्तं भवति । अभिधामूल–लक्षणामूलध्वनिप्रपञ्चः, अगूढादिगुणीभूत व्यङ्ग्यप्रपञ्चः ग्रन्थान्तरे कृतः इत्यनेन तद्विस्तरस्य अत्र आवश्यकता नास्तीति ।

नन्वेवं तर्हि-चित्रत्वस्य शब्दार्थोभयसाधारणतया शब्दचित्रमीमांसा प्रथमं कर्तव्या । तां परित्यज्य अर्थचित्राणां मीमांसनं करिष्यत इति तत्परित्यागेऽर्थचित्राणां प्रपञ्चने च हेतुमुपादत्ते—शब्दचित्रस्येति ।

तत्त्वालोकः

शब्दचित्रस्य–शब्दालङ्कारस्य यमकादेः, प्रायः–भूयसा, नीरसत्वात्–रसानुपकारकत्वात्, कवयः–लोकोत्तरचमत्कारवर्णनानिपुणाः, तत्–दुष्करयमकादिकम् अत्यन्तम्–अतीव, नाद्रियन्ते–न पुरस्कुर्वन्ति इत्यर्थः। अयं भावः–प्रायः दुष्करशब्दभङ्गश्लेषादीनां निबन्धने रसाभिव्यक्त्यनुकूलयत्नापेक्षया विलक्षणप्रयत्ननिष्पाद्यत्वेन रसबन्धानुकूलमौचित्यं परिहीयते। अतश्चैषां रसाङ्गभावो न घटते, अत एव नीरसत्वम्, अत एव च रसास्वादलालसाः शब्दालंकारं न पुरस्कुर्वन्तीति।

उक्तं च आनन्दवर्धनाचार्यैः द्वितीयोद्योते—

'यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते॥ [ध्व.उ-२-१६]' इति।

ननु—

'उभयमेव वदन्ति मनीषिणः
समयवर्षितया कृतकर्मणाम्।
बलनिषूदनमर्थपतिं च तं
श्रमनुदं मनुदण्डधरान्वयम्॥'

इत्यादि महाकविकालिदासादिग्रथितकाव्यखण्डेषु राजकुमारगतवीरोचितरीत्यैव रम्यत इति कुतो नीरसत्वं शब्दचित्रस्य इत्याशङ्क्यते चेदत्रोत्तरमाह–**प्राय इति**। एतेन रसं बद्धुमध्यवसितस्य कवेः प्रतिभानवतः निरूप्यमाणदुर्घटनानाम् अपि अलंकाराणां अहंपूर्विकया परापतने तेषां रसाङ्गत्वमिष्यते। अत एव तेषां विरलता।

चित्रमीमांसा

चिन्त्येऽत्र चित्रवर्गे प्रदर्श्ययोः लक्ष्यलक्षणयोः ।
प्राचीनानामेव श्लोकाः प्रायेण लिख्यन्ते ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभ
श्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतौ
चित्रमीमांसायां ग्रन्थारम्भप्रकरणम्

---

तत्त्वालोकः

उक्तं च ध्वनिकृता द्वितीयोद्योते —

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलंकारो ध्वनौ मतः ॥ [ध्व.उ.२-२६] इति

किञ्च शब्दचित्रेषु विचारणीयाऽभावादपि तत्परित्याग इत्याह—न वा तत्रेति । उपोद्घातसङ्गतिं प्रदर्शयति चिन्त्येऽत्रेति । अर्थालङ्कारजाते चिन्तनीये सति प्रदर्श्ययोः—प्रदर्शयितुं आवश्यकयोः इत्यर्थः । प्रपूर्वाद्दृशेः 'ऋदुपधाच्च' [पा.सू.३-१-११०] इति सामान्यतो विहितः क्यप् 'कृत्याश्च' [पा.सू. ३-३-१७१] इत्यावश्यकार्थे पर्यवस्यति । लक्ष्यम्—इतरालंकारभिन्नतयाऽनुमेयम्, लक्षणम्—इतरालंकारभेदानुमापकोऽसाधारणधर्मः तयोरित्यर्थः । प्राचीनानामेव—भामहादीनामेव श्लोकाः—पद्यानि लिख्यन्ते—विन्यस्यन्ते । असति बाधके विचारविषयाणामलंकारलक्षणानि उदाहरणानि च पुरातनालंकारिकप्रदर्शितान्येव प्रदर्श्यन्ते । सति बाधके

तानि परित्यज्य अभिनवानि प्रदर्श्यन्त इति भावः। एवं च स्वस्य प्राचीनालंकारिकानतिवृत्तित्वं च ध्वनितं भवति।

इतिशब्दः परिसमाप्तिं द्योतयति। 'इति हेतुप्रकरण–प्रकारादि समाप्तिषु' इत्यमरः। प्रकरणं नाम ग्रन्थभागः। तदुक्तम्–'शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्। आहुः प्रकरणं नाम' इति। एवं च–शास्त्रैकदेशप्रतिपाद्यविषयवैशद्यसम्पादकः सुलभः अनतिसंक्षेपविस्तरः ग्रन्थभागः प्रकरणम्' इत्युक्तं भवति।

इति श्रीमदत्रिकुलतिलकश्रीरामिश्रवंश्येन शोभाञ्जनग्रामा(नुग्गेहल्ल)-
भिजनेन सोमयाजियाण्डान् जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसंभवेन श्रीमन्महीशूरपुरीमध्यविद्योतमानश्रीमन्महा
राजसंस्कृतमहापाठशालायां सरस्वतीप्रासादाख्यायाम्
अलङ्कारशास्त्रप्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
**सो. रामस्वामि ऐय्यंगार्यशर्मणा**
विरचिते चित्रमीमांसाव्याख्याने तत्त्वालोकाख्ये
ग्रन्थारम्भप्रकरणं समाप्तम्

---

## उपमाप्रकरणम्

### तत्त्वालोकः

### उपमालङ्कारः

नीलालकावृतमुखं नीलालिङ्गितवक्षसम् ।
नीलजीमूतसङ्काशं भजे नीलाम्बरानुजम् ॥

उपमामधिकृत्य **निरुक्तकारेण यास्केन** 'अथात उपमा (नाम) यदेतत्, तत्सदृशमिति गार्ग्यः । तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वाऽप्रख्यातं वा उपमिमीते, अथापि कनीयसा ज्यायांसम्' [निरु. ३।१३] इत्यभिहितम् ।

तथा **नाटचशास्त्रकृता भरतमुनिना**—

यत्किञ्चित्काव्यबन्धेषु सादृश्येनोपमीयते ।
उपमा नाम सा ज्ञेया वर्णाकृतिगुणाश्रया । [नाटच अ.१६–श्लो ४१] इत्युक्तम् ।

**अलङ्कारशेखरकृताऽपि**—

अलंकारशिरोरत्नं सर्वस्वं काव्यसम्पदाम् ।
उपमा कविवंशस्य मातैवेति मतिर्मम ॥

इत्युक्तत्वाच्च उपमैव सर्वैरप्यालङ्कारिकैः अर्थालङ्कारेषु प्रथममुपादीयते अलङ्कारश्च, पुरुषादीनां लोकसिद्धहारकेयूरादिवत् अङ्गिनो रसस्य चारुत्व।

चित्रमीमांसा

उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥

तत्त्वालोकः

मावहति । इत्थं सत्येव उपमादेः अलंकारव्यपदेशो यथार्थः । उक्तं च ध्वनिकृता—

रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलंकृतीनां सर्वासाम्, अलंकारत्वसाधनम् । [ध्व. उ. २] इति ।

यत्र तु परं स्फुटव्यङ्ग्यार्थराहित्यम्, तत्राऽपि दिव्यविमानप्रतिष्ठितकनकमयप्रतिमार्पितहारकेयूरकटकादिवत् अलंकारत्वं भवतीति ज्ञेयम् ।

तेषु चालंकारेषु उपमा अनेकालंकारसाधारणी सहृदयान् आनन्दयतीत्याह—**उपमैकेति** ।

एका—अलंकारान्तरनिरपेक्षस्वरूपा, उपमा—उपमेति व्यवहृता; शैलूषी नर्तकीव, नैकविधालंकारसाधारणी इत्यर्थः । चित्रभूमिकाभेदान्—चित्राः रसिकानामाश्चर्यजननीः याः भूमिकाः—वेषपरिग्रहाः तद्भेदान्—तदवान्तर-प्रभेदान् सम्प्राप्ता—अभ्युपेता सती, काव्यमेव रङ्गं—रङ्गभूमिः वेषभूषाद्यालम्बनपूर्वकं सहृदयाभिमुख्यजनकः स्थानविशेषः, तस्मिन् नाट्यमण्डपे इत्यर्थः । नृत्यन्ती—अर्थगतचमत्कारातिशयम् आविष्कुर्वन्ती, तद्विदाम्—सहृदयानां चेतः—स्वान्तम्, रञ्जयति—आह्लादयति इत्यर्थः ॥

नटी यथा नानाविधान् वेषान् परिगृह्य रङ्गभूमिमवतीर्य नर्तनं कुर्वन्ती सामाजिकान् रञ्जयति तथा इयमप्युपमा काव्यात्मनो रसादेः उपस्कारिका सती

## चित्रमीमांसा

**चन्द्र इव मुखमिति सादृश्यवर्णनं तावदुपमा । सैव उक्तिभङ्गीभेदेन अनेकालङ्कारभावं भजते । तथाहि —**

**'चन्द्र इव मुखं, मुखमिव चन्द्रः' इत्युमेयोपमा ।**

### तत्त्वालोकः

रूपकदीपकाद्यलंकारभङ्गीं प्रतिपद्य तत्तदलंकारस्वरूपनिष्पादयित्री अलंकार-तत्त्वविदां मनांसि रञ्जयति इति भावः ॥

इह भूमिकाभेदशब्देन अतिशयोक्त्युदाहरणे नीलोत्पलशब्दवत् साध्यवसानलक्षणया तत्तदलंकारनिर्वाहकरूपभेदो लक्ष्यः ।

उपमाया अनेकालंकारभावम् उपपादयितुम् उपमास्वरूपं सोदाहरणं प्रदर्शयति–**चन्द्र इवेति** । चमत्कारप्रयोजकं वर्ण्यमानं सादृश्यम् **उपमा**-इति तत्परिष्कारः । यथा 'चन्द्र इव मुखम्' इत्यत्र अधिकगुणवत्तया संभाव्यमानेनोपमानेन चन्द्रेण, तदपेक्षया निकृष्टगुणवत्तया संभाव्यमाने उपमेये मुखे सादृश्यं परिकल्प्यत इत्युपमा । इयमेवोपमा उक्तिवैचित्र्यबलादनेकालंकार भावं भजते । तदेतदाह–**सैवेति** । चारुतरप्रकारान्तराश्रयणेन उपमैव नानालंकारव्यपदेशभाग्भवतीत्यर्थः । अस्या एव अनेकालंकाररूपतामुपपादयितुम् उक्तिभेदं प्रदर्शयति–**तथाहीति** ।

**चन्द्र इवेति** । अत्र चन्द्रप्रतियोगिकसादृश्यं मुखे, मुखप्रतियोगिकसादृश्यं चन्द्रे च प्रतिपाद्यते । तच्च वाक्यभेदेन । तथा सादृश्य-वर्णनमपि तृतीयसदृशनिषेधार्थम् । तृतीयसदृशव्यवच्छेदफलकं परस्परं वर्ण्यमानं सादृश्यम् **उपमेयोपमा** इति तल्लक्षणम् ।

चित्रमीमांसा

'मुखं मुखमिव चन्द्रः' इत्यनन्वयः ।

'मुखमिव चन्द्रः' इति प्रतीपम् ।

'चन्द्रं दृष्ट्वा मुखं स्मरामि' इति स्मरणम् ।

'मुखमेव चन्द्रः' इति रूपकम् ।

'मुखचन्द्रेण तापश्शाम्यति' इति परिणामः ।

तत्त्वालोकः

**मुखमिति** । अत्र मुखप्रतियोगिकं मुखानुयोगिकं सादृश्यं वर्ण्यते । तेन च सदृशान्तरं निषिद्धं भवति । एकोपमानोपमेयकं सदृशान्तरव्यवच्छेदफलकं वर्ण्यमानं सादृश्यम् **अनन्वयः** ।

**मुखमिवेति** । अत्र उपमाविरुद्धतया मुखप्रतियोगिकं सादृश्यं वर्ण्यते । तेन च उपमानतिरस्कारः फलति । उपमानतिरस्कारफलकं वर्ण्यमानं सादृश्यम् **प्रतीपम्** ।

**चन्द्रमिति** । मुखसदृशचन्द्रदर्शनान्मुखस्मरणं वर्ण्यते । सादृश्यमूलकवस्त्वन्तरस्मरणं **स्मरणम्** ।

**मुखमेवेति** । अत्र मुखे चन्द्राभेदो वर्ण्यते । उपमेये उपमानाभेदताद्रूप्यान्यतरफलकं वर्ण्यमानं सादृश्यं **रूपकम्** इति सामान्यलक्षणम् ।

**मुखचन्द्रेणेति** । अत्र मुखे चन्द्राऽभेदे वर्ण्यमानेऽपि तस्य तापोपशामकत्वं नास्तीति चन्द्रः मुखात्मना परिणमति । सादृश्यमूलकं प्रकृतकार्योपयोगि यदुपमाने उपमेयतादात्म्यं तत् **परिणामः** ।

## चित्रमीमांसा

'किमिदं मुखम् उताहो चन्द्रः' इति सन्देहः ।

'चन्द्र इति चकोराः त्वन्मुखमनुधावन्ति' इति भ्रान्तिमान् ।

'चन्द्र इति चकोराः कमलमिति चञ्चरीकाः त्वन्मुखमनु धावन्ती'ति उल्लेखः ।

'चन्द्रोऽयं न मुखमि'ति अपह्नवः ।

## तत्त्वालोकः

किमिदमिति–उपमेये मुखे उत्कर्षप्रतिपादनाय अप्रकृतचन्द्रतादात्म्यं सन्दिह्यते । उपमेयोत्कर्षफलकः सादृश्यप्रयोज्यः प्रकृतेऽप्रकृतविधेयकस्संशयः सन्देहालंकारः ।

चन्द्र इतीति । अत्र नायिकामुखे चन्द्रत्वप्रकारकं ज्ञानं सादृश्यातिशयमूलतया जायत इति भ्रान्तिमान् । उपमेयोत्कर्षफलकसादृश्यातिशयप्रयोज्योपमानाऽभेदज्ञानं भ्रान्तिमानलंकारः ।

चन्द्र इति चकोरा इति । अत्र चकोरचञ्चरीकाणां एकस्मिन्नेव मुखे चन्द्रत्वकमलत्वरूपभिन्नभिन्नधर्मप्रकारकज्ञानमनुरागप्रयोजकमिति एकधर्मिकानेकसमवेतभिन्नभिन्नप्रकारकज्ञानविषयत्वस्य वर्ण्यमानत्वादुल्लेखालंकारः । एकपदार्थनिष्ठैकानेकवृत्त्यनेकप्रकारकज्ञानविषयत्वम् उल्लेखालंकारः ।

चन्द्रोऽयमिति । अत्र मुखे उत्कर्षप्रतीतिमवगमयितुं मुखे मुखत्वं निषिध्य चन्द्रत्वमारोप्यते । सादृश्यातिशयनिमित्तकः प्रकृतनिषेधविशिष्टाप्रकृतारोपः अपह्नवालंकारः ।

चित्रमीमांसा

'नूनं चन्द्रः' इत्युत्प्रेक्षा ।

'चन्द्रोऽयम्' इत्यतिशयोक्तिः।

'मुखेन चन्द्रकमले निर्जिते' इति तुल्ययोगिता ।

'निशि चन्द्रः त्वन्मुखं च हृष्यती'ति दीपकम् ।

तत्त्वालोकः

**नूनमिति** । अत्र मुखे उत्कर्षं प्रतिपादयितुं अप्रकृतचन्द्रगताह्लादकत्वादिधर्मसंबन्धं निमित्तीकृत्य चन्द्रतादात्म्यं संभाव्यते । अन्यधर्मसंबन्धप्रयुक्तं प्रकृतेऽप्रकृततादात्म्यसंभावनम् **उत्प्रेक्षालक्षणम्** ।

**चन्द्रोऽयमिति** । अत्र मुखमनुपादायैव तद्धर्मिकाहार्यनिश्चयविषयीभूतः उपमानाभेदप्रतीतिरध्यवसीयत इत्यतिशयोक्तिः । अनुपात्तविषयधर्मिकाहार्यनिश्चयविषयीभूतं विषय्यभेदताद्रूप्यान्यतरत् रूपकातिशयोक्तिः ।

**मुखेनेति** । अत्र मुखे उत्कर्षं प्रतिपादयितुं तत्कर्तृकचन्द्रकमलोभयकर्मकजयरूपस्यैकस्य धर्मस्यान्वयात् तुल्ययोगिता । गम्यसादृश्यनिमित्तकानेकान्यतरमात्रसम्बद्धैकचमत्कारिधर्मवत्त्वं **तुल्ययोगिता** ।

**निशीति** । निशारूपाधिकरणावच्छेदेन प्रकृताप्रकृतयोः मुखचन्द्रयोः हर्षरूपैकधर्माभिसंबन्धात् दीपकमलंकारः । गम्यसाम्यनिमित्तक प्रकृताप्रकृतोभयान्वय्येकसाधारणधर्मवत्त्वं **दीपकम्** ।

## चित्रमीमांसा

'त्वन्मुख एवाहं रज्यामि चन्द्रे एव चकोरो रज्यते' इति प्रतिवस्तूपमा।

'दिवि चन्द्रः भुवि त्वन्मुखम्' इति दृष्टान्तः।

'मुखं चन्द्रश्रियं बिभर्ति' इति निदर्शना।

'निष्कलङ्कं मुखं चन्द्रादतिरिच्यते' इति व्यतिरेकः।

## तत्त्वालोकः

त्वन्मुख इति। अत्र द्वयोर्वाक्ययोरेकवाक्यतासंपादनाय एक एव धर्मः वस्तुप्रतिवस्तुभावेन निर्दिष्ट इति प्रतिवस्तूपमा। तल्लक्षणं च सादृश्यपर्यवसायि वाक्यद्वयोपात्तैकधर्मवत्त्वम्।

दिवीति। सादृश्यप्रतिपत्तये बिम्ब–प्रतिबिम्बभावापन्नधर्मद्वयं निर्दिश्यत इति दृष्टान्तालंकारः। तल्लक्षणं च–गम्यसाम्यनिमित्तक बिम्बप्रतिबिम्बभावापन्नधर्मद्वयवत्त्वम्।

मुखमिति। अत्र चान्द्रमस्याः श्रियः धारणं मुखे नोपपद्यत इत्यन्वयानुपपत्तिमूलकतया उपमानधर्मस्य उपमेये आरोपः क्रियते। उपमेयवाक्यार्थे उपमानवाक्यार्थैक्यारोपः निदर्शना।

निष्कलंकमिति। अत्र सकलंकचन्द्रावधिक उत्कर्षः निष्कलङ्के मुखे वर्ण्यत इति आधिक्यम् उपमानादुपमेयस्येति व्यतिरेकः। तल्लक्षणं च–उपमेयोत्कर्षोपमेयापकर्षतदनुभयान्यतमप्रतीतिपर्यवसायिभेदवर्णनमिति।

चित्रमीमांसा

'मुखं नेत्राङ्करुचिरं स्मितज्योत्स्नोपशोभितम्' इति समासोक्तिः।

'अब्जेन सदृशं वक्त्रं हरिणाहितशक्तिना' इति श्लेषः।

'त्वन्मुखेन समं चन्द्रो निशासु हृष्यति' इति सहोक्तिः।

'मुखस्य पुरतश्चन्द्रो निष्प्रभः' इति अप्रस्तुतप्रशंसा।

तत्त्वालोकः

**मुखं नेत्रेति**। अत्र रुचिरनेत्रस्मिताभ्याम् उपशोभिते मुखे वर्ण्यमाने अङ्कज्योत्स्नारूपविशेषणमात्रसाम्यात् अप्रकृतयामिनीनाथवृत्तान्तः प्रतीयत इति समासोक्तिः। विशेषणमात्रसाम्यगम्याप्रस्तुतवृत्तान्तत्वम् **समासोक्तिलक्षणम्**।

**अब्जेनेति**। अत्र अब्जेन हरिणाहितशक्तिनेत्यादौ अब्जहरिपदाभ्यां कमलचन्द्रयोः हरिण-सूर्ययोश्च प्रतीतेः श्लेषः। तेन प्रतीतयोः कमलचन्द्रयोः मुखस्य चोपमा अवगम्यते। सादृश्यप्रयोजकनानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकधर्मवच्छब्दविन्यासः इति **श्लेषलक्षणम्**।

**त्वन्मुखेनेति**। अत्र उपमेयसाहित्येनोपमाने हर्षरूपधर्मसंबन्धः अभिधीयते इति सहोक्तिः। यद्यपि उपमेयस्य प्राधान्यं उपमानस्य अप्राधान्यं यथा भवेत् तथा उदाहर्तव्यम्। तथापि आर्थं प्राधान्यं मुखस्यास्त्येवेति न दोषः। एवं च गुण-प्रधानभावावच्छिन्नयोरर्थयोः चमत्कारजनकः सहार्थसंबन्धः **सहोक्तिलक्षणम्**।

**मुखस्येति**। अत्र अप्रकृतस्य चन्द्रस्य नायिकामुखसंमुखं शोभाराहित्यस्य प्रकृतनायिकामुखसौन्दर्यातिशयपर्यवसितत्वेन अप्रस्तुतप्रशंसा। प्रस्तुत-

## चित्रमीमांसा

एवमुक्तानेकालंकारविवर्तवती इयमुपमा ॥

तदिदं विश्वं चित्रं ब्रह्मज्ञानादिवोपमाज्ञानात् ।
ज्ञातं भवतीत्यादौ निरूप्यते निखिलभेदसहिता सा ॥

## तत्त्वालोकः

वृत्तान्तावगतिपर्यवसाय्यप्रस्तुतवृत्तान्तवर्णनम् इति **अप्रस्तुतप्रशंसालक्षणम्** । एवं च एषु उदाहरणेषु सादृश्यप्रतीतिं विना चमत्कार एव नोपजायत इति अवधेयम् ।

एवं चोपमासमाश्रयणेन अनेकालंकाराणां प्रतिष्ठा इति प्रकृतमुपसंहरति–**एवमिति** । एवम्–उक्तरीत्या, इयम्–उपमा, उक्ताः अनेके ये अलंकाराः तदात्मकाः ये विवर्ताः अन्यथात्वं गताः तद्वती–तदधिष्ठानभूता । 'अत–त्वतोऽन्यथाभावो विवर्तः' इति भामतीव्याख्यायां **कल्पतरौ** । अनेकालंकाराणाम् उपमाविवर्तत्वोक्तिरद्वैतवासनया ।

वस्तुतस्तु एतत्प्रकरणोपक्रमोक्तरीत्या, सर्वालङ्काराणां सादृश्यप्राणत्वात् तदनवगमे इतरालङ्काराणां प्रसर एव न संभवतीत्येतावन्मात्रमत्र विवक्षितं प्राचामित्यवधेयम् ।

अद्वैतनये तु अविद्याद्वितयसचिवस्य ब्रह्मणो विवर्तरूपं चराचरात्मकमिदं प्रपञ्चजातमित्युपगम्यते । अतश्च ब्रह्मणि ज्ञाते तद्विवर्तभूतस्य निखिलप्रपंचस्य ज्ञानमिव उपमास्वरूपे ज्ञाते तद्विवर्तभूतानामर्थालकाराणां ज्ञानं भवतीति भावः । तदेतदाचष्टे–**तदिदमिति** ।

## चित्रमीमांसा

### उपमापूर्वपक्षः

**अस्यास्तावदेवं लक्षणमाहुः ।**

**उपमानोपमेयत्वयोग्ययोरर्थयोर्द्वयोः ।**
**हृद्यं साधर्म्यमुपमेत्युच्यते काव्यवेदिभिः ॥**

तत्त्वालोकः

तदिदं–प्रत्यक्षं विश्वं चराचरात्मकं जगत्, चित्रं परश्शतनामरूप-विभागास्पदतया अद्भुतं ब्रह्मज्ञानात् यथा ज्ञातं भवति तथा इदं चित्रं सहृदयहृदयावर्जकं अर्थालंकारजातम्, उपमाज्ञानात ज्ञातं भवति । इति निखिलभेदसहिता–समस्तप्रभेदयुक्ता, सा उपमा आदौ–प्रथमतः निरूप्यते परमतनिराकरणपूर्वकं उपमालंकारसिद्धान्तलक्षणम् उच्यते मयेति शेषः ॥

दूष्यं हि पक्षं प्रथममनूद्य तद्दूषणपुरस्सरं सिद्धान्ताभिधानं युक्तमिति मत्वा आदौ चिरन्तनालंकारिकोक्तमुपमालक्षणमवतारयति–**अस्यास्तावदिति** । **वस्तुयाथात्म्यजिज्ञासवस्सर्वे** लक्षणमुखेनैव तद्याथात्म्यमवबुध्यन्ते । लोकेऽपि व्यवहारानुगुणेन लक्षणेन सुशिक्षिताः पण्डिताः पामराश्च विप्रतिपन्नेषु लक्षणा-नुसारेणैव वस्तुनस्तत्त्वं निर्णयन्तीति विदितचरमेतत् । अत एवाभियुक्ताः प्राहुः—

'मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणा'दिति ॥

तेषां चाभिमतं लक्षणं किमित्याह—**उपमानेति** । उपमानं च उपमेयं च उपमानोपमेये, तयोर्भावः उपमानोपमेयत्वं, तद्योग्ययोः तत्त्वेनाभ्युपेतुमर्हयो-रित्यर्थः, तदर्हता च सादृश्यप्रतियोग्यनुयोगिताश्रयत्वमेव, अत्र 'द्वन्द्वान्ते श्रूय-माणस्य प्रत्येकमन्वयः' इति न्यायेन त्वप्रत्ययार्थस्योपमाने उपमेये च अन्वयः ।

चित्रमीमांसा

**कविसमयप्रसिद्ध्यनुरोधेनोपमेयत्वयोग्ययोरेव साधर्म्यम् उपमा, न त्वतथाभूतयोः ।**

तत्त्वालोकः

एतादृशयोरर्थयोः वस्तुनोः, हृद्यं–हृदयस्य प्रियमित्यर्थे 'हृदयस्य प्रियः' [पा. सू ४ ४-९ ] इति हृदयशब्दात् 'यत्'प्रत्ययः । हृदयस्य हृल्लेखयदण्लासेषु' [पा. सू ६–३-५०] इति हृदयशब्दस्य हृदादेशश्च । तथा च हृद्यमित्यस्य चमत्कारजनकमित्यर्थः । साधर्म्यम्–समानेन धर्मेण सम्बन्धः, यद्वा–साधारणधर्मप्रतियोकस्सम्बन्धः । 'उपमा' इति, काव्यवेदिभिः–सहृदयैरित्यर्थः । 'वैकटिका एव हि रत्नतत्त्वविदः सहृदया एव हि काव्यानां रसज्ञाः' इति हि अभियुक्तैः उच्यते । तथा च चमत्कारजनकसाधारणधर्मप्रतियोगिकः उपमानोपमेयोभयाऽनुयोगिकस्संबन्धः उपमेति लक्षणं फलति ।

यथा–'चन्द्र इव मुखम्' इत्यत्र आह्लादकत्वरूपचमत्कारजनकसाधारणधर्मप्रतियोगिकः चन्द्रमुखोभयानुयोगिकस्सादृश्यात्मकस्संबन्धो ज्ञायत इति लक्षणसमन्वयः ।

'लक्षणघटकदलानां अतिव्याप्त्यादिवारकतया सार्थकत्वमि'त्युक्त्यनुसारेण योग्यपदोपादानमतिव्याप्तिवारकमित्याह—**कविसमयेति** । काव्यं कर्तुं विचारयितुं च ये जानन्ति ते कवयः तेषां समयः सङ्केतः कविसमयः, तस्मिन् या प्रसिद्धिः–पारम्पर्येण व्यवहारः तदनुसारेण यः उपमानत्वयोग्यः यश्च उपमेयत्वयोग्यः तयोरेव यत् साधर्म्यं समानधर्मसंसर्गः स एवोपमेति । योग्यतान्तोपादानात्तदभाववतोः न उपमेत्यभिप्रेत्याह–**नत्विति** ।

## चित्रमीमांसा

**अत एव 'कुमुदमिव प्रसन्नं मुखम्' इत्यादि नोपमा। तथाभूतयोरपि वस्तुत्व-द्रव्यत्वादिकृतमहृद्यं**

## तत्त्वालोकः

**अयं भावः**—योग्यता नाम एकस्मिन् अपरवस्तुसंबन्धार्हता सा चात्र सादृश्यप्रतियोग्यनुयोगित्वरूपा, तादृशधर्मविशिष्टयोः साधर्म्यं साधारण-धर्मसंबन्धः उपमा। यद्वा—इदमनेन सदृशम् इत्येवंरूपाबाधितव्यवहार-विषययोः कविपरम्पराप्रसिद्धयोः यत् साधर्म्यं समानधर्मप्रतियोगिकः सम्बन्धः, सा उपमेति पर्यवस्यति॥

तेन 'यत्र उपमानोपमेयभावयोग्यतास्ति तत्र 'पितेव पुत्रस्सुगुणस्सुरूपः' इत्यादौ कार्यकारणयोरपि उपमा अस्त्येवेति भावः। यत्र 'आयुः घृत'मि-त्यादौ उपमानोपमेययोग्यता नास्ति तत्र नोपमा, किन्तु हेत्वलङ्कारविशेषः।

किंच—यत्र कार्यकारणभाव एव सम्बन्धतामनुभवति तत्र 'आयुर्घृत'-मित्यादौ इयं न भवति। किन्तु कार्यकारणभावमुपगतयोः केनचित्समान-धर्मेण सम्बन्धे विवक्षिते इयं भवत्येवेति बोध्यम्॥

तद्योग्यताऽभाववत्स्थलं प्रदर्शयति—**अत एवेति**। यद्यपि कुमुदे मुखे च आह्लादकरत्वं समानमनुभूयते, अथापि मुखनिष्ठसादृश्यप्रतियोगि-त्वेन कुमुदम्, कुमुदानुयोगिकसादृश्याश्रयत्वेन मुखं च न कविसमयसिद्ध-मिति कुमुदमुखयोः नोपमानोपमेयभावः॥

उपमानोपमेयत्वयोग्ययोरपि अचमत्कारिणं धर्ममादाय नोपमेत्याह—**तथाभूतयोरपीति**। तथाभूतयोरपि कविसम्प्रदायसिद्धयोरपि वस्तुनोः

चित्रमीमांसा

**साधर्म्यं न तथा । किन्तु हृद्यमेव कान्तिमत्वादिकम् ।**

तत्त्वालोकः

वर्तमानम्, अहृद्यं चमत्काराऽजनकं वस्तुत्वद्रव्यत्वादिकृतं वस्तुद्वय साधारणं यत् साधर्म्यं–समानेन धर्मेण सम्बन्धः सः, न तथा–नोपमाव्यपदेश भाक् । अत एव साधर्म्ये हृद्यमिति विशेषितमित्यभिसन्धिः ॥

अत्र उपमादीनामलङ्काराणां काव्यशोभाकरत्वम्. काव्यशोभातिशय-हेतुत्वमिति पक्षद्वयम् । तयोराद्यं दण्डिनः अभिमतम् । उक्तं च काव्यादर्शे--**दण्डिना**–द्वितीयपरिच्छेदोपक्रमे—

'काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते । [का० २-१] इति ।

द्वितीयं तु आचार्यदण्डिन अभिमतं अनभिनन्दतेव **वामनेन** स्वकीये **काव्यालंकारसूत्रे** तृतीयेऽधिकरणे --

'कव्यशोभायाः कर्तारो धर्माः गुणाः । तदतिशयहेतवस्त्वलंकाराः' [वा. का०. सू. ३. प्र०. अ. १-२सू] इति लक्षितम् ।

**मम्मटस्तु** —

ये रसास्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥

उपस्कुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ [का. प्र. ]

इत्यभिधाय गुणानां समवायवृत्त्या काव्यात्मभूतरसोपस्कारत्वम्, अलंकाराणां तु संयोगवृत्त्या काव्यशरीरभूतशब्दार्थोपस्कारकत्वमिति अभिप्रैति ।

## चित्रमीमांसा

**सर्वोऽपि ह्यलंकारः कविसमयप्रसिद्ध्यनुरोधेन हृद्यतया काव्यशोभाकर एव अलंकारतां भजते ॥**

### तत्त्वालोकः

ग्रन्थकृतस्तु अलंकाराणां दण्डद्यादिवत्काव्यशोभाकरत्वम् । गुणानां तु तदतिशयाधायकत्वं चेष्टम् । तदेतदाह— **सर्वोऽपीति** । अपिरवधारणे । अलंकार सामान्यमेवेत्यर्थः । काव्यशोभाकर एव – रसात्मनः काव्यस्य सौन्दर्यजनका एवेत्यर्थः । तेन काव्यशोभातिशयाधायकत्वं गुणानामेवेति फलति । तथाच अनियमेन रसोपस्कारकत्वम् , रसावृत्तित्वे सति रसोपस्कारकत्वम्, रसावृत्तित्वे सति रसव्यभिचारित्वम् इति लक्षणत्रितयमलंकाराणाम् ।

एतेनैतदुक्तं भवति - काव्यात्मभूतरसानुगुण्येन योजितस्य शब्दार्थयुगलस्य स्वतो मनोज्ञस्यापि कान्तामुखस्य कटककुण्डलनासामौक्तिकताटङ्काद्यभावे, न सुशोभिता तथा निरलंकृतस्य तस्येति तच्छोभाधायकत्वमलंकाराणामिति ।

उक्तं च —

'रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनितामुखम् ॥' इति ।

**वाल्मीकिनाप्यादिकविना**–सूर्यविरहितामुत्तरां दिशमवलोक्य अभिहितम्—

'विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते॥' इति ।

इत्थं शोभाकराणामेवार्थविशेषाणां उपमादीनामलंकारता, अन्यथा तु न

अतः 'गोसदृशो गवयः' इति नोपमा। 'गौर्वाहीकः' इति न रूपकम्। 'स्थाणुर्वा पुरुषो वे'ति न सन्देहः। 'इदं रजतम्' इति न भ्रान्तिमान्। 'नायं सर्पः' इति नापह्नुतिः। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति न पर्यायोक्तम्। 'पर्वतो वह्निमान्' इति नानुमानम्। 'स देवदत्त' इति न स्मरणम्। 'तस्थस्थमिपांतान्तंतामः इति' न यथासंख्यम्। 'पुत्रेण सह आगतः पिता' इति न सहोक्तिः। 'श्वेतो धावति' इति न श्लेषः। इत्याद्यूह्यम्॥

अत्रेदं विचार्यते-'द्वयोः' इति विशेषणम् इह किमर्थम्? स्वस्य स्वेनैव साधर्म्यवर्णनात्मकस्यानन्वयस्य



इति प्रत्युदाहरणमुखेन प्रदर्शयति--- अत इति। प्रथमे गोगवययोः प्रतीतस्य सादृश्यस्य, द्वितीये गोवाहीकयोः अभेदस्य, तृतीये स्थाणुर्वा पुरुषो वेति सन्देहस्य, चतुर्थे शुक्तौ रजतभ्रमस्य, पञ्चमे रज्जौ नायं सर्प इति निषेधस्य, षष्ठे देवदत्तः रात्रौ भुङ्क्ते इति भङ्गयन्तरस्य, सप्तमे साध्यसाधनभावस्य, अष्टमे स्मृतेः, नवमे क्रमिकान्वयस्य, दशमे साहित्यस्य, एकादशे विनाभावस्य, इत्येतेषाम् उपमादिप्रयोजकत्वेऽपि चमत्कारित्वाभावात् तत्तदलंकारोपयोगित्वं नास्तीति भावः॥

दूष्यं लक्षणमनूक्तम्। इदानीं तद्घटकदलानामेकैकं व्यर्थमित्युपपादयितुम् उपक्रमते—अत्रेदमिति। अत्र-एतल्लक्षणघटकदलेषु इत्यर्थः; इदम्-सार्थक्यमस्ति न वेति, विचार्यते-चिन्त्यते इत्यर्थः।

चित्रमीमांसा

**व्युदासार्थमिति चेत्, एवमपि उपमानस्योपमेयत्वकल्पनात्मके प्रतीपे, द्वयोः पर्यायेण उपमेयत्वकल्पनात्मिकायाम् उपमेयोपमायां चातिव्याप्तिः ॥**

तत्त्वालोकः

पूर्वोक्तलक्षणे द्वयोरिति अर्थविशेषणमुपात्तं, तत् किमर्थम् ?

यदि 'उष्णोऽग्निः' इतिवत् स्वभावकीर्तनार्थं' तदा—इदं लक्षणे घटकं न भवेत् । लक्षणघटकदलानां सम्भवमात्रेण सार्थक्यानुपगमात् । किन्तु सम्भवव्यभिचारयोः सतोः तदुपगमात् । उक्तं च—

'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति ।

अत एव 'नीलोत्पलम्' इत्यादौ विशेषणसार्थक्यम् । यतस्तत्र उत्पलविशेषणस्य नैल्यस्य उत्पले संभवः । रक्तोत्पलादौ नैल्यस्य व्यभिचारश्चेति रक्तोत्पलव्यावर्तकतया नीलोत्पले सम्भवाच्च सार्थक्यम् । अत एव हि तयोः विशेषणविशेष्यभावो घटते । अव्यावर्तकस्य अतिव्याप्तस्य वा अंशस्य लक्षणे उपादानं कथं घटते इति प्रश्नाशयः ।

यद्यपि—'मुखं चन्द्र इव' इत्यत्र द्वयोरित्यंशस्य संभवः । 'मुखं मुखमिव' इति अनन्वये व्यभिचारश्चेति तद्विशेषणस्य सार्थक्यं सम्भवतीति कैमर्थ्यापादनं न युक्तमिति चेत्तथाऽपि प्रतीपे उपमेयोपमायां च अतिव्याप्ति दुर्वारेत्याह—**स्वस्य स्वेनेति** । 'गगनं गगनाकारम्' इत्यादौ गगनत्वावच्छिन्नप्रतियोगिताकसादृश्ये गगनत्वावच्छिन्नानुयोगिताकत्वमस्तीति तत्रातिव्याप्तिवारणाय द्वयोरिति अर्थविशेषणं सार्थकमिति चेत् अन्यत्राव्याप्तिः इत्याह—**एवमपीत्यादिना** । एवमपि—अनन्वयव्युदासफलकत्वे सत्यपीत्यर्थः ।

चित्रमीमांसा

तयोः सादृश्यवर्णनसत्वादुपमात्वेन संग्राह्यत्वे तथैवानन्वयोऽपि संग्राह्यः स्यादिति व्यर्थं द्वयोरितिपदम् ।

तत्त्वालोकः

एवंचालक्ष्यत्वाभिमते सर्वत्र अतिव्याप्तिपरिहारः विशेषणस्य आवश्यकः । अस्य तु क्वचिदेव परिहारो दृश्यत इति सर्वात्मना न साफल्यमिति भावः॥

व्यभिचाराभावमेवोपपादयति – उपमानेत्यादिना । मुखमिव चन्द्रः इति प्रतीपोदाहरणे, 'धर्मोऽर्थ इव अर्थो धर्म इवे'ति उपमेयोपमोदाहरणे च द्वयोरेवोपमा परिकल्प्यत इत्यतिव्याप्तिः प्रसज्यत इति परिहाराभावः।

न च–'मुखमिव चन्द्रः' इति प्रतीपेऽतिव्याप्तिः । यतोऽत्र उपमानोपमेयत्वयोग्ययोरित्युच्यते । तत्र च मुखस्य न उपमानत्वयोग्यता, चन्द्रस्य न उपमेयत्वयोग्यतेति वाच्यम् ।

यतश्च न्यूनगुणस्योत्कर्षप्रतिपादनायैव ह्यलंकारच्छायानुसरणम्, प्रतीपेऽपि लोकप्रसिद्धवैपरीत्येन उपमापरिकल्पनम् उपमेयोत्कर्षायैव भवतीति मुखचन्द्रयोरुपमानोपमेयत्वार्हताऽस्त्येव । अत एव तदुपादानं कुमुदमिव मुखमित्यादिव्यावर्तनफलकत्वेन इति प्रागुपपादितम्। एवमुपमेयोपमायामपि द्वितीयवाक्ये प्राथमिकवाक्योपात्तोपमानस्य उपमेयत्वाभिधानमन्यसदृशनिषेधार्थमिति उपमेयतार्हताऽस्त्येवेत्युभयत्रातिव्याप्तिस्तदवस्थैवेति भावः ॥

यदि तु – प्रतीपे वैपरीत्यकल्पनम्, अन्यसदृशनिषेधश्च नोपमाबहिर्भावं साधयितुमलम्, अपि तु तद्विशेषत्वसाधकमेवेति तयोर्लक्षणस्य व्यापनम् इष्टमिवेति चेत् सादृश्यं वर्ण्यमानमनन्वयेऽप्यविशिष्टमिति तस्याऽपि संग्राह्यत्वमेवेति 'द्वयोः' इति विशेषणमनुपादेयमेवेत्याह–**तयोरिति** ॥

**तत्त्वालोकः**

**अयं भावः**–प्रतीपोपमेयोपमयोः यथा उपमानोपमेययोर्भेदः वास्तव स्तथा भेदाऽभावेऽपि 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति विषयवाक्यमादाय **शारीरकशङ्करभाष्ये**–आकाशस्य एकत्वेन श्रूय माणः उपमानोपमेयभावो न संभवतीत्याशङ्क्य बाह्याकाशहृदयाकाशयो र्भेदमारोप्य पूर्वपक्षानुरोधेन उपमानोपमेयभावस्समर्थितः। सिद्धान्तेऽपि अगतिका हि इयं गतिः यत्काल्पनिकभेदाश्रयणम् इत्युक्तम् **शंकराचार्यैः**। तद्व्याख्यानसमये च **भामत्यां वाचस्पतिमिश्रैः** [दहराधिकरणे]

तेन तस्योपमेयत्वं रामरावणयुद्धवत्।
अगत्यां भेदमारोप्य, गतौ सत्यां न युज्यते॥ इत्युक्तम्।

एवं च 'गगनं गगनाकारं' इत्यत्र भेदारोपेणोपमेतिपक्षे द्वयो स्सादृश्यम् अविशिष्टमिति तयोरिव अयमपि संग्राह्य एवेति॥

**वस्तुतस्तु**-वास्तवो भेदो यत्र तत्रोपमा, यत्र वा काल्पनिको भेदः तत्राऽपि अन्यसदृशनिषेधाविवक्षायामुपमैव। परं तु अन्यसदृशनिषेधविवक्षायां अनन्वय इति तत्र न द्वयोस्सादृश्यमिति नातिव्याप्तिः। तदर्थमेव द्वयोरिति पदं सार्थकम्। अत एव अनन्वये ग्रन्थकृताप्यग्रे काल्पनिक भेदो निराक्रियत इति द्वयोरिति विशेषणवैयर्थ्योपपादनं न क्षोदक्षममिति प्रतीति॥

एतल्लक्षणघटकस्य द्वयोरितिविशेषणस्य वैयर्थ्योपपादनेनैव काव्यप्रकाशो क्तलक्षणघटकं भेदग्रहणमपि प्रतीपाद्यतिव्यापकत्वाद्व्यर्थमिति न पुनर्वक्तव्य

चित्रमीमांसा

एतेन साधर्म्यपमा भेदे' [का.प्र.उ.१०.१२५] इति काव्यप्रकाशोक्तलक्षणेऽनन्वयव्युदासाय कृतं भेदग्रहणमपि प्रत्युक्तम् ॥

तत्त्वालोकः

मित्याह–एतेनेति। काव्यप्रकाशकृता 'साधर्म्यमुपमा भेदे' इति सूत्रितम्। अस्यायमर्थः–उपमानोपमेययोः भेदप्रतीतौ यस्समानधर्मसम्बन्धस्स उपमेति। अत्र साधर्म्यपदम् आयुर्घृतमित्यादिकार्यकारणभावप्रतीतिस्थले, मुखं चन्द्रं मन्ये इत्याद्युत्प्रेक्षासु चातिव्याप्तिवारणाय। एवं च साधर्म्यग्रहणादुपमानोप मेययोराक्षेपः। 'नितम्बिनी सैव नितम्बिनीव' इत्यत्रापि साधर्म्य संभवात् अतिव्याप्तिः तद्वारणाय भेदग्रहणम्। अनन्वये च एकस्यैवोप मनोपमेयभावः न पुनर्भिन्नयोरिति नातिव्याप्तिः इति **विद्याचक्रवर्तिनः** काव्य प्रकाशव्याख्यातुराशयः ॥

यदि तु संभवत्साधर्म्यं, कल्पितसाधर्म्यं चेति साधर्म्यं द्विविधं, तत्रानन्वये साधर्म्यं कल्पितमिति तद्वारणाय भेदग्रहणप्रयुक्तिः घटत इति शङ्क्यते तदा वैषम्यं प्रसज्यते।

तथाहि–स्वस्य स्वेन साधर्म्यासंभवात् अनन्वयस्य व्यवच्छेदः कृतः। न पुनः प्रतीपोपमेयोपमयोः। यतः प्रतीपोपमेयोपमयोः व्यव च्छेदः न कृतस्तस्मात् ज्ञायते तयोस्संग्राह्यत्वमिति।

एतेनेदमुक्तं भवति—प्रतीपेऽप्रकृतानुयोगिकत्वम्, उपमेयोपमायां प्रकृताऽप्रकृतविषयोपमाद्वयरूपत्वमिति नालंकारान्तरत्वतमिति योः संग्रा ह्यत्वमिति। अत एव अनन्वयो व्युदस्तः, न पुनः प्रतीपविशेषोपमेयोपमे

चित्रमीमांसा

न हि संभवत्साधर्म्यवर्णन एवोपमात्वम्। येन स्वस्य स्वेन साधर्म्यासंभवादनन्वयस्य व्यवछेद्यत्वम् इतरयोः सङ्ग्राह्यत्वं स्यात्। तथात्वे

'हंसीव धवला कीर्तिः स्वर्गङ्गामवगाहते'

इत्यादौ कविकल्पितसाधर्म्योपमायां अनुपमात्वप्रसङ्गात् ॥

तत्त्वालोकः

इति। यद्येवं तदा काल्पनिकं भेदमादाय अनन्वयोऽपि संग्राह्यः न पुनर्व्युदस्य इति वैषम्यमिति। तदेतन्मनसि निधायाह–**न हीति**।

**ननु** संभवत्साधर्म्ययोरेवोपमेति प्रकाशकाराभिप्रायः कथमवगतः? इति चेदुच्यते। 'राकायाम् अकलंकं चेत्' इत्यादौ 'उभौ यदि व्योम्नि' इतिवत् कल्पितोपमात्वे संभवत्यपि 'यद्यर्थोक्तौ च कल्पनम्' इति अतिशयोक्तिविशेषतोपगमात् संभवत्साधर्म्ययोरुपमा, असंभवत्साधर्म्ययोः अतिशयोक्तिप्रभृतीति।

साधर्म्यसंभव एवोपमेत्युपगमे यत्रालंकारत्वप्रसक्तिर्नास्ति तत्रोपमाप्रतीतावप्यनुपमात्वं प्रसज्यत इत्यव्याप्तिमुद्भावयति–**तथात्वेति**। उक्तोदाहरणे उपमाने धावल्यसद्भावेऽपि उपमेये तत्सम्भवो नास्ति। अथापि कविसमयानुरोधेन क्वचित्सत्यासत्यगवेषणस्य परित्यागः आलंकारिकसंमतः। अतोऽत्र उपमात्वमिष्यते। न चात्रान्यमालंकारमुपलभामहे। अतश्च संभवत्साधर्म्य एवोपमेति विषयविभागध्वननमयुक्तम्। अत एव काव्यादर्शकारेण दण्डिना—

तत्त्वालोकः

चन्द्रबिम्बादिव विषं चन्दनादिव चानलः ।
परुषा वागितो वक्त्रादित्यसंम्भावितोपमा ॥ [का.द.२-३९]

इत्युपमा लक्षिता उदाहृता च ।

न चैवं सति–

' निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधाराः
दिनार्धभाजः परिवेषिणोऽर्कात् ॥

इति भामहीयेऽसम्भवोदाहरणेऽतिव्याप्तिः । तत्रापि तथा कल्पयितुं शक्यत्वादित्यसंभवस्य अदोषता प्रसज्येत इति वाच्यम् । युक्त्य निबद्धस्यापि असंभवात् दोषतैव । उक्तोदाहरणे च अम्बुधाराणां ज्वलनम् , विवस्वतः सकाशात् पतनं च कल्पितमपि संभवदिव नानुभूयते । नैवमत्र, किंतु प्रकृतस्य राज्ञः वक्त्रात् परुषवाचः असंभवं द्रढयन्नेव असंभावितमेवोपमानं कविः कल्पयति स्म इति बाधकं न किमपि ॥

किंच काव्यप्रकाशोक्तलक्षणस्य—

' मुखेन निष्कलंकेन न समस्तव चन्द्रमाः '

इति व्यतिरेकोदाहरणे निषेध्यत्वेन साधर्म्यप्रतीतेः अतिव्याप्तिः । तथा ' ढुंढुंकृत्वा मरिष्यसि ' इति तदुदाहृतलुप्तधर्मोपमानोपमाय अतिव्याप्तिः । तत्र साधर्म्यानुयोगिनिषेधेन सादृश्यस्यापि निषिद्ध प्रायत्वात् ॥

चित्रमीमांसा

किंच, सत्यामप्युपमानोपमेयत्वयोग्यतायां, सत्यपि हृद्यत्वे लिङ्गवचनभेदादिदुष्टायामुपमायाम्

'हंसीव धवलश्चन्द्रः सरांसीवामलं नभः'

इत्यादिरूपायामतिव्याप्तिः ।

तत्त्वालोकः

वस्तुतो विचार्यमाणे–लक्षणे उपमानोपमेयत्वयोग्ययोरित्यर्थविशेषणोपादानादेव प्रतीपोपमेयोपमयोः व्यावृत्तिर्भवति, प्रतीपे उपमेयत्वयोग्यस्य उपमानत्वं परिकल्तिम्। उपमेयोपमायामपि द्वितीये वाक्ये उपमेयत्वयोग्यस्यैव उपमानत्वं परिकल्पितमिति तद्घटकयोः कविसमयसिद्धोपमानत्वयोग्यता नास्त्येवेति अतिव्याप्तेरभावान् अनन्वयव्युदासार्थं **प्रकाशकृता** कृतं भेदग्रहणं युक्तमित्यभ्युपेयम् ।

सत्यम्; अथापि–

अहमेव गुरुः सुदारुणाना-
मिति हालाहल मा स्म तात दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

इत्यादि प्रतीपविशेषे उपमेयत्वयोग्येष्वेव दुर्जनवचस्सु साधर्म्यं वर्ण्यत इति अतिव्याप्तिरिति तद्योग्यतोपादानेनाऽपि न निस्तार इति विभावनीयम् ।

पुनरपि सिंहावलोकनन्यायेन 'उपमानोपमेयत्वयोग्ययो'रिति लक्षणघटकस्य अस्यैव विशेषणस्य उपमाभासेषु उपमाध्वनौ चातिव्याप्तिरित्याह—**किंचेति । हंसीवेति ।**

### चित्रमीमांसा

उदाहरिष्यमाणे चोपमाध्वनावतिव्याप्तिः ॥

### तत्त्वालोकः

'हंसीव धवलश्चन्द्रः, सरांसीवामलं नभः ।
भर्तृभक्तो भटः श्वेव, खद्योतो भाति भानुवत् ॥'

इति दण्डिना काव्यादर्शे [काव्यादर्शे २-५५] यथाक्रमम् उपमानान लिङ्गभेदः, न्यूनत्वं, अधिकत्वं च सहृदयानां वैरस्यावहमित्यभिप्रायेण प्रत्युदाहृतम् । एषु कस्यापि वस्तुनः उपमानार्हता नास्तीति न वक्तुं युज्यते । अथापि लिङ्गभेदादिदुष्टत्वादुपमाभासत्वमिति एवमादौ अतिव्याप्तिः ॥

वस्तुतस्तु-'जाति-प्रमाण-धर्मन्यूनता उपमानस्य हीनत्वम् । एतेनाधिकत्वं व्याख्यातम्' इति काव्यालंकारसूत्रे वामनोक्तदिशा [का.सू. १०-११] दुष्टत्वे उपमानत्वयोग्यतासत्त्वेऽपि अहृद्यत्वादुपमानत्वमेव-तादृशेषु न निष्पद्यते । अतश्च लक्षणम् नातिव्याप्तमिति वक्तुमप्यलम् ॥

उदाहरिष्यमाणे चेति ॥

'किरति प्रकरं गवां प्रकामं
सुमनस्स्वच्छतरं निधौ कलानाम् ।
कनिचित्कलयन्ति यत्प्रबोधं
कतिचिन्नेति स तत्स्वभाव एव ॥'

इत्यत्र चन्द्रे किरणजालं साधारण्येन प्रसारयत्यपि कानिचित्पुष्पाणि विकसन्ति , नान्यानीत्येव विशेषो यथा तत्तत्पुष्पस्वभावकृत एव, न पुनश्चन्द्रकृतकिरणप्रसरणविशेषकृतः तथा सर्वेष्वपि शिष्येषु एकरूपतया गुरौ प्रवचनं

## चित्रमीमांसा

**न हि सोऽप्यलंकारः, अलंकार्यत्वात् । ब्राह्मण-श्रमणन्यायेन तत्र अलंकारध्वनिव्यपदेश इति सिद्धान्तात् ॥**

### तत्त्वालोकः

कुर्वन्त्यपि केचित् प्रगल्भन्ते नान्ये इत्येष विशेषः तत्तच्छिष्याधीतविषयधारण सामर्थ्यतदभावरूपांशकृतः, शिष्याणां गुरौ प्रतिपत्तितारतम्येन वेति उपमा ध्वन्यते । न चात्रोपमाया अलंकारता, ध्वन्यमानत्वेन अलंकार्यत्वात् । न चैतद्द्वारकं विशेषणं प्राचीनैर्लक्षणेऽनुप्रवेशितम् ॥

न च ध्वन्यमानेषु एतादृशेषु अलंकारत्वमिष्टम्, तथासति—'यत्र शब्दशक्त्या साक्षादलंकारं वाच्यं सत्प्रतिभासते स सर्वोऽपि वाच्यालंकारस्य विषयः । यत्र तु शब्दार्थशक्तिभ्यामन्यतरया वा आक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालंकाररूपं प्रतिभासते स ध्वनेर्विषयः ।' इति वाच्यप्रतीयमानयोरलंकारयोः विषयविभागप्रदर्शनं यत् आनन्दवर्धनाचार्यैः कृतं तदप्रयोजकं स्यात् । उक्तं च -'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा । ध्रुवं ध्वन्यङ्गता तासाम्' इति व्यज्यमानानामपि अलंकारादीनां ध्वनित्वमिति । तेन च ध्वन्यमानतादशायाम् उपमादीनां अलंकार्यत्वम् इत्युक्तं भवति । एवं चोक्तलक्षणम् उपमाध्वनावतिव्याप्तमिति भावः ॥

न चैवंतर्हि-ध्वन्यमानेषु उपमादिषु 'उपमालंकारो ध्वन्यते रूपकालंकारो ध्वन्यते' इति व्यवहारात् उपमादिध्वनिषु अलंकारतैवास्तु व्यवहारानुसारित्वाल्लक्षणप्रणयनस्येति शंक्यम्, तादृशव्यवहारस्य अन्यथोपपादितत्वात् एवमादौ नालंकारतेत्याह-**न हि सोऽपीति । अयं भावः**—यत्र उपमा ध्वन्यते रूपकं ध्वन्यते तत्र वस्तुतः उपमालंकारो ध्वन्यते रूपकालंकारो ध्वन्यते इति

## तत्त्वालोकः

ध्वनित्वसामानाधिकरण्येन अलंकारस्यापि ध्वनित्वाभिधानं न घटते विरोधात् । विरोधश्च सहानवस्थानलक्षणः । आत्मत्वकटकत्वादिवत् । ध्वनित्वं नियमेन व्यज्यमानेष्वेव, अलंकारत्वं च वाच्यवाचकेष्वेवेति नियमस्य दृष्टत्वात् ।

किंतु व्यज्यमानोपमारूपकादौ अलंकारध्वनिव्यपदेशः श्रमणे भूतपूर्वं ब्राह्मण्यमनुसंस्मृत्य यथा ब्राह्मणश्रमण इति व्यपदेशः तथात्रापि व्यज्यमान-तादशायाम् अलंकारत्वाऽभावेऽपि तस्यैवार्थस्य वाच्यतादशायां अलंकारता आसीदित्येतावता तद्व्यपदेशः । दृष्टान्तेऽपि श्रमणत्वावस्थायां न ब्राह्मण्यम् । ततः पूर्वमेव ब्राह्मण्यस्य निवृत्तेः । दार्ष्टान्तिकेऽपि तथाव्यपदेशस्योपपत्तेः सामानाधिकरण्यं नानुपपन्नं भवतीति अभिनवगुप्तपादादीनां मतमनुसृत्य तद्व्यपदेशोपपत्तिः प्रदर्शिता । उक्तं च लोचनकृता– 'यः पूर्वं क्वापि वाक्यार्थेऽलंकारभावमुपमादिरूपतयान्वभूत् । इदानीं तु अनलंकाररूप एव अन्यत्रगुणीभावाभावात् अपूर्वप्रत्यभिज्ञानबलादलंकारध्वनिरिति व्यपदिश्यते । ब्राह्मणश्रमणन्यायेन तद्रूपताभावेन तूपलक्षितं वस्तुमात्रमुच्यते [ध्व.लो.] इति । अमुमेवाभिप्रायं काव्यप्रकाशकारोऽपि — 'निरुपादानसंभारम्' इति शब्दशक्तिमूलालंकारध्वनिमुदाहृत्य 'अत्र व्यतिरेकस्य अलंकार्यस्यापि ब्राह्मण-श्रमणन्यायेन अलंकारता' [का. प्र. ] इत्याह ।

वस्तुतस्तु–वाच्यतादशायां यस्यार्थस्य अभिव्यक्तौ उपमाद्यलंकार-व्यपदेशस्तस्यैवार्थस्याभिव्यज्यमानत्वे सादृश्यमूलकस्तदलंकारध्वनिव्यपदेशः ।

रसगङ्गाधरकृतस्तु–उपमाध्वनिनिरूपणप्रसङ्गे 'एषैव च यदा सक-लेन वाक्येन प्राधान्येन ध्वन्यते तदा परिहृतालंकारभावा ध्वनिव्यपदेशहेतुः ।

## चित्रमीमांसा

यदि च दुष्टादुष्टालंकार्यालंकारसाधारणोपमासामान्य-लक्षणमिति नोक्तातिव्याप्तिः, तदा 'उपमानोपमेयत्व-योग्ययो'रिति हृद्यमिति च व्यर्थम्। कविसमयसिद्धचभावादिदुष्टोपमाया अपि संग्राह्यत्वात् ॥

## तत्त्वालोकः

अस्यां च अलंकारव्यपदेशः कदाप्यलंकारभावमप्राप्तेषु मञ्जूषादिगतेषु कटकादिषु अलंकुर्वाणगतधर्ममात्रसंस्पर्शनिबन्धनः' इत्याहुः [रस.पु. २४५]।

एवं च एकत्र उपमाद्यलंकारभावमुपगतस्यैवार्थस्य अन्यत्र प्राधान्य-मनुभवितुं अशक्यत्वात् ब्राह्मणश्रमणन्यायस्य नैवंविधस्थलेषु प्रसक्तिः। अपि तु यत्र धर्मी अभिन्नस्सन् अवस्थान्तरमापद्यते तादृशस्थलेषु अयं न्यायः प्रसजति। एवंविधेषु तु स्वरूपयोग्यतासद्भावात् सादृश्याद्वा तद्व्यपदेशः उपपद्यते। विशेषस्तु उत्तरत्र अलंकारभूतोपमालक्षणव्याख्यावसरे वक्ष्यते। एतेन उपमाध्वनावतिव्याप्तिः प्रसज्यत एवेति भावः।

यदि तु उक्तं लक्षणं दुष्टादुष्टालंकार्यालंकारसाधारण्येन कृतमित्युच्यते तदा 'उपमानोपमेयत्वयोग्ययोरिति' हृद्यमित्यनयोरुपादानं व्यर्थं स्यात् इत्याह –यदि चेति।

**न च**—दुष्टादुष्टालंकारसाधारण्येनोपमा लक्षितेत्यभ्युपगमेऽपि न तयोः वैयर्थ्यम्। 'तरलं लोचनयुगलं कुवलयमचलं किमेतयोस्साम्यम्' इत्यादि व्यतिरेके निषेधप्रतियोगितया प्रतीते साधर्म्येऽतिव्याप्तिवारणाय 'उपमानोपमेयत्वयोग्ययोर्द्वयोः हृद्यं पर्यवसितं साधर्म्यमुपमे'ति परिष्क्रियते। तथा सति

यत्तु विद्यानाथेन लक्षणमुक्तम् —

स्वतस्सिद्धेन भिन्नेन सम्मतेन च धर्मतः।
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥ [प्र.रु.] इति।

तत्त्वालोकः

दुष्टोपमाव्यावृत्तिर्भविष्यतीति कथं तयोः वैयर्थ्यम् ?, उच्यते व्यतिरेकेऽति व्याप्तिर्नैव भवति, यतस्तत्र 'व्यति एव कवेस्तात्पर्यं न पुनस्साधर्म्ये' इति न च वक्तुं शक्यम्। यं कंचिद्धर्ममुपादाय सादृश्ये सत्येव धर्मान्तरप्रयुक्त-सादृश्याभावस्यैव व्यतिरेके विवक्षितत्वेनातिव्याप्तेरवारणात्, अतश्च हृद्यमिति साधर्म्यविशेषणमुपादेयमेवेति वाच्यम्।

तथा सति—उक्तविशेषणेनैव निषेधपर्यवसायिनोऽनन्वयघटकसाधर्म्यस्यापि व्यावृत्तिसिद्ध्या अनन्वयवारणाय कृतं 'द्वयो'रितिविशेषणम्, प्रकाश-कारीयलक्षणे भेदग्रहणं च व्यर्थमेवेति तयोर्लक्षणं दुष्टमेव।

किंच—वाच्यालंकारस्वरूपकथनावसरे तद्विरुद्धतया दुष्टव्यङ्ग्य-साधारण्येन उपमासामान्यलक्षणप्रणयनस्यानुचितत्वाच्चेति दिक्।

इत्थं प्राचीनानां लक्षणे द्वे अपि अव्यापके अतिव्यापके चेति प्रति-पाद्य सम्प्रति **विद्यानाथोक्तमुपमालक्षणम्** खण्डयितुं तदीयं लक्षणमनूद्य तद्घटकदलानि तन्मतानुसारेण सार्थकयति—**यत्तु इत्यादिना**।

वर्ण्यस्य, स्वतस्सिद्धेन भिन्नेन सम्मतेन च अन्येन धर्मतस्साम्यम्-एकदा वाच्यं चेत् उपमा इति योजना।

चित्रमीमांसा

अत्र 'स्वतस्सिद्धेन' इत्युत्प्रेक्षाव्यावृत्तिः । तत्रोपमानस्य कविकल्पितत्वेन लोकसिद्धत्वाभावात् ॥

तत्त्वालोकः

वर्ण्यस्य—उपमेयस्य, स्वतस्सिद्धेन—लोकानुभवगोचरेण, कविमतिविकासानुल्लिखितेन, भिन्नेन- वर्ण्यादन्येन उपमानेनेत्यर्थः संमतेन- कविसमय प्रसिद्धेन लिङ्गभेदादिदोषरहितेन, अन्येन—अवर्ण्येनोपमानादिना धर्मतः—गुणक्रिययोरन्यतरेण, एकदा – एकवाक्यतया, साम्यं—सादृश्यं वाच्यं चेत्–शब्दशक्तिप्रतिपाद्यं यदि, तदा उपमा—तन्नाम्नी अलंकृतिरित्युच्यते इति कारिकार्थः । 'चन्द्र इव मुखम्' इत्यत्र मुखस्य लोकसिद्धेन, मुखाद्भिन्नेन, कविसम्मतेन चन्द्रेण आह्लादकरत्वरूपधर्मनिबन्धनं सादृश्यं प्रतीयत इति लक्षणसमन्वयः ।

लक्षणघटकदलप्रयोजनं प्रदर्शयति—अत्रेति । तद्यथा—

कीर्तिः काकतिवीररुद्रनृपतेः सिंहासनाध्यासिनः
　प्राचां भूमिभुजां यशः पिदधती कोटीन्दुतुल्यद्युतिः ।
रक्षादक्षिणराजलाभजनितामन्दप्रमोदोत्थिता
　त्रैलोक्याट्टहसप्रभेव ककुभां प्रान्तेषु विद्योतते ॥ इति ।

अस्यामुत्प्रेक्षायां कीर्तौ अट्टहासप्रभातादात्म्यं सम्भाव्यते । संभाव्यमानायाश्च कविमतिविकासकल्पितत्वमेव न लोकसिद्धत्वमिति अतिव्याप्तेर्नावकाशः । अत्र स्वतस्सिद्धेनेत्यनुपादाने तु अतिव्याप्तिस्स्यादिति भावः ॥

चित्रमीमांसा

'भिन्नेन' इत्यनन्वयव्यावृत्तिः। 'सम्मतेन' इति सर्वविधदुष्टोपमाव्यावृत्तिः। कविसमयप्रसिद्धभावेन लिङ्गवचनभेदादिना वा यद्यदसम्मतम्, तस्य सर्वस्यापि सम्मतपदेन व्यावर्तनात्।

तत्त्वालोकः

भिन्नेनेति पदव्यावर्त्यमाह—भिन्नेनेति। तद्यथा—

सन्तु लोके सुवर्णाद्रि-रत्नाकर-सुधाकराः।
तथापि वीररुद्रोऽयं वीररुद्र इव स्वयम्॥

अस्मिन् अनन्वये उपमानोपमेययोर्भेदो नास्ति। परं तु वर्ण्यस्य वीररुद्रस्य तेनैव साम्यं वाच्यमिति नातिव्याप्तिरिति भावः॥

सम्मतेनेति पदव्यावर्त्यमाह—सम्मतेनेति। तद्यथा—

हंसीव धवलश्चन्द्रः, सरांसीवामलं नभः।
भर्तृभक्तो भटः श्वेव, खद्योतो भाति भानुवत्॥

इत्यादौ लिङ्गभेद–वचनभेदन्यूनताधिक्यानां सहृदयोद्वेजकतया दूषकत्वं न्यायसम्मतमिति एवंविधेष्वतिव्याप्तिवारणाय. 'कुमुदमिव मुखम्' इत्यादौ कविसम्मत्यभावेनात्राप्यातिव्याप्तिवारणाय च सम्मतेनेति विशेषणमिति भावः।

अत्र सम्मतेनेत्यनेन यत्र लिङ्गवचनभेदहीनताधिक्यानां न सहृदयोद्वेजकत्वं तेषाम् संग्राह्यत्वमेवेति फलति॥

तत्त्वालोकः

अत एव **भामहः** स्वकीये काव्यालंकारे **मेधाविनाम्ना** आलंकारिकेणोदितान्—

'हीनताऽसंभवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ।
त एते उपमादोषास्सप्त मेधाविनोद्धृताः ॥ इत्यनूद्य,

'स मारुताकम्पितपीतवासाः
विभ्रत्सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्राायुधो मेघ इवावभासे ॥'

अत्र उपमेये यदुवीरे वासश्शंखश्चाप इति त्रीणि विशेषणान्युपात्तानि, उपमाने मेघे शार्ङ्गसदृशं शक्रधनुर्मात्रमुपात्तम्, न पुनर्वासश्शंखसदृशे इति हीनत्वदोष इति मेधाविनः अभिप्रायं निराचष्टे स्म—

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिः उपमासु प्रयुज्यते ॥ इत्यनेन ।

अन्यथा 'मुखं चन्द्र इव' इत्यादावपि न्यूनतैव प्रसज्येत । तदपि **भामहेन** अभिहितम् —

अखण्डमण्डलः क्वेन्दुः क कान्ताननमद्युति ।
यत्किञ्चित् कान्तिसामान्याच्छशिनैवोपमीयते ॥
किंच काव्यानि नेयानि लक्षणेन महात्मनाम् ।
दृष्टं वा सर्वसारूप्यं **राजमित्रे** यथोदितम् ॥

इति । उदाहृतं च—

सूर्यांशुसम्मीलितलोचनेषु
दीनेषु घर्मानिलनिर्मदेषु ।

**तत्त्वालोकः**

साध्व्यः स्वगेहेष्विव भर्तृहीनाः
केकाः विनेशुः शिखिनां मुखेषु ॥

इति । अत्र यद्यपि उपमेये मुखे लोचनसम्मीलन–दैन्यनिर्मदत्वानां धर्माणामाधिक्यं प्रतीयते । उपमाने गेहे तु धर्माणां तादृशानामुपादानं नास्ति । न चैतावता उपमाने धर्मकृतन्यूनतेत्यनुपमात्वं वक्तुं युक्तम् ।

अमुमेवाभिप्राय परिपुष्णतेव **दण्डिना**—

न लिङ्गवचने भिन्ने न हीनाधिकते अपि ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ इत्युक्त्वा,

स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥

भवानिव महीपाल देवराजो विराजते ।
अलं अंशुमतः कक्ष्यामारोढुं तेजसा नृपः ॥ इत्युदाहृत्य,

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् ॥ [का व्या २-५१+५४]
इति निगमितम्। परन्तु यत्र धीमतामुद्वेगो जायते तादृशः परिहर्तव्यः इत्यपि तेनैव **दण्डिना** उक्तम् —

'अस्त्येव कश्चिदुद्वेगः प्रयोगे वाग्विदां यथा ।
हंसीव धवलश्चन्द्रः . . ईदृशं वर्ज्यते सद्भिरिति ॥

एवं च संमतेनेति विशेषणमसंमतव्यावर्तकं संग्राह्यसंग्राहकं चेत्युक्तं भवति । अत एव उपमानिरूपणान्ते दोषाणामपवादाः ग्रन्थकृतापि प्रदर्शयिष्यन्ते इति बोध्यम् ॥

तत्त्वालोकः

अत एव **भामहः** स्वकीये काव्यालंकारे **मेधाविनाम्ना** आलंकारिकेणोदितान्—

'हीनताऽसंभवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ।
त एते उपमादोषास्सप्त मेधाविनोद्धृताः ॥ इत्यनूद्य,

'स मारुताकम्पितपीतवासाः
विभ्रत्सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्रायुधो मेघ इवाबभासे ॥'

अत्र उपमेये यदुवीरे वासश्शंखश्चाप इति त्रीणि विशेषणान्युपात्तानि, उपमाने मेघे शार्ङ्गसदृशं शक्रधनुर्मात्रमुपात्तम्, न पुनर्वासश्शंखसदृशे इति हीनत्वदोष इति मेधाविनः अभिप्रायं निराचष्टे स्म—

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिः उपमासु प्रयुज्यते ॥ इत्यनेन ।

अन्यथा 'मुखं चन्द्र इव' इत्यादावपि न्यूनतैव प्रसज्येत । तदपि **भामहेन** अभिहितम्—

अखण्डमण्डलः क्वेन्दुः क कान्ताननमद्युति ।
यत्किञ्चित् कान्तिसामान्याच्छशिनैवोपमीयते ॥
किंच काव्यानि नेयानि लक्षणेन महात्मनाम् ।
दृष्टं वा सर्वसारूप्यं **राजमित्रे** यथोदितम् ॥

इति । उदाहृतं च—

सूर्यांशुसम्मीलितलोचनेषु
दीनेषु घर्मानिलनिर्मदेषु ।

**तत्त्वालोकः**

साध्व्यः स्वगेहेष्विव भर्तृहीनाः
केकाः विनेशुः शिखिनां मुखेषु ॥

इति । अत्र यद्यपि उपमेये मुखे लोचनसम्मीलन-दैन्यनिर्मदत्वानां धर्माणामाधिक्यं प्रतीयते । उपमाने गेहे तु धर्माणां तादृशानामुपादानं नास्ति । न चैतावता उपमाने धर्मकृतन्यूनतेत्यनुपमात्वं वक्तुं युक्तम् ।

अमुमेवाभिप्रायं परिपुष्णतेव **दण्डिना**—

न लिङ्गवचने भिन्ने न हीनाधिकते अपि ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ इत्युक्त्वा,

स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥

भवानिव महीपाल देवराजो विराजते ।
अलं अंशुमतः कक्ष्यामारोढुं तेजसा नृपः ॥ इत्युदाहृत्य,

इत्येवमादौ सौभाग्यं न जहात्येव जातुचित् ॥ [का व्या २-५१+५४]

इति निगमितम् । परन्तु यत्र धीमतामुद्वेगो जायते तादृशः परिहर्तव्यः इत्यपि तेनैव **दण्डिना** उक्तम् —

'अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ।
हंसीव धवलश्चन्द्रः . . ईदृशं वर्ज्यते सद्भिरिति ॥

एवं च संमतेनेति विशेषणमसंमतव्यावर्तकं संग्राह्यसंग्राहकं चेत्युक्तं भवति । अत एव उपमानिरूपणान्ते दोषाणामपवादाः ग्रन्थकृतापि प्रदर्शयिष्यन्ते इति बोध्यम् ॥

चित्रमीमांसा

'धर्मतः' इति श्लेषव्यावृत्तिः । श्लेषे हि—

'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'

इत्यादौ शब्दसाम्यमिवशब्देनोच्यते, न गुणक्रियारूपधर्मसाम्यम् ।

'अन्येन वर्ण्यस्य' इत्यनेन प्रतीपव्यावृत्तिः । तत्र वर्ण्येन प्रकृतेन सहाप्रकृतस्य सादृश्यवर्णनात् ।

तत्त्वालोकः

धर्मतः इति विशेषणात् श्लेषव्यावृत्तिरित्याह—धर्मत इति । श्लेषे हि 'सकलकलं पुरम्' इत्यादौ पुरे चन्द्रबिम्बसाम्यं कविनोपनिबद्धम् । उपमालंकार इति प्रकाशकारः, श्लेषालंकार इति सर्वस्वकारः । तयोः सर्वस्वकारसिद्धान्तश्रद्धालुना विद्यानाथेन—शब्दसाम्यमात्रे श्लेषः, गुणक्रियासाम्ये उपमेति उपमाश्लेषयोर्विषयविभागं प्रदर्शितवतो रुय्यकस्य अनुरोधेन उपमाप्रतिभोत्पत्तिः श्लेष एवायं नोपमेति मत्वा धर्मत इति विशेषणात् न श्लेषेऽतिव्याप्तिरिति भावः आविष्कृतः । एवं च सकलकलं पुरमित्युदाहरणे पुरे कलकलध्वनिमत्त्वम् चन्द्रबिंबे कलापरिपूर्णतेति धर्मसाम्यं न भवति इति नात्रोपमा, शब्दसाम्यमात्रप्रतीतेः श्लेष एवेति ॥

'अन्येन वर्ण्यस्य' इति दलनिवेशात् तद्विपरीते प्रतीपे नातिव्याप्तिः इत्याह—अन्येनेति ।

तद्यथा —

'लोकोऽयमविशेषज्ञः किं कुर्मः कस्य कथ्यते ।<br>
यत् काकतिनरेन्द्रेण सुमेरुरुपमीयते ॥' इति ।

चित्रमीमांसा

एकदेत्यनेनोपमेयोपमाव्यावृत्तिः । 'वाच्यम्' इत्युपादानात् व्यङ्ग्योपमाव्यावृत्तिः इति ॥

तत्त्वालोकः

अत्र वर्ण्येन राज्ञा सुमेरोस्सादृश्यं परिकल्पितम् । उपमायां तु वर्ण्यस्य अवर्ण्येन साम्यं कल्प्यत इति प्रतीपे नातिव्याप्तिरिति भावः ।

एकदेति विशेषणव्यावर्त्यं प्रदर्शयति-**एकदेति** ।

तद्यथा-'धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि' इति ।

अत्र प्रथमवाक्ये धर्मार्थयोः, द्वितीयवाक्ये अर्थधर्मयोश्च सादृश्यं वाक्यभेदेन इवशब्दद्वयमुच्चार्य प्रतिपाद्यते इत्युपमेयोपमा । अस्यां तु एकवाक्यतयेति तत्र नातिव्याप्तिरिति भावः ॥

वाच्यमित्युपादानात् व्यङ्ग्योपमाव्यावृत्तिरित्याह-**वाच्यमितीति** । तद्यथा—

'एष सत्यं राजा श्यामा खलु त्वं समागमो द्वयोः ।
किंपुनर्न प्रदोषकथा दृश्यते एतत्खल्वाश्चर्यम् ॥'

इत्यत्र श्यामा-राजशब्दवाच्ययोः कान्ता-नृपयोः प्रकृतयोः अप्रकृतनिशाचन्द्राभेदाध्यवसायेन प्राप्तस्य कालविशेषस्य प्रदोषस्य प्रतिषेधेन विरोधाभासः प्रतीयते । प्रकरणबलाच्च कान्ता--नृपवाचकाभ्यां श्यामाराजशब्दाभ्यां निशाचन्द्रयोः प्रतीतेः श्यामानिशयोः, राज-चन्द्रयोश्चौपम्यं ध्वन्यते । एवमादौ च साम्यस्य शब्दशक्तिवेद्यत्वं नास्तीति नातिव्याप्ति

**चित्रमीमांसा**

**तत्र उत्प्रेक्षाव्यावृत्तये 'स्वतस्सिद्धेन' इत्युक्तमयुक्तम् । उत्प्रेक्षायामिवकारस्य विषयविषयिणोस्तादात्म्यादिसंभावनावाचकत्वेन तत्र साम्यस्य अवाच्यतया तत एव तद्व्यावृत्तेः ॥ उक्तं हि चक्रवर्तिना—**

**तत्त्वालोकः**

रिति भावः । इतिशब्दः **विद्यानाथा**भिमतलक्षणसमन्वयदलङ्कृत्ययोः परिसमाप्तिं द्योतयति ॥

एवं **विद्यानाथोक्तं** लक्षणं सदलङ्कृत्यमुपपाद्य तदीयं लक्षणं निराकर्तुं उत्प्रेक्षाव्यावर्तकं स्वतस्सिद्धेनेति विशेषणमनुपादेयम्, साम्यमित्यनेनान्यथासिद्धत्वादित्याह–**तत्रेति** । तद्यथा –

पुञ्जीभूतमिव ध्वान्तं एष भाति मतङ्गजः ।
सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥ [भा.का. २-५२]

इत्यत्र मतङ्गजे पुंजीभूतध्वान्ततादात्म्यमुत्प्रेक्ष्यते । तथा शरत्प्रसन्नाम्भसि सरसि भूतलस्थितनभःखण्डतादात्म्यं चोत्प्रेक्ष्यते । अत्र ध्वान्तस्य पुंजीभवनम्, आकाशखण्डस्य भूमावुज्झितत्वं वा न लोकसिद्धमित्येवमादौ इवशब्दः सम्भावनावाचक एव न साम्यवाचक इति साम्यं वाच्यमित्यनेनैव उत्प्रेक्षाव्यावृत्तेः स्वतस्सिद्धेनेति विशेषणं व्यर्थमिति भावः ॥

उपमानस्य लोकप्रसिद्धितदभावाभ्याम् इवशब्दस्य उपमासंभावनाबोधकत्वं सम्प्रतिपन्नमित्यत्र **अलंकारचक्रवर्तिना** उक्ते संमतिकारिके प्रदर्शयति — **उक्तं हि इत्यादिना** ।

**चित्रमीमांसा**

यदायमुपमानांशो लोकतः सिद्धिमृच्छति ।
तदोपमैव येनेवशब्दः साधर्म्यसूचकः ॥

यदा पुनरयं लोकादसिद्धः कविकल्पितः ।
तदोत्प्रेक्षैव येनेवशब्दः संभावनापरः ॥ इति ।

**दृष्टं च लोके संभावनापरत्वमिवशब्दस्य- 'दूरे तिष्ठन् देवदत्त इवाभाति' इति ।**

**तत्त्वालोकः**

अस्यायमर्थः- कविना उपादीयमानः उपमानांशः—उपमानभागः अलंकारैकदेशः, लोकतस्सिद्धिम्—लोकानुभववेद्यताम्, ऋच्छति—प्राप्नोति ।

यद्वा उपमानांशः उपमानविशेषणतया भासमानो यो भागः लोकतः सिद्धिम् ऋच्छति तदा उपमैव अलंकारः, येन इवशब्दः साधर्म्य-सूचक इति निश्चीयत इति ।

उपमात उत्प्रेक्षायां वैलक्षण्यमाह—**यदा पुनरिति ।**

यदा पुनः, अयं उपमानांशः— उपमालंकारैकदेशःउपमानम्, तद्विशेषणं वा, लोकादसिद्धः—लोकानुभवाऽगोचरस्सन्, कविकल्पितः—कविप्रौढोक्तिसिद्धो भवति तदा उत्प्रेक्षैव अलंकारः, येन हेतुना इवशब्दः संभावनापरः—संभावनामेव प्राधान्येनाहेति यावत् ।

ननु इवशब्दस्य साधर्म्यप्रतिपादकत्वमेव न संभावनाप्रतिपाकत्वम् इति कथमियं विषयव्यवस्थोपपद्यते इत्यत्राह — **दृष्टं चेति ।**

कथं च स्वतस्सिद्धेनेत्यनेनोत्प्रेक्षाव्यावृत्तिः ?

न नित्यमस्मिन् परिपूर्णतेति
त्यक्त्वा नभः क्षोणितलावतीर्णः ।
आनन्दयन्निन्दुरिव स्वधाम्ना
विभाति लोके नवकाकतीन्द्रः ॥

इति तदीयोत्प्रेक्षोदाहरण एवोपमानस्य स्वतस्सिद्धत्वात् ॥

तत्त्वालोकः

एवं च 'चन्द्र इव मुख' मित्यादौ मुखे चन्द्रसादृश्यम् 'दूरे तिष्ठन् देवदत्त इवाभाति' इत्यादौ पुरुषान्तरे पमानकोटिकः प्रायोनिश्चयः प्रतीयत इति भेद आविष्कृतो भवति ।

यद्यपि चक्रवर्तिमतमनुरुध्य स्वतस्सिद्धेनेति विशेषणमुत्प्रेक्षां व्यार्तय तीत्युपगमेऽपि विद्यानाथोदाहरिष्यमाणोत्प्रेक्षोदाहरणे लोकप्रसिद्धोपमानोपादानादतिव्याप्तिः अपरिहार्येति मनसि निधाय पृच्छति—**कथं चेति** ! **न नित्यमिति** । अस्मिन् परिदृश्यमाने नभसि, नित्यं सर्वकालावच्छेदेन, परिपूर्णता–कलासाकल्यं नेति मत्वा नभः–अन्तरिक्षम् त्यक्त्वा क्षोणितलावतीर्णः– क्षितितलमवतीर्णः इन्दुरिव नवकाकतीन्द्रः, काकतिर्नाम दुर्गाशक्तिरेकशिलानगरेश्वराणां कुलदेवता इति **कुमारस्वामि सोमपीथी** ।

एवञ्च भक्तैः स्वेष्टदेवतानामधारणस्य 'चामुण्डरायः' इत्यादि नामसु प्रसिद्धत्वात् काकतिश्चासौ इन्द्रश्च काकतीन्द्र इति समासः ।

(गुणैरपूर्वः) लोके भुवने स्वधाम्ना स्वतेजसा लोके आनन्दयन सन्तोषमुत्पादयन् विभाति अधिकं शोभते इत्यर्थः ।

चित्रमीमांसा

इन्दुः क्षोणितलावतीर्णत्वाकारेण कविकल्पित इति चेत्,

तत्त्वालोकः

एवं चात्र उपमानभावमनुभवतः चन्द्रस्य लोकसिद्धत्वम् अस्त्येवेति स्वतस्सिद्धेनेत्यनेन उत्प्रेक्षाव्यावृत्तिः न भवतीति उपमालक्षणम् अतिव्याप्त्यैवेति भावः ॥

ननु 'दण्डी नास्ति' इत्यादिप्रतीतौ यथा पुरुषसत्त्वेऽपि दण्डरूपविशेषणाभावप्रयुक्तदण्ड्यभाव उपेयते, तद्वत् इहापि उपमानस्येन्दोः लोकसिद्धत्वेऽपि क्षितितलावतीर्णत्वरूपविशेषणांशस्य तद्वृत्तित्वेन लोकप्रसिद्ध्यभावात् 'न नित्यमस्मिन्नि'त्युदाहरणे उपमानस्य स्वतस्सिद्धत्वं नास्ति विशिष्टाकारस्य कविप्रौढोक्तिकल्पितत्वादिति स्वतस्सिद्धेनेति विशेषणं युक्तमेवेति शङ्कते—**इन्दुरित्यादिना** ।

**वस्तुतस्तु**—उत्प्रेक्षात्वावच्छेदेन उपमानस्य तदंशस्य उभयोर्वा कविनिबद्धत्वमेवेति नियमोऽभ्युपगन्तुं न शक्यः । उपमानस्य लोकसिद्धत्वेऽपि उत्प्रेक्षोपगमात् । तद्यथा—

ज्ञाने मौनं, क्षमा शक्तौ, त्यागे श्लाघाविपर्ययः ।
गुणाः गुणानुबन्धित्वात् तस्य सप्रसवा इव ॥

इत्यत्र ज्ञानादिसाहित्येन मौनादीनां सप्रसवत्वमुत्प्रेक्ष्यते । उपमानांशश्च सप्रसवत्वं लोकानुभवसिद्धमेव न कविनिबद्धमिति ।

अयं चांशः **विद्यानाथस्याप्यसंमत** इति न शक्यं वक्तुम् । यतः तेनैव स्वतस्सिद्धेनेति दलकृत्यप्रदर्शनावसरे 'उत्प्रेक्षायामप्रसिद्धस्याऽपि'

## चित्रमीमांसा

तर्हि 'चन्द्रबिम्बादिव विषं चन्दनादिव चानलः ।
परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥'

इत्युक्तायां असंभावितोपमायामव्याप्तिः । विषानलयोः स्वतःसिद्धत्वेऽपि चन्द्रचन्दनप्रभवत्वेन कविकल्पितत्वात् ॥

## तत्त्वालोकः

इति अपिशब्दः प्रयुक्तः उत्प्रेक्षायां लोकसिद्धमुपमानं न निरुणद्धि ।

एतेन 'यदायमुपमानांशः' इत्यादि चक्रवर्तिना यदुक्तं तदपि चिन्त्यमेव । अत एव ग्रन्थकारः उत्प्रेक्षाप्रयोजकत्वं 'अप्रकृततादात्म्य संभावनोपयुक्तविशेषणकल्पन'स्येत्यभिधास्यति । अत एव च 'दूरे तिष्ठन् देवदत्त इवाभाति' इत्यादिप्रदेशे देवदत्तादेः प्रसिद्धत्वेऽपि विप्रकर्षस्थित पुरुषे तत्तादात्म्यसंभावनमेवानुभविकमुन्नीयते, न पुनस्साम्यमात्रम् इत्यल मतिविस्तरेण । एवं च उत्प्रेक्षायां साम्यस्यावाच्यत्वादेव तद्व्यावृत्तिरिति यत्प्रतिपादितं तदेव समीचीनम् ।

'तुष्यतु दुर्जन' इति नीत्या न नित्यमित्युदाहरणे उत्प्रेक्षोपग मेऽपि न निस्तारः, अन्यत्र अव्याप्तेरेव प्रसङ्गादिति समाधत्ते — **तर्हीति 'चन्द्रबिम्बादिति** । चन्द्रबिम्बाद्विषमिव, चन्दनात् अनल इव इतो वक्त्रात् परुषा वाक् इत्युक्त्या चन्द्रचन्दनाभ्यां विषपावकयोः निस्सरणं यथा न संभावितं तथा भवद्वक्त्रात् परुषवाङ्निस्सरणमसंभावितमिति तयोरुपमा असंभा वितोपमा । अत्र विषानलयोः स्वतस्सिद्धत्वेऽपि तद्विशेषणयोः चन्द्र—चन्दन प्रभवत्वयोः विषानलवृत्तित्वमनुभवदूरमिति अव्याप्तिः प्रसज्येतेति भावः ॥

उभौ यदि व्योम्नि पृथक् प्रवाहौ
आकाशगंगापयसः पतेताम् ।
तेनोपमीयेत तमालनील-
मामुक्तमुक्तालतमस्य वक्षः ॥

तत्त्वालोकः

**यदि तु**—चन्द्रबिम्बादिवेति पद्ये चन्द्रप्रभवविषस्य, चन्दनप्रभवानलस्य च वाचा सह उपमा न कविविवक्षोपारूढा, अपि तु चन्द्रविम्बाद्विषं यथा असंभावितं, यथा च चन्दनादनलः असंभावितः, तथा त्वन्मुखात् परुषोक्तिरसंभावितेति असंभाविवत्वसाधारणधर्मिका उपमा असंभावितोपमेति **दण्डिना** व्यवहृतेति विष-परुषवचनयोरुपमायां चन्द्रचन्दनादेः मुखस्य च बिम्बप्रतिबिम्बभावः । एवंच चन्द्रबिम्बजन्यविषत्वम्, चन्दनजन्यानलत्वं नोपमानतावच्छेदकम् इति नाव्याप्तिः । यत्र तु उपमानतावच्छेदकविशिष्टमुपमानमप्रसिद्धं तत्रोत्प्रेक्षैव । अत एव **चक्रवर्तिना**—'यदायमुपमानांशः' इत्यत्र अंशपदमुपात्तमिति समाधीयेत तदापि उदाहरणान्तरे अव्याप्तिरुद्धाव्यत इत्याशयेनोदाहरति – **उभौ यदीति** ।

तमालनीलं आमुक्तमुक्तालतम् अस्य वक्षः यदि आकाशगंगापयसः उभौ प्रवाहौ पृथक्पतेतां तर्हि तेनोपमीयेत इत्यन्वयः ।

**शिशुपालवधे**—भगवतो वसुदेवनन्दनस्य वक्षःस्थलरामणीयकास्वादानुभूतिप्रदर्शकमिदम् । तमालः-तापिच्छः तद्वत् नीलम्, आमुक्ते—आसञ्जिते मुक्तालते—लतातुलितमुक्ताहारे यस्मिन् तत् अस्य भगवतो वक्षः उरस्थलं यदि आकाशगंगापयसः वियद्गंगातः, उभौ प्रवाहौ व्योम्नि आकाश

## चित्रमीमांसा

### इति कविकल्पितोपमानायामुपमायां सर्वथैवाव्याप्तिः ॥

#### तत्त्वालोकः

एव पृथक् विभज्य पतेतां प्रवहेतां, संभावनायां लिङ् । तेन—तमालनीले नाकाशेन उपमीयेत— सदृशीक्रियेत । नास्योपमानं किञ्चिदिति अर्थः । अनुपमं भगवद्वक्षःस्थलमिति यावत् ॥

अत्र कवेरयमभिप्रायः—कण्ठालम्बितमुक्ताहारान्तरालपरिदृश्यमान तमालोपमितभगवदुरस्स्थलानुकारि न किमपि लोकदृष्टमुपलभामहे । यदि विष्णुपद एव विष्णुपदी सान्तराला एकदैव द्विधा प्रवृत्ता भवेत् तदा तादृक् व्योम सदृशं भवेत्, न च तथा संभाव्यते अतश्च अनुपमं तद्वक्षः इति ।

एवमादौ च **उत्पाद्योपमेति रुद्रटादिभिः** उपगतम् । तद्यथा—

अनुपममेतद्वस्त्वित्युपमानं तद्विशेषणं चासत् ।
संभाव्य स यद्यर्थो क्रियते सोपमोत्पाद्या ॥ [रुद्रट] इति ।

ग्रन्थकृता चेयं कल्पितोपमेति व्यवह्रियते । एवं च तादृशस्याकाशस्य कविमतिविकासमात्रोत्प्रेक्षितत्वेन स्वतस्सिद्धत्वं नास्तीत्यव्याप्तिरिति तद्विशेषणमव्यापकत्वादयुक्तम् । तदाह—**इति कविकल्पितेति** ।

यद्यप्यत्र—गगनात् गलन्त्याः वाहिन्याः एकप्रवाहोत्पत्यनन्तरं प्रवाहान्तरस्य तत्पतनस्य च खण्डशः स्वतस्सिद्धत्वमस्ति । अथापि पृथक्पातविशिष्टस्य प्रवाहस्य व्योम्ना संबन्धमात्रं कविना परिकल्प्यते । अतः प्रवाहकर्तृकपातमात्रमेव कविकल्पितमित्युपमानांशस्य कविकल्पिततोक्तिः न हृदयंगमा विभाति । इति चेत्—उच्यते ।

तत्त्वालोकः

विशिष्टस्य शुद्धादतिरेक इति पक्षे उभयतःप्रवहद्गंगाविशिष्टव्योम्नः कविकल्पितत्वमिति अव्याप्तिरिति ग्रन्थकृदाशयात् ।

यत्त्वत्र **कौस्तुभकृता**—'विशेष्यस्य कल्पितत्वादव्याप्तिरिति तन्न समीचीनम्, तत्रातिशयोक्तेरेवाङ्गीकारात्' इति तदयुक्तम्। **विद्यानाथेन** यद्यर्थातिशयोक्तेः संभावनालंकारस्य वा अनभ्युपगमेन कल्पितोपमैव युक्ता, न पुनर्निरलंकारतेति प्रत्यायनाय ग्रन्थकृता कविकल्पितेत्यभिधानम् ।

**कुवलयानन्दानुसारे तु**– प्रकाशकाराभिमतयद्यर्थातिशयोक्त्युदाहरणेषु संभावनालंकारस्यैव उपगमेन तत्रैवास्योदाहरणस्य गतार्थत्वात् । अत एव **कुवलयानन्दे**–

'कस्तूरिकामृगाणाम् अण्डात् गन्धगुणमखिलमादाय ।
यदि पुनः अहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

इति पद्ये संभावनालंकारमुपपाद्य 'यद्यर्थोक्तौ च कल्पनमिति **काव्यप्रकाशोक्ता**तिशयोक्तिभेदः' इति हि परपक्षत्वेनोपन्यासः कृतः ॥

**वस्तुतस्तु**–'यदि शेषो भवेद्वक्ता कथितास्स्युर्गुणास्तव' इत्यत्र यथा वक्ता शेषो न भवति अतस्त्वदीया गुणा अपि कथयितुं न शक्याः इत्यन्यादृशगुणवत्त्वप्रतिपादने तात्पर्यम्, तद्वदत्रापि दिव्यापगाप्रवाहद्वयान्तरालवर्ती आकाशदेशः यदि स्यात् तदा तादृशेनाकाशेन उपमीयेत । न च तथा द्रष्टुं शक्यम् । अतश्चानुपमं भगवद्वक्षस्स्थलमित्यत्रैव पर्यवसानं युक्तमिति पर्यवस्यति । तेन चात्र उत्पाद्योपमेति व्यवहार एव युक्त इति भाति ।

## चित्रमीमांसा

'भिन्नेन' इत्यनन्वयव्यावृत्त्यर्थमुपात्तमप्ययुक्तम् ।

### तत्त्वालोकः

**यच्चाप्युक्तं कौस्तुभकृता**—'प्रवाहस्य स्वतस्सिद्धत्वेन पृथक्त्वेन पातस्यैव कविकल्पितत्वात् विशेष्यस्यापि कविकल्पितत्वात् इत्युक्तेरसंगतत्वाच्च' [अ. कौ. १२पु] इति ।

तदयुक्तम्–यतोऽत्र न प्रवाहस्य विशेष्यत्वं, किन्तु व्योम्नः । स्वच्छ प्रवाहद्वयमध्यपरिदृश्यमानेन व्योम्ना भगवद्वक्षसः सादृश्यं संभावितम्, न पुनः प्रवाहेणेत्यत्र कवेर्ग्रन्थकर्तुश्च तात्पर्यात् ।

उपमाने कविकल्पितत्वोक्तिः पूर्वं कथंचित्समाहिता । प्रवाहे विशेष्यत्वस्य सिद्धत्वस्य च कल्पनाद्वारा खण्डनं आग्रहकृतमेव ।

'तत्रातिशयोक्तेरङ्गीकारात्' इति कौस्तुभोक्तिरपि वक्ष्यमाणसिद्धान्तभागानूद्यमानकाव्यप्रकाशिकानुवादरूपैवेति चर्वितचर्वणरूपैवेति बोध्यम् ।

एतेनेदमुक्तं भवति–उपमालक्षणे स्वतस्सिद्धत्वोपादानं अनपेक्षितम् अव्यापकं चेति अयुक्तमेवेति । अधिकमन्यत्र ।

इत्थं प्रथमदलं अयुक्तमिति उपपाद्य 'भिन्नेन' इति द्वितीयमपि दलं अयुक्तमित्युपपादयितुमुपक्रमते—**भिन्नेनेत्यादि** । अत्र भेदस्य सप्रतियोगिकतया किंप्रतियोगिको भेदः विवक्षितः ? किं उपमेयसामान्यप्रतियोगिकः ? उत उपमेयतावच्छेदकधर्मावच्छिन्नप्रतियोगिकः ? अथ स्वोपमेयतावच्छेदकधर्मावच्छिन्नप्रतियोगिकः ? आद्ये उपपादकोपमासु अव्याप्तिः

## चित्रमीमांसा

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

## तत्त्वालोकः

प्रसज्यत इत्युदाहृत्य उपपादयति—अनन्तरत्नेति ।

हिमं अनन्तरत्नप्रभवस्य यस्य सौभाग्यविलोपि न जातम् । यतः एको दोषः गुणसंनिपाते इन्दोः किरणेषु अङ्क इव निमज्जति हि इत्यन्वयः । हिमं— प्रालेयं कर्तृ, अनन्तरत्नप्रभवस्य अनन्तानि असंख्यातानि रत्नानि श्रेष्ठवस्तूनि तेषां प्रभवस्य कारणस्य 'रत्नं स्वजातिश्रेष्ठेऽपि' इति कोशात् । यस्य हिमवतः कुलाचलस्य, सौभाग्यविलोपि--सुभगस्य भावः सौभाग्यम् सौन्दर्यम् 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' [पा. सू. ७-३-१९] इत्युभयपदवृद्धिः । तस्य विलोपि विशेषतो नाशकं न जातम्— नाभवत् । यतः लोके एको दोषः एकत्वसंख्याविशिष्टः गुणाभिभावकः, एक एव दोषः इति यावत् । गुणसंनिपाते गुणैस्सहावस्थाने आपतिते, इन्दोः सकलजगदाह्लादकामृतकिरणप्रचुरस्य चन्द्रस्य, किरणेषु—रश्मिषु, अङ्क इव—कलंक इव निमज्जति—न व्यज्यते अन्तर्लीयते इत्यर्थः ।

न हि अल्पीयान् दोषः कदाचिदमितगुणं वस्तु अभिभवति । किंतु कश्चित् इन्दुकलङ्कवद्गुणैरभिभूयते । इतरथा रम्यतराणामपि वस्तूनाम् अनुपादेयता प्रसज्येतेति भावः ।

चित्रमीमांसा

इत्यस्यामुपपादकोपमायामव्याप्तेः ।

तत्त्वालोकः

**उपपादकोपमायामिति** । अत्र गुणसमवाये दोषनिमज्जनात्मनः नैराकांक्ष्येण सिद्धस्य सामान्यस्य विशेषस्वरूपः 'इन्दोः किरणेषु अङ्क इवेति एकदेशः अनन्तरत्नप्रभवस्य हिमवतः हिमं सौभाग्यविलोपि न जातम् इत्येतत्प्रतियोगितया उपात्तः ।

एवं चात्र हिमलक्षणस्य दोषविशेषस्य असंख्यातश्रेष्ठवस्तुस्रष्टुः हिमाचलस्य सौभाग्यापहारकत्वशक्तिः नासीदिति विशेषवाक्यार्थे समर्थ्ये तत्समर्थकतया गुणसमवाये पतितस्य दोषविशेषस्य गुणसमवायाभिभावकत्व-शक्तिः नास्तीति सामान्यात्मा वाक्यार्थस्समर्थकतया उपात्त इत्यर्थान्तरन्यासो वाच्यः । अथापि 'स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्' 'अमितगुणोऽपि पदार्थः दोषेण एकेन निन्दितो भवति ।' इति न्यायेन कदाचिदनुपादेयत्व मपि भवेदिति सन्देहे, उपपादकमुपादाय सः निवर्त्यः भवतीति इन्दो किरणेषु अंक इवेति उपमानमुपात्तमित्युपमाया अर्थान्तरन्यासोपपादकत्वम् । एवं च—इन्दोः किरणेषु अङ्कः यथा सौभाग्यविलोपी न जातः तथा अनन्तरत्नप्रभवस्य हिमवतः हिमं सौभाग्यविलोपि न जातमित्युपमानोपमेय-भावेऽवगते अर्थान्तरन्यासः स्थेमानं लभते ॥

नन्वत्र—गुणराशिगतस्य एकस्य दोषस्य चन्द्रकिरणगतकलंकस्य च सामान्यविशेषभावेनावस्थितस्य 'निर्विशेषं न सामान्यम्' इति न्यायेत कलंकस्य दोषविशेषरूपत्वेन दोषकलंकयोः मिथः भेदाऽभावात् कथमुपमा, सादृश्यस्य भेदघटितत्वेन पदार्थे भेदे सत्येव उपमनोपमेयभावस्य सर्वसम्मतत्वात् इति चेत् ।

**तत्रोपमेयसामान्यान्तर्गतानामुपमानानां गुणदोषगुण-विशेषाणां कलङ्ककिरणानां तद्भिन्नत्वाभावात् ॥**

तत्त्वालोकः

**उच्यते**—'उपाददे तस्य सहस्ररश्मिः' इत्यादौ अभेदेऽप्युपमायाः स्वीकारात् ।

**अत्र प्राञ्चः**—'निर्विशेषं न सामान्यम्' इति सामान्यस्य यत्किञ्चि-द्विशेषज्ञानमन्तरा सामान्यं प्रस्तुतं वस्तु न ज्ञायेत, तदा तत्समर्थनार्थं विशेषोल्लेखोऽसंगतो भवेत् अतश्च सामान्यस्यापि प्रकरणबलात् विशेषे पर्यवसानं स्वीकार्यमेव । तथासति तमेव विशेषमादाय अपरस्य विशेषस्य स्फूर्तौ बाधकाऽभावात् आपाततः प्रतीयमानस्यापि सामान्यविशेषभावस्य अन्ततो गत्वा विशेष (सादृश्य) एव पर्यवसानमिति । एवं च विशेषाकारेण भेदे सत्यपि सामान्याकारेण भेदाऽभावादव्याप्तिरिति ग्रन्थकाराशयः ॥

अन्यथा—**मल्लिनाथादिभिः**—(प्राचीनैः) उक्तोदाहरणे उपमाया अर्थान्त-रन्यासोपपादकत्वाभिधानमञ्जसं स्यात् । तदेतदाह—**तत्रेत्यादिना** ।

तत्र—अर्थान्तरन्यासोपपादकोपमायाम्, उपमेयभूतं यत् दोषसामान्यं गुणसामान्यं च, तत्र अन्तर्गतानां, अनुप्रविष्टानां—उपमानानां—उपमान-रूपाणां दोषविशेषाणां कलंकानाम्, गुणविशेषानां किरणानां च, तद्भिन्न-त्वाभावात् – उपमेयभिन्नत्वाभावात् ।

एतेनैतदुक्तं भवति – विशेषस्य सामान्यधर्मावच्छिन्नत्वनियमात् कलंककिरणेषु उपमानोपमेयभूतपदार्थतावच्छेदके दोषत्वगुणत्वे न स्त इति प्रतीत्यभावात्, प्रत्युत 'कलंकः दोषः अनुपादेयत्वात् । किरणा गुणाः

चित्रमीमांसा

अथोपमेयतावच्छेदकभिन्नोपमानतावच्छेदकावच्छिन्नत्वं उपमानस्य तद्भिन्नत्वम् ।

एतदपि न युक्तम्—

अनवरतकनकवितरणभृतजललवकरतरङ्गितार्थिततेः ।
भणतिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥

तत्त्वालोकः

उपादेयत्वात्' इति व्यवहारदर्शनाच्चोपमेयापेक्षया अभेदो नास्तीति भिन्नेनेति विशेषणं अव्यापकमिति । अधिकं तु 'सेयमुपमा संक्षेपतस्त्रिधा' इत्यत्र वक्ष्यामः ॥

**ननु** – उक्तपद्ये उपमेयोपमानतावच्छेदकयोः कलंकत्व–दोषत्वयोः भेदः अवच्छेदकभेदेन संभवतीति नाव्याप्तिरिति आशङ्कते—**अथेति** । अत्र दोष–कलङ्कयोः, गुण–किरणानां चोपमायां उपमेयतावच्छेदकं दोषत्वं, गुणत्वं च तद्भिन्न उपमानतावच्छेदको धर्मः कलंकत्वं किरणत्वं च तदवच्छिन्नत्वरूपं तद्भिन्नत्वम् उक्तोपमायाम् इत्यव्याप्तेर्नावकाश इत्यर्थः । अवच्छेदकभेदेनाऽपि अव्याप्तिवारणमयुक्तम् अन्यत्राव्याप्तेः, विशेषणान्तरवैयर्थ्याच्चेति अभिप्रयन्नाह–**एतदपीति** ।

एतदपि=अवच्छेदकभेदमादाय अव्याप्तिवारणमपि न युक्तम्–न समीचीनम् अव्याप्तेरवारणात् इत्यर्थः । अव्याप्तेः लक्ष्यं प्रदर्शयति **अनवरतेति** ।

हे नृप ! अनवरतकनकवितरणभृतजललवकरतरङ्गितार्थिततेः तव मतिः भणतिरिव विमला, मतिरिव चेष्टा विमला, चेष्टेव कीर्तिर्विमला इति

## चित्रमीमांसा

इति रशनोपमायामव्याप्तेः, मतित्वाद्युपमानतावच्छेदकानां उपमेयतावच्छेदकभिन्नत्वाभावात् ।

उपमेयोपमायां उपमानतावच्छेदकयोर्द्वयोरपि तद्भिन्नत्वाभावेन उक्तविशेषणेनैव तद्व्यावृत्तिसिध्या 'एकदा' इत्यस्य वैयर्थ्यापत्तेश्च ।

## तत्त्वालोकः

योजना ॥ अनवरतं- निरन्तरं, कनकस्य सुवर्णस्य, वितरणसमये भृताः ये जललवाः जलकणाः यस्मिन् सः करः हस्तः तस्मिन् तरङ्गिताः तरंगवत् पूर्वपश्चाद्भावेन श्रेणीभूय सततं मिलिताः ये अर्थिनः याचकाः तेषां ततिः पङ्क्तिः यस्य तव मतिः भणतिरिव विमला शुद्धा, मतिरिव चेष्टा व्यापारः विमला परहिंसादिदोषदूरा, चेष्टेव कीर्तिर्विमला व्यापारानुगुणा दिगन्त विश्रान्ता कीर्तिरिति यावत् ।

अत्र सर्वत्र वैमल्यं साधारणो धर्मः । पूर्वपूर्वोपमेयं प्रति उत्तरोत्तरोपमानं शृंखलावदुपनिबध्यते इति **रशनोपमा** । तल्लक्षणं च **काव्यप्रकाशकृता**- उक्तं-'यथोत्तरमुपमानस्योपमानत्वे पूर्ववदभिन्नधर्मत्वे रशनोपमा' इति । इत्थं च पूर्वोपमायां उपमेयतावच्छेदकस्यैव उत्तरोपमायां उपमानतावच्छेदकत्वेन तद्भिन्नत्वं नास्तीत्यव्याप्तिप्रसंगादिति भावः ।

**उपमेयोपमायामिति** । 'अनन्तरत्नप्रभवस्येति' पद्ये अर्थान्तरन्यासोपपादकोपमायां अव्याप्तिं परिहर्तुं तथा भिन्नेनेत्यस्मिन् परिष्कृते तेनै

'धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि'

चित्रमीमासा

रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥

इत्युपमेयोपमाप्रकरणोदाहरिष्यमाणपरस्परोपमायाम व्याप्तेश्च ॥

तत्त्वालोकः

इत्युपमेयोपमायामेकस्यैव उपमानोपमेयतावच्छेदकत्वमिति तद्भिन्नत्वं नास्तीति आतिव्याप्तिवारणसंभवात् तदर्थं 'एकदा' इति विशेषणान्तरोपादानं व्यर्थं स्यात् । यदि तु एकदेत्येतत्सार्थकयितुं भिन्नपदार्थः न परिष्क्रियते तदा उपपादकोपमायामव्याप्तिः अपरिहार्येति भावः ॥

एवमुपमाविशेषे अव्याप्तिश्चेत्याह **–रजोभिरिति** । सः स्यन्दनोद्धूतैः रजोभिः गजैश्च, व्योम भुवस्तलमिव कुर्वन् भुवस्तलं व्योमेव कुर्वन् ययौ इत्यन्वयः ॥

सः–रघुः, स्यन्दनेन समररथवेगेन, उद्धूतैः क्षिप्तैः, रजोभिः धूलिभिः घनसन्निभैः–परिमाणतः आकारतः वर्णतश्च मेघसंकाशैः गजैश्च, यथाक्रमं व्योम आकाशं भुवस्तलमिव कुर्वन्, भूतलं व्योमेव कुर्वन् दिग्विजयार्थं ययौ इति पूर्वेण संबन्धः ॥

**यद्यपि**-व्योमभूतलयोः द्वयोरपि वाक्यभेदेन सादृश्यप्रतियोगित्वं प्रतिपाद्यत इति उपमेयोपमा आपाततः प्रतीयते, तथापि 'धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि' इत्यत्र यथा पूर्णश्रीत्वं साधारणो धर्मः तथा अत्र स न प्रतीयते । यतश्चेह–व्योम्नः भूतलेन सादृश्ये वर्ण्यमाने रजोव्याप्तत्वं साधारणधर्मः, भूतलस्य व्योम्ना सादृश्ये वर्ण्यमाने गजानां

**तत्त्वालोकः**

मेघानां च विम्बप्रतिबिम्बभावमूलकतया साधारण्यमिति अत्यन्तविलक्षणत्वात्। अत एव तृतीयसब्रह्मचारिव्यावृत्तिरपि न फलति। धर्मस्य साधारण्येन वस्तुप्रतिवस्तुभावेन वा परस्परसाम्ये वर्ण्यमाने अनयोरस्मिन् विषये तृतीयः सब्रह्मचारी नास्तीति फलति। न चैतद्धर्मसाधारण्य इव धर्मभेदेऽपि भवति। रजोभिः गगनस्थभूतलस्थ मेघाकारैर्गजैर्गगनसादृश्यस्य अर्थतः सिद्ध्यभावात्। अतश्चात्र गगने भूतलसाम्येन असिद्धमेव भूतले गगनसम्यं वर्ण्यत इति परस्परोपमैवेति भावः॥

उक्ताभिप्रायं मनसि निधाय उपमेयोपमाप्रकारणोदाहरिष्यमाणेत्युक्तिः। **वस्तुतस्तु**–'रजोभिः स्यन्दनोद्धूतैः' इत्यत्र दिग्विजयप्रवृत्तस्य रघोः बलाढ्यता वर्ण्या इति तदानुगुण्येन उपमेयोपमाया एव युक्तत्वात्। तथाहि–यदा रघुः षोढावस्थितं बलमादाय प्राचीं ययौ तदा व्योम रजसा, भूतलं गजैश्च व्याप्तमिति तयोस्सदृक् वस्त्वन्तरं किमपि न बुध्युपारूढमिति सदृशान्तरं व्यवच्छिन्दती भूतलव्योमनी स्यन्दनवेगातिशयं महाप्रमाणगजबाहुल्यं प्रत्याययतो राज्ञः अप्रतिहतां दिग्विजययात्रां व्यङ्क्त इति वीररसपरिपोषकत्वमेवेति उपमेयोपमैव युक्ता।

**नच**–धर्मे साधारण्येन, (अनुगामितया) वस्तुप्रतिवस्तुभावेन वा साधारण्यं न संभवतीति कथं सा वक्तुं शक्येति शङ्क्यम्। रजसां मेघतुल्यगजानां च व तः परिमाणतः व्याप्तेश्च तुल्यतया बिम्बप्रतिबिम्बभावेन साधारण्यस्य सुवचत्वात्। अन्यथा–'भवदभिमतोपमोदाहरणे–'गुणदोषौ बुधो गृह्णन्' इत्यादावपि चन्द्रगुणयोः, गरलदोषयोश्च धर्मयोर्भेदात् ईश्वरबुधयोरुपमा न स्यात् ः बिम्बप्रतिबिम्बभावमूलतया निरूढत इति चेत् तदुभयत्राप्यविशिष्टम्।

तत्त्वालोकः

उपमायामेव बिम्बप्रतिबिम्बभावमूलकतया धर्मे साधारण्यं नोपमेयोपमायामित्यत्र गमकाभावात् ।

**नच**—उपमेयवृत्तिधर्मस्यैव बिम्बत्वम्, उपमानवृत्तिधर्मस्यैव प्रतिबिम्बत्वमिति नियमः । अत्र च पूर्वोपमायां रजसां बिम्बत्वं, गजानां प्रतिबिम्बत्वम्, अपरोपमायां गजानां बिम्बत्वम्, रजसां प्रतिबिम्बत्वमिति वैपरीत्यमितिवाच्यम् । अभेदसादृश्यादिना रजसां गजानां चोभयत्रापि साधारणधर्मत्वे विरोधाभावात्, अन्यथा बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्योपमेयोपमाया निर्विषयत्वप्रसङ्गात् ॥

अभ्युपगतं चोपमेयोपमायां बिम्बप्रतिबिम्बभावमूलकतया धर्मे साधारण्यं **कौस्तुभकारेण**—

युधि निसर्गनिरर्गलमार्गणः प्रविगलन्निरवग्रहवर्षणः ।
वसुमतीतिलकत्वमिवाम्बुदोऽम्बुद इव त्वमुदेषि महीमुदे ॥

इत्यत्र वृष्टिबाणानां निरन्तरपातित्वशीघ्रपातित्वादिसादृश्यमूलकतया बिम्बप्रतिबिम्बभावमभ्युपगम्य साधारण्यमिति राज्ञः अम्बुदस्सदृशः, अम्बुदस्य राजेति न तयोरन्यस्सदृश इति तृतीयसदृशव्यवच्छेदः फलतीति । एवं सत्यपि उपमेयोपमायां बिम्बप्रतिबिम्बाभावाभावाभिप्रायेण 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्र परस्परोपमैवेति यः संरम्भः ग्रन्थकृतो जगन्नाथस्य च सः आग्रहमूल एव ॥

**किंच**—उपमेयोपमासिद्धान्तेऽपि वस्तुप्रतिवस्तुभावकरम्बितबिम्बप्रतिबिम्बभावे सति द्विप्रकारमात्रमुदाहरणं प्रदर्शितम् — 'सच्छायाम्भोज

तत्त्वालोकः

वदनाः ' 'वक्त्रं पद्ममिवैतस्याः' इति । न पुनर्बिम्बप्रतिबिम्बभावमात्रेणापीति न्यूनतैव ।

**यद्वा**–' रजोभिः स्यन्दनोद्धूतैः ' इत्यत्र धर्मे साधारण्यमपि कवेरभिमतमिति उपपादयितुं शक्यम् ,तथाहि -स्यन्दनोद्धूतैः घनसन्निभैः रजोभिः घनसन्निभैः गजैश्च व्योम भुवस्तलमिव, भुवस्तलं व्योमेव कुर्वन्निति योजनायां रजस्सु गजेषु च घनसादृश्यं वर्णतः प्रमाणतश्च संभवतीति मेघसादृश्यावच्छिन्नानां रजसां, मेघसादृश्यावच्छिन्नानां गजानां च बिम्ब प्रतिबिम्बभाव इति उपमाद्वयेऽपि धर्मे साधारण्यं संभवतीति उपमेयोपमा अक्षतैव ।

अत एव **सर्वस्वविमर्शिन्यां जयरथेन**– 'रजोभि इति पद्यं वाक्यभेदस्य शाब्दत्वे सत्युपमेयोपमायामुदाहृतं [अ.स.वि. २९पु] सङ्गच्छते ।

**एतेन**–' द्वयोः पर्यायेण तस्मिन् उपमेयोपमा ' इति सर्वस्व लक्षणं ' रजोभिः ' इति परस्परोपमायामतिव्याप्तमिति दीक्षितच्छायानुवर्तिना **पण्डितराजेन** यदुक्तं [रस.२०१] तदपि मन्दम् , प्राचीनग्रन्थ खण्डनमात्राभिनिवेशमूलत्वात् । यदि उपमेयोपमा महाकवेरनभिमता स्यात्तदा —

' रजोभिः स्यन्दनोद्धतैः घननीकाशदन्तिभिः । '

इति दन्ति मात्रान्वयानुकूलतया निरदेक्ष्येत् , न च तथा निरदेशि कविनेति अत्र उपमेयोपमानिराकरणं चिन्त्यमेव । अधिकं तु उत्तरत्र उपमेयोपमायां वक्ष्यते ।

**यदि तु**- परस्परोपमायामवश्यमव्याप्तिरुद्भाव्या, तदा —

**चित्रमीमांसा**

**अथ स्वोपमेयतावच्छेदकभिन्नधर्मावच्छिन्नत्वमुपमानस्य तद्भिन्नत्वमिति विवक्षितम् । इदमपि न सम्यक्,**

तत्त्वालोकः

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥'

इति उदाहर्तव्यम् ।

अत्र च विधुसवित्रोः सुखदुःखवशीकृतमनसां विषये सुखसमये दुःखदत्वं, दुःखसमये सुखदत्वमिति वैपरीत्यमात्रप्रतीत्या परस्परसादृश्यमेव न तृतीयसदृशव्यवच्छेदः इति उपमानोपमेयतावच्छेदकयोः भेदाऽभावात् अव्याप्तिरिति विभावनीयम् ॥

पूर्वोक्त एव तद्भिन्नत्वपरिष्कारे स्वपदनिवेशे कृतेऽव्याप्तिः परिहर्तुं शक्येत्याशंकते—अथेति । स्वस्येति षष्ठ्यर्थो निरूपितत्वम्, स्वपदस्य उपमानमर्थः । तथाच स्वोपमेयतावच्छेदकेत्यस्य उपमाननिरूपितोपमेयतावच्छेदकेत्यर्थः । प्रकृतोपमाननिरूपितं यदुपमेयतावच्छेदकं तदपेक्षया भिन्नो यो धर्मः, अर्थात् उपमानतावच्छेदकरूपः तदवच्छिन्नत्वम् उपमानस्य तद्भिन्नत्वमितिपदेन विवक्षितमित्यर्थः ।

एवं च 'रजोभिः' इत्यत्र परस्परोपमेति पक्षे स्वं भूतलं तन्निरूपितं यदुपमेयतावच्छेदकं व्योमत्वं भूतलत्वविशिष्टे उपमाने इति नाव्याप्तिः । तथा 'सविता विधवति' इत्यत्र स्वं–विधुः तन्निरूपितं यदुपमेयतावच्छेदकं सवितृत्वं, तद्भिन्नत्वं विधुत्वविशिष्टे विधौ इति नाव्याप्तिः ॥ एवं– 'भणितिरिव मतिः' इदि रशनोपमायां स्वं भणितिः

उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिः
बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥

तत्त्वालोकः

तन्निरूपितं यदुपमेयतावच्छेदकं मतित्वं तद्भिन्नत्वं भणितित्वविशिष्टभणितौ इति नाव्याप्तिः ।

सत्यम् — अथापि

'सुगन्धि नयनानन्दिमदिरामदपाटलम् ।
अंभोजमिव ते वक्त्रं त्वद्वक्त्रमिव पङ्कजम् ॥'

इत्युपमेयोपमायां अतिव्याप्तिः स्यात् । तत्र अंभोजनिरूपितोपमेयतावच्छेदकवक्त्रत्वभिन्नाम्भोजत्वावच्छिन्नत्वमुपमानेस्तीति न च वाच्यम्, उपमेयोपमायाम् अतिव्याप्तिवारणायैव लक्षणे एकदेत्युपादानेन तत्परिहारादिति चेत् ;

इदमपि न समीचीनम्, यत्र स्वोपमेयतावच्छेदकस्यैवोपमानतावच्छेदकत्वं तादृशाभिन्नधर्मिकोपमासु अव्याप्तेरपरिहरात् इत्यभिप्रायेण तादृशस्थलं दर्शयति — **उपाददे इत्यादि ।** सहस्ररश्मिः तस्य त्वष्ट्रा निर्मितं नवम् आतपत्रम् उपाददे, तद्दूकूलात् अविदूरमौलिः सः उत्तमाङ्गे पतद्गङ्ग इव बभौ इत्यन्वयः ।

सहस्रं रश्मयो यस्य सः सहस्रकिरणस्सूर्यः, तस्य हरस्य त्वष्ट्रा देवशिल्पिना विश्वकर्मणा 'त्वष्टा नाम स देवानाम्' इत्यमरः ।

तत्त्वालोकः

निर्मितं– कृतं–नवं नूतनम्, आतपत्रम्—छत्रम्, उपाददे–धृतवान् । उपमिमीते, तद्दुकूलादिति । तस्य आतपत्रस्य दुकूलात् प्रान्तलम्बिनः क्षौमात्, अविदूरे सन्निहितदेशे मौलिः किरीटं संयतकेशा वा यस्य सः अविदूरमौलिः । 'मौलिः संयतकेशेषु चूडायां मुकुटेप्यषणू' इति **वैजयन्ती** । तद्दुकूलात् इत्यत्र 'अन्तिकार्थकाविदूरशब्दयोगे' दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् [ पा.सू. २-३-३४ ] इति षष्ठी विकल्पितेति, दूरान्तिकार्थेभ्यो द्वितीया च [ पा.सू २-३-३५ ] इत्यस्मादनुकृष्टा पञ्चमी । सः हरः उत्तमाङ्गे शिरसि पतन्ती गङ्गा यस्य सः पतद्गंगः शिव इव बभौ—बभासे इत्यर्थः ।

अत्र उत्तमाङ्गनिपतद्गङ्गप्रान्तलम्बिदुकूलसन्निहितमौलेश्चोपमा निबद्धा । उभयत्रापि शिवत्वमेवोपमेयतावच्छेदकं चेति स्वोपमेयतावच्छेदकभिन्नधर्मावच्छिन्नत्वं नोपमानस्येति अव्याप्तिः ॥

**नन्वत्र** — एकस्यैवेश्वरस्य सादृश्यप्रतियोगितया अनुयोगितया चान्वयो नोपपाद्यते, सादृश्यस्य भेदघटितत्वादितिचेत् ; 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे' इति न्यायेन दुकूलसन्निधानविशिष्टस्य ईश्वरस्य निपतद्गङ्गाविशिष्टस्य ईश्वरस्यैव उपमा निबद्ध्यमाना बाधिता सती तद्विशेषणयोः दुकूलसन्निधानगंगापतनयोः दुकूलगंगयोर्वा सादृश्ये पर्यवस्यतीति काव्याप्तिरिति चेन्न,

न ह्यलंकारघटनाऽघटनाविवादं पुरस्कृत्य कवेरभिप्रायोऽन्यथयितुं युक्तः । यतोऽत्र पूर्वं शिरसि निपतन्मन्दाकिनीविशिष्ट ईश्वरः अनुभूतः इदानी अधोलम्बमानातपत्रदुकूलसन्निहितमौलिस्सन् अनुभूयमानः कालान्तरानुभूतेश्वरसदृशो दृष्ट इति हि कवेरभिप्रायः । अन्यथा,

**तत्त्वालोकः**

उपाददे तस्य सहस्ररश्मिः त्वष्ट्रा नवं निर्मितमातपत्रम् ।
यन्मौलिसंसर्गिततद्दुकूलं बभौ पतत्तत्सुरापगेव ॥

इति निर्मातव्यं स्यात् । पतन्ती तस्य के शिरसि सुरापगेव—देवगंगेव इत्यर्थः ॥ न च तथा निर्मितं कविना ।

**किंच**—सविशेषणे हीति न्यायोपगमे मीमांसाकुशलता आविष्कृता स्यात्, न पुनः कविहृदयसंस्पर्शिता भावुकता वा । अतः अनुभवानुसारेण अभिन्नधर्मिकोपमाऽपि इष्यते ।

**यत्तु कौस्तुभकृतोक्तम्**—नात्र परमेश्वरत्वमुपमानोपमेयतावच्छेदकं किन्तु दुकूलविशिष्टपरमेश्वरत्वमुपमेयतावच्छेदकं, गंगाविशिष्टपरमेश्वरत्वम् उपमानतावच्छेदकमिति भेद एव । अतश्चात्र उपमानतावच्छेदकतापर्याप्त्यधिकरणस्य उपमेयतावच्छेदकतापर्याप्त्यनधिकरणत्वरूपस्यैव उपमेयोपमापेक्षया उपमाने भिन्नत्वस्य विवक्षोपारूढत्वात् । तेन चात्र उपमानतावच्छेदकता गंगाविशिष्टपरमेश्वरत्व एव पर्याप्ता न पुनः परमेश्वरत्वमात्रे, उपमेयतावच्छेदकता च दुकूलविशिष्टपरमेश्वरत्व एव न पुनः परमेश्वरत्वमात्र इति तादृशभेदस्यात्रापि संभवान्नाव्याप्तिरिति **विद्यानाथाशयात्** इति ध्वनितम्, तत् धर्मिभेदारोपाभिप्रायेण न तु धर्मिणः ऐक्येऽपि उपमा इत्यभिप्रायेण । अत एव 'गगनं गगनाकारम्' इत्यत्र भेदविवक्षायामुपमा, सदृशान्तरव्यवच्छेदविवक्षायामनन्वयः इति विवक्षापर्यन्तानुधावनं नव्यैः कृतमिति बोध्यम् ॥

तुष्यतिवतिन्यायेन उपमानरूपधर्मिणः एकत्वेऽपि तदवच्छेदकीभूतधर्मयोः दुकूलसन्निधानगंगापतनयोः भेदात् नाव्याप्तिरित्युच्यते, तदा

चित्रमीमांसा

द्वारं द्वारमटन् भिक्षुः शिक्षते न तु याचते ।
अदत्वा मादृशो मा भूः दत्वा त्वं त्वादृशो भव ॥

तत्त्वालोकः

उभयत्रापि धर्मभेदेऽसति यत्र धर्मिणः ऐक्यं तादृशोदाहरणविशेषे अव्याप्तिः इत्युदाहरति—**द्वारं द्वारमिति** । भिक्षुः द्वारं द्वारं अटन् (एवं) शिक्षते, न तु याचते 'अदत्वा मादृशः त्वं मा भूः, दत्वा त्वादृशः त्वं भवे'त्यन्वयः।

भिक्षुः–भिक्षुकः न तु मस्करी तद्भिक्षणस्य शास्त्रानुमतत्वात् । अत एव स्वेन जन्मान्तरदानाभावनिबन्धनदारिद्र्यनिमित्तकः स्वीयसादृश्य निषेधः उपपद्यते । द्वारं द्वारं–प्रतिप्रतीहारम्, दृष्टिगोचरं द्वारं कमपि अपरित्यज्य(परिपाट्या) इत्यर्थः । अटन् भ्रमन् वीप्सायां आनुपूर्व्ये वा द्विर्भावः । एवं वक्ष्यमाणक्रमेण गृहिणः शिक्षते बोधयति । किमिति शिक्षते ? अदत्वा क्षुधितादेरन्नादिकम् किमपि अवितीर्य, मादृशः अहमिव त्वं मा भूः, मा भवेत्यर्थः । प्रवर्तनायाम् लिङा भाव्यम्, अथापि माङ्युपपदे लिङपवादः लुङिति बोध्यम् । 'माङि लुङ्' [पा सू. ३.३१७] इति सर्वलकारापवाद इत्यन्यत्र व्यक्तम् । दत्वा वितीर्य त्वादृशः त्वमिव, त्वं भव ।

उत्पतन्नपि चाकाशं विशन्नपि रसातलम् ।
अटन्नपि महीं कृत्स्नां नादत्तमुपतिष्ठते ॥

'दारिद्र्यमप्रदानेन' इत्याद्युक्तनीत्यनुसारेण अहं अतीतजन्मनि अवितरणात् अस्मिन् जन्मनि दरिद्रो भूत्वा त्वामपि याचमानः अस्मि ।

**इत्याद्यभिन्नधर्मिकोपमासु अव्याप्तेश्च, तत्र परमेश्वरत्वादेः स्वोपमेयतावच्छेदकस्यैव उपमानतावच्छेदकत्वात् ॥**

**श्लेषव्यावृत्त्यर्थः 'धर्मतः' इतिविशेषणमप्ययुक्तम् ।**

**तत्त्वालोकः**

एतादृशी दुरवस्था भवतः आगामिजन्मनि मा भूत् अतो दानपरो भवेति । एवं च दरिद्राणां भिक्षणं गृहिणां शिक्षणे पर्यवस्यतीति भिक्षुकविषये अद्यत्वे परिदृश्यमाना अनास्था अनुचितेति कवेराशयः ॥

अत्र अतीतजन्मनि अदातुर्मम अहं सदृशः, अतीतजन्मनि दानात् यद्दातृत्वं भवता उपलब्धं तादृशस्य तव त्वमेव सदृशः भवेः इत्यर्थानुगुणतया स्वस्य स्वयमेवोपमानम् तस्य स एवोपमानमिति तदवच्छेदकीभूत धर्मश्च अदातृत्वादिरूप एक एवेति स्वोपमेयतावच्छेदकभिन्नधर्मावच्छिन्नत्वमुपमानस्य न दृश्यत इत्यव्याप्तिरिति भावः ॥

अत्र अव्याप्तिप्रकारमुपपादयति **इत्यादीति** । अभिन्नधर्मिकेत्यत्र द्वेधा विगृह्यते—अभिन्नः धर्मी यस्यां उपमायां सेत्येका—तदा 'उपाददे' इतीदमुदाहरणम् । अभिन्नः धर्मः यस्यां सा उपमा अभिन्नधर्मिकोपमा तासु अभिन्नधर्मिकोपमासु इति विगृह्यते, तदा 'द्वारं द्वारम्' इत्युदाहरणम् ।

यद्यत्रापि जन्मभेदेन भिन्नं अवच्छेदकं शरीरमुपादाय भेद उपपाद्यते, तदा अव्याप्तेर्नावकाश इत्यपि बोध्यम् ।

इत्थं भिन्नेनेत्युपादाने दोषं प्रदर्श्य 'धर्मतः' इति विशेषणमपि अयुक्तमिति खण्डयितुमुपक्रमते–**श्लेषेति** ।

तत्त्वालोकः

'सकलकलंपुर मेतज्जातं संप्रति सुधांशुबिम्बमिव'

इत्यत्र पुरसुधांशुबिम्बयोः कलकलध्वनिमत्व–अखिलकलापरिपूर्णत्वयोः धर्मयोः भेदेऽपि तादृशार्थद्वयबोधिकायाः 'सकलकलम्' इत्येवंरूपायाः शक्ततावदच्छेकानुपूर्व्याः अभेदात् शब्दसाम्यमादाय श्लेषालंकारता । उपमायामिव श्लेषे गुणक्रियासाम्यं नापेक्ष्यते किन्तु शब्दसाम्यमात्रम्। अत एव–**सर्वस्वकारेण**– 'एवं च 'सकलकलं पुरमेतत्' इत्यादौ न गुणक्रियासाम्यवत्शब्दसाम्यमुपमाप्रयोजकम्, अपि तु उपमाप्रतिभोत्पत्तिहेतुः श्लेष एवावसेयः' इत्यभिहितम् । एवं चात्र उपमायाः प्रतिभानमात्रम् । न तु तत्रैव विश्रान्तिः ।

अत एव **विद्यानाथेन**–अलंकाराणां वैलक्षण्यकथनावसरे 'अर्थसाम्यशब्दसाम्याभ्यामुपमाश्लेषयोः भेदः' इत्युक्त्वा उपमालक्षण घटकस्य 'धर्मतः इति दलस्य कृत्यप्रदर्शनावसरे श्लेषे शब्दसाम्यमात्रमुपगतम्, न गुणक्रियासाम्यम्' । इति प्रतिपाद्य श्लेषोदाहरणे उपमालक्षणस्यातिव्याप्तिर्वारिता । इत्थं च 'सकलकल'मित्यत्र शब्दमात्रसाम्यमिति श्लेष एव नोपमेति 'धर्मतः' इति विशेषणं सफलमिति विद्यानथाशयः सर्वस्वकाराद्यनुगुणः भामहादीनामपि सम्मत इति प्रतिभाति ॥

**अत्रेदमवधेयम्**–यद्यपि श्लेषालंकारः साधर्म्यमूलः इति **भामहादीनां** सम्मतम् । अथापि उपमापेक्षया श्लेपस्य नानाधर्मनिमित्तवत्त्वकथनेन व्यापकत्वम् इति श्लेषविषये सर्वत्रोपमायाः प्रसगो नास्तीति भामहः । इत्थंसति श्लिष्टप्रयोगेषु किं श्लेषः आहोस्विदुपमा प्राधान्यं भजते इति सन्देहः । तत्र **उद्भटमतानुयायिनां** सर्वस्वकारविद्यानाथादीनां इदं समाधानम् ।

**तत्त्वालोकः**

तथाहि—'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती'ति **वैयाकरणपरिभाषाम्** अनुरुध्य बाध्यसामान्यचिन्ताश्रयणेन स्वविषये प्राप्तस्य सर्वस्याप्यलङ्कारस्यायं श्लेषः बाधकः । तथा च श्लेषप्रवृत्त्ययोग्यलक्ष्येषु उपमादीनां चारितार्थ्यात्, अस्याचारितार्थ्यात् तेषां बाधः । बाधबीजं तु श्लेषस्य चमत्कारित्वं तुल्ययोगितादिवत् । उपमादीनां तु अङ्गत्वं तुल्ययोगिताव्यतिरेकादौ उपमादिवत् इति । अत एव 'प्राधान्येन व्यपदेशा भवन्ति' इत्युच्यते । यदा श्लेषः तदा उपमायाः उपस्कारकत्वमेव तदा च न तया व्यपदेशः उपस्कारकत्वावस्थामनुभवन् तदैव कथमुपस्कार्यतां भजेत विरुद्धत्वादिति ।

किं च—उपलब्धेष्वालंकारिकेषु आद्येन **भामहेन**—उपमां लक्षयता

विरुद्धेनोपमानेन देशकालक्रियादिभिः ।
उपमेयस्य यत्साम्यं गुणलेशेन सोपमा ॥ [भा. का. २–३०]

इति केनचित् गुणेन साम्ये उपमेति प्रदर्श्य,

'दूर्वाकाण्डमिव श्यामं, तन्वी श्यामा यथा लता'

इति अश्लिष्टैरेव पदैः गुणसाम्ये उदाहरणं प्रदर्शयता, तेनैव तृतीयपरिच्छेदे—

'उपमानेन यत्तत्त्वं उपमेयस्य साध्यते ।
गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥

छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ।
मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥'

तत्त्वालोकः

इत्युदाहरणे श्लिष्टशब्दैः गुणसाम्ये क्रियासाम्ये शब्दसाम्ये च श्लेष इति श्लेषमुदाहरता प्रदर्शित इव भाति ॥ एवं—

यच्चेतोहारि साधर्म्यं उपमानोपमेययोः ।
मिथोविभिन्नकालादिशब्दयोरुपमा तु तत् ॥ [उ. का. १-१५]

इति लक्षयता, (प्रथमवर्गे)

नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरश्श्रियः ।
तरुण्य इव भान्ति स्म चक्रवाकैस्स्तनैरिव ॥ [उ. का. १-१९]

इत्यश्लिष्टामुपमामुदाहरता , तथा श्लेषप्रकरणे —

एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम् ।
स्वरितादिगुणैर्भिन्नैः बन्धः श्लिष्टमिहोच्यते ॥

अलंकारान्तरगतां प्रतिभां जनयत्पदैः ।
द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम् ॥

इति श्लेषं लक्षयित्वा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।
प्रभातसन्ध्येवास्वाप फललुब्धेहितप्रदा ॥

इत्युदाहरता भट्टोद्भटेन—तदेतद्विवृण्वता भट्टेन्दुराजेन—

'अर्थभेदेन तावच्छब्दाः भिद्यन्ते' इति भट्टोद्भटस्य सिद्धान्तः । शब्दार्थश्लेषौ उपमाप्रतिभानद्वारा अलंकारतां भजेते । अतोऽनेन अनवकाशत्वात्स्वविषये प्राप्तान्यलंकारान्तराणि अपोद्यन्ते । तेषां विषयान्तरे सावकाशत्वात् 'इत्याद्युक्त्वा' शब्दव्यतिरेकेण तु साधारणो धर्मोऽर्थाधि-

तत्त्वालोकः

करणोऽत्र न विद्यते । तेन नेयमुपमा । अपि तु श्लेषः उपमाप्रतिभोत्पत्तिहेतुः' इत्याद्यभिहितम् ॥

एवं–**वामनेनापि**–स्वकीये काव्यालंकारे-'उपमानेनोपमेयस्य गुणलेशतः साम्यमुपमा' [वा. का. सू. ४–२–१] इति लक्षयित्वा—'कमलमिव मुखं मनोज्ञमेतत्' इत्यश्लिष्टमुदाहरता, तथा तेनैव चतुर्थतृतीये–प्रतिवस्तुप्रभृतिरुपमाप्रपंचः [वा. का. सू. ४–३–१] इति प्रतिज्ञाय 'सधर्मेषु तन्त्रप्रयोगे श्लेषः' [का. सू. ४-३-७] इति लक्षयित्वा उपमाने–नोपमेयस्य धर्मेषु–गुणक्रियाशब्दरूपेषु सः–तत्त्वाध्यारोपः तन्त्रप्रयोगे-तन्त्रे–णोच्चारणे सति श्लेषः इति वृत्तिं प्रदर्श्य 'आकृष्टमण्डलाग्ररुचयः' इत्यत्र मनाक् शब्दसाम्यमपि प्रयोजकमिति सूचितम् ।

**सर्वस्वकारस्तु**–श्लेषे शब्दसाम्यमात्रं समस्ति । न पुनः गुणक्रिया-साम्यमिति उपमाप्रतिभोत्पत्तिहेतुः श्लेष एवेत्युपपाद्य उपमाया अत्र प्रतिष्ठा नास्तीत्येवाह । एतावतैव **विद्यानाथः** श्लेषोपमयोः विषयविभागं प्रदर्शितवान् । शब्दसाम्ये श्लेषः । गुणक्रियादिसाम्ये उपमेति ।

**विद्यानाथ** एव श्लेषनिरूपणावसरे—

'प्रकृताऽप्रकृतोभयगतमुक्तं चेत् शब्दमात्रसाधर्म्यम् । श्लेषोऽयम् (श्लिष्टत्वं सर्वत्राद्यद्वये नान्त्ये)' इति लक्षयित्वा–

'राज्ञः पूजाविधिं धत्ते स्फुरदब्जमणित्विषि ।
विजितारिपुरो मूर्तौ विलसत्सर्वमङ्गलः ॥

### चित्रमीमांसा

**तत्र न शब्दसाम्यमात्रमिवेनोच्यते किंतु गुणसाम्यमपीति तद्व्यावृत्तेः ॥**

### तत्त्वालोकः

राजमौलिः प्रतापाङ्करुद्रो रुद्र इव स्थितः ।

इति सभङ्गाभङ्गश्लेषौ शब्दालंकारौ अर्थश्लेषेऽनुप्रवेश्य श्लेषस्य विविक्तोदाहरणालाभं मन्यमानः उपमाश्लेषयोः विषयविवेकं कृतवान् । स न युक्त इति प्रतिपादयति–**तत्रेत्यादिना** ।

तत्र – सकलकलमित्यादौ, इवेन – इवपदेन शब्दसाम्यमात्रम्–शब्दसाम्यमेव । न उच्यते – न प्रतिपाद्यते । किंतु इवेन गुण–साम्यमप्युच्यते–प्रतिपाद्यते । एवं च शब्दसाम्यं यथा इवशब्दो बोधयति तथैव गुणक्रियासाम्यमपि स एव इवशब्दो बोधयति । बाधकाभावात् । न च शब्दसाम्यमेव इवशब्देनोच्यते नार्थसाम्यमित्यस्ति वेदाज्ञा राजाज्ञा कुलधर्मो वा । तथा सति **–भामहेन**–श्लेषप्रकरणे–'गुणक्रियाभ्यां नाम्ना च' इति **वामनेन** च श्लेषनिरूपणावसरे 'उपमानेनोपमेयस्य धर्मेषु गुणक्रिया शब्दरूपेषु सः' [का. सू. ४–३७] इति गुणक्रियाभ्यां साधर्म्यमवलम्ब्य श्लेषोपपादनमयुक्तं स्यादपि । अतश्च विद्यानाथोक्तः विषयविभागो न युक्त इति 'धर्मतः' इति पदम् अव्यावर्तकमिति ॥

**ननु**––सकलकलमित्यत्र शब्दमात्रसाम्यमेव लभ्यते न गुणक्रियाद्यन्तरसाम्यम् । यतश्च पुरे कलकलध्वनिमत्त्वरूपं सकलकलत्वम्, सुधांशु–

### चित्रमीमांसा

ननु पुरे सकलकलत्वं कलकलशब्दसाहित्यम् । सुधांशुबिम्बे कलासाकल्यमिति नैको गुणो लभ्यत इति, मैवम्,

श्लेषभित्तिकाभेदाध्यवसायमूलया 'भेदेऽभेदः' इत्येवंरूपया अतिशयोक्त्या धर्मसाधारण्यलाभात् ॥

### तत्त्वालोकः

बिम्बे च कलापरिपूर्णत्वमिति नैकोऽनुगतो धर्मो लभ्यते इत्यगत्या अत्रत्येन इवशब्देन शब्दसाम्यमात्रमुच्यत इत्याश्रयणीयमिति शंकते—नन्विति ।

एवं च 'सकलकलमि'ति पद्ये पुरसुधांशुबिम्बोभयानुगतधर्माऽभावात् उपमा न योग्येति पारिशेष्यात् श्लेष एवेति 'धर्मतः' इत्युपादाने सत्यप्यतिव्याप्तिः परिहर्तुं शक्यैवेति पूर्वपक्षाशयः । श्लेषभित्तीति । श्लेषः एकया आनुपूर्व्या अनेकार्थाभिधानम्, भित्तिः अवलम्बनं यस्य सः श्लेषभित्तिकः स चासौ अभेदाध्यवसायश्च, तन्मूलया—तद्द्वारया 'भेदेऽभेदः' इत्येवंरूपया अतिशयोक्त्या—अनैक्येऽपि एक्यम् इत्येवंरूपया आहार्यबुध्या, धर्मसाधारण्यं-पुर—बिम्बविशेषणयोः 'सकलकल'पदश्लेषावगतयोः कलकलध्वनिमत्वषोडशकलापूर्णत्वरूपयोर्धर्मयोः सामान्यरूपतापादनमित्यर्थः । अन्यत्राप्युपमादौ उपमेयोपमानगतानां असाधारणानामपि धर्माणां सादृश्यादिद्वारकाभेदाध्यवसायेन साधारण्यम् उपगतम् ।

**यदि तु**—उपमायां धर्मस्यानुगतत्वेन यन्मुख्यं साधारण्यं तस्मिन् सत्येव तदलंकारता इति नियम्यते तदा—

चित्रमीमांसा

न ह्युपमानोपमेययोरनुगत्या धर्मस्य मुख्यसाधारण्य एवोपमालंकारः,

पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः ॥

इत्यादौ हरिचन्दन बालातपहारनिर्झराणां बिम्ब - प्रतिबिम्बभावेन निर्दिष्टानामपि साधारणधर्मत्वाङ्गीकारात् ॥

तत्त्वालोकः

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

इत्यादिप्रसिद्धोपमोदाहृतिष्वेव अव्याप्तिः प्रसज्येत, यतस्तत्र वागर्थयोः पार्वतीपरमेश्वरयोश्च उपमायां सम्पृक्तत्वं साधारणो धर्मो मुख्य इति वक्तव्यं भवति । न च तथा वक्तुं शक्यम् । वागर्थयोः सम्पृक्तत्वं वाच्य वाचकभावरूपः सम्बन्धः, पार्वतीपरमेश्वरयोस्तु नित्यसंयोगरूप इति भेदात् ।

यदि तु सम्बन्धत्वेन साधारण्यम् उपादीयते तदा द्रव्यत्वप्रमेयत्वा-दिनाऽपि तत्सुकरमिति प्रकारान्तराणां विलयप्रसङ्गात् ॥ प्रकारान्तरेणाऽपि धर्मे साधारण्यं संपाद्य उपमा निर्व्यूढा वामनादिभिः प्राङ्भिः इत्याह-- न हीति । धर्मस्येति । धर्मस्यानुगतिर्नाम -धर्मवृत्तिसामान्योपस्थापक-पदैक्यम् । तन्मूलतया साधारण्यस्य मुख्यत्वमेवेति न हि वक्तुं शक्यम् इति शेषः । अमुख्यतयापि धर्मे साधारण्यं सम्पादितमिति प्रदर्शयितुमुदाहरति —पाण्ड्योऽयमिति ।

## तत्त्वालोकः

अंसार्पितलम्बहारः, हरिचन्दनेन क्लृप्ताङ्गरागः अयं पाण्ड्यः बालातपरक्तसानुः सनिर्झरोद्गारः अद्रिराज इव आभाति इति योजना ॥ अंसयोः-भुजशिरसोः, अर्पितः लम्बो हारः-मुक्तावली यस्य सः, तथा हरिचन्दनेन-पीतवर्णगोशीर्षाख्येन चन्दनेन ['अरिशिनद चन्दन' इति कर्णाटभाषायाम् ] 'पीतचन्दनमर्केष्टं गोशीर्षं हरिचन्दनम्' इति वैजयन्ती। क्लृप्ताङ्गरागः-सिद्धानुलेपनः, अयं पाड्यः-पाण्डूनां जनपदानां राजा इत्यर्थे जनपदक्षत्रियवाचकात् पाण्डुशब्दात् 'पाण्डोर्ड्यण्' (वार्ति २५७१) इति ड्यण्प्रत्ययः 'तस्य राजन्यपत्यवदि'त्यनुसारेण भवति। बालातपेन बाल सूर्यातपेन रक्ताः-अरुणवर्णाः सानवः यस्य सः बालातपरक्तसानुः, तथा सनिर्झरोद्गारः-निर्गतप्रवाहोदकयुतः, अद्रिराजः-हिमाचल इव, आभाति शोभते। अद्रिराज इत्यत्र 'राजाहस्सखिभ्यः' (पा. सू. ५.४.९१] इति समासान्तष्टच्।

अत्र अद्रिराज पाण्ड्ययोः उपमा साधारणधर्ममन्तरा नोपपद्यते। स च वस्तुतः पाण्ड्ये हरिचन्दनहारात्मकः, अद्रिराजे बालातपनिर्झरात्मक इति धर्मः विभिन्न एव। अनयोरुपादानं च प्रकृते धर्मिणि विशेषप्रतिपादनाय। प्रकृते च धर्मिणि विशेषे प्रतिपादिते प्रवृत्तिः निवृत्तिर्वा योयुज्यते। प्रकृते च स्वयंवरप्रवृत्तायाः इन्दुमत्याः पाण्ड्ये सति संभवे अनुरागसंजननाय विशेषोल्लेखः सुनन्दाभिप्रायारूढः। अलंकृतं हि वचः हृदयग्राहि भवति। अलंकृतत्वसम्पत्तये एतादृशविशेषणोपादानमुभयत्र। एवं च सानौ संक्रान्तबालातपारुणः निपतद्धिमपयःप्रवाहः हिमवान् यथ शोभते तथा अयं पाण्ड्यः हरिचन्दनकृताङ्गरागः, कण्ठलम्बितहारः शोभते इत्युपमायां तात्पर्यात्। एवं च हरिचन्दन-बालातपयोः हारनिर्झरयोश्च विशेषणीभूते धर्मे उपमानोपमेयोभयसाधारण्यं विना उपमा न घटते।

तत्त्वालोकः

अतश्च असाधारणानामपि येनाकेनाप्युपायेन साधारणतासम्पादनं अवश्यंभावि। तदर्थं च बिम्बप्रतिबिम्बभावः आस्थेयः। आस्थितश्च **सर्वस्वकृता।** स च 'वस्तुतो भिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नयोः द्विरुपादानम्' इत्येवं परिभाषितः। तेन च साधारणीकृतयोः धर्मयोः सम्बन्धादुपमानिर्वाहः। मुख्यं तु साधारण्यं काप्यालंकारिकसम्मते उदाहरणे नैव संभवति। यथा 'मुखं चन्द्र इव' इत्यत्राऽपि न हि वस्तुतो धर्मैक्यम्। यतश्च मुखगतं लावण्यमन्यत्। चन्द्रगतं लावण्यं चान्यत्। तयोस्सम्बन्धासंभवात्। अपि तु चन्द्रगतधर्मसजातीयोऽन्योऽस्ति धर्मः। अतश्च यथाकथंचित्सहृदयहृद्यं साधारणं धर्ममादायोपमा निर्व्यूढा प्राचीनैः। उक्तं च **भामहेन**—

अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमद्युति।
यत्किंचित्कान्तिसामान्यात् शशिनैवोपमीयते॥ [भा.का.२-४४] इति।

यदि मुख्यमेव साधारण्यमित्याग्रहेत तर्हि उपमा नैव निर्व्यूढा भवेत्। अत एव-**नव्याः** सर्वस्वकारादयः धर्मे साधारण्यसंपादानायोपायान्तरमातिष्ठन्ते।

**एतेन**—उक्तोदाहरणे काव्यालंकारसूत्रकृता **वामनेन**-गुणसाम्यनिबन्धना वाक्यार्थोपमेति या परिकल्पिता सा निरवकाशा। वाक्यार्थोपमा च अनेकेषां धर्मिणां परस्परावच्छिन्नानां तादृशैरेव धर्मिभिः साम्ये भवति। यथा—

जनयित्र्याः कुलाल्याश्च रक्षित्र्या विदितोऽभवत्।
रत्नसूतेर्भुजङ्ग्याश्च प्रच्छन्न इव शेवधिः॥ इत्यादौ।

चित्रमीमांसा

ननु 'सकलकलम्' इत्यादावपि गुणसाम्यं चेदुपमैव स्यादिति चेत्, शब्दसाम्यमात्रं चेदपि किमित्युपमा न स्यात् ? न हि शब्दान्यगुणादिसाम्यमेवोपमाप्रयोजकं न शब्दसाम्यमिति कुलधर्मः,

तत्त्वालोकः

बिम्बप्रतिबिम्बभावः पुनः धर्मिणि विशेषप्रतिपादनोन्मुखानां धर्माणां भवति यथात्रेति । बिम्बप्रतिबिम्बभावेन धर्मसाधारण्ये च बहून्युदाहरणानि । तद्यथा-**मेघदूते**—

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरजाः स्निग्धगंभीरघोषम् ।
अन्तस्तोयं मणिमयभुवः तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥

इति । अत्र विद्युद्वनितादीनां मेघप्रासादविशेषाधायकतया धर्मत्वेनोपादानम् । अत एव तैस्तैरित्युक्तम् । तेषां सकृत् निर्देशाऽभावान्नानुगामित्वम् । एकार्थत्वाऽभावात् न शुद्धसामान्यरूपत्वम् । किंतु पारिशेष्यात् बिम्ब-प्रतिबिम्बरूपत्वम् । अतश्च एवंविधेषु अभेदविवक्षैव जीवितम् ॥

**यदि तु**—'सकलकलं पुरमेतत्' इत्यत्र श्लेषमूलकाभेदाध्यवसायेन गुणसाम्यं संपाद्यते । ततः उपमैवास्तु इत्युपगम्यते तदा शब्दसाम्ये उपमा न भवति इति सिद्धान्तितं भवेत् तच्च न जाघटीति शब्दान्यगुणादिसाम्ये यथोपमा उपगता तथा शब्दसाम्येऽपि सेति उपगन्तव्या तथोदाहरणदर्शनात् इत्याचष्टे—**नन्वित्यादिना** ।

चित्रमीमांसा

यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा ।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरंजनात् ॥

इत्यत्रोपमाप्रयोजकानुगतार्थनामरूपशब्दसाम्येऽपि उपमादर्शनात् ॥

तत्त्वालोकः

शब्दसाम्ये तदुदाहरणं दर्शयति—यथेति ।

यथा—येन प्रकारेण, प्रह्लादनात्—आह्लादकरणात् हेतोः, चन्द्रः, चन्द्रः अभूत्—चन्द्रपदवाच्योऽभूत्, चदि—आह्लादे इत्याह्लादार्थकाच्चदिधातोः णिजन्तात् 'स्फायितञ्चि'(उ.१७८) इत्यादिना रक्प्रत्ययः औणादिकः । यथा तपनः, सूर्यः, प्रतापात्—सन्तापोपजननात् अन्वर्थः तापनरूपार्थानुसारिनामधेयोऽभवत् । तप सन्तापे इति संतापार्थकात्तपतेर्नन्द्यादित्वात् [पा.सू. ३-१-१३४] ल्युः अनादेशश्च । तथा सः दिलीपः प्रकृतिरंजनात् प्रजानुरागजननात् हेतोः अन्वर्थः राजा अभवत् ॥

यद्यप्यत्र—दीप्त्यर्थकाद्राजतेः 'कनिन्युवृषितक्षिराजि' (उ. १-२६२) इत्यादिना कनिन् प्रत्यये रूपं राजेति । न तु रञ्जेः । अथापि 'अनेकार्था हि धातवः' इति मताश्रयणेन रञ्जनार्थकोऽपि भवति । अत एव कविः 'राजा प्रकृतिरञ्जना'दित्याह ॥ अत एव च

'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृतास्सर्वे पाठस्तेषां निदर्शनम्'

इति अभिहितं पूर्वैः ॥

### चित्रमीमांसा

**किंतु श्लेषस्य अलंकारान्तरविविक्तविषयाभावेन निरवकाशतया बलवत्त्वेन अलंकारान्तरबाधकत्वात् उपमा-प्रतिभानेऽपि तत्प्रतिभोत्पत्तिहेतुः श्लेष एव, नोपमेति मङ्खकादिभिरभ्युपेयते ॥**

### तत्त्वालोकः

**किंच—पाणिनिना** धातुपारायणं कृतम् न त्वर्थनिर्देशः । स तु **भीमसेनादिभिः संगृहीतम्** इत्यैतिह्यम् । युज्यते चैवं । यतः पाणिनेरपि प्राक्तनेन सुश्रुतमहर्षिणा स्वकीये वैद्यके तत्र तत्र धातूनां अर्थनिर्देशस्य कृतत्वात् धातूनां तदर्थानां च पारम्परिकत्वमिति ॥

अत्र चन्द्रसूर्ययोः राज्ञश्चोपमा उपनिबद्धा । सा च अनुगतार्थनामरूपशब्दसाम्यनिबन्धनी न त्वन्यथेति शब्दसाम्यमप्युपमां प्रयोजयति । अत एव **कुवलयानन्दे स्वीयग्रन्थे** एकवाचकानुप्रवेशसंकरावसरे–' शब्दतोऽर्थतो वा कविसंमतसाम्यप्रतिपादने सर्वत्राप्युपमालंकारस्वीकारात् । अन्यथा 'यथा प्रह्लादनात्' इत्यत्रोपमा न स्यात् इति ग्रन्थकृता प्रतिपादितम् ॥

**एवं तर्हि**—'सकलकलम्' इत्यत्र किमुपमा ? उत श्लेषः? अथ संकरः ? इति संशये **अलंकारसर्वस्वकृतो मङ्खकस्य** मते श्लेष एवेति प्रदर्शयति—**किन्त्विति** । अत्र तुशब्दः शब्दसाम्ये सत्युपमायाः प्रसक्तावपि 'सकलकलम्' इत्यत्र न तस्याः पार्यन्तिकी प्रतीतिः अपितु प्रतिभानमात्रम् श्लेष एव पर्यवसानमित्यंशं द्योतयति । श्लेषस्य–अनेकार्थप्रतीतिनिबन्धस्य श्लेषालंकारस्य, अलंकारान्तरविविक्तविषयाभावेन–अलंकारान्तरेभ्यः उपमातुल्ययोगितादीपकादेः अलंकारान्तरस्य, प्राकरणिका–

तत्त्वालोकः

प्राकरणिकान्यतरमात्रार्थगोचरत्वे तदुभयगोचरत्वे च व्याप्त्या, तेभ्यः विविक्तस्य असंस्पृष्टस्य विषयस्य– उदाहरणस्य अभावेन निरवकाशतया बलवत्त्वेन स्वविषये योऽयमलंकारः प्रसजति स सर्वोऽपि निरवकाशेन श्लेषेण बाध्यत इति अलंकारान्तरबाधकत्वम् , तस्मात् उपमायाः श्लेषस्थले प्रतिभानेऽपि न सा, अपि तु उपमाप्रतिभोत्पत्तिहेतुः श्लेष एवालंकारः इति भट्टोद्भट मतप्रतिपादनावसरे मङ्खकेन प्रतिपादितम् ।

अयं भावः—निरवकाशा हि विधयः सावकाशान् विधीन् बाधन्ते । 'उत्सर्गसमानदेशा अपवादाः' इति न्यायानुसारेण शब्दसाम्ये उपमायाः प्रसक्त्या तत्रैव श्लेषस्यापि प्रवृत्तिरिति निरवकाशेन श्लेषेण सावकाशायाः उपमाया बाधो युक्तः । अन्यथा शब्दसाम्ये उपमाया अप्रवृत्तौ उपमाश्लेषयोः उत्सर्गापवादभाव एव न घटेत । एवं विविक्तोदाहरणा-लाभप्रयुक्तं श्लेषस्य उपमाबाधकत्वम् उद्भटादीनामभिमतम् । न पुन श्शब्दसाम्ये उपमा, अपि तु श्लेष एवेति । एवं च शब्दसाम्ये श्लेष एव नोपमेति समर्थनं **विद्यानाथस्य** प्रमादमूलमेव । न पुनः प्राचीनाना मभिमतम् ॥

**वस्तुतस्तु**—एतादृशोदाहरणेषु एकवाचकानुप्रवेशसंकरः, उपमा वा **मङ्खकादीनाम्** अभिमत इति सर्वस्वविमर्शिनीपर्यालोचनया ज्ञायते । यतश्च—'एष च नाप्राप्तेष्वलंकारान्तरेषु आरभ्यमाणस्तद्बाधकत्वेन तत्प्र तिभोत्पत्तिहेतुरिति **उद्भटादिमतमनूद्य** 'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः' इत्यादिविविक्तोऽस्य विषय इति निरवकाशत्वाऽभावात् नान्यबाधकत्वमित्यन्यैस्सह संकरः । दुर्बलत्वाद्वा बाध्यत्वमित्यन्ये [अ.स १२५पु] इत्युक्तः । इत्थं चात्र मङ्खकादिभिरभ्युपेयत इत्युक्तिश्चिन्त्या ॥

### तत्त्वालोकः

**किंच**—'सकलकलं पुरम्' इत्यत्र यथा पदभङ्गमपेक्ष्य श्लेषः तेन सह सुधांशुबिम्बमिवेत्युपमावाचकेवशब्देन उपमा संकीर्णा। तथा 'सत्पुष्करद्योतितरङ्गशोभिनीति' पद्येऽपि मङ्खकेन श्लेषोपमयोः सांकर्यमेवोपपादितं, संकरनिरूपणावसरे [अ.स. २५५पु] न पुनश्श्लेष एवेति नवोपमेति। एवं च श्लेषप्रकरणस्थं—एवंचेत्यादि सर्वस्वस्थं वाक्यजातं उद्भटमतपरमिति बोध्यम्॥ परं तु अत्र शब्दसाम्यनिबन्धनी अर्थसाम्यानिबन्धनी वा उपमेति विचारोऽन्यः। शब्दसाम्यं श्लेषमात्रप्रयोजकमिति विद्यानाथ एवाभिप्रैति। यतश्च तेनैव प्रतापरुद्रयशोभूषणे श्लेषप्रकरणे–

प्रकृताऽप्रकृतोभयगतमुक्तं चेच्छब्दमात्रसाधर्म्यम्।
श्लेषोऽयं श्लिष्टत्वं सर्वत्राद्यद्वये नान्त्ये॥ [प्र.रु. ३१४] इति।

'अर्थसाम्य–शब्दसाम्याभ्यां उपमाश्लेषयोर्भेदः' इति च अलङ्काराणां परस्परं वैलक्षण्यप्रतिपादनावसरे उक्तम् [प्र.रु. २-४५पु]। एवं च शब्दसाम्ये उपमां निरकुर्वतो विद्यानाथस्य मते 'यथा प्रह्लादनात्' इत्यादावुपमाया अव्याप्तिदुर्वारैव। न वा तत्र उपमामन्तरा अन्योऽलंकारः प्रतिभासते। तथोपगमे निरलंकारता प्रसज्येत सा च न युक्ता। एवं च शब्दसाम्यार्थसाम्याभ्यां श्लेषोपमयोर्भेदप्रदर्शनं विद्यानाथकृतमयुक्तमेव–अव्यावर्तकत्वात्।

यदि तु शब्दसाम्याश्रयणेन उपमाप्रतिभानेऽपि उपमाबाधकत्वं श्लेषस्य परिकल्प्यते तदा तद्वैपरीत्येन श्लेषमूलकाभेदाध्यवसानेन गुणसाम्यमानीय श्लेषबाधकत्वमुपमायाः परिकल्पयितुं शक्यमिति 'सकलकलमित्यत्र' गुण

चित्रमीमांसा

ततश्च यथा शब्दसाम्यमाश्रित्योपमाप्रतिभाने तद्बाधकत्वं श्लेषस्य, तथा श्लेषभित्तिकाभेदाध्यवसायलब्धाभेदगुणसाम्यमात्रमाश्रित्योपमाप्रतिभानेऽपि तद्वक्तुं शक्यमिति न तदनुरोधेन तत्र गुणसाम्यपरित्यागः ॥

तत्त्वालोकः

साम्यपरित्यागः कर्तुं न शक्यः विनिगमनाविरहादित्याह—ततश्चेति ।

यथा–'यथा प्रह्लादना'दित्यत्र शब्दसाम्यं विना अन्यधर्मकृतं साम्यं न संभवति न तथा सकलकलम् इत्यत्र वैषम्यात् । पदभङ्गमपेक्ष्य कलासाकल्य-कलकलध्वनिमत्त्वयोः श्लेषमूलकाभेदाध्यवसायमूलतया ऐक्य संभवात् ।

श्लेषभित्तिकाभेदाध्यवसायेन धर्मसाम्यस्यानभ्युपगमे—

उपोढरागेण विलोलतारकं तथागृहीत शशिना निशामुखम् ।
यथामसस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥

इत्यादि श्लिष्टविशेषणसमासोक्त्युदाहरणे विशेषणसाम्याऽभावात् समासोक्त्यलंकारत्वाभावः प्रसज्येत । अतश्च श्लेषमूलकाभेदाध्यवसायेन धर्मसाम्यं अकामेनाप्यभ्युपगन्तव्यम् । तेनैव पथात्रापीति न गुणसाम्यपरित्यागः कर्तुं शक्यः । ततश्च तन्मूलकोपमया श्लेषोऽपि बाध्यो भविता ।

नन्वेवं तर्हि—काव्यालंकारकृता रुद्रटेनाऽपि 'सकलकलम्' इत्यादौ श्लेषमूलकाभेदाध्यवसायेनैव गुणादिसाम्यमानीय उपमा उपादयितुं शक्या स्यात्, न च तथा तेन साम्यमुपपदितम् प्रत्युत शब्दसाम्यमाश्रित्य,

चित्रमीमांसा

यत्तु रुद्रटेन 'सकलकलम्' इत्यादौ उपमां समर्थयमानेन

स्फुटमर्थालंकारौ एतौ उपमासमुच्चयौ किंतु ।
आश्रित्य शब्दमात्रं सामान्यमिहापिसंभवतः ॥

इति । शब्दसाम्यमात्रमिहोक्तम् । तदन्ततः शब्दसाम्यमाश्रित्याप्युपमा समर्थयितुं शक्येति भावेन, न त्वभेदाध्यवसायेनाऽपि गुणसाम्यं न संभवतीति भावेन ॥

स्वालोकः

अतश्च उपमायां श्लेषमूलकाभेदाध्यवसायेन गुणसाम्यसंपादनं तस्यापि न संमतमित्याशंकायां, रुद्रटमतं स्वाभिप्रायानुगुण्येन योजयति —**यत्त्विति** ।

इदमत्राकूतम्—यत्पूर्वं वर्ण–पद–लिङ्ग–भाषा–प्रकृति–प्रत्यय–विभक्ति वचनभेदेनाष्टधा श्लेषं विभज्य भाषाश्लेषव्यतिक्तश्लेषाणां उपमादिभिस्सहं संस्पर्शं प्रतिपाद्य तत्रापि अयमुपमासमुच्चययोर्वैचित्र्यातिशयमादधातीति व्यक्तीकृत्य, श्लेषस्थले शब्दमात्रं श्लिष्टं भवति नत्वर्थ इति अर्थालंकारयोरुपमासमुच्चययोः वैचित्र्याधायकत्वंकथमस्येत्याशङ्क्याह—**स्फुटमिति** । एतौ उपमासमुच्चयौ अर्थालंकारौ इति स्फुटम् । किंतु शब्दमात्रं सामन्यमाश्रित्य इहापि संभवतः इति योजना । समुच्चयपदं तुल्ययोगितादिपरम् । एवं चेदं रुद्रटवचनं कस्यांचिदुपमायां अर्थसाम्यं न भवति चेत्तदा शब्दसाम्यमाश्रित्याप्युपमा समर्थयितुं शक्या इत्यभिप्रायेण, न पुनः प्रकारान्तरेण अर्थसाम्यनिराकरणाभिप्रायेणेति ॥

वस्तुतस्तु—शब्दालंकारप्रस्तावे 'इहापि एतौ संभवतः' इत्युक्त्या

तत्त्वालोकः

श्लिष्टविशेषणेष्वपि अभेदाध्यवसायेनैक्यस्यालंकारा-न्तरेषु सर्वैरपि समाश्रयणात् ॥

तत्त्वालोकः

उपमासमुच्चययोरर्थालङ्कारमध्ये परिगणनं क्रियते प्राचीनैः न पुन-श्शब्दालंकारमध्ये । इत्थं सति तयोस्संस्पर्शः कथमिति चेत् । अर्थसाम्यरहित शब्दमात्रसाम्यवतोरुपमासमुच्चययोर्दर्शनात् तदानुण्येन शब्दालंकारेष्वपि उपमा समुच्चयौ संभवतः । एवं च शब्दश्लेषेण शाब्द्या उपमायाः परिपोषः । तथा समुच्चयस्यापि इति भाति । यतश्चैतन्मते शब्दार्थालंकारयोः न साकर्यं किंतु शब्दालंकारयोः अर्थालंकारयोर्वा भवेत् इति तदीयदशमाध्याय स्थसंकरनिरूपणफक्किकातो ज्ञायते । अन्यथा—

वसुधामहित सुराजितनीरागमना भवांश्च वर्णाश्च ।
सुरचितवराहवपुषस्तव च हरेश्चोपमा घटते ॥

इत्यत्र राजपक्षे धनतेजोऽनुकूलदेवापराभूतरागरहितमनस्त्वस्य, वर्षापक्षे भूपूजितशोभितजलागतिमत्वस्य च वस्तुतो भेदेऽपि श्लेषमूलकाभेदाध्य-वसायेनैवाभेदे संभवति तावत्पर्यन्तानुधावनस्य वैफल्यप्रसङ्गात् ॥

यदि तु श्लेषादिमूलतया अभेदमध्यवस्य धर्मसाम्यनिराकरणाभिप्रायेण शब्दसाम्यमात्रोल्लेखः **रुद्रटाभिमतश्चेत्** सर्वालंकारिकाभिमतस्य श्लिष्ट-विशेषणसाम्यगम्याऽप्रस्तुतवृत्तान्तकसमासोक्तिस्थले, श्लिष्टमालापरम्परितरूपक स्थले च तत्तदलंकारा न भवेयुः इष्यते च तत्र श्लेषमूलकाभेदाध्यवसायेन साम्यादिकमित्याह— **श्लिष्टेति** ।

अलंकारान्तरेष्विति । उपमाव्यतिरिक्तेषु समासोक्त्यादिष्वित्यर्थः ।

## चित्रमीमांसा

तस्मात् 'धर्मतः' इत्यनेन न श्लेषो व्यावर्तयितुं शक्यते ॥

## तत्त्वालोकः

तद्यथा —

निवृत्तव्यालसंसर्गः निसर्गमधुराशयः ।
अयमम्भोनिधिः कष्टं कालेन परिशुष्यते ॥[का. दर्श. २-२१२]

इत्यत्र व्यालमधुराशयपदार्थयोः न शुद्धसामान्यरूपत्वम् ! विभिन्नार्थ-वाचकत्वात्तयोः । तयोराद्यः सर्प-खलोभयवाची । द्वितीयः सुमिष्टजला-धार-समीचीनाभिप्रायोभयवची । इत्थं सति प्रकृताप्रकृतयोः समुद्रपुंसोः अन्वयिनी ये निवृत्तव्यालसंसर्गत्वनिसर्गमधुराशयत्वे तयोः साम्यं श्लेष-भित्तिकाभेदाध्यवसायमन्तरा नोपपद्येत इति समासोक्तिता न भवेत् ।

एवं 'विद्वन्मानसहंसे'ति पद्येऽपि विद्वन्मानसेत्यादौ मनो-मानसयोः भेदेऽप्यभेद इत्येवंरूपश्लेषमूलकाभेदाध्यवसायमन्तरा राज्ञि हंसत्वाद्यारोपस्य कर्तुमशक्यत्वात् प्राचीनानामभिमता मालापरम्परितरूपकालंकारता न सेत्स्यतीति एवंविधेषु ऐक्यस्य तथोपगन्तव्यत्वे तुल्यन्यायादुपमायामपि तथा-श्रयणे बाधकाभावात् । ततश्चैतस्मिन् लक्षणे 'धर्मतः' इति विशेषणं श्लेषं न व्यावर्तयतीति आह–**तस्मादिति** । तस्मात्- श्लिष्टविशेषणसमासोक्त्यादिषु अर्थभेदे सत्यप्यभेदोपगमेन धर्मे साधारण्यसम्पादनात् तत्रेवात्रापि सकल-कलमित्यादौ सकलकलासाहित्य कलकलध्वनिमत्वयोः भेदेऽपि अभेदाध्यव-सायेनैक्यस्य धर्मे सम्पादनात् 'धर्मतः' इति विशेषणोपादानेन श्लेषः व्याव-र्तयितुं-अलक्ष्यतामापादयितुं न शक्यते । इत्थं च श्लेषेऽतिव्याप्तिर्द्रढे-येति भावः ।

चित्रमीमांसा

वस्तुतस्तु 'सकलकलम्' इत्यादावुपमैवेति व्यर्थं 'धर्मतः' इति विशेषणम्। अलङ्कारान्तरविविक्तस्तु श्लेषस्य विषयः तत्प्रकरणे दर्शयिष्यते ॥

तत्त्वालोकः

'सकलकलमि'त्यादौ विमृश्यमाणे समासोक्तिविशेषे अभेदाध्यवसायद्वारा धर्मे साधारण्यं सम्पाद्य यथा तन्निर्वाहः क्रियते तद्वत् अभेदाध्यवसायेन गुणसाम्यस्यैव संभवादुपमैव युक्ता न पुनश्श्लेषःइति 'धर्मतः' इति विशेषणोपादानं वृथैवेति सिद्धान्तयति—**वस्तुतस्त्वति**।

नन्वेवं तर्हि श्लेषस्य अलंकारान्तरासंकीर्णोदाहरणानुपलम्भात् निर्विषयता स्यादित्याशंकायां समाधानमाह-**अलंकारान्तरेति**। अलंकारान्तरविविक्तः श्लेषातिरिक्तालंकाराविषयत्वे सति श्लेषविषयः तत्प्रकरणे—श्लेषप्रकरणे दर्शयिष्यते—उदाहरिष्यते मयेति शेषः। परन्त्वग्रे श्लेषप्रकरणंलुप्तम्।

अयं भावः—'चारुत्वोत्कर्षनिबन्धना हि प्राधान्यविवक्षा 'इत्युक्तरीत्या

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतः
यश्चोद्वृत्तभुजङ्गहारवलयो गंगां च योऽदीधरत्।
यस्याहुश्शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरः त्वां सर्वदोमाधवः ॥

इत्यादौ श्लेषकृत एव चमत्कारः। अत एव श्लेषव्यपदेशः। 'माधव एव उमाधव' इति रूपकप्रतीतावपि तस्याभासतामात्रत्वम्। न पुनरस्तित्वम् शुक्तौ यथाथालथळ्यादिना रजतत्वस्य प्रतीतौ सत्यामपि न तस्य प्रतिष्ठा-

चित्रमीमांसा

किंच, विविक्तविषयाभावेन अलङ्कारान्तरबाधकत्व-मिति वाचोयुक्तिरप्ययुक्ता, विषयसद्भावमात्रेण निरवकाशत्व हानेः विविक्तविषयानपेक्षणात् ॥

तत्त्वालोकः

तद्वदेवात्रापि रूपकस्य न प्रतिष्ठा इति अलंकारान्तरप्रसक्तिशङ्केति 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायस्यस्य सावकाश विषये प्रवृत्त्यभावत् उद्भटानुरोधिना रुद्रटेन अलंकारान्तरबाधकत्वं यदुक्तं तदयुक्तमिति सूचितं भवति ।

एतेन–त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिः एको लोकत्रयात्मकः ॥

इति श्लेषस्यालंकारान्तरविविक्तोऽस्ति विषयः 'इति काव्यप्रकाशकृता [का.प्र.९.उ] प्रदर्शितं न तावत्समीचीनम् । यतोऽत्र राज्ञि लोकत्रयात्मकत्वं कविसम्मतं तच्च राज्ञि पातालाद्यर्थाभेदारोपमन्तरा नोपपद्यत इति अलंकारान्तरेण रूपकेण अस्य संकरात् इत्यभिव्यञ्जितम् ॥

इत्थं श्लेषस्यालंकारविविक्तविषयाऽभावेऽपि विषयसद्भावमात्रेण निरवकाशत्वाऽभावात् अलंकारान्तरबाधकत्ववाचोयुक्तिरप्यसमीचीनेति प्रतिपादयति—किञ्चेति ।

अयं भावः—

विविक्तविषयाऽभावेन अलंकारान्तरबाधकत्वमिति पक्षः उद्भट-संमतः । तस्यायमभिप्रायः–प्रकृताप्रकृतोभयगोचरानेकार्थकशब्दविन्यास-

**तत्त्वालोकः**

स्थले श्लेषस्य प्रतिष्ठा वाच्या । तत्र केवलप्रकृतयोः, केवलाप्रकृतयोर्वा एकधर्मान्वये **तुल्ययोगितायाः**, प्रकृताप्रकृतयोः एकधर्मान्वये **दीपकस्य** प्रवृत्त्या श्लेषविषये सर्वत्र उक्तालंकारद्वयं व्याप्य अवतिष्ठते इति श्लेषस्य विविक्तोविषयो नास्ति । अत एव स्वविषये प्राप्तं सर्वमप्यलंकारं बाध्य-सामान्यचिन्ताश्रयेण बाधत इति अलंकारान्तरबाधकत्वमिति ॥

अयं च पक्षो न समीचीनः, स्वविषये सर्वत्र उपमारूपकादीनाम् अलंकारान्तराणां प्राप्तेरभावात् । यथा—'येन ध्वस्तमनोभवेने'ति प्रागुदाहृतपद्ये परस्परनिरपेक्षयोरुमाधव – माधवयोः उमाधवविषयकवाक्यार्थ-परामर्शवेलायां माधववाक्यार्थस्य स्फूर्त्यभावात् तथैव माधवविषयकवाक्यार्थ-परामर्शवेलायां उमाधवविषयकवाक्यार्थस्फूर्त्यभावात् को नामात्रौपम्यस्य अवसरः । इत्थं सति तुल्ययोगितादीपकरूपकाणां नामौपम्यमूलानां का कथा । तस्मादेवमादौ अलंकारान्तरविविक्तविषयसद्भावेन, तुल्ययो [illegible] स्कारकत्वेनावस्थानमात्रं न पुनस्तत्कृतो व्यपदेशः । प्राधान्येन व्यपदेशाः भवन्तीति' व्यवस्थितेर्वा निरवकाशत्वस्य हानेः ।

**किंच** — बाध्यसामान्यचिन्ताश्रयणेन यदि अलंकारान्तरबाधकत्वमुच्येत तदा अत्रैव रूपकप्रकरणोदाहरिष्यमाणे 'विद्वन्मानसे'त्यादिश्लिष्ट-मालापरम्परितरूपके 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इति श्लिष्टविशेषणसाम्यमूलकसमासोक्त्युदाहरणे च तयोः अनेन बाधप्रसक्त्या श्लिष्टपरम्परितरूपकश्लिष्टविशेषणसमासोक्त्योरुच्छेद एव भवेदिति न विविक्त विषयाभावमात्रेण, नापि बाध्यसामान्यचिन्ताश्रयेण अलंकारबाधो युक्तः ॥

**किंच**— बाध्यविशेषचिन्ताश्रयेणापि इतरालंकारबाधो न युक्तः— यथा लोके 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इत्यत्र दधिदानोत्तरं

तत्त्वालोकः

तक्रदानस्य, दधिदानात्पूर्वं वा तक्रदानस्य संभवे सत्यपि तक्रदानविधेः अभिमतासाधकतया 'सत्यपि संभवे बाधनं भवती'ति न्यायेन दधिदानस्य तक्रदानविधिः बाधकः। न चेह तथा बाधकत्त्वकल्पना आवश्यकी, अनेकालंकारसमावेश एव चारुतातिशयोः हारादेर्मणिबन्धनादिनेवेति 'येन नाप्राप्त'-न्यायस्य वैयाकरणसम्मतस्य प्रसरोवाऽस्ति ॥

उक्तं च—वक्रोक्तिजीविते राजानककुन्तकेन—

अलंकारस्य कवयो यत्रालंकरणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत् ॥ ३५ ॥

रत्नरश्मिच्छटोत्सेकभासुरैर्भूषणैर्यथा ।
कान्ताशरीरमाच्छाद्य भूषायै परिकल्प्यते ॥ ३६ ॥

यत्र तद्वदलंकारैः भ्राजमानैर्निजात्मना ।
स्वशोभातिशयान्तस्थमलंकार्यं प्रकाश्यते ॥ ३७ ॥

यदप्यनूतनोल्लेखं वस्तु यत्र तदप्यलम् ।
उक्तिवैचित्र्यमात्रेण काष्ठां कामपि नीयते ॥ ३८ ॥ इति

[व. जी. २-३८]।

एवं च मुक्ताकलापप्रभृतेः पदकादिमणिबन्धं विना शोभातिशयाधानाभावमाकलयन्तो वैकटिकाः यथा आभरणेन सह आभरणान्तरं योजयन्ति तथा कवयोऽपि अलंकारेणसह अलंकारान्तरं योजयन्ति इति एवंविधे विषये बाध्यबाधकभावकल्पनं आलंकारिकाणां न शोभते। अत एव

तत्वालोकः

सकलकल'मित्यत्र उपमा श्लेषेणोपस्कृता चमत्कृतिमाधत्ते,न पुनरुपमां श्लेषो बाधते श्लेषं वोपमा। परंतु वस्तुतस्त्वित्यादिना उपमैवेत्याभिधानं 'चारुत्वोऽकर्षनिबन्धनमिति मन्तव्यम्। प्राधान्यमूलको व्यपदेशः, प्राधान्यं च चारुत्वोत्कर्षनिबन्धनमिति ध्वनिकारेणाऽप्युक्तम्। अत एव उपमोत्कर्षकतया श्लेषमुपनिबबन्ध कविः॥

यदि तु—'कमलमिव मुखं' इत्यादिः साधारणधर्मयोगशून्यः उपमाविषय इत्युच्येत। तदा पूर्णोपमा निर्विषया स्यात्। साधरणधर्मप्रयोगे उपमात्वाभावात् तदप्रयोगे त्वपूर्णत्वादिति। अतः सकलकलमित्यत्रोपमैव युक्ता।

एवं च विषयसद्भावमात्रेण निरवकाशता हीयत इत्यत्र न कस्यापि विवादः। अत एव वैयाकरणैः—'रामाणाम्' इत्यादौ सुपि च इति दीर्घं 'नामि' (पा. सू ६=४-३) इति दीर्घः न निरवकाशत्वात् बाधते। तयोः विभिन्नोदाहरणेषु 'हरीणाम्' 'रामाभ्याम्' इत्यादौ 'नामि' (?) सुपि च (पा. सू. ७३. १०२) इत्यनयोश्चारितार्थ्यात्। किं तु सन्निपातपरिभाषाविरोधाश्रयणेन 'रामाणाम्' इत्यत्र दीर्घः परिहृतः। अन्यथा 'येन नाप्राप्तन्याययेन' तद्बाधकत्वमुक्तं भवेत्। न च तैः तथोक्तमित्यपि विभावनीयम्॥

एतेन श्लेषस्य उपमाबाधकत्वप्रकल्पनरीतिः न वैयाकरणसंमतेति पदकाराणामनुग्रहाऽभावस्सूचितः॥

**चित्रमीमांसा**

न ह्ययमलंकारगोचरो लोकन्यायः यद्विविक्तविषयो वक्तव्य इति, अरन्ध्ररत्नानां सुवर्णविविक्तविषयाभावेऽपि सुवर्णाश्रितानामेव चारुताहेतुत्वेन अलङ्कारान्तरत्वव्यवस्थितेः। अन्यथा निरवकाशैररन्ध्रप्रत्युप्तरत्नैः सावकाशस्य तदाश्रयसुवर्णस्य अलंकारता बाध्येत ॥

**तत्त्वालोकः**

सम्प्रति 'सर्वपथीनाः खल्वालंकारिकाः' इति नयमनुसृत्य विविक्तविषयाभावेनालंकारान्तरबाधकत्वं लोकनीत्यनुसारेणाभ्युपगम्यत इति चेत्तदनुग्रहोऽपि नोपलभ्यत इत्युपपादयति—**न ह्ययमिति** ।

अयं भावः—लोके सुवर्णाभरणम् रत्नाभरणम् , इत्यादिव्यवहारो दृश्यते । तत्र रत्नाभरणमिति व्यपदेशः सुवर्णघटिते एव रत्नाभरणे न पुनस्सुवर्णविविक्ते, सुवर्णविविक्तेषु 'रत्नम् ' इत्येव व्यपदेशः , नतु रत्नाभरणमिति । एवं च व्यवहारानुरोधेन विविक्तविषयाभावेऽपि सुवर्णाश्रितानामेव 'रत्नाभरणम् ' इति व्यवहारः , न सुवर्णाभरणमिति । अतश्च सुवर्णप्रत्युप्तरत्नजटिले रत्नाभरणमिति व्यपदेशः चारुतातिशयनिबन्धनः न पुनर्विविक्तविषयाऽभावनिबन्धनः, तथानुभवात् ।

किंचात्र श्लेषस्य विविक्तविषयाभावसंभावनायामपि तदाश्रयस्योपमालंकारस्य बाधो नोचितः अप्रतिष्ठेन श्लेषेण उपस्कृता उपमा प्रतितिष्ठतीति मणिबन्धादिना हारादेरिव चारुतातिशय एवेत्येवमादौ बाध्यबाधकभावसंभावनाऽपि नोचिता । यतःउपमामात्रेण चारुतातिशयं असम्मन्यमानः

**चित्रमीमांसा**

**नाप्ययं वाक्यवित्सम्मतः शास्त्रीयन्यायः । 'पदे जुहोति' इत्यादीनामिव 'उत्तरार्धे जुहोति' इत्यादीनां आहवनीयशास्त्रादिविविक्तविषयाऽभावेऽपि सविषयत्वमात्रेण प्रतिष्ठितत्वात् ॥**

**तत्त्वालोकः**

कविः श्लेषमलंकारान्तरं निबबन्ध । यदि श्लेषेण उपमा बाधिता स्यात् तर्हि अनौचित्यमेवापतेत् इति ।

इत्थं बाध्यबाधकभावकल्पने लोकन्यायासंमतिं प्रदर्श्य **मीमांसकसंमत्यभावमपि** प्रदर्शयितुमाह—**नाप्ययमिति** ।

विविक्तविषयाभावेन बाधकत्वमित्ययं न्यायः न वाक्यवित्सम्मतः । वाक्यं मीमांसान्यायः तद्विदन्तीति वाक्यविदो मीमांसकाः, तेषामभिमतः शास्त्रीयन्यायः । अपिशब्दः एवकारार्थकः नैवेत्यर्थः । वाक्यवित्संमतंन्यायं प्रदर्शयितुं **पूर्वतन्त्रे दशमाध्यायाष्टमपादाष्टमाधिकरणे [पदशास्त्रेण आहवनीयस्य बाधाधिकरणे]** स्थितं वाक्यमुपादत्ते—**पदे जुहोतीति** । 'अविशेषेण यच्छास्त्रमन्याटयत्वाद्विकल्पस्य तत् सन्दिग्धमारात् विशेषशिष्टं स्यात् ।' (१०-८-८-१६ पू.मी.सू) इत्यत्र सामान्यविशेषभावापन्नं विषयवाक्यद्वयमुपात्तम् 'यदाहवनीये जुहोति' इत्यनारभ्याधीतं सामान्यशास्त्रं ज्योतिष्टोमे श्रुतम्, 'पदे जुहोति, वर्त्मनि जुहोति' इति विशेषशास्त्रम्, तयोः विशेषशास्त्रेण अनारभ्यवादे, होमसामान्यानुवादेन विहितं आहवनीयं विशेषेण पदहोमेन बाध्यते, न पुनर्विकल्पः बहुदोषत्वात् । तथापि

चित्रमीमांसा

नाप्यसाधारण्येनैतच्छास्त्रन्यायः सहोक्त्यादीनाम्
अतिशयोक्त्यादिविविक्तविषयाऽभावेऽपि तदबाधेन
अलंकारान्तरत्वव्यवहारादविरोधः इहाप्यविशिष्टः ॥

तत्त्वालोकः

'उत्तरार्धे जुहोति' इत्यस्य 'आहवनीये जुहोती'त्यादिविविक्तविषयाभावेन सापेक्षत्वेऽपि न तयोः बाध्यबाधकभावः। न चैतावता उत्तरार्धहोमस्या प्रतिष्ठितत्वम् विषयसद्भावमात्रेण निरवकाशत्वहानेः प्रतिष्ठानात्। तद्वदेवा त्रापि श्लेषस्य विविक्तविषयाऽभावेऽपि विषयसद्भावमात्रेण प्रतिष्ठानाद् नोपमाबाधकत्वम्। प्रत्युत उपमाश्रयेणैव श्लेषस्य प्रतिष्ठा प्रतीयते इति ॥

न वयं केवलमीमांसकाः न वा केवलवैयाकरणा अपि तु आलंकारिका अपि। अत एवास्माकं विविक्तविषयसद्भाव एव अलंकाराणां प्रतिष्ठा नोचेत् बाध्यबाधकभाव इत्युच्यते चेत्तदपि न सेत्स्यति तथा सकलालंकारिकैरनभ्युपगमात्। प्रत्युत द्वयोरलंकारयोः प्रतीतौ यश्चमत्कारातिशयाधायकः सः स्वामभिख्यां लभते अन्यः तमुपस्कुर्वन् स्वामभिख्यां त्यजति। यथा परगृहस्थितो जनः स्वगृहस्थितत्वनिबन्धनं प्राधान्यं न लभते तद्वदत्रापि उपमोपस्कारतया स्थितः श्लेषः स्वामभिख्यां यजति उपमा तामुपादत्ते। अत एव च 'प्राधान्येनव्यपदेशाः भवन्ती'ति न्यायः आलंकारिकैरनुस्रियते। अन्यथा अतिशयोक्त्यादिविविक्तविषयाभावेऽपि सहोक्त्यादीनाम् अतिशयोक्त्य बाधेन अवस्थानं अवगम्यते तदसंगतं स्यात्। एवं च 'यश्चोभयोः' इति न्यायात् परिहारस्तुल्य इति बाध्यबाधकभावकथनमुद्भटादीनामनुचितमेवेति मनसि निधायाह—नापीति ॥

**चित्रमीमांसा**

**तस्मादत्र उपमाप्रतिभोत्पत्तिहेतुः श्लेषालंकारः इत्ययुक्तम् । प्रत्युत उपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः । न हि पुरवर्णनप्रकरणे सकलकलमिति तद्विशेषणपदस्य सुधांशुबिम्बमेवेत्युपमाया अनिबन्धने कलासाकल्यलक्षणार्थान्तरप्रतिभा संभवति ॥**

**तत्त्वालोकः**

अयंभावः–अलंकारान्तरासहकृतसहोक्त्यादिनामनुलम्भात् उपलम्भे वा अचमत्कारित्वेनालंकारव्यपदेशानर्हत्वात् विविक्तविषयासद्भावो न बाधकतोपयोगी, नाप्यलंकारान्तरत्वाभावप्रयोजक इति ॥

इत्थं उपमाश्लेषयोरविरोधं विविक्तविषयसद्भावं च प्रदर्श्य 'उपमाप्रतिभोत्पत्तिहेतुः श्लेषः' इति मङ्खकादिमतं निरस्य वैपरीत्यमेव सयुक्तिकं स्थापयति–**तस्मादत्रेति** ।

अयं भावः—'सकलकलं पुरमेतत्' इत्यत्र श्लेषविषये उपमायाः प्रतिभानमात्रं न पुनः प्रतिष्ठा, सा च श्लेषस्यैव इति हि **सर्वस्वकारादयः** आहुः–तन्न युक्तम्—सकलकलं पुरमेतत् इत्यत्र 'सकलकलम्' इत्येतावन्मात्रमुपादाय कलासाकल्यलक्षणार्थान्तरप्रतीतिप्रयोजिकायाः सुधांशुबिम्बमिवेत्युपमाया अघटनायां सत्याम् अस्मादेव पदात् तादृशार्थान्तरप्रतीतेस्सम्भवाऽभावात् तादृशार्थान्तरप्रतीतिरुपमानिबन्धन्येव । तस्माच्छब्दसाम्येप्युपमायाः सुघटत्वात् 'धर्मतः' इतिपदोपादानं व्यर्थमेव ।

## तत्त्वालोकः

इत्थं च श्लेषः उपमां निर्वहन् तदङ्गं भवति। श्लेषेणोभयोरर्थयोः प्रतीतिं विना उपमायाः अप्रतिष्ठानात्। श्लेषश्च तां प्रतिष्ठापयति। प्रतिष्ठिता चोपमा चमत्कारातिशयं आधत्ते। चमत्करातिशयमादधाना स्वामभिख्यां लभते अतश्चात्रोपमैव। श्लेषस्तु स्वामभिख्यां परित्यजति, दीपकादौ उपमावत्। अत एव 'प्राधान्येन व्यपदेशाः भवन्ति' इति अभियुक्तानाम् अभिधानम्।

एवमादौ शब्दसाम्यस्य इवशब्दप्रतिपाद्यत्वात् श्लेषवाचकत्वम् इवादीनामनुपपन्नमेव। तस्मादत्रैकवाचकानुप्रवेशसंकराभिधानमप्ययुक्तमेव। एवमादिषु अङ्गाङ्गिभावसंकाराभिधानस्योचितत्वात्। अत एव **कुवलयानन्दे अप्पय्यदीक्षितैः**--'सत्पुष्करद्यातितरङ्गशोभिनी'ति पद्ये सर्वस्वकारेण उपपादितमेकवाचकानुप्रवेशसंकरं परित्यज्य अङ्गाङ्गिभावसंकरोपपादनं कृतमिति मन्तव्यम्॥

**नव्यास्तु**—इवशब्दस्य श्लेषवाचकत्वेऽपि श्लेषावगतयोरर्थयोः साधारणधर्मत्वेन इवशब्दबोध्यत्वावश्यकत्वात्, तावतैव प्रकृतोदाहरणतोपपत्तेः 'स पुष्करे'त्यादीनां पद्यानां एकवाचकानुप्रवेशसंकराभिधानं युक्तमेव। इवशब्दस्य साधारणधर्मवाचकताया अप्यभ्युपगमात् इत्याहुः। एवं च अत्राप्येकवाचकानुप्रवेशसंकरोऽपि कथंचिद्घटते इत्येषामाशयः स्यात्॥

**वस्तुतस्तु**—'सकलकलं पुरमेतत्' इत्यत्र चतुष्षष्टिकलावत्त्वस्य कलकलध्वनिमत्त्वस्य च प्रकरणवशादेव प्रतिपत्त्या श्लेषः प्रतिपद्यते। अथापि नालंकाररूपस्सः। अलंकारताप्रयोजकश्लेषस्तु उपमाया निबन्धनमपेक्षत इति तयोरङ्गाङ्गिभावसंकरः। उपमाया अङ्गित्वं श्लेषस्याङ्गत्वमिति व्यवस्था उचिता। न पुनरेकवाचकानुप्रवेशसंकरः इति॥

चित्रमीमांसा

प्रतीपव्यावृत्त्यर्थं 'अन्येन वर्ण्यस्य साम्यम्' इत्युक्तमपि अयुक्तम्। तत्र अन्येनेत्यस्य भिन्नविशेषणे पौनरुक्त्यात्।

किंच, वर्ण्यात् प्रकृतादन्येन अप्रकृतेनेति यद्यर्थस्तदा—

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु।
रजांसि समरोत्थानि तच्छोणितनदीष्विव॥

तत्त्वालोकः

इत्थं 'धर्मतः' इत्यस्योपादानमव्यावर्तकमव्यापकं चेति दूषणमभिधाय 'वर्ण्येन अन्यस्य साम्यम्' इत्यत्र अन्येनेति पुनरुक्तमित्याह—**प्रतीपव्यावृत्त्यर्थमित्यादिना**॥ प्रतीपव्यावृत्त्यर्थम्—प्रतीपे 'त्वल्लोचनमं पद्मम्' इत्यादौ उपमानस्योपमेयत्वकल्पनात्मके प्रतीपोदाहरणे व्यावृत्त्यर्थम् अतिव्याप्तिं वारयितुम् अन्येन वर्ण्यस्य साम्यमिति विशेषणं यदुक्तं तदयुक्तम्, तत्र अन्येनेत्येतत्समानार्थकस्य भिन्नेनेतिविशेषणस्योपादानादेव प्रतीपव्यावृत्तेः पुनरन्येनेत्युक्तं पौनरुक्त्यदोषग्रस्तमिति भावः॥

यदि अन्यपदार्थस्य प्रतियोगिपदार्थसाकांक्षतया वर्ण्यात् प्रकृताद न्येन अप्रकृतेन इति अर्थः तदा अन्यपदमप्रकृतार्थकं भवति। तथा च समुच्चितोपमायामव्याप्तिरित्याह — **किंचेति**। यद्यपि अत्र युद्धवर्णनस्य प्रकृतत्वात् रक्षश्शोणितनदीषु रजपतनस्य वानरकोटिषु इतररक्षःपतनस्य चेत्युभयोः प्रकृतत्वमेव, अथापि शोणितनदीषु रजःपतनवत् इतररक्षसां वानरकोटिषु पतनवर्णनद्वारा इतररक्षस्सु अचेतनतुल्यतां विवेकराहित्यं च व्यञ्जयितुं प्रकृतेनैव प्रकृतस्योपमा परिकल्पिता इत्येतावन्मात्रेण अनुपमात्वं

इति समुच्चितोपमायामव्याप्तिः। तत्र समराङ्गत्वेन रजसां शोणितेषु पतनस्यापि वर्ण्यत्वात् ॥

यदि तु स्वयं वर्ण्येन अवर्ण्ये न वा कुतश्चिद्वर्ण्यादन्येनेत्यर्थः, तदाप्युत्कृष्टगुणत्वादुपमानभावमप्यसहमानस्योपमानत्वकल्पन रूपे प्रतीपेऽतिव्याप्तिः यथा—

तत्त्वालोकः

प्रसज्येत इत्याशंकायामाह—**तत्र समरेति**। एवं चात्र वर्ण्यत्वावच्छिन्न-प्रतियोगिताकभेदो नास्ति। न च शोणितनदीषु रजःपतनस्य प्रकृतत्वं मास्तु इति वाच्यम्। 'यथा अद्यैव रक्षश्शोणितनदीषु पतितानि रजांसि प्रविलयं गतानि तद्वत् वानरकोटिषु रक्षसां पतनं स्वस्वरूपहानिकरं न पुनर्वानराणा'मिति प्रात्यक्षिकानुभवद्योतनाय तथा प्रकृतयोरुपादानात्। तथा च प्रकृतेन साम्यं नाभिधीयत इति लक्षणसमन्वयाभावादव्याप्तिः इत्यर्थः ॥

यदि तु 'अन्येने'त्यस्य पूर्वस्मिन् इव वर्ण्यत्वावच्छिन्नप्रतियोगिताक भेदवता इति नार्थः, किंतु वर्ण्यप्रतियोगिकभेदवता इत्येवार्थः। तथा सति इतराण्यपीति पद्ये रजसां समराङ्गत्वेन स्वतो वर्ण्यत्वेऽपि वर्ण्यरक्षोनिरूपित-भेदवत्वमस्त्येवेति नाव्याप्तिरित्याशङ्कते-**यदि त्विति**। उक्तोदाहरणेऽव्याप्ति-परिहारेऽपि तृतीये प्रतीपभेदे अतिव्यापकमिति उक्तामाशङ्कां निराकरोति-**तदपीति**।

उत्कृष्टगुणत्वात्—अतिशयितगुणयुक्तत्वात् हेतोः इति शेषः, उपमान. भावमपि— वस्त्वन्तरनिष्ठसादृश्यप्रतियोगितामपि, असहमानस्य—असोढुः, उपमानत्वकल्पनरूपे प्रतीपे-प्रतीपोदाहरणे अतिव्याप्तिः। प्रत्युदाहरति

चित्रमीमांसा

अहमेव गुरुः सुदारुणाना-
मिति हालाहल तात मास्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥

अत्र हि वर्ण्यानां दुर्जनवचसां हालाहलेन अतिप्रकृष्टदोषत्वात् उपमानभावमप्यसहमानेन साम्यनिबन्धनं प्रतीपम् ॥

तत्त्वालोकः

**अहमेवेति ।** हे हालाहल तात!

'गोस्तनाभफलो गुच्छः तालपत्रच्छदस्तथा ।
तेजसा यस्य दहयन्ते समीपस्थाः द्रुमादयः ॥
असौ हालाहलो ज्ञेयः' इत्युक्तलक्षण !

कालकूटं वत्सनाभः शृङ्गकश्च प्रदीपनः ।
हालाहेलो ब्रह्मपुत्रो हारिद्रः सक्तुकस्तथा ।
सौराष्ट्रिक इति प्रोक्ताः विषभेदा अमी नव ॥

इति नरहरिपण्डितविरचितराजनिघण्टौ परिगणितेषु नवविधेषु स्थावरविषेषु अन्यतम । तात इति सानुकम्पसम्बोधने । त्वम् अहमेव सुदारुणानाम् अतिभयंकराणां विषाणां मध्ये इत्यर्थः यतश्च निर्धारणम् [पा.सू. २-३-४१] इति निर्धारणे षष्ठी । गुरुः—ख्यातः—बृहद्वा 'गुरुः गीष्पतिपित्राद्योः, पौरोहित्यकरेच ना । मात्रादौस्त्री बृहत्ख्यातदुर्भरालघुषु त्रिषु' इति वैजयन्ती । इति, मा स्म दृप्यः—दर्पं मा कृथाः, तदकरणे हेतुमाह—भुवन

चित्रमीमांसा

अत्र वर्ण्यस्येत्यप्ययुक्तम्,
'त्वत्कीर्तेः पुरतो भाति ज्योत्स्नाध्वान्तमलीमसा'
इत्यप्रस्तुतप्रशंसासङ्कीर्णोपमायामव्याप्तेः ।

तत्त्वालोकः

**इत्यादिना** । अस्मिन् भुवने, दुर्जनानानाम्–असाधूनाम् वचांसि–वचनानि भवादृशानि-त्वदुपमितानि, भूयः–बाहुल्येन सन्ति ननु, –सन्त्येवेत्यर्थः । ननु इत्यवधारणे ॥

अत्र दुर्जनवचोरूपवर्ण्यप्रतियोगिकं साम्यं अप्रकृष्टेन हालाहलेन वर्ण्यते । एवं चात्रापि वर्ण्यप्रतियोगिकः भेदः प्रतीयत इत्यतिव्याप्तिः । तस्मात् 'अन्येने' ति विशेषणमयुक्तमेवेति भावः ॥

वर्ण्यस्येति पदोपादानमपि वृथैव, अप्रस्तुतप्रशंसासंकीर्णोपमाया मव्याप्तेरित्याह—**अत्रेति** ।

अत्र विद्यानाथीये उपमालक्षणे 'वर्ण्यस्य' इति अनुयोगित्वार्थकषष्ठ्य न्तविशेषणदानम् अयुक्तम्–असंगतम् । अव्याप्तेरुदाहरणं प्रदर्शयति–**त्वत्कीर्तेरिति** ।

ज्योत्स्ना–कौमुदी, ज्योतिरस्त्यस्यामित्यर्थे विवक्षिते ज्योत्स्नातमिस्रा [पा.सू. ५–२–११४] इति ज्योत्स्ना इति निपातितः । त्वत्कीर्तेः पुरतः–अग्रतः, ध्वान्तमलीमसा ध्वान्तमिव कृष्णवर्णा, भाति ज्ञायते इति यावत् ।

अत्र ज्योत्स्नाया यद्यपि न प्रकृतत्वं, राजगतकीर्तिपारिशुध्या–तिशयस्यैव वर्ण्यत्वेन प्रकृतत्वात् । ज्योत्स्नायां कृष्णवर्णताप्रतिपादनद्वारा कीर्तौ

चित्रमीमांसा

तत्र कीर्तेरेव वर्ण्यत्वेन ज्योत्स्नाया अवर्ण्यत्वात् ॥

अपि च, 'अन्येन वर्ण्यस्य साम्यं वाच्यम्' इति कोऽर्थः ?

किम् अन्यप्रतियोगिकत्वेन वर्ण्यगतं साम्यं वाच्यमिति ? किं वा यथाकथंचिद्वर्ण्यावर्ण्योभयनिरूपितं साम्यं वाच्य-मिति ? अथवा वर्ण्यानुयोगिकत्वेन साम्यं वाच्यमिति ?

आद्ये--

चकितहरिणलोललोचनायाः
क्रुधि तरुणारुणतारहारिकान्ति ।

तत्त्वालोकः

प्रकाशस्याधिक्यं प्रत्याय्यते । एवं च प्रस्तुतकीर्तिगतप्राशस्त्ये प्रस्तुते अप्रस्तुतज्योत्स्नायां ध्वान्तसादृश्यमुपनिबध्यत इति अप्रस्तुतप्रशंसा, तया संकीर्णा उपमा अभिधीयते, ज्योत्स्नाया अवर्ण्याया अपि, सादृश्यानुयोगि त्वेन उपनिबन्धनात् । वर्ण्यस्येत्युपादाने वर्ण्यानुयोगिकम् अवर्ण्यप्रतियोगिकं सादृश्यं नोपनिबद्धमित्यव्याप्तिः प्रसज्यत इत्युपपादयति–**तत्रेत्यादिना** ।

'वर्ण्यस्य साम्यम्' इत्यस्य अर्थत्रयं परिकल्प्य दूषयितुमाह— **अपि चेति** । आद्ये 'अन्येन' इति तृतीयायाः प्रतियोगित्वमर्थः, वर्ण्यस्येति षष्ठ्याः वृत्तित्वमर्थः । एवं च अन्यप्रतियोगिकं वर्ण्यनिष्ठं साम्यमिति फलितेऽर्थे उभयविश्रान्तसादृश्यकोपमायामव्याप्तिरित्याह–**आद्य इत्यादिना** ।

चकितः–त्रस्तः यो हरिणः–मृगः तस्य ये लोले लोचने ते इव लोचने यस्यास्तस्याः नायिकायाः क्रुधि–क्रोधे सति, तरुणारुणवत् तारं अत्यधिकं

चित्रमीमांसा

सरसिजमिदमाननं च तस्याः
समामिति चेतसि संमदं विधत्ते ॥

इत्युभयविश्रान्तसादृश्योपमायां अव्याप्तिः ।

द्वितीये, प्रसिद्धप्रतीपेऽतिव्याप्तिः तदवस्था ।

त्वालोकः

हारिणी आकर्षणशीला कान्तिः यस्य एवं विधमाननं सरसिजं पद्मं च, सरसीति सप्तम्यन्ते उपपदे 'सप्तम्यां जनेर्डः' [पा. सू. ३-२-९७ इति डप्रत्यये हलन्तात्परस्याः सम्तम्याः 'हलदन्तात्सप्तम्यास्संज्ञायाम्' [पा. सू.६-३-९] इत्यलुक् । समम् इति-तुल्यमितीत्यर्थः । संमदम्-हर्ष 'प्रमदसम्मदौ हर्षे' (३-३-६८) इति निपातनात्साधुत्वमू । चेतसि विधत्ते-आप्नोति ।

यद्यप्यत्र उभयोः प्रतियोगित्वमनुयोगिवं चोपमेयोपमावत्, अथापि अन्यप्रतियोगिकवर्ण्यानुयोगिकसाम्यस्यैव विवक्षणात् अव्याप्तिरिति भावः ।

न चोपमेयोपमेति वाच्यम्, तृतीयसदृशव्यवच्छेदाप्रतीतेः तस्या अप्रसक्तेः ॥

यदि यथाकथंचित् वर्ण्याऽवर्ण्योभयनिरुपितं साम्यं विवक्षितमिति द्वितीयः कल्पः परिगृह्यते तदा 'सरसिजमित्यत्र' आननप्रतियोगिकपद्मानु-योगिकसाम्यस्य, पद्मप्रतियोगिकमुखानुयोगिक साम्यस्य च प्रतीत्या नाव्याप्ति रिति चेत् प्रसिद्धप्रतीपोदाहरणेऽपि यथाकथंचित्प्रकृतप्रतियोगिकाप्रकृतानु योगिकसाम्यस्याभिधीयमानत्वेन अतिव्याप्तिरित्याह— **द्वितीय इति** ॥

प्रसिद्धप्रतीपे 'त्वल्लोचनसमं पद्मं त्वद्वक्त्रसदृशो विधुः' इत्यत्रैव लोच

चित्रमीमांसा

एवं तृतीये 'वर्ण्यस्य साम्यम्' इत्येतावता विवक्षितार्थ लाभात् 'अन्येन' इत्यस्य वैयर्थ्यम् ॥

उपमेयोपमाव्यावृत्त्यर्थं 'एकदा' इति विशेषणमप्युक्तम् । तेन 'खमिव जलं जलमिव खम्' इत्यादौ पर्यायेण प्रवृत्तायामुपमेयोपमायामतिव्याप्तिनिरासेऽपि,

तत्त्वालोकः

नादिप्रकृतप्रतियोगिकाऽप्रकृतपद्माद्यनुयोगिकसाम्यस्य प्रतीतेः ।

उक्तप्रतीपव्यावृत्तये वर्ण्यानुयोगिकं साम्यमिति तृतीयः कल्पः यदि आश्रीयते, तदा 'अन्येन' इति विशेषणमन्यथासिद्धम्, 'वर्ण्यस्यसाम्यम्' इत्येता वता उक्तार्थलाभादित्याचष्टे—एवमित्यादिना ।

सदृशार्थकात्समशब्दाद्विहितः ष्यञ्स ादृश्यमाह । तच्च प्रतियोग्यनु योगिसापेक्षमिति कृत्वा अनुयोगिनो लाभे प्रतियोगिनोऽपि लाभः अस्त्येवेति तदुपादानं वृथेति भावः ।

उपमेयोपमावारणफलकस्य 'एकदा' इति पदस्योपादानात् वाक्य-भेदेन प्रवृत्तायामुपमेयोपमायाम् अतिव्याप्तिवारणेऽपि युगपत्प्रवृत्तायाम् उपमेयो-पमायामतिव्याप्तिरापततीत्याह—उपमेयोपमेति ॥

'खमिव जलं जलमिव खम्' इत्यत्र यस्मिन् काले खजलयोः सादृश्य प्रतियोगित्वानुयोगित्वे वर्ण्येते तस्मिन् काले न खजलयोः अनुयोगित्व–प्रति-योगित्वे वर्ण्येते किंतु कालभेदेन, अथापि अतिव्याप्तिः प्रसज्यते । अतः उपमेयत्वाभिमतप्रतियोगिकसादृश्यवर्णनकालानवच्छिन्नार्थकं 'एकदा' इति

## चित्रमीमांसा

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥

इति युगपत्प्रवृत्तायां तस्यां अतिव्याप्त्यनिरासात् ॥

### तत्त्वालोकः

विशेषणमुपात्तम् । तदुपादाने तु उपमेयोपमायां वर्ण्यमानस्य साम्यस्य न तादृशकालावच्छिन्नत्वमित्यदोषात् । एवं च 'खमिव' इति पद्ये नाति व्याप्तिः ।, अथापि वाक्यभेदरहितायां वर्णनकालभेदाभावादतिव्याप्तिः प्रसज्यत एवेति वाक्यभेदरहितामुपमेयोपमामुदाहरति—**तद्वल्गुनेति** ।

इदं च पद्यं अजं प्रति प्राभातिकं वैतालिकोक्तम् । तत–लक्ष्मी परिग्रहात् वल्गुना–मनोज्ञेन 'वल्गु स्थाने मनोज्ञे च वल्गुभाषितमन्यवत्' इति **विश्वः** । तावत्–आदौ, युगपत्–एककालावच्छेदेन, उन्मिषितेन विकासेन सद्यः–तत्क्षणे 'सद्यस्तु तत्क्षणे' इति **वैजयन्ती** । यद्यपि सद्य इति समानेऽहनि इत्यर्थे 'सद्यः परुत्'––[पा.सू. ५-३-२२] इति निपातितः, अथापि औचित्यात् तदेकदेशस्य क्षणस्य ग्रहणम् । द्वे अपि परस्परतुलाम्—अन्योन्यसादृश्यम् , अधिरोहताम्—भजतां प्राप्नुताम् प्रार्थनायां लोट् । के द्वे(?) अन्तः मध्ये–प्रस्पन्दमाना–चलन्ती परुषेतरा मसृणा कनीनिका यस्य तत् चक्षुः, तथा अन्तः–अन्तरा प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च । एकदा तादृशचक्षुर्नलिनयोः उन्मेषे सति सम्पूर्ण–सादृश्यलाभ इति भावः । साम्प्रतं सूर्य उदेति । तावत्येव त्वं निद्रां विहाय प्रतिबुध्यस्वेति भावः ।

तत्वालोकः

अत्र वैतालिकवाक्ये एकदा चक्षुर्नलिनयोः तुलाधिरोहणस्य वर्णनात् तृतीयसदृशव्यवच्छेदफलिका उपमेयोपमा, तथापि न वाक्यभेद इति एकदेति विशेषणमव्यावर्तकमिति भावः ।

अत्र यदुक्तं **कौस्तुभकृता**—'सरसिजमिति' 'तद्वल्गुने'त्यादेश्चैकशील त्वादाद्ये उपमा द्वितीये उपमेयोपमेति विभागे बीजाभावात् तद्भेदस्यापि लक्ष्यत्वात् इति तच्चिन्त्यम्–तयोर्भिन्नशीलत्वात्–तथाहि—

'सरसिजम्' इति पद्ये सरसिजानने इति इतरेतरयोगमपरिकल्प्य ईश्वरं गुरुं च भजस्व इतिवत् परस्परनिरपेक्षयोः सरसिजाननयोः समुच्चयविषयान्वयं विवक्ष्य चकारं प्रयुञ्जता कविना उभयत्रापि साम्यं विश्रान्तमित्यत्रैव तात्पर्यम् न पुनः परस्परोपमायाम् । तस्यास्त्वर्थतो लाभः ।

'तद्वल्गुना' इत्यत्र तु उपमा उभयत्र विशश्रामेति न शक्यं वक्तुम् । यतः परस्परतुलामित्युपाददानेन कविना उभयत्रापि सादृश्यप्रतियोगित्वं विश्रान्तमिति तात्पर्यावगमादुपमेयोपमेत्यवयवार्थस्य स्फुटं प्रतिपत्तेः, अर्थादपि सिद्ध्यतः परस्परप्रतियोगित्वस्य शब्दतः प्रतिपादनेन तृतीयसदृशव्यवच्छेद-स्यापि लाभात् अत्र उपमेयोपमायाः युक्तत्वात् ॥

अत एव **विमर्शिनीकारेण**—'शुद्धसामान्यरूपत्वं यथा 'तद्वल्गुना'-इत्युदाहृत्य अत्र प्रस्पन्दमान–प्रचलितत्वेन शुद्धसामान्यरूपत्वम् । तारक भ्रमरयोस्तु बिम्बप्रतिबिम्बभावः । उन्मेषाभिप्रायेणानुगामितेति उपमेयो पमाया भेदत्रयस्याप्येतदुदाहरणम्' इत्युक्त संगच्छते ॥

यदि तु — 'तद्वल्गुने'ति पद्ये एकवाक्यतायाश्शाब्दत्वेऽपि चक्षुः पद्म मिव, पद्मं चक्षुरिवेत्यार्थो वाक्यभेदोऽस्त्येवेति तत्रातिव्याप्तिरिति 'एकदा' इति

अपि चैवम् —

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥

तत्त्वालोकः

विशेषणं नायुक्तमिति प्रतिपाद्यते तदापि तदयुक्तमव्यापकत्वादित्युदाहर्तुमाह –अपि चैवमिति ॥

सेयं मालोपमा रुद्रटेन —

मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम् ।
उपमीयेतानेकैरुपमानैरेकसामान्यैः ॥ इति लक्षिता ।

अस्यायमर्थः— यत्रैकमुपमेयं वस्तु अनेकसामान्यम् अनेकधर्मकम् एकसामान्यैः एकैकधर्मयुक्तैः अनेकैरुपमानैरुपमीयेत सेयं मालोपमेति । लोके हि एकस्मिन् सूत्रे विजातीयपुष्पयोगश्चमत्कृतिमाधत्ते तद्वत् । एकस्मिन्नुपमेये नानोपमानसम्बन्धपरिकल्पनापीति भावः ॥

ज्योत्स्नेति । नितम्बिनी–प्रशस्तः नितम्बः स्त्रीकटिपश्चाद्भागः अस्याः अस्तीत्यर्थे 'अत इनिठनौ [पा.सू. ५·२·११५] इति इनिः । इयं रमणी ज्योत्स्नेव-चन्द्रिकेव नयनयोरानन्दः–सुखप्रदा, आनन्दहेतौ आनन्दः इति व्यवहार औपचारिकः आयुर्घृतमितिवत् । तथा सुरेव मदिरेव मदकारणम् हर्षहेतुः, प्रभुतेव–ईश्वरभाव इव, समाकृष्टसर्वलोका वशीकृतसमस्तजना प्रतीयते इत्यर्थः ।

चित्रमीमांसा

**इति भिन्नसाधारणधर्मायां मालोपमायामव्याप्तिः। तत्रानेकदा साम्यप्रतिपादनात् ॥**

**न च बहूपमामेलनमेव मालोपमा नैका, तासु च प्रत्येकं लक्षणम् अस्त्येवेति वाच्यम्। तथासति उपमेयोपमाऽप्युपमाप्रतीपमेलनमेवेति तद्व्यावृत्त्यर्थं विशेषणान्तर-**

तत्त्वालोकः

अत्र अव्याप्तिमुपपादयति—**इतीति**। भिन्नसाधारणधर्मायाम् उपमानभेदेन धर्मभेदेऽपि तस्य उपमेयसाधारणत्वात् धर्मे साधारण्ये सति भेदः तद्वत्यामित्यर्थः। यथात्र ज्योत्स्ना–सुरा–प्रभुताभिः उपमानैः नितम्बिन्याः औपम्ये वाच्ये नैकस्साधारणो धर्मः किन्तु ज्योत्स्नया औपम्ये नयनानन्दकरत्वम्, सुरया तत्वे मदकारणत्वम्, प्रभुतया तत्वे समाकृष्टसर्वलोकत्वमिति साधारणधर्मो भिन्नः। एकैकधर्मयुक्तैरनेकोपमानैः उपमीयत इति मालोपमात्वम्। अतश्चात्र वाक्यभेदेनैवोपमा प्रतिपाद्या, न पुनरेकवाक्यतयेत्यव्याप्तिरिति ॥

**ननु**—बह्वीनामुपमानां मेलने सति मालोपमाया निष्पत्तिरिति प्रत्येकमुपमास्त्येवेति काव्याप्तिरित्याशङ्कते—**नचेति**।

यदि मालोपमायाः बहूपमामेलनरूपत्वेन नातिरिक्तत्वमित्युच्यते तदा उपमेयोपमाया अपि उपमा–प्रतीपमेलनरूपत्वेन तद्व्यावृत्तये 'एकदा' इति पदोपादानमनर्थकं स्यादित्यभिप्रायेण प्रतिबन्द्या उत्तरयति—**तथासतीति**।

अयं भावः—यद्यस्मिन् लक्षणे 'एकदा' इति विशेषणसंरक्षणार्थं बहूपमानमेलनरूपा मालोपमेति अङ्गीक्रियते तदा तुल्यन्यायतया,

करणायोगात् । संसृष्टिसंकरात् पृथक् ग्रन्थकृतां लेखन मुभयत्रापि तुल्यम् ॥

तत्त्वालोकः

'धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि'

इत्युपमेयोपमोदाहरणेऽपि उपमा-प्रतीपमेलनरूपत्वमुपगम्य प्रतीपव्यावर्तकं विशेषणान्तरं 'एकदा' इति पदं अनुपादातुं शक्यमिति ।

**किञ्च**—मालोपमोपमेयोपमयोः अनेकालंकारमेलनरूपत्वे संसृष्टौ संकरे वा अन्तर्भावो भवेदिति कथमतिरिक्तालंकारता ? यतश्च मेलनं तिलतण्डुलवत् , नीर-क्षीरवच्च भवति । एवं च तयोः संसृष्टिसंकरात्पृथक् परिगणनमालंकारिकैः कृतमेवेति न मालोपमायाः बहूपमामेलनरूपत्वमुपगन्तुमलमित्याह—**संसृष्टिसंकरादिति** ।

**एतेनैतदुक्तं** भवति—संसृष्टिसंकरान्यतररूपत्वमपि मालोपमायाः न वक्तुं युक्तम् । यत्र स्फुटावगम्यभेदमात्रमलंकारयोः तत्र संसृष्टिः, यत्र च अस्फुटं भेदमात्रं तत्र संकरः । मालोपमायां तु-एकस्य वस्तुनः विभिन्न धर्मनिमित्तकानेकोपमानसम्बन्धपरिकल्पनं च अनेकपदार्थप्रतियोगिकसमानधर्म सम्बन्धप्रतिपादनद्वारा प्रकृते वस्तुनि अतिशयप्रतिपादनाय तुच्छताप्रति पादनाय वा भवति । यथा ज्योत्स्नेवेति पद्ये नितम्बिन्यां आनन्दकरत्व मदोदयहेतुत्ववशीकरणसामर्थ्यरूपातिशयस्य संसृष्टितः पृथक्कारकस्य प्रतीतेः न संसृष्टिरत्र । नापि संकरः उपमाभेदस्य स्फुटमुपलम्भात् ।

तत्त्वालोकः

क्वचित् तुच्छतातिशयप्रतिपादनायापि सादृश्यप्रयोजकैकविशेषणकानेको मानसम्बन्धो निबध्यते यथा —

ततस्तं म्रियमाणं तं काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥

इत्यत्र काष्ठपाषाणयोः अन्यतरोपादानेन अलंभावे सत्यपि उभयोपादानं साधर्म्येऽतिशयं प्रत्याययितुं अनेकदृष्टान्तोपादनं उचितमित्यालंकारिकाः इति **निगमान्तगुरुभिः रहस्यशिखामणौ** उपपादितरीत्यात्रापि आर्थस्य वाक्यभेदस्यापरिहार्यतया अव्याप्तितादवस्थ्यात् ॥

**यद्यपि** —उपमेयोपमायाम् उपमा-प्रतीपमेलनमात्रमेव न, अपि तु तृतीयसदृशव्यवच्छेदोऽपि प्रतीयते । **अथापि**—'गर्वमसंवाह्यमिमम्' इत्यादौ प्रतीपविशेषे उपमेयोपमायां च सादृश्यस्य प्रकृतविषयत्व इव अप्रकृतविषयत्वेऽपि भावात् । उपमेयोपमादेरुपमान्तर्गतत्वेऽपि तृतीयसदृशव्यवच्छेदफलकत्वादिरूपव्यङ्ग्यार्थकृतवैचित्र्यविशेषेण उपमातः अलंकारान्तरतया पृथग्गणनं न विरुध्यते रूपकपरिणामवत् , इति उपमासिद्धान्ते वक्ष्यमाणत्वेऽपि उपमेयोपमायाः इष्यमाणत्वेऽपि प्रतिबन्दीपरिग्रहः **विद्यानाथेन प्रदर्शिते** उपमेयोपमालक्षणे तृतीयसदृशव्यवच्छेदस्य विवक्षा नास्तीत्ययमंशः —

धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि ।
कामस्ताविव तौ काम इव रुद्रनरेश्वरे ॥

इति तृतीयस्यापि तयोः सदृशस्य प्रदर्शनाज्ज्ञायते, इत्यभिप्रायमाविष्कर्तुमेवेति बोध्यम् ॥

तत्त्वालोकः

**एतेन — रत्नापणकृता** —'धर्मोऽर्थ इवेति' प्रतीकमुपादाय 'अत्र वाक्यभेदेन द्वयोरेवोपमानोपमेयभावात् तृतीयसब्रह्मचारिनिवृत्तिलक्षणं वस्तु प्रतीयते इत्यभिधानं विद्यानाथोदाहृतवाक्यार्थानाकलननिबन्धनं स्यादिति मन्यामहे ॥

**ननु**–अत्र ग्रन्थकृता 'संसृष्टिसंकरात्पृथक् ग्रन्थकृतास्' इत्यत्र संसृष्टि संकरादिति एकवचनं प्रयुज्यते। तस्य कथं साधुत्वम् तयोर्भिन्नत्वेन परिगणनात्। इति चेत्—

**उच्यते**–प्राचीननवीनमतभेदेन संसृष्टि-संकरयोरभेदस्य भेदस्य च सम्भवात् तयोरैकोक्त्या संग्रहं प्रदर्शयि॒ एकवचननिर्देशः कृतः।

**तथाहि**—भामहस्तावत्-संसृष्टिमेकमलंकारमाह—

'वरा विभूषा संसृष्टिर्बह्वलंकारयोगतः।
रचिता रत्नमालेव सा चैवमुदिता यथा ॥ इति।

अस्यायं भावः-लोके यथा वज्रमुक्ताप्रवालगोमेदेन्द्रनीलवैदूर्यपुष्यराग पाचि माणिक्येषु समस्तानां द्वित्रादीनां वा मेलने सति विच्छित्ति विशेषस्सर्वलोकसाक्षिकः तथात्रापि विच्छित्तिविशेषस्य सहृदयसाक्षिकत्वात नरसिंहन्यायेन पृथगलंकारता। अत एव 'रत्नमालेवे'त्युपमानोपादानम्।

**सङ्करस्तु**–भामहेन नोल्लिखितः अपि तु उत्प्रेक्षावयवं लक्षयता मनाक् स्पृष्टः। अदसीयं मतं निराकुर्वता **दण्डिना**–उत्प्रेक्षावयवः उत्प्रेक्षाया मेवान्तर्भावितः।

तत्त्वालोकः

'नानालंकारसंसृष्टिः सङ्कीर्णं तु निगद्यते ।'

इति संकरं निरूप्य संसृष्टिरपि संकरप्रभेद इति परिगृहीता । तद्यथा-

अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता ।
इत्यलंकारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥ [का. २·३६] इति ।

एवं च दण्डिनो मते संसृष्टेर्नातिरिक्तता, अपि तु संसृष्टेरपि संकर मता । तथा–**भोजदेवेनाऽपि**–

संसृष्टिरिति विज्ञेया सर्वालंकारसंकरः [स.क.४-८९]

इति लक्षितम्, किन्तु अनयोर्भेदो न प्रादर्शि । अतः मतद्वयेऽपि मालोपमा उपमेयोपमा च पृथगेव परिगणिते न पुनस्संसृष्टि–संकरात्मकत्वेन । तथा च संसृष्टिसंकरात् इत्यत्र संसृष्टिरूपात्संकरादिति व्युत्पाद्यम् ।

**उद्भट-मम्मट–सर्वस्वकारादयः संसृष्टिं संकरं च पृथगलंकारतया**–परिगणयन्ति ।

एषामयमभिप्रायः—यथा च लोके मणिहार–स्वर्णालंकारादीनामाभरणत्वं, तद्वत् उभयघटिताङ्गदादीनामपि तत्त्वमविशिष्टम् । तद्वदेवात्रापि अलंकाराणां उत्कटत्वानुत्कटत्वरूपनिमित्तभेदेन संसृष्टिसंकरात्मकौ द्वौ तत्प्रभेदौ —उक्तं च

अलंकृतीनां बह्वीनां द्वयोर्वापि समाश्रयः ।
एकत्र निरपेक्षाणां मिथस्संसृष्टिरुच्यते ॥ इति

परस्परोपकारेण यत्रालंकृतयः स्थिताः ।
स्वातन्त्र्येणात्मलाभं नो लभन्ते सोऽपि संकरः ॥ इति च ।

### चित्रमीमांसा

## एवं उपमेयोपमाप्रकरणे उदाहरिष्यमाणायां 'रजोभिः स्यन्दनोद्धूतैः' इति परस्परोपमायामव्याप्तिः ॥

### तत्त्वालोकः

एषामनुरोधेन 'संसृष्टि-संकरात्' इत्यत्र 'जातिरप्राणिनाम्' [पा.सू. २-४ ६] इति एकवद्भावः। संसृज्यमानालंकारजातीनां, संकीर्यमाणालंकारजातीनां च अनन्तत्वेनावगमात् ॥ अधिकं तु अस्मदीये **कुवलयानन्दोन्मेषे द्रष्टव्यम्।**

**एवं च**—संसृष्टि-संकरयोः पृथग्भावे सिद्धे मालोपमायां अव्याप्तिः अपरिहार्येति 'एकदा' इति विशेषणम् अव्यापकमिति बोध्यम् ॥

इत्थं मालोपमायां अव्याप्तिमुपपाद्य परस्परोपमायां अव्याप्तिमुद्भावयति **–एवमिति।** अयं भावः–उपमालक्षणे एकदेत्युपादानेऽपि न नैर्भर्यम्। वाक्यभेदेन यत्र अन्योन्यमुपमा निबध्यते तत्र 'रजोभिः' इत्यादौ तृतीय सदृशव्यवच्छेदाप्रतीत्या उपमेयोपमाया अप्रसक्त्या उपमायामेव पर्यवसानं वाच्यम्। सा च न स्यात्। अतः 'एकदा' इति विशेषणमयुक्तमिति।

**वस्तुतस्तु**—'रजोभिः' इत्यस्मिन् पद्ये 'घनसन्निभैः' इत्यस्य रजोभिः गजैश्चान्वयं विधाय मेघतुल्यरजसां मेघतुल्यगजानां च वर्णतः परिमाणतश्च सादृश्यं संभवतीति बिम्बप्रतिबिम्बभावेन उपमाद्वयेऽपि धर्मैक्यम् अक्षतमेवेति भूनलव्योम्नोः अर्थादपि सिध्यतः परस्परप्रतियोगित्वस्य स्वतः प्रतिपादनेन तृतीयसदृशव्यवच्छेदस्य प्रतीत्या उपमेयोपमाया युक्ततया उपमानुदाहरणत्वेनाव्याप्त्यभावात्। अत एव इदं पद्यं उपमेयोपमायामुदाहृतं प्राचीनैः।

## चित्रमीमांसा

व्यङ्ग्योपमाव्यावृत्त्यर्थं वाच्यमित्युक्तमप्ययुक्तम्;

### तत्त्वालोकः

**एतेन**—नहि 'रजोभिस्स्यन्दनोद्धूतैः' इत्यत्र उपमान्तरतिरस्कारः फलं प्रतीयते। द्वयोरुपमयोरेकधर्मकत्वाभावात्। आद्यायाः उपमायाः अनुगामिधर्मप्रयोज्यत्वात्। द्वितीयायाश्च बिम्बप्रतिबिम्बभावापन्नधर्मप्रयोज्यत्वात् इति **रसगंगाधरकृदुक्तं** आपातरमणीयं प्रचीनविरुद्धं चेति बोध्यम्।

व्यङ्ग्योपमाव्यावृत्तये उपात्तं 'वाच्यम्' इत्यमुमंशं दूषयितुमुपक्रमते **व्यङ्ग्योपमेति**। यथा—

अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीम्
अशिथिलधर्मसेतुपदवीं रुचिरामचिरात्।
अमितमहोर्मिजालमतिलंघ्य भवाम्बुनिधिं
भवति वृषाचलेशपदपत्तननित्यधनी॥ [द. श. ५९]

इत्यत्र यथा निर्धनो वणिक् सेतुद्वारा समुद्रमतिलंध्य द्वीपान्तरं प्राप्य तत्र बहु धनं सम्पाद्य चिरं मोदते तथा भक्तितदुपायसम्यक्ज्ञान–तदुपाय, सम्यक् क्रिया–तदनुगुणसात्त्विकतास्तिक्यादिसमग्रात्मगुणरहितोऽपि सेतुवद्वर्तमानं भगवन्तम् आश्रित्य अशनायादिर्भिमहोर्मिभिः व्याप्तं संसारसागरं अतिलंघ्य तदीयचरणारविन्दपरिचर्यासुखमनुभवति इत्युपमा व्यज्यते॥

यद्यप्येतादृशव्यङ्ग्योपमाध्वनिस्थले भक्त्याद्युपायरहितस्य इहपरयोः सुखानुभवे साम्यं प्रतीयत इत्युपमा ध्वन्यते इत्यतिव्याप्तिः वाच्योपमाया

चित्रमीमांसा

न पद्मं मुखमेवेद न भृङ्गे चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥

इत्युक्तरूपायां तत्वाख्यानोपमायां साम्यस्यावाच्यत्वेन अव्याप्त्यापत्तेः ॥

तत्वालोकः

इति तद्वारणार्थं 'वाच्यं चेदि'त्युक्तम् । तदुपादने तु नातिव्याप्तिः । तथापि अव्याप्तिर्न वारितेत्युदाहरति—**न पद्ममिति** ।

इदम्—पुरः परिदृश्यमानं पद्मं न, किंतु मुखमेव, इमे न भृङ्गे, किंतु चक्षुषी इति—एवंप्रकारेण विस्पष्टसादृश्यात्—औपम्यस्य स्फुटं प्रतिपत्तेः सा उपमा तत्वाख्यानोपमा—तत्त्वाख्यानेन—याथातथ्यकथनेन उपमा—इति योगमर्यादया उपपद्यमाना उपमैव इत्यर्थः ॥

एतेनेदमुक्तं भवति—मुखे पद्मत्वभ्रमनिराकरणात् स्फुटा उपमेति । उक्तोदाहरणे अव्याप्तिमुपपादयति— **इत्युक्तेत्यादिना** ।

अत्र मुखे पद्मभ्रान्तिर्या जाता सा सादृश्यमूलैव अत एवेदं पद्यं दण्डिना उपमायामुदाहृतम् । उपमायां सर्वत्र साम्यं वाच्यमेव भवेदिति आग्रहे मानाऽभावात् ।

**नन्वत्र नव्यैः जयदेवादिभिः—**

भ्रान्तापह्नुतिरन्यस्य शंकायां भ्रान्तिवारणे ।
तापं करोति सोत्कम्पं ज्वरः किं ? न सखि, स्मरः ॥

तत्त्वालोकः

इति लक्षणोदाहरणप्रदर्शनानुरोधेन भ्रान्तापह्नुतिरेव नोपमेति वाच्यम् ।

सत्यम् , अथापि **विद्यानाथेन** जयदेवादिवत् भ्रान्तापह्नुतिः लक्षिता चेत् तदा सैव वक्तुं शक्या स्यादपि, न च सा तेन लक्षिता । या चापह्नुतिर्लक्षिता 'निषिध्य विषयं साम्यात् अन्यारोपे त्वपह्नुतिः' इति सा नात्र प्रभवति विषयनिषेधसाहित्येन विषय्यारोपे तत्प्रवृत्तेरुपगमात् । तथापि न तस्य वाच्यता ।

अत्र तु विषयिनिषेधपूर्वकं विषयस्वरूपदृढीकरणमेवानुभूयत इति उपमां विना गत्यन्तराभावात् । साऽपि 'वाच्य'मिति विशेषणदानाच्च्याविततेति भावः ॥

**ग्रन्थकृतस्त्वत्र**—भ्रान्तिमान् अलंकारः तदुपपादकतया अभिव्यज्यमानोपमा चेत्युभयं व्यङ्ग्यमिति अभिमतम् । वक्ष्यति चोपमासिद्धान्ते 'न पद्मं मुखमेवेद'मिति नोपमालंकारः, किन्तु प्रतिषेधाक्षिप्ततया भ्रान्तिमान् , तदुपपादकतया उपमा चेत्युभयं व्यङ्ग्यमिति ॥

एतेन-**कौस्तुभकृता**- यच्च व्यङ्ग्योपमावारणाय 'वाच्यम्' इति उक्तमप्ययुक्तम् । न पद्मं मुखमेवेत्यत्राव्याप्तेः । अत्र साम्यस्य अवाच्यत्वात् इति ग्रन्थकृत्खण्डनमनूद्य 'तदप्यसत् , भ्रान्तापह्नुतावेवान्तर्भावात्' इति यदुक्तं तदपि विद्यानाथकृतापह्नुतिलक्षणानवलोकननिबन्धनमिति चिन्त्यमिदम् ॥

ग्रन्थकृतैव स्वकीये **कुवलयानन्दे** 'कल्पितभ्रान्तिपूर्वा अपह्नुतिः' इति व्यक्तमभिधानात् ॥

चित्रमीमांसा

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥

इत्यादौ विशिष्योपमाद्याक्षिप्तविशेषणाद्युपमायामव्याप्त्यापत्तेश्च ॥

तत्त्वालोकः

साहित्यदर्पणकारानुरोधेन तु—'न पद्मं मुखमेवे'ति पद्ये आरोप्यमाणनिषेधपूर्वकं आरोपविषयस्थापनेन निश्चयाख्योऽलंकारः । उक्तं च

'अन्यं निषिध्य प्रकृतस्थापनं निश्चयः पुनः' ॥ इति ।

उदाहृतं च 'वदनमिदं न सरोजं नेत्रे नेन्दीवरे एते ॥
इह सविधे मुग्धदृशो मधुकर मुधा न परिभ्राम्य ॥'

इति च । अत्र वक्तव्योंऽशः उपमासिद्धान्ते वक्ष्यते ।

इत्थं दण्डयभिमतोपमोदाहरणे अव्याप्तिमुद्भाव्य विशिष्टोपमाक्षिप्त विशेषणोपमायां अव्याप्तिः प्रसज्यते, तत्रापि साम्यस्यावाच्यत्वात् इत्यभिसन्धिना दूषणान्तरमाचष्टे—त्वदाननमिति ।

अधीरे चञ्चले अक्षिणी यस्मिन् तत् अधीराक्षम्, आविर्भवन्त्यः दशनानां दीधितयो मयूखा यस्मिन् तत् आविर्दशनदीधिति । त्वदाननम् त्वन्मुखम्, आ ईषत् लक्ष्याः प्रकटाः केसराः किञ्जल्काः यत्र तादृशम्, भ्रमन्तः उपरि चञ्चूर्यमाणाः भृङ्गाः यस्मिन् तत् पङ्कजमिव भाति शोभते इत्यर्थः ।

अत्र अव्याप्तिमुपपादयति-इत्यादाविति । अत्र भृङ्गकेसरविशिष्ट

तत्त्वालोकः

पङ्कजेन नेत्रदशनदीधितिविशिष्टाननस्य उपमा वाच्या। अथापि तद्वि-शेषणयोः अक्षिभृङ्गयोः दशनदीधितिकेसरयोश्च उपमा प्रतीयते, परन्तु सा न वाच्या इत्यव्याप्तिरिति भावः ।

अत्रेदमवधेयम् — प्राचीनेन दण्डिना,

'वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा ।। [काव्या. २·४३]

इति वाक्यार्थोपमां लक्षयित्वा त्वदाननमिति पद्यमुदाहृतम्। अप्पय्यदीक्षितैस्तु सा निराकृतेव भाति, यतः त्वदाननमित्यत्र विशिष्टोपमाव्यवहारः कृतः। वाक्यार्थोपमाऽत्र न भवितुमर्हति । यत्र अनेकेषां धर्मिणां परस्परावच्छिन्नानां परस्परावच्छिन्नैरेव धर्मिभिः साम्यं प्रतीयते तत्रैव वाक्यार्थोपमा। यथा

जनयित्र्याः कुलाल्याश्च रक्षित्र्या विदितोऽभवत् ।
रत्नसूतेः भुजंग्याश्च प्रच्छन्न इव शेवधिः ।।

इत्यत्र रत्नसूत्यादीनि जनयित्र्यादीनामुपमानानि। एतेषां धर्मित्वं परस्परावच्छिन्नत्वं च ।

त्वदाननमित्यत्र तु नायकालम्बनभूतनायिकामुखे अधीराक्षत्वाविर्दशनदीधितित्वयोरुपादानं नायिकायां वैलक्षण्यं प्रतिपादयितुमेव, धर्मि विशेष प्रतिपादनोन्मुखानां च धर्माणां बिम्बप्रतिबिम्बभावो भवति। तद्विशिष्ट धर्मिणोः उपमानोपमेयभावे उपात्तधर्मस्यैव निमित्ततेति वाक्यार्थोपमायाः क्वावकाशः इति ।

### चित्रमीमांसा

'शस्त्रीश्यामा' इत्यादिवाचकलुप्तोपमायाम्,

### तत्त्वालोकः

अत एव—**सरस्वतीकण्ठाभरणे भोजदेवेन**—'पाण्ड्योऽयमंसार्पितलम्बहारः' इति पद्यं यद्दण्डिवामनानुरोधेन वाक्यार्थोपमोदाहरणतया प्रदर्शितं तत् **अलंकारसर्वस्वकृता** बिम्बप्रतिबिम्बभावेन उपमायाः उदाहरणत्वेनोपक्षिप्तम्। ग्रन्थकृता तु विशिष्टोपमेति स्फुटं व्यवहृतम्।

वस्तुतस्तु—आनन-पङ्कजविशेषणयोः अक्षिभृङ्गयोः, दशनकेसरयोश्च या उपमा सा नालंकारः। किन्तु वाच्यभूतविशिष्टोपमासिध्यङ्गत्वात् वाच्यसिध्यङ्गत्वरूपगुणीभूतव्यङ्ग्यतैव। तामा नालंकारता इति ग्रन्थकाराशयः अग्रे व्यक्तीभविष्यति।

किन्तु व्यङ्ग्योपमाव्यावर्तकं विशेषणं न दत्तम्, न वा गुणीभूतव्यङ्ग्यत्वमुपपादितमित्येव विद्यानाथोपरि दूषणान्तराभिधानमिति॥

एतेन वाच्ये व्यङ्ग्ये वा चमत्कृतिजनके सादृश्ये उपमात्वमविशिष्टम्. परं तु व्यङ्ग्ये तस्मिन् नालंकारतेत्येव विशेषः इत्युक्तं भवति॥

साम्ये वाच्यत्वविशेषणोपादाने वाचकलुप्तोपमायाम्, तल्लक्षकवदुपमायां च अव्याप्तिरिति दूषणान्तरमाह—**शस्त्रीत्यादिना**।

शस्त्री इत्यत्र शस्यते हिंस्यते अनयेति विग्रहः। दाम्नीशस [पा.सू. ३-२-१८२] इति ष्ट्रन्। षिद्गौरादिभ्यश्च [पा.सू. ४-१-४१] इति ङीष्। 'चूरी' इति कर्णाटभाषायां ख्यातः आयुधविशेषः शस्त्री।

तत्त्वालोकः

शस्त्रीव श्यामा – शस्त्रीश्यामा । उपमानानि सामान्यवचनैरिति [ पा.सू. २-१-५५ ] समासः ॥

अत्र श्यामत्वं शस्त्र्यां देवदत्तायां च वर्तते । तद्वाचकश्च श्यामा शब्दः प्रथमं साधारणधर्ममभिधाय पश्चात् श्यामत्वविशिष्टं द्रव्यमभिधत्ते । अत्र च प्रमाणम् —' सर्वेश्च शब्दोऽन्येन शब्देनाभिसम्बध्यमानो विशेषवचन स्सम्पद्यते ' इति **महाभाष्यं** महाजनप्रयोगश्च । तच्च द्रव्यमर्थात् उपमानानुयोगिभूतमुपमेयमेव भवति । उपमानशब्दोपि सादृश्यमूलकाभेदाध्यवसायेन अखण्डशक्त्या वा उपमेये वर्तते । औपम्यनिर्वाहाय च श्यामत्वादेः तन्त्रादिना उपमाने उपमेये चान्वयः ।

तथा चात्र उपमानभूतश्यामशस्त्र्यभिन्नश्यामा देवदत्ता इति बोधः । उपमानोपमेययोः साधारणधर्मान्वयः शब्दबोध्यः । 'उपमानानि सामान्यवचनैः' [पा.सू. २-१-५५] इति सूत्रस्थभाष्यानुसारात् । साधारणधर्मप्रयोज्यसादृश्यान्वयस्तु आर्थ एव । ततश्च विग्रहे समासे च पूर्वपदस्य उपमानताविशिष्टार्थपरत्वात् उत्तरपदार्थसाधारणधर्मस्य च उभयत्रान्वयात् ' उपमानानि ' इति समानाधिकरणसमासः । वृत्तिविग्रहयोः समानार्थकत्वं, साधारणधर्मप्रयोज्याऽभेदबोधश्च सिध्यतीति केचित् उपपादयन्ति ॥

**परे तु**—' शस्त्रीश्यामा ' इत्यत्र ' शस्त्रीव श्यामा ' इति विग्रहे 'उपमानानि सामान्यवचनै'रिति समासे समस्तपदस्य शस्त्रीप्रतियोगिकसादृश्यानुयोगिकश्यामत्वविशिष्टदेवदत्तायां अखण्डशक्तिस्वीकर्तृमते समासशक्त्या इवार्थसादृश्यस्य लाभात्, तत्पुरुषे पूर्वपदे लक्षणाङ्गकर्तृनैयायिकादिमते शस्त्रीपदादेव शस्त्रीप्रतियोगिकसादृश्यानुयोगिनः लक्षणया लाभात्

तत्त्वालोकः

'उक्तार्थानामप्रयोगः' इति न्यायेन इवशब्दप्रयोगाभाव एव वाचकस्य लोपः ।

अत एव **व्याकरणसूत्रवृत्तिकृता वामनेन**—लोपसंज्ञाविधिसूत्रे—अदर्शनपदं विवृण्वानेन 'अदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभावो वर्ण विनाशः इत्यनर्थान्तर'मित्युक्तम् ॥

**अत्रेदं चिन्त्यते**—वाचकलुप्तेत्यस्य किं शक्त्या सादृश्योपस्थित्य भावः ? अथ वृत्या ? नाद्यः—'शशिवत्प्रसन्नवपुषे', 'चन्द्रतुल्यं मुखम्' इत्यादौ विहितस्य वत्यादेर्धर्मिशक्त्या तद्विशेषणीभूतसादृश्ये शक्त्यभावात् वाचकलुप्तत्वापत्तिस्स्यात् । न द्वितीयः—'कैलासगौरं वृषमारुरुक्षोः' इत्यत्र वाचकलोपः इति वक्ष्यमाणतया तेन सह विरोधः स्यात् इति **चेन्न** ।

'शशिवत्' 'चन्द्रतुल्यम्' इत्यादौ वत्यादेः धर्मिण्येव शक्त्या तद्विशेषणीभूते सादृश्ये शक्तिविरहः स्पष्ट एव । अथापि सादृश्योपस्थित्यर्थं न लक्षणा आवश्यकी, विशिष्टशक्तपदैः विशेषणबोधनार्थं वृत्त्यन्तराङ्गीकाराप्रसक्तेः । अन्यथा जातिविशिष्टव्यक्तिशक्तिमते जातिबोधनार्थं वृत्त्यन्तराङ्गीकारप्रसंगात् । एवं च—वृत्या सादृश्योपस्थापकत्वरूपं शक्त्या सादृश्योपस्थापकत्वरूपं वा वाचकत्वं वाचकलुप्तेत्यत्र विवक्षितमिति न शक्यं वक्तुम् । किन्तु—शब्दविशेषेण सादृश्यबोधनं वाचकत्वं तदभावः वाचकलोप इति यथाकथंचिद्वक्तव्यमिति न क्षोदक्षमोऽयं विषयः ॥

एवं च सादृश्यमुख्यविशेष्यकज्ञानजनकपदप्रयोगे श्रौती । सादृश्य विशिष्टार्थविषयकज्ञानजनकपदप्रयोगे आर्थी इति ग्रन्थकाराभिसन्धिः । अधिकमुत्तरत्र वक्ष्यते । अथवा येषां सादृश्यमात्रे शक्तिः तत्र श्रौती । येषां तु तद्वति तत्र आर्थी इति विवेकः ।

चित्रमीमांसा

**'चन्द्रसुहृन्मुखम्' इत्यादिसाम्यलक्षकत्वदुपमायां चाव्याप्त्या पत्तेश्च॥**

तत्त्वालोकः

**अत्रेदं बोध्यम्**—'शस्त्रीश्यामा' इत्यादिद्योतकलुप्तायाम् इत्य नुक्त्वा वाचकलुप्तोपमायामित्यभिदधता ग्रन्थकृता इवादीनां सादृश्यवाचकत्वपक्ष एव नैर्भर्य नैयायिकादिवत् । अन्यथा -'चन्द्र इव मुखम्' इत्यादौ चन्द्रादिपदे तत्सदृशलक्षणया निषिद्धलाक्षणिकत्वरूपनेयार्थत्वापत्तेः ।

**किंच**--इवादेः द्योतकत्वे उपमानस्य पदार्थैकदेशतया तत्र साधारण धर्मान्वयाप्रसंगश्च, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति व्युत्पत्तेः जागरूकत्वात् ।

तथा च 'शस्त्रीश्यामा' इत्यत्र वाचकलोपस्य समासशास्त्रकृतत्वेन ाम्यस्यावाच्यत्वादव्याप्त्यापत्तिः ।

एवं येषां पदानां सादृश्ये तद्वति वा संकेताभावः तादृश'चन्द्र सुहृन्मुखमि'त्यादिसादृश्यलक्षकसुहृदादिपदसमभिव्याहारे साम्यस्यावाच्यत्वात् अव्याप्त्यापत्तिः । तदाह —**चन्द्रसुहृदिति** ।

यदि तु—'वाच्यम्' इत्यस्य व्यञ्जनातिरिक्तवृत्तिवेद्यत्वमर्थः विव-क्ष्येत तदा निवारितोऽयं दोषः ॥

**यत्तूक्तं कौस्तुभकृता**--'त्वदाननमधीराक्ष'मिति पद्ये भृङ्गनेत्रादीनां बिम्बप्रतिबिम्बभावापन्नतया अभेदविवक्षाया एव सत्त्वात् तदुपमायाः विवक्षा नास्त्येवेति नाव्याप्तिरिति ।

किंच वाच्यमित्यत्र विधेयतया वाच्यतोच्यते ? अनुवाद्यतया वेति ?

आद्ये—स कर्षन् महतीं सेनां पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥

इत्यादावेव लक्षणं स्यात् ।

तत्त्वालोकः

तच्चिन्त्यम्—ययोरुपमा तद्विशेषणयोः उभयोः सादृश्यज्ञानमूलके अभेदबोधे एव बिम्बप्रतिबिम्बभावसंभव इति अभेदबोधेऽपि उपमा नैव परित्यक्तुं शक्येति कथं उपमाया अविवक्षा ? तस्यां वा कथमभेद-बोध इति ॥

अथ क्वचित् वाच्यं साम्यं विधेयं, क्वचित् अनुवाद्यं च भवति। तयोः कतरदाश्रीयते इति विकल्प्य रीत्यन्तरेण वाच्यपदार्थं खण्डयति — किंचेति । आद्ये अव्याप्तिर्नास्तीत्युदाहरति–आद्य इति ।

आद्ये–वाच्यत्वस्य विधेयत्वे इत्यर्थः । स कर्षन् इति । पूर्वदिग्विज-यार्थं तदाभिमुख्येन सेनां कर्षतो रघोर्वर्णनमिदम् । पूर्वसागरगामिनीं महतीं सेनां कर्षन् सः पूर्वसागरगामिनीं हरजटाभ्रष्टां गङ्गां कर्षन् भगीरथ इव बभौ इत्यन्वयः । पूर्वसागरगामिनीं–पूर्वसमुद्राभिमुखं गच्छन्तीं अथ च प्रवहन्तीं महतीं सेनां कर्षन् प्रापयन् सः रघुः, हरजटाभ्रष्टां शङ्करशिरश्च्युतां गङ्गाम् हैमवतीं नदीम्, कर्षन् समाकर्षन् भगीरथ इव तन्नामक नृप इव बभौ चकासे इत्यर्थः ।

**चित्रमीमांसा**

**स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा ।**
**अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः ॥**

**तत्त्वालोकः**

अत्र रघुभगीरथयोः उपमा प्रतिपाद्या । सा च साधारणधर्ममपेक्षते । स च पूर्वसागरगामित्वविशिष्टगंगासेने । अनयोः भेदे सत्यपि स्वामिचित्तानुवर्तनपावित्र्यादेः वस्तुसतः पूर्वसागरगामित्वस्य वा साधारणत्वं तद्वतोर्गंगासेनयोरुभयोः धर्मयोः प्रधानोपमायां बिम्बप्रतिबिम्बभावमूलकतया साधारण्यं संपाद्यैव । तथा च रघौ भगीरथसाम्यस्यैव प्राधान्येन प्रतिपिपादयिषितत्वमिति एवमादौ समन्वयान्न दोषः ।

अथापि यत्र साम्यस्य विधेयतावच्छेदकत्वं तादृशेषूदाहरणेषु अव्याप्तिरिवेति एवकाराशयः । तदुदाहरति— **स ययाविति** ।

प्राचीनबर्हिषा—मनुवंशसंभूतेन हविर्धाम्नस्सूनुना, यद्वा इन्द्रेण तुल्यः सदृशः स रघुः, अनिलोद्धूतैः—अनुकूलवायुना कम्पितैः, केतुभिः—पताकाभिः अहितान्-शत्रून्, तर्जयन्निव—भर्त्सयन्निव प्रथमम्—आदौ प्राचीं ऐन्द्रीं दिशं प्रति ययौ—प्रतस्थे ॥

अत्र यद्यपि तर्जिधातुरनुदात्तेदात्मनेपदी इति तर्जयमान इति रूपेण भाव्यम् । अथापि चक्षिङो ङित्करणाज्ज्ञापकात् अनुदात्तेत्वलक्षणस्यात्मनेपदस्य अनित्यत्वात् शतृप्रत्ययः, इति मल्लिनाथः समादधौ । अथवा चौरादिकात् णिजन्तात् भौवादिकात् वा शतरि रूपमिति बोध्यम् ।

चित्रमीमांसा

**द्वितीये, यत्र व्यतिरेकालंकारे साम्यस्य निषेधाय अनुवाद्यता 'मुखेन निष्कलङ्केन न समस्तव चन्द्रमाः' इत्यादौ, तत्रापि इदं लक्षणं स्यात् ।**

तत्त्वालोकः

अत्र-तुल्यशब्दः सादृश्यविशिष्टमभिधत्ते । सादृश्यस्य च अनुवाद्य कोटिप्रविष्टत्वं विधेयत्वं तु गमनस्यैवेति सादृश्यस्य विधेयतया वाच्यत्वं नास्तीत्यव्याप्तिरिति भावः ।

साम्यस्य विधेयतया वाच्यत्वे विवक्षिते अव्याप्तिमापाद्य, अनुवाद्यतया वाच्यत्वविवक्षायामपि व्यतिरेकोदाहरणे अतिव्याप्तिरित्याह-**द्वितीये** इति ।

द्वितीये-अनुवाद्यतया साम्यस्य वाच्यत्वविवक्षायाम्, यत्र-व्यतिरेकविशेषे, साम्यस्य निषेधाय- साम्यं निषेद्धुम्, निषेधप्रतियोगित्वाकारेण अनूद्यते, तत्र-'मुखेन निष्कलङ्केन' इत्यादौ साम्यनिषेधस्य विधेयत्वं साम्यस्य तु अनुवाद्यत्वमित्यतिव्याप्तिः स्यात् इत्यर्थः ।

**वस्तुतस्तु**—अत्र न व्यतिरेकः । व्यतिरेके च धर्मान्तरनिबन्धन सादृश्यविवक्षागर्भधर्मविशेषप्रयुक्तसादृश्यनिषेधस्यैव अपेक्षायाः सर्वसम्मतत्वात् । 'शैला इवोन्नतास्सन्तः किंतु प्रकृतिकोमलाः' इति कुवलयानन्दानुरोधेनोच्येत तदा 'मुखेन निष्कलंकेन' इत्यत्र न व्यतिरेकः किन्तु व्याजस्तुतिः । सापि भिन्नविषया 'कस्त्वं वानर' इति पद्ये हनुमन्निन्दया इतरवानरस्तुतिवत् चन्द्रमसो निन्दया मुखस्य स्तुतिरिति तदा व्याजस्तुतौ अतिव्याप्तिरिति विभावनीयम् ॥

चित्रमीमांसा

न च निषेधाप्रतियोगित्वेन वाच्यमिति विशेषणीयम् ।

असिमात्रसहयोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ (महाद्युतिः)

इति व्यतिरेके तथाप्यतिव्याप्तेः । इति ॥

तत्त्वालोकः

यदि तु निषेधाप्रतियोगित्वेनानुवाद्यतया वाच्यत्वं विवक्ष्यते तदा उक्तोदाहरणे अतिव्याप्तिपरिहारेऽपि व्यतिरेकविशेषे अतिव्याप्तिस्स्यादित्याह– **नचेत्यादिना** । यद्यपि 'निषेधाप्रतियोगि यद्वाच्यं साम्यम्' इति परिष्कारे 'मुखेन निष्कलंकेन' इत्यत्र साम्यस्य निषेधप्रतियोगित्वमेव न पुनर्निषेधाप्रतियोगित्वमिति नातिव्याप्तिः ।

अथापि–यत्र साम्यस्य निषेधप्रतियोगित्वं नास्ति तादृशे व्यतिरेकविशेषोदाहरणे अतिव्याप्तिरिति भावः । **असिमात्रेति** । महाधृतिः अयं असिमात्रसहायोऽपि प्रभूतारिपराभवे अन्यतुच्छजनवत् सगर्वः नैव भवतीत्यन्वयः ॥

महाधृतिः–व्यवसायादत्यन्तमचलः, (महाद्युतिः–महातेजाः,) असिमात्रसहायोऽपि–खड्गमात्रपरिच्छदोऽपि सेनादिरहितोऽपि इति यावत् । प्रभूतारिपराभवे-अतिबहुलवैरिविजये, अन्यतुच्छजनवत् पराक्रमरहितजनान्तरवत्, सगर्वः-विद्याबलैश्वर्यवयोरूपधनादिसम्पत्प्रयुक्तात्मगरीयस्त्वभावयुक्तः, नैव भवतीति शेषः ॥

अत्र अन्यजनस्य राज्ञश्चोपमा वर्ण्यते । तत्र उपमानोपमेययोः असिमात्रसहायत्वं साधारणो धर्मः । व्यतिरेकप्रयोजकस्तु महाधृतित्वम् ।

न च निषेधप्रतियोगिकोट्यननुप्रविष्टतया वाच्यमिति विशेषणीयम् ।

तत्त्वालोकः

एवं च तुच्छत्वविशिष्टः अन्यो जनः प्रकृतो राजा च सदृशौ । अथापि अस्मिन् राज्ञि महाधृतित्वं परं विशिष्यते इति व्यतिरेकः । परं तु 'सगर्वो न' इत्युक्त्या सगर्वत्वस्यैव निषेधप्रतियोगित्वं न पुनर्वत्यर्थसाम्यस्येति लक्षण-समन्वयादतिव्याप्तिरित्यर्थः ॥

'शैला इवोन्नताः' इति व्यतिरेकोदाहरणे उपमानात् व्यतिरेकप्रयो-जकस्य प्रकृतिकोमलत्वस्योपादानम्, अत्र तु उपमेये उत्कर्षप्रयोजकस्य महा-धृतित्वस्य उपमानेऽन्यजनेऽपकर्षप्रयोजकस्य तुच्छत्वस्य चेत्युभयोपादानमिति विशेषः । अत एव जयदेवीये व्यतिरेकलक्षणे 'व्यतिरेको विशेषश्चेदुपमानो-पमेययोः' इति द्वन्द्वनिर्देशः उपपन्नो भवति ।

यद्यपि उक्तोदाहरणे सगर्वत्वस्य क्रियात्वाभावात् 'तेन तुल्यं क्रिया-चेद्वति'रिति (पा.सू.५-१-११५)वति र्नघटते । अथापि 'अस्तिर्भवन्तीपरोऽप्य प्रयुज्यमानोप्यस्ति' इति नयात् वतिघटितप्रयोगो घटत इति बोध्यम् ॥

यदितु 'असिमात्रेति' पद्यार्थे अतिव्याप्तिं परिहर्तुं निषेधाप्रतियोगि-तया वाच्यस्य अनुवाद्यत्वमिति परित्यज्य निषेधकोट्यननुप्रविष्टतया वाच्यस्या-नुवाद्यत्वं चेत् विवक्ष्यते तदापि उपमानलुप्तायामतिव्याप्तिरित्याह — न चेत्यादिना ।

चित्रमीमांसा

**वृथा चरसि किं भृङ्ग तत्र तत्र वनान्तरे ।**
**मालत्याः सदृशीं क्वापि भ्रमन्नपि न लप्स्यसे ॥**

**इत्युपमानलुप्तायामतिव्याप्तेः । तत्र सदृशलाभनिषेधे-साम्यस्यापि प्रतियोगिकोटिनिविष्टत्वात् ॥**

तत्त्वालोकः

अयं भावः-असिमात्रेति पद्ये अन्यतुच्छजनप्रतियोगिकसादृश्यानुयोगिवृत्तिसगर्वत्वस्य निषेध्यत्वेन सादृश्यस्य निषेधप्रतियोगिकोटौ प्रवेशः अस्त्येव न पुनः तदननुप्रविष्टत्वमिति व्यतिरेकविशेषेऽतिव्याप्त्यभावेऽपि लुप्तोपमानोदाहरणेऽव्याप्तिरिति—उदाहरणं प्रदर्शयति- **वृथा चरसीति** ।

हे भृङ्ग हे मधुप ! त्वं तत्रतत्र वनान्तरे तत्तद्विपिनमध्ये क्वापि कुत्रचिदपि प्रदेशे भ्रमन्नपि, मालत्याः-जातीकुसुमस्य सदृशीम्—अनुरूपां न लप्स्यसे—न प्राप्स्यसे इत्यर्थः ॥ यत्र क्वचिदपि अतिष्ठन् देशाद्देशान्तरमटतोऽपि तव न इष्टसिद्धिः । सदृशं वस्त्वन्तरं यदि विद्येत तदा उपलभ्येत, न च तथेति त्वद्भ्रमणमायासमात्रफलं इत्यनेन जात्याः अत्युत्कृष्टता फलति ।

अव्याप्तिमुपपादयति-**इतीति** । उपमानलुप्तायां-सौगन्ध्यसौकुमार्यादिगुणवद्वस्त्वनुपलम्भवदुपमायाम्, सादृश्यविशिष्टस्यानुपलंभ एवेति सादृश्यस्यापि निषेधकोटिप्रविष्टत्वमेवेति तदननुप्रविष्टत्वं नास्तीत्यव्याप्तिरिति ॥

ननु अत्र 'न लप्स्यसे' इत्यलाभः उच्यते। तस्य कथं लोपरूपत्वमिति चेत्, अदर्शनं लोपः [पा. सू. १-१-६०] इति सूत्रे **वामनेन काशिकावृत्तौ** अनुपलब्धेः लोपपदार्थत्वोक्तेरनुपपत्त्यभावात् ॥

चित्रमीमांसा

तस्माद्विद्यानाथोक्तलक्षणमयुक्तम् ॥

यत्तु सरस्वतीकण्ठाभरणोक्त लक्षणम्—

प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः ।
भूयोऽवयवसामान्ययोगः सेहोपमा मता ॥ [स.क. ४-५]

इति,

तत्त्वालोकः

इत्थं महता प्रबन्धेन विद्यानाथोक्तलक्षणमलक्ष्मकमिति निगमयति– तस्मादिति । अव्याप्त्यादिदोषरहितं खलु लक्षणमित्युच्यते, विद्यानाथीयोपमायाः स्वरूपस्य लक्षणत्वं न संभवति अव्याप्त्यादिदोषप्रासादिति भावः ॥

इत्थं विद्यानाथोक्तलक्षणं दूषयित्वा भोजदेवेन सरस्वतीकण्ठाभरणे उक्तमुपमालक्षणं खण्डयितुं तल्लक्षणमनुवदति–यत्त्विति । प्रसिद्धेः अनुरोधेन अर्थयोः यः परस्परं भूयोऽवयवसामान्ययोगः सा इह उपमा मता इति लक्षणवाक्यस्यान्वयः ॥

प्रसिद्धेः – कविसमयप्रसिद्धेः लोकप्रसिद्धेर्वा अनुरोधेन–अनुसारेण अर्थयोः–उपमास्वरूपयोग्ययोर्वस्तुनोः परस्परम्-अन्योन्यम् भूयोऽवयव – सामान्ययोगः–भूयसा–बाहुल्येन अवयवेषु विद्यमानं यत् सामान्यं– अनुवृत्तप्रत्ययनिमित्तं तेन योगः–सम्बन्धः, सा इह–अलंकारशास्त्रे उपमा मता संमता । अत्र सेति स्त्रीलिङ्गनिर्देशः 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये'तिवद्विधेय-प्राधान्येनेति बोध्यम् ।

चित्रमीमांसा

तदपि गुणक्रियादीनां परस्परसादृश्यवर्णनात्मिकायाम् —

ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥

इत्याद्युपमायामव्याप्तम् ।

तत्त्वालोकः

उक्तं लक्षणं गुणक्रिययोरुपमायामव्याप्तमित्याह — **तदपीति** । तदपि—सरस्वतीकण्ठाभरणोक्तं लक्षणमपि इत्यर्थः । **ससञ्जुरिति** । अश्वक्षुण्णानाम्—अश्वैश्चूर्णितानाम्— एलानाम्—एलालतानाम् – फलरेणवः– फलरजांसि तुल्यगन्धिषु–सजातीयगन्धवत्सु, 'गन्धस्येत्वे तदेकान्तग्रहणम्' इति वार्तिकानुसरेण इकारः समासान्त इति युक्तमिति भाति । अत्र तुल्यगन्धिष्विति 'सर्वधनी'त्यादिवत् इन्नन्ताद्बहुव्रीहिः इति तु **मल्लि-नाथः** । मत्तेभकटेषु—मदगजानां गण्डप्रदेशेषु, ससञ्जुः – संसक्ताः अभवन् इत्यर्थः ।

अत्र गजगण्डगन्धस्य एलारेणुगन्धस्य च गुणत्वात्तयोः उपमा कवि-सम्मता तयोश्चगुणत्वेन यवगोधूमादिवन्निरवयवत्वेन भूयोऽवयवसामान्ययोगो नास्तीति लक्षणस्याव्याप्तिरिति ॥

अत्र **अलंकारकौस्तुभकारेणैवमव्याप्तिः** परिहृता—भूयोऽवयवसामान्य योग इत्यत्र सामान्यपदस्य धर्ममात्रपरत्वाद्गुणादीनामिति ॥

**अत्रेदं चिन्त्यते**–उपमां लक्षयता भोजदेवेन यत् भूयोऽवयवसामान्य योगः इत्युक्तं सादृश्यं तत् किंरूपम्? तत्र तावत् मीमांसकेषु भाट्टाः आहुः–

तत्वालोकः

साद्दश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य यत् ॥ इति ।

(मीमां. श्लो. वा. उप. १८५)

इदं वार्तिकम्—गोसादृश्यस्य गवये प्रत्यक्षत्वं साधयद्भिः **वाचस्पतिमिश्रैः सांख्यतत्वकौमुद्याम्**— 'भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते' इति विवृतम् । अस्यायमर्थः—'गोसदृशो गवयः' इत्यादौ गवयसकाशात् जात्यन्तरे—गोपदार्थे वर्तमानः यः भूयोऽवयवसामान्ययोगः—भूयसां अवयवानां यानि सामान्यानि—खुरत्वलांगूलत्वादीनि तेषां यो योगः सम्बन्धः तदेव जात्यन्तरे गवये सादृश्यमुच्यते इति । एतावन्मात्र विवक्षायां यद्यपि 'ससञ्जुः' इत्यादिपद्यार्थेऽव्याप्तिः । अथापि-भूयोऽवयव सामान्ययोग इत्यस्यैव—भूयांसि यानि अवयवानां सामान्यानि-साधारणधर्माः । सामान्यशब्दोऽत्र साधारणार्थकः 'साधारणं तु सामान्य'मिति कोशात् । तेषां योगः इति व्याख्याने तु गुणादीनामपि ग्रहणसंभवात् नाव्याप्तिः । अत एव 'केतकीगन्ध इव सर्पगन्धः' इति गुणयोः सादृश्यं परिकल्प्य क्रियमाणः व्यवहारोऽपि आनुभविकः संवृत्तः ॥

**ग्रन्थकारस्तु**—प्राभाकरमतमनुसरतीव भाति, यतश्च तैनैव स्वकीये **कुवलयानन्दे**—

' वर्ण्योपमानधर्मणामुपमावाचकस्य च ।'

इत्यत्र धर्मशब्दात्पृथक् उपमावाचकस्य चेति अभिधानात् । एतेन सादृश्यं साधारणधर्मतो भिन्नं सम्बन्धरूपं चेति । तेन च सादृश्यं नाम कश्चन सम्बन्धविशेषः । स च उपमेयानुयोगिकः । साधारणधर्मश्च उपमानोपमे

तत्त्वालोकः

योभयानुयोगिकः, अतएव साधर्म्यशब्दः साधारणधर्मप्रतियोगिकं उपमानोपमेयोभयानुयोगिकं संबंधमाहेत्युक्तं भवति ।

अत एव प्राभाकराः सादृश्यं पदार्थान्तरमाहुः—सादृश्यं न द्रव्यम्, यथा एलागन्धः तथा गजगन्ध इति गुणयोः, पिक इव रौति इत्यादौ क्रिययोरपि वृत्तेः । गन्धादयो हि परस्परसदृशाः प्रतिभान्ति । गन्धो गन्धान्तरेण । तथा रूपम्, तथा क्रिया । अत एव न गुणकर्म । नापि सामान्यम्, अनुवृत्तप्रत्ययनिमित्तत्वाभावात् ।

ननु भूयोऽवयवसामान्यं सादृश्यं इति चेन्न, प्रतीतौ वैलक्षण्यात् । सादृश्यं हि सप्रतियोगिकमेव प्रतीयते, अयमनेन सदृश इति । भूयोऽवयव सामान्यं तु सादृश्यव्यञ्जकम् । तत्रैव सादृश्यप्रतीतेः । तस्मात् सादृश्यं पदार्थान्तरमेव, इति भोजदेवलक्षणोपरि दूषणाभिधानं चिन्त्यमेव । यतश्च सादृश्यं द्विविधम् । धर्मसादृश्यम्, स्वरूपसादृश्यं चेति । द्रव्येषु प्रायशः धर्मसादृश्यात् एकरूपताप्रतीतिव्यवहारौ । धर्मान्तरशून्येषु स्वरूपसाश्दया-देव एकरूपताप्रतीतिव्यवहारौ इति तु रमणीयः पन्थाः ॥

अत एव भट्टपादैः—

'एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥'

इत्यभिहितम् । अधिकमुपमासिद्धान्ते वक्ष्यते ।

प्रसिद्धेरनुरोधेनेति विशेषणोपादानात् यत्र उपमानमप्रसिद्धम्, यत्र च

चित्रमीमांसा

उद्गर्भहूणरमणीरमणोपमर्द-
भुग्नोन्नतस्तननिवेशनिभं हिमांशोः ।
बिम्बं कठोरबिसकाण्डकडारमेत-
द्विष्णोः पदं प्रथमभग्रकरैर्व्यनक्ति ॥

'सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्' ।

इत्यादौ प्रसिद्धिरहितोपमानायां कल्पितोपमायां च अव्याप्तम् ॥

तत्त्वालोकः

उपमा कविना कल्पिता भवति तत्र उपमानस्य उपमायाश्च अप्रसिद्धत्वात् अव्याप्तिरिति दूषणमाचष्टे—उद्गर्भेत्यादि ।

उद्गर्भायाः—व्यक्तगर्भायाः हूणरमण्याः—हूणाख्यजनपदतरुण्याः रमणेन कृतः—यः उपमर्दः—गाढालिङ्गनं तेन भुग्नः वक्रः, स चासावुन्नतश्च भुग्नोन्नतस्तनः तस्य निवेशः—संस्थानं तत्सदृशं हिमांशोर्बिम्बं—मण्डलम्, कठोरं-परिणतं यद्बिसकाण्डं तद्वत् कडारं कपिलवर्णं विष्णोः पदम्—आकाशम् प्रथमम् पूर्वं, अग्रकरैः किरणैरेव कराग्रैः व्यनक्ति—प्रकाशयति अग्रैरित्यत्र अवयवावयविनोः भेदोपचारात् षष्ठीसमासः । उक्तं च **वामनेन** 'हस्ताग्राग्रहस्तादयः गुणगुणिनोर्भेदाभेदात्' [का. सू. ५–२–२०] इति ।

अत्र उपमृदितहूणरमणीस्तनस्य प्रसिद्धत्वेऽपि तस्य उपमानत्वेन प्रसिद्धिर्नास्ति । तत्वं च कविना कल्पितम् । एवं 'सद्योमुण्डिते'त्यत्रापि तत्क्षणवापितश्मश्रुहूणाधराधोभागसदृशं नारङ्गकम् ['हेरळे' इति कर्णाट भाषायां प्रसिद्धम्] इति तादृशहूणचिबुक–नारङ्गकयोः उपमा कल्पितेति उपमाया अलंकारता न प्राप्नोति, इष्यते चोपमा इत्यव्याप्तिरिति ॥

चित्रमीमांसा

**यत्त्वलंकारसर्वस्वकृतोक्तम् — उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा ॥**

**तत्त्वालोकः**

**वस्तुतस्तु**-प्रसिद्ध्यनुरोधः य आश्रितः सः 'कुमुदमिव मुखं मनोज्ञं' इत्यादिवारणायैव, न पुनः ऊद्रुभेत्यादौ तद्वारणाय यतश्च-प्रसिद्ध्यनुरोधः सहृदयोद्वेगजनकोपमावारणाय आश्रीयते। अत्र तु उपमानभावः तादृशरमणी स्तनभ्यमच्चूहूणचिबुकस्य च नव्यः न पुनः सहृदयोद्वेगजनकः। यथोपमायां कल्पितायां प्रसिद्धिः अनुरुद्धा भवेत् तथैव कविना कल्पितमुपमानं उपमा चेति नाव्याप्तिरिति ॥

**सरस्वतीकण्ठाभरणोक्तामुपमां** दूषयित्वा **अलंकारसर्वस्वकृतोक्तम्** उपमालक्षणं दूष्यति—**यत्त्विति** ॥

उपमानोपमेययोः—साधर्म्यानुयोगिनोः, साधर्म्ये—साधारणधर्मसंबन्धे, इत्यर्थः। समानः धर्मः ययोस्तौ—सधर्माणौ 'धर्मादनिच् केवलात्' [पा.सू. ५-४-१२४] इति अनिच् समासान्तः। सधर्मणोः भावः—सम्बन्धः, साधर्म्यम्—ब्राह्मणादेराकृतिगणत्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' [पा. सू. ५-१-१२४] इति भावे ष्यञ्प्रत्ययः। 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेन' इति कैयटाशयानुरोधेन भावशब्दः सम्बन्धवाची। तथा च साधर्म्ये इत्यस्य साधारणधर्मेणसंबन्धे सति इत्यर्थः।

एवं च साधर्म्यं नाम उपमानोपमेयानुयोगिकः साधारणधर्मप्रतियोगिकः बन्धविशेषः,। सादृश्यं तु उपमेयानुयोगिकः उपमानप्रतियोगिकः

चित्रमीमांसा

साधर्म्ये त्रयः प्रकाराः, भेदप्राधान्यम् दीपकतुल्य-योगिता-दृष्टान्त- प्रतिवस्तूपमा -सहोक्तिव्यतिरेकादिषु ।

तत्त्वालोकः

सम्बन्धविशेष इति तयोः वैलक्षण्यं प्रसंगादभिहितं बोध्यम् । भेदाऽभेद-तुल्यत्वे-भेदाऽभेदयोः प्राधान्ये विवक्षिते सति उपमा इति तदर्थः ॥

साधर्म्यमूलकेषु अलंकारवर्गेषु त्रिप्रकारतामाह—साधर्म्येति ।

(१) तद्यथा दीपके-

राजते मिहिरेण नभः, रसेन काव्यं, स्मरेण यौवनम् ।
अमृतेन धुनीधवः, त्वया च नाथ भुवनमिदम् ॥

अत्र राज-मिहिरादीनां भेदः ।

(२) तुल्ययोगितायाम्—

त्वदङ्गमार्दवे दृष्टे कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीनां कठोरता ॥

इत्यादौ नायिका-मालत्यादेः ।

(३) दृष्टान्ते-'देवीं वाचमुपासते हि' इतिपद्ये मुरारिमन्थाचलयोः ।

(४) प्रतिवस्तूपमायाम् —

चकोर्य एव चतुराः चन्द्रिकापानकर्मणि ।
आवन्त्य एव निपुणाः सुदृशो रतनर्मणि ॥

इत्यत्र चकोरीणाम् आवन्तीसुदृशां च परस्परं भेदः ॥

तत्त्वालोकः

भवदपराधैस्साधं सन्तापो वर्धतेतराम् अस्याः ।
क्षयमेति सा वराकी स्नेहेन समं त्वदीयेन ॥

इति सहोक्तौ । संतापप्रमाणाधिक्यं प्रति अपराधप्रमाणाधिक्यं हेतुः । तत्रापि अपराधसाहित्यं सन्तापे वर्ण्यते, यत्प्रमाणविशिष्टः अपराधः तत्प्रमाणानुगणः सन्ताप इति अपराध–सन्तापयोः उपमानोपमेयभावः भेदप्रधानं साहित्यं चोपवर्ण्यत इति सहोक्तेर्भेदप्राधान्यम् । एवं —

अरत्नालोकसंहार्यं अवार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥

अत्र (तमश्शब्दे) श्लेषावगतयोः अज्ञानान्धकारयोः दृष्टिप्रतिरोधकत्वेन साम्ये सत्यपि, रत्नालोकासंहार्यत्व–सूर्यरश्म्यवार्यत्वादिभिः भेदस्यैव दृढीकरणात् व्यतिरेके भेदप्राधान्यम् । आदिपदात् निदर्शनादिपरिग्रहः । तद्यथा निदर्शनायाम्—

चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥

अत्र यथा गिरिः स्वशिरसि अभ्यागतं रविं धारयति तथा गृहिभिरपि स्वगृहमागताः अतिथयः अर्च्या इति सादृश्यं ज्ञायते । तेन च उदयाचलस्य गृहमेधिनश्चोपमा भेदप्रधाना गम्यते । एवं चोपमानोपमेयवृत्त्यसाधारणधर्मपुरस्कारेण भासमानस्य भेदस्य प्राधान्यं विवक्ष्य तत्तदलंकारप्रयोजकविशेष धर्मनिमित्तक अलंकारभेदः ॥

## चित्रमीमांसा

अभेदप्राधान्यं रूपकपरिणामभ्रान्तिमदुल्लेखादिषु ॥

## तत्त्वालोकः

अभेदप्रधानसाधर्म्यमूलानलंकारान् दिग्दर्शनरीत्या प्रदर्शयति—अभेद इति ।

रूपके अभेदप्राधान्ये यथा —

नन्दकुलकालभुजगीं कोपानलबहलधूमलताम् ।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ॥

इत्यादौ शिखायां कालभुजगीत्वाभेदस्य प्राधान्यात् विवक्षितसर्वनाशाद्यर्थ-प्रतीतिः ।

परिणामे अभेदप्राधान्यं यथा—

अथ पवित्रमतामुपेयिवद्भिः सरसैः वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥

अत्र आरोप्यमाणं उपायनं विषयभूतवचोरूपतयैव राजसंघटनोपयोगि इति परिणामः । 'वचोभिः उपायनम्' इति आरोपाधिकरणारोप्यमाणयोः विभक्तिभेदात् वैयधिकरण्यम् । वचसि उपायनस्य वचसः अभेदो वा विवक्षितः इत्यभेदप्राधान्यम् ।

भ्रान्तिमति अभेदप्राधान्यं यथा—

नीलोत्पलमिति भ्रान्त्या विकासितविलोचनम् ।
अनुधावति मुग्धाक्षि पश्य मुग्धो मधुव्रतः ॥

चित्रमीमांसा

द्वयोस्तुल्यत्वमस्यामुपमायाम् । अत्र हि उपमानोपमेयासाधारणरूपाभ्यां भेदः साधारणधर्मेणाभेदश्चेति–द्वयोरपि तुल्यतैव [अलं. स. ३१ पु] ।

तत्त्वालोकः

अत्र विलोचने नीलोत्पलभ्रमः अभेदज्ञानमूल एवेति भ्रान्तौ अभेदस्य प्राधन्यम् । उल्लेखे अभेदप्राधान्यं यथा–भट्टबाणस्य हर्षचरिते—

'यस्तपोवनमिति मुनिभिः । कामायतनमिति वेश्याभिः ।
सङ्गीतशालेति लासकैः । यमनगरमिति शत्रुभिः ।
चिन्तामणिरित्यर्थिभिः ।' इति ॥

अत्र एक एव जनपदः विविक्तत्वादिनानाधर्मसंबन्धात् अर्थित्वादिनिमित्तेन तपोवनाद्यनेकरूपतयोल्लिखितः । जनपदे तपोवनाद्यभेदारोपस्य सत्वात् अभेदप्राधान्यम् । आदिपदात् सन्देहादीनां ग्रहणम् ॥

भेदाऽभेदयोः तुल्यं प्राधान्यमस्यामुपमायामित्याह–द्वयोरिति । द्वयोः–भेदाऽभेदयोः, तुल्यं प्राधान्यम्—समप्राधान्यम् ॥ अत्र हीति । अयमाशयः—उपमानोपमेयपदार्थयोरभेदो भेदो वा ? 'गगनं गगनाकारम्, 'चन्द्र इव मुखम्' इति उभयत्रापि प्रयोगे इवशब्दस्य दर्शनात् । यदितु सर्वथाऽभेदे उपमा स्यात् तदा द्वितीयसदृशव्यवच्छेदविरहे गौरिव गौः इत्यादौ उपमार्थः कः ? सादृश्यस्य भेदघटितत्वेन भूयोधर्मपरिच्छेदाऽसंभवात् ।

यदि वा सर्वथा भेदे उपमा स्यात्तदा गौरिव अश्वः इत्यत्रापि सा प्रसज्यते । जाड्याकं दिगवादिगतं अश्वे विवक्ष्यते तदा उपमास्त्येवेति विचारान्तरम् ।

**चित्रमीमांसा**

तदप्युपमेयोपमायाम् अतिव्याप्त्यादिदुष्टमिति स्पष्टमेव। तस्मात् अस्याः लक्षणं दुर्वचमिति ॥

इति चित्रमीमांसायामुपमापूर्वपक्षः ॥

**तत्त्वालोकः**

परं तु बहुलक्ष्यानुसारेण नात्यन्ताभेदे नात्यन्तभेदे वा उपमा। किन्तु-'यत्र यत्किंचित्सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इति महाभाष्योक्तरीत्या उपमानोपमेयगतासाधारणधर्मरूपमादाय भेदः, उभयानुगतं साधारणधर्ममादाय अभेदश्चेति-यथा 'चन्द्र इव मुखम्' इत्यादौ मुखत्वचन्द्रत्वरूपासाधारणधर्ममादाय भेदः, आह्लादकत्वादिसाधारणधर्म-मादाय अभेदः।

उक्तं च ग्रन्थकृता कुवलयानन्दाख्यसन्दर्भे-'समप्राधान्यसंकर-निरूपणावसरे 'प्रातिस्विकरूपेण भेदवत् अनुगतसादृश्यप्रयोजकरूपेण अभेदो-ऽप्यस्ति स चात्र विवक्षित एव। भेदाऽभेदोभयप्रधाना उपमा इत्यालं-कारिकसिद्धान्तात्' [कु. १८२ पु] इति।

एवं सत्यपि सर्वस्वकृदुक्तं लक्षणं 'उपमेयोपमायां अतिव्याप्तमित्याह-तदपीति।

'खमिव जलं जलमिव खम्' इत्यादौ खजलयोः प्रातिस्विकरूपेण भेदेऽपि नैर्मल्यादिना अभेदस्य प्रतीत्या लक्षणस्यातिव्याप्तिः। अतः निर्दुष्टं लक्षणं अस्याः उपमायाः वक्तुं दुश्शकमिति ॥

इति तत्त्वालोके उपमापूर्वपक्षः

## अथ उपमासिद्धान्तः

चित्रमीमांसा

अत्रोच्यते—

व्यापार उपमानाख्यो भवेद्यदि विवक्षितः ।
क्रियानिष्पत्तिपर्यन्तमुपमालङ्कृतिस्तु सा ॥

उपमानाख्योव्यापारः — उपमितिक्रियानिष्पादको व्यापारः सादृश्यवर्णना । सोऽयमुपमितिक्रियानिष्पत्तिपर्यन्तं विवक्षित श्चेदुपमालङ्कार इत्यर्थः ।

तत्त्वालोकः

## अथ उपमासिद्धान्तः

विद्यानाथभोजदेवमम्टसर्वस्वकाराणां लक्षणानि दुष्टानीति प्रतिपाद्य स्वयं तल्लक्षणमाचष्टे—अत्रोच्यते इति । लक्षणेऽज्ञाते धर्मिण एव समीचीनतया बुद्धावनारोहात् सामान्यनिरूपणानन्तरमेव विशेषस्य निरूप्यत्वमित्यभिप्रायेण उपमास्वरूपमाह—व्यापार इति । उपमानव्यापारः उप—उत्कृष्टगुणवत्त्वेन विवक्षितस्य चन्द्रादेः समीपे, मानम् न्यूनगुणवत्त्वेन विवक्षितस्य मुखादेः सदृशीकरणम् , उपोपसृष्टान्माधातोः 'नपुंसके भावे क्तः' [पा.सू. ३-३-११४] ल्युट् च [पा.सू. ३-३-११५] इति भावे ल्युट् 'हसनम्' इतिवत् उपमानमिति । तथा च उपमितिक्रियानिष्पादको व्यापारः वर्ण्यमानं सादृश्यमिति यावत् ॥

## चित्रमीमांसा

तथाच व्यतिरेके नातिव्याप्तिः। तत्र सादृश्य वर्णनसत्त्वेऽपि 'मुखेन निष्कलङ्केन' इत्यादौ साक्षात्तस्यैव निषेधेन, 'नैवान्यतुच्छजनवत्' इत्यादौ तत्प्रयोजक धर्मनिषेधेन च उपमितिक्रियाया अनिष्पत्तेः।

## तत्त्वालोकः

विद्यानाथकृतलक्षणस्य 'मुखेन निष्कलङ्केन न समस्तव चन्द्रमाः' इत्यत्र व्यतिरेकेऽतिव्याप्तिरुद्भाविता। सा न प्रसरति इत्याह—**तथा चेत्यादिना**। तथा च उपमितिक्रियायाः निष्पत्तिपर्यन्तत्वविवक्षणादि त्यर्थः। व्यतिरेके–व्यतिरेकोदाहरणे नातिव्याप्तिः–नातिप्रसक्तिः। तदुपपादयति—**तत्रेत्यादिना**। तत्र व्यतिरेकोदाहरणे, सादृश्यवर्णनसत्त्वेऽपि वर्ण्यमानसादृश्यप्रतीतावपीत्यर्थः। **मुखेनेति**। निषेधप्रयोगित्वेन सादृश्य प्रतीतिस्थले इत्यर्थः॥

**अयं भावः**—'मुखेने'ति पद्ये न समः इति साम्ये निषेध्ये निषेध प्रतियोगिनः प्रसक्तिरावश्यकी अन्यथा अप्रसक्तप्रतिषेधापत्तेः। अतश्च आह्लादकत्वादिधर्मपुरस्कारेण सादृश्ये सत्यपि निष्कलङ्कत्वरूपधर्मान्तरमुपादाय सादृश्यं निषिध्यते इति सादृश्यस्य प्रतिष्ठा नास्तीति नातिव्याप्तिरिति।

निषेधकोटिप्रविष्टत्वेन सादृश्यं यत्र प्रतीयते तत्रापि नातिव्याप्ति रित्याह—**नैवान्येति**। अत्र राज्ञि इतरतुच्छजनसादृश्यप्रयोजकीभूतो धर्मः गर्वसाहित्यं यद्यपि निषिध्यते, अथापि उपमायाः प्रयोजकः साधारणधर्म एव प्रधानः तस्यैव निषेधे सादृश्यमपि निषिद्धमेव भवति। परंतु अर्थात्। एवं चोपमितिक्रियाया अनिष्पत्त्या नातिव्याप्तिरिति भावः॥

चित्रमीमांसा

नाप्यनन्वयेऽतिव्याप्तिः । तत्रापि स्वेन स्वस्य सादृश्यस्य सदृशान्तरव्यवच्छेदे रुद्ररोदनवपोत्खननाद्यर्थवादे निन्दास्तुत्योरिव द्वारमात्रतया वर्ण्यमानत्वेन उपमितिक्रियाया अनिष्पत्तेः ॥

तत्त्वालोकः

'इन्दुरिन्दुरिव श्रीमान्' इत्यादौ उपमितिक्रियाया अनिष्पत्ते नातिव्याप्तिरित्याह—**नापीति** । यद्युपमितिर्नास्ति तर्हि स्वस्य स्वेन सादृश्यकथनं असङ्गतमित्यत्राह—**तत्रापीत्यादिना** । तत्रापि—अनन्वयोदाहरणेऽपि स्वेन—इन्दुना स्वस्य—इन्दोः वर्ण्यमानस्य सादृश्यस्य नौपम्ये पर्यवसानम्, अपितु स्वस्य—इन्द्वादेः, अन्यत्सदृशं नास्तीत्यत्रैव, तादृशार्थफलनं प्रति द्वारमात्रमपेक्षितं, तच्च स्वस्य स्वेन सादृश्यवर्णनमेव । उक्तार्थे दृष्टान्तमुपादत्ते—**रुद्ररोदनेत्यादिना** । सर्वाकारं प्रमाणतया स्थिते वेदे 'सोरोदीद्यदरोदीत् तत् रुद्रस्य रुद्रत्वम्' इति, 'स प्रजापतिरात्मनो वपामुदच्छिदत्' 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादेषु रुद्ररोदनम्, आत्मना आत्मनः वपोत्खननम्, इत्यादीनां संभवो नास्त्येव, अथापि 'बर्हिषि रजतं न देयम्' इति निषेधशेषतया रुद्ररोदनवाक्यस्य निषेध्यनिन्दकतया यथा अर्थवादत्वं तद्वदत्रापि उपमेयस्तावकतया अर्थवादत्वमिति नात्र उपमितिक्रियानिष्पत्त्यावश्यकता, किन्तु द्वितीयसदृशव्यवच्छेदं व्यञ्जयितुं तथा सादृश्यकल्पनमिति भावः ॥

एवं च अत्यन्तभेदे अभेदे वा नोपमा, सादृश्यस्य भेदघटितत्वात् . अन्यथा गौरिव गौः इत्यत्र अभेदे, यथा अनड्वान् एवं महिषः इत्यत्यन्तं

चित्रमीमांसा

अन्यथा स्वस्य उपमितिक्रियानिष्पत्तौ सदृशान्तर व्यवच्छेदेऽपि सर्वथानुपमत्वद्योतनं फलं न स्यात् । आहुश्च तदेव फलं भामहादयः—

तत्त्वालोकः

भेदे च उपमाप्रसक्तेः । उपमायां च असाधारणधर्ममुपादाय भेदस्य साधारण धर्मस्य वस्तुतो भिन्नत्वेऽपि आह्लादकत्वादिगुणजातेरेकत्वादभेदस्यापि प्रतीति रपेक्षिता । अत एव उपमानानि सामान्यवचनैः [पा.सू. २-१-५४] इति सूत्रे **कैयटेन**—'गुणत्वजातेरेकत्वादभेदोऽपि' इत्यभिहितं संगच्छते ।

अनन्वयस्थलेऽपि उपमितिक्रियानिष्पत्तिस्वीकारे बाधकमाह—**अन्यथेति** । अन्यथा—तदनिष्पत्त्यनङ्गीकारे, उपमितिक्रियानिष्पत्तौ—तुलनायाः निष्पत्तौ, सदृशान्तरव्यवच्छेदेऽपि—उपमानान्तरनिषेधेऽपि सर्वथा—सर्वात्मना अनुपमत्वद्योतनम् असदृशत्वद्योतनं फलं—प्रयोजनम् न स्यात्—न प्रतीयेत ।

**अयं भावः**—'गंगायां घोषः' इत्यादौ यथा वा प्रवाहरूपेऽर्थे बाधित स्सन् घोषपदार्थः स्वान्वयसिद्धये तीररूपार्थं गंगाशब्दादवगमयति । तत्प्रतीतिं द्वारीकृत्य शैत्यपावनत्वादिकमर्थं व्यञ्जयति । तद्वदत्रापि स्वस्य स्वेन सादृश्यं अनन्वितं सत् सदृशान्तरं व्यवच्छिन्दत् अनुपमत्वं द्योतयति इति ॥

अनन्वयरीत्या वर्ण्यमानस्य सादृश्यस्य अनुपमत्वद्योतनं फलमिति स्वोपपादितेऽर्थे भामहसम्मतिं प्रदर्शयति—-**आहुश्चेत्यादिना** ।

चित्रमीमांसा

यत्र तेनैव तस्य स्यादुपमानोपमेयता ।
असादृश्यविवक्षातो वदन्ति तमनन्वयम् ॥

इति [भा.प. ३-४५]।

ततश्च यथा अम्भसि कतकरजःसंयोजनेन रजोन्तर

तत्त्वालोकः

यत्र यादृशकाव्यवाच्यार्थे, तेनैव यद्धर्मावच्छिन्नेनैव, तस्य पूर्वोक्त धर्मावच्छिन्नस्य, उपमानोपमेयता सादृश्यम् , असादृश्यविवक्षातः सादृश्याभावविवक्षानिमित्ततः, तम्—अलंकारम् अनन्वयं वदन्ति लक्षणकाराः इति शेषः । सदृशान्तरव्यवच्छेदफलकैकोपमानोपमेयकं सादृश्यम् अनन्वयः इतिं च निष्कृष्टं लक्षणम् । स्वभिन्नोपमाननिषेधफलकैकधर्मावच्छिन्न प्रतियोग्यनुयोगिकं सादृश्यम् अनन्वय इति वा लक्षणम् । अनन्वयपद व्युत्पत्तिश्च—न विद्यते तद्भिन्नस्य सादृश्यप्रतियोगिनः उपमानत्वेनान्वयो यत्र सोऽनन्वय इति । भामहादयः इत्यादिपदात् उद्भटप्रभृतयः । तेषु असादृश्यविवक्षातः इति प्रतीकमुपादाय 'नात्रोपमानोपमेयभावे तात्पर्यं, किन्तु उपमेयोपमावत् उपमानान्तरव्यावृत्तौ इत्यर्थः' इत्युद्भटेन विवृतम् ॥ कारिकायां-उपमानोपमेयता इत्यत्र उपमानं च उपमेयं च उपमानोपमेये तयोर्भावः इति विगृह्य 'द्वन्द्वात् परं श्रूयमाणं (पदं) प्रत्येकमभिसंबध्यत' इति न्यायात् त्वप्रत्ययार्थस्योभयत्रान्वयः । न्याये पदशब्दस्य शब्द मात्रपरत्वात् ॥

पूर्वं वैदिकदृष्टान्तेन सर्वथानौपम्ये पर्यवसानमिति प्रदर्श्य तदेव लौकिकदृष्टान्तेनापि द्रढयति—ततश्चेत्यादिना। लोके यथा कलुषितस्याम्भसः

### चित्रमीमांसा

व्यवच्छेदे सति कतकरजसोऽपि विलयनात् सर्वथा अनाविलमंभः सिद्ध्यति। तथा 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादौ स्वेन सादृश्यवर्णनया सदृशान्तरव्यवच्छेदे सति वस्तुतः स्वेनाप्युपमायाः असंभवात् अनुपमं रामरावणयोर्युद्धमित्यत्रैव कविसंरम्भ इति उपमितिक्रियायाः अनिष्पत्तेः नानन्वयेऽतिव्याप्तिशंकावकाशः ॥

### तत्त्वालोकः

प्रसादनाय कतकबीजमवहत्य प्रक्षिपन्ति । प्रक्षिप्ते च तस्मिन् सर्वं रजः धो नीत्वा कतकरजोऽपि विलीय अम्भः स्वच्छयति । तथा अनन्वयेऽपि उपक्षिप्यमाणं एकधर्मावच्छिन्नप्रतियोग्यनुयोगिताकं सादृश्यं अन्यसदृशं व्यवच्छिन्दत् स्वयमपि न तिष्ठति । अतश्च उपमितिक्रिया न परिनिष्पद्यत इति 'इन्दुरिन्दुरिवे'त्यादौ अनन्वयोदाहरणे नातिव्याप्तिरिति भावः ॥

वस्तुतस्तु—अनन्वयेऽपि उपमितिक्रियायाः निष्पत्तौ बाधकं नास्ति । तथाहि—

उपमा रूपकं चैव दीपकं यमकं तथा ।
काव्यस्यैते ह्यलंकाराः चत्वारः परिकीर्तिताः ॥

इति चतुरः अलंकारान् परिगणयता **नाटयशास्त्रकृता भरतेन**(नाटय· अ· २६ श्लो ४०) अनन्वयादीनामपि उपमायामेवान्तर्भूतत्वस्य ध्वनितत्वात् । अत एव **आचार्यदण्डी**—इममनन्वयं—

'चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।
आत्मनैव भवत्तुल्यमित्यसाधारणोपमा ॥'

तत्त्वालोकः

इति लक्षयित्वा उपमायामन्तर्भावयामास। एवं **रुद्रटोऽपि** स्वीये **काव्यालङ्कारे**

'सा स्यादनन्वयाख्या यत्रैकं वस्त्वनन्यसदृशमिति।
स्वस्य स्वयमेव भवेदुपमानं चोपमेयं च ॥'

इत्युपमाभेदमभ्युपगतवान्।

काव्यालंकारसूत्रकृत् **वामनोऽपि**–'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इत्यभिधाय 'एकस्योपमानोपमेयत्वे' अनन्वयः [४-३-१४] इति सूत्रयित्वा 'गगनं गगनाकारम्' इतीदमेव पद्यमुदाहृत्य अन्यासादृश्यमेतेन प्रतिपादितम्' इत्युपपादितवान्। न पुनः स्वेनासादृश्यमित्यपि। अतः स्वस्य स्वेन सादृश्ये न किमपि बाधकमस्ति ॥

अत एव **जयरामभट्टाचार्याः**–उपमितिक्रिया नाम साधर्म्यनिष्पत्तिः। सा च अनन्वयेऽप्यस्त्येव। अनन्वयपदव्युत्पत्तिश्च—न विद्यते अन्वयः–उपमानत्वेन स्वभिन्नस्य सादृश्यस्य प्रतियोगित्वेन अन्वयो यत्र इति। अत्र विद्यते इत्यस्य 'नञोऽस्त्यर्थानां वहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च' इति कात्यायनवार्तिककृतो लोपः।

'चन्द्र इव मुखम्' इत्यत्र मुखे चन्द्रगतधर्मप्रतीतिः। 'चन्द्र इव चन्द्रः' इत्यत्र तु चन्द्रभिन्ने सादृश्यप्रतियोगित्वनिषेधः, चन्द्रगतधर्मवान् चन्द्रः इति चन्द्रगतधर्मप्रतीतिश्चेत्युभयमपि बुध्यते।

चन्द्रे चन्द्रवृत्तिधर्मस्य स्वरसत एव प्रतीतौ सत्यां पुनस्तत्र तत्प्रतीतौ वैयर्थ्यात् चन्द्रस्यान्यदुपमानं नास्तीति ज्ञायते 'शब्दाधिक्यादर्थाधिक्यम्' इति न्यायात्। तेन च निरुपमत्वं व्यज्यते।

तत्त्वालोकः

किंच—ग्रन्थकृता रूपकोत्प्रेक्षादौ क्रियाकृतवैजात्यस्य तत्तदलङ्कारता प्रयोजकत्वं नाभ्युपगतम् ।

अपरे च—वर्ण्यमानसादृश्यस्य क्रियानिष्पत्तिपर्यन्तस्य उपमालक्षणत्व मभ्युपगम्य 'गर्वमसंवाह्यम'मिति प्रतीपविशेषं संगृह्य अस्य परित्यागो नोचितः इत्याचक्षते ।

एवं च अन्योपमानव्यवच्छेदफलिकायाः उपमेयोपमायाः संग्राह्यत तत्समशीलायाः अनन्वयालंकृतेरपि संग्राह्यत्वमेव । व्यवच्छेद्यमेकमनेकं वा भवतु । क्रियाकृतवैजात्यं नालंकारविभेदकम् । अतश्च अनन्वयेऽपि उपमाननिष्पत्तिः आवश्यकी, बाधकाभावात् ॥

अत एव **अलंकारकौस्तुभकृता**–उपमानिरूपणावसरेऽनन्वयादावपि सादृश्यप्रतीतिपर्यवसानं स्पष्टमेवेत्युक्तम् ।

यद्प्यत्र—वैदिकं लौकिकं च दृष्टान्तद्वयमसदर्थत्वेनोपपादितम्, तदपि न युक्तम् । वैदिकस्यार्थस्य असदर्थत्वे वेदस्य अंशतः अप्रामाण्यं प्रसज्येत, न च तदिष्टम्, तस्य सर्वांशे प्रमाणत्वात् ।

अत्रापि—'सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' इति श्रुतौ श्रुतं रुद्ररोदनं नासत् किन्तु सदेव । यतश्च पुरुषः बिधिबलादेव प्रवर्तते । तथाप्यर्थवादैः प्ररोचितं कर्म झटिति अनुष्ठानाय भवति इत्यपि लोकसिद्धम् । स्तुतिपरत्वे, निन्दापरत्वे वा अर्थवादानां न स्वार्थप्रहाणिः । स्वार्थेषु तदुपयोगिषु तदयोगात्, क्रय्येषु गोषु बहुक्षीरत्वाद्युक्तेः असदर्थत्वं नास्ति । व्यवहारबाधप्रसक्तेः ।

### तत्त्वालोकः

एवमेव रुद्ररोदनादेरपि नासदर्थत्वम्, तद्बोधकवाक्यपूर्वापरपरामर्शे सति परस्परसाकांक्षैः पदैः स्तुतिनिन्दामुखेन विध्येकवाक्यत्वं सुव्यक्तम्। न तावद्रुद्ररोदनमसंभवि, तस्यापि शतपथब्राह्मणादिषु तद्धेतोः शतशः प्रतिपादनात्। 'सोऽरोदीत्'वाक्यनिर्दिष्टस्य 'रुद्रो वा एष यदग्निः' इति मन्त्रवर्णादग्नेः देववर्गनिक्षिप्तधनप्रत्यर्पणनिमित्तशोकस्य रोदनहेतोः प्रामाणिकत्वात्।

न चाशरीरस्य कथं रोदनाश्रुपातादिरिति वाच्यम्। देवताविग्रहादेः 'वज्रहस्तः पुरन्दरः'। 'तेनेन्द्रो वज्रमुदयच्छत्' इत्याद्यबाधितश्रुतिवाक्यैरेव स्वीकारयोगात्॥

न च तदश्रुणः रजतरूपेण परिणामे काचिदनुपपत्तिः, वस्तुशक्तेः व्यवस्थितत्वात्। द्रवादीनां परिणामविशेषवशात् काठिन्यस्य करकादौ दृष्टेः। आधुनिकविज्ञानिभिरपि जलं करकादिवत् कठीनीक्रियते विलक्षण पेटिकास्थापनादिनेति अस्मदादिभिरपि दृष्टमेव। हेमन्ते गोमयात् वृश्चिकोत्पत्तिवत् विलक्षणादपि कार्योत्पत्तेः। अत एव **शांकरभाष्यभामत्यां वाचस्पतिमिश्रैः**—यथा 'दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वमिति।' [भामं. १०५ पु] उक्तम्।

तथात्रापि–तृणारणिमणिजन्याग्निवत् अश्रुजानश्रुजरजतभेदस्य संभवात्। द्रव्यविशेषाणां च तत्तद्धातुरूपेण परिणामस्य अन्यत्रापि दृष्टत्वात्। रुद्रशरीरस्थ-तैक्ष्ण्यविशेषात् सर्वधातूत्पत्तिः **वाल्मीकिनापि श्रीमति रामायणे**

उत्ससर्ज तथा तेजः . . . . . ।
तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ इति कथिता ।

## तत्वालोकः

एवं च 'तस्माद्रजतमदक्षिण्यम् । अश्रुजं हि तत्' इति वाक्यशेषानुरोधेन अश्रुपातप्रसूतं रजतं स्वकारणगुणानुगुण्येन अश्रुपातहेतुः भवतीति अदेयत्वाय निन्द्यते ॥

तथा—'स आत्मनो वपामुदखिदत्' इत्यादिप्रतीतवपोत्खननादेरपि नासदर्थत्वम् ॥ लोकोत्तरशक्तेन प्रजापतिना आत्मवपोत्खननं न विरुद्धम् । अथापि तस्य जीवनम् । तेनैवाग्नौ वपाप्रहरणमित्यादिकं च शक्त्यतिशयादेवोपपद्यते । एतद्विषये पराक्रान्तं पूर्वैः ।

एवं च रुद्ररोदनादीनां निन्दाद्यर्थत्वेऽपि यथा नासदर्थत्वं, तथा अन्यसदृशव्यवच्छेदफलकत्वेऽपि स्वस्मिन् न स्वसादृश्यस्य बाधः ।

एवं—कतकदृष्टान्तेऽपि कतकस्य नासत्वम् । तथाहि—अम्भसि विद्यमानेन रजसा सह कतकरजसः प्रक्षेपे रजोन्तरस्यानुत्थानं यथा, तथा कतकरजसोऽप्यनुत्थानमात्रम्, न पुनरसत्वम् ।

यदि वस्तुतः अम्भसि कतकरजसः प्रक्षेपो न स्यात्, तदा आविलमम्भः अनाविलं न भवेदेव । अतश्च कतकरजःप्रक्षेपरूपक्रिया निर्वृत्तैवेत्यकामेनाप्यभ्युपेयम् । तद्वत् अनन्वयादावपि स्वस्य स्वेन उपमितिक्रिया निष्पन्ना सती अन्यसदृशं निषेधति । अपरिनिष्पन्नं सादृश्यं कथमन्यसदृशं निरुन्ध्यात् ।

अतश्च भामहादीनामपि असादृश्यविवक्षामात्रं सम्मतम् । न पुनः उपमितिक्रियायाः अनिष्पत्तिः । अत एव—

तत्त्वालोकः

'यत्र तेनैव तस्य स्यात् उपमानोपमेयता ।'

इति सादृश्यसत्त्वैव उपपादिता , न ह्यनिष्पन्नस्य सत्ता दृश्यते । अनिष्पत्ति–सत्तयोः विरोधात् ।

**विमर्शिनीकारेणाऽपि**–'वच्याभिप्रायेण पूर्वरूपावगमः' इति सर्वस्वकारवाक्यमुपादाय अस्त्येव ह्यत्र शाब्दी सादृश्यप्रतीतिः इति व्याख्यातं न पुनः सादृश्यासंभव इति ॥

**किंच**—उपमितिक्रियानिष्पत्यनिष्पती कविविवक्षाधीने, ते च ग्रन्थ कृतोऽपि सम्मते एव । अन्यथा 'चन्द्रधवला कीर्तिः' इत्यादौ लक्षणं कथमपि न समन्वियात् । कीर्तौ धावल्यस्य कविविवक्षां विना सर्वात्मना अभावात् ।

न चैवमादौ मास्तु उपमेति वाच्यम् । उत्तरत्र ग्रन्थकृतैव ' चन्द्रबिम्बादिव विषम् ' इत्यत्र उपमितिक्रियानिष्पत्तिं साधयता-'नहि वस्तुसदर्थनिबन्धना उपमितिक्रियानिष्पत्तिरुपमेति लक्षणमुच्यते, किन्तु कविविवक्षा निबन्धना । अत एव श्लोके 'विवक्षितः' इति विशेषणमर्थवत् । अन्यथा 'चन्द्र इव मुखम्' इत्यादावपि लक्षणं न स्यात् ' इति वक्ष्यमाणत्वात् ।

अतश्च ग्रन्थकृता अनन्वयव्यावृत्तये कृतः प्रयासो विफलः । व्यङ्ग्यार्थकृतवैचित्र्यमुपादाय पृथग्गणनं तु उपमेयोपमादिवत् साधीयः ।

**किंच**––प्रतीपं लक्षयता **काव्यप्रकाशकारेण** उपमितिक्रियानिष्पत्ति गर्भम् , **रुद्रटेनो**दाहृतं 'गर्वमसंवाह्यमिम' इति पद्यमेवोदाहृतम् । उपपादितं च 'इहोपमेयीकरणमेवोत्पलानामनादरः' इति । 'अत्र उपमितिनिष्पत्तावपि उपमेयाधिक्यप्रतीतेः व्यतिरेकतो भेदः ' इति उद्योते **नागेशभट्टश्च** ।

**तत्त्वालोकः**

एवं च–उपमानतिरस्कारः प्रतीपबीजम् अथापि उक्तोदाहरणे उपमा इत्येवोत्तरत्र सिद्धान्तयति। अत्र नैर्मर्यमस्ति नवेति उत्तरत्र विवेचयिष्यामः।

**अपरं च** —व्यतिरेके उपमितिक्रियानिष्पत्तिर्नास्तीत्युक्तं, प्रत्युदाहृतं च

'मुखेन निष्कलंकेन न समस्तव चन्द्रमाः' इति।

अत्र मुखचन्द्रयोः उपमानिष्पत्तिमन्तरा निषेधाऽयोगात्। परं तु आह्लादकत्वादिना उपमितिक्रियायाः निष्पत्तौ सत्यामपि निष्कलंकत्वस्य मुखमात्रवृत्तित्वेन तदादाय तन्निषेधः क्रियत इत्येतावन्मात्रमेव। न तु सर्वात्मना व्यतिरेके तदनिष्पत्तिः।

'शैला इवोन्नताः सन्तः किंतु प्रकृतिकोमलाः'

इत्यत्र औन्नत्यमादायोपमा अस्त्येव–यथा शैलाः उन्नताः तथा साधवोऽप्युन्नताः इति। परं तु उपमानशैलापेक्षया स्वभावकोमलत्वं नास्तीति उपमानापेक्षया उपमेये आधिक्यं प्रतीयते इति व्यतिरेकप्रयोजकधर्मकृत एव भेदः व्यतिरेकालंकारबीजम्। अत एव तत्कृतो व्यपदेशः न पुनरुपमया।

अत एव **नागभट्टेन** —व्यतिरेके उपमितिक्रियानिष्पतिरुपगता। [का. प्र.९०-९३६ उद्योते] ग्रन्थकृद्रीत्या शैला इवेत्यादावपि उपमैव वक्तव्या स्यात्। अथवा गर्वमसंवाह्यमित्यत्र [प्रतीपत्वं वा अभ्युपगन्तव्यं स्यात्] उपमात्वं परित्यक्तं स्यात्, यश्चोभयोरितिन्यायात् इति तु विभावनीयं सुधीभिः इति दिक्॥

विद्यानाथलक्षणे प्रतीपव्यावृत्त्यर्थं 'अन्येन वर्ण्यस्य' इति दलमुपात्तम्

चित्रमीमांसा

एवं प्रतीपेऽपि यत्रोपमानिष्पत्तिः—

आकर्णय सरोजाक्षि वचनीयमिदं भुवि ।
शशाङ्कः तव वक्त्रेण पामरैरुपमीयते ॥

इत्यादौ, न तत्रातिव्याप्तिशङ्का । उपमितिक्रिया निष्पत्ति विरहात् ॥

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ।

तत्त्वालोकः

तदपि क्रियानिष्पत्तिपर्यन्तत्वविवक्षयैव गतार्थमिति तद्दलोपादानमयुक्तमित्याह— एवं प्रतीपेऽपि इति । आकर्णयेति ।

हे सरोजाक्षि इदं वचनीयम् आकर्णय, भुवि पामरैः (तव) (मुखेन) वक्त्रेण शशाङ्कः उपमीयते इति योजना ।

हे सरोजाक्षि-सरसिजनयने, इदं वचनीयम्—निन्दावाक्यम् , आकर्णय-श्रुणु, श्रोतव्यमाह—भुवीति । भुवि-मर्त्यलोके, पामरैः प्राकृतजनैः, त्वन्मुखे शशाङ्कतो विशेषमगृह्णद्भिः जनैः, शश एव अङ्कः कलंकः यस्य सः शशाङ्कः, तव वक्त्रेणत्वन्मुखेन, उपमीयते-सदृशीक्रियते इत्यर्थः । अत्र वचनीयपामरशब्दाभ्यां उपमितिक्रियाया अनिष्पत्तिः आविष्कृता ।

यत्र प्रतीपविशेषे उपमितिक्रियानिष्पत्तिः तादृशमुदाहरणं संग्राह्यमेवेति तत्र लक्षणस्य अतिव्यापनम् इष्टापत्त्या परिहृतमित्याह—**गर्वमित्यादिना** ।

सन्तीदृशानि दिशिदिशि सरस्सु ननु नीलनलिनानि ॥

तत्त्वालोकः

हे भद्रे ! लोचनयुगलेन असंवाह्यम् इमं गर्वं किं वहसि ? ईदृशानि नीलनलिनानि दिशिदिशि सरस्सु सन्ति ननु इति योजना ॥

हे भद्रे ! शुभे ! लोचनयुगलेन—नेत्रद्वयेन, असंवाह्यम्—संवोढुमशक्यम्—अयोग्यं अनर्हं वा, अर्हार्थे यत्, गर्वम् रूप-धन—विद्यादि प्रयुक्तात्मोत्कर्षज्ञानप्रयोज्यपरावहेलनकारणं ज्ञानविशेषम्, किं ?—किमर्थम्, वहसि—धत्से, लोचनद्वयावलोकनद्वारा गर्वं कुतः प्रकाशयसि इति भावः । अनुपमं मदीयलोचनद्वयमिति माज्ञासीः, यतः ईदृशानि—आभ्यां सदृशानि, 'त्यदादिषु दृशोनालोचने कञ्च' [पा. सू ३–२–६०] इति कञ्प्रत्ययः । नीलनलिनानि—नीलोत्पलानि, दिशिदिशि—प्रतिदिशम्—सर्वासु दिक्षु, विद्यमानेषु सरस्सु—सरसीषु सन्ति ननु—सन्त्येवेत्यर्थः । गर्वेण साध्यं किमपि नास्तीत्यर्थः ।

**एतेन** यदत्र कुवलयानन्दव्याख्यावसरे 'ननु इति हेत्वर्थे, अव्ययानामनेकार्थत्वात्' इति **चन्द्रिकाकारेण** विवृतम् । तच्चिन्त्यम् । अवधारणार्थस्यैवात्र स्वारसिकत्वात् । अवधारणे 'ननु' इत्यव्ययं प्रयुक्तमेव—

अमीभिस्संसक्तैः तव किमु फलं वारिद घटैः
यदेतेऽपेक्षन्ते सलिलमवटेभ्योऽपि तरवः ।
अयं युक्तो व्यक्तं ननु सुखयितुं चातकशिशुः
य एष ग्रीष्मेऽपि स्पृहयति पाथस्त्वदपरात् ॥ इति ।

## चित्रमीमांसा

इत्यादिप्रतीपम् उपमेयोपमा चेत्युभयमपि सङ्ग्राह्यमेवेति न तद्व्यापनं लक्षणस्य दोषः ॥

### तत्त्वालोकः

तथा—'ननु तैलनिषेकबिन्दुना सह दीपार्चिरुपैति मेदिनीम्' इति कालिदासः। तद्व्याख्याता मल्लिनाथश्च — 'नन्विति अवधारणे। 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इति व्याख्यत्। अतश्चात्र अवधारण एव ननु इत्यव्ययं विद्यते इति भाव्यम् ॥

**यद्यपि**—अत्र प्रकृतनेत्रप्रतियोगिकमेव साम्यमप्रकृते वर्ण्यते। तावता नीलोत्पलानामुपमेयता परिकल्पितेति अनादरः प्रदर्शितः। तेषां उपमानतया प्रदर्शनं प्रसिद्धम्। अतः प्रसिद्धोपमानस्यापकर्षः उपमेयस्योत्कर्षश्च वर्णितः। 'प्रसिद्धोपमानोपमेयभावप्रातिलोम्यम्' इति प्रतीप लक्षणसमन्वयात् प्रकृतोदाहरणे प्रतीपालंकारः, **तथापि** उपमितिक्रियानिष्पत्तेः उपमायाः उदाहरणमेवैतदिति अत्र उपमालक्षणातिव्यापनं न दोष इत्याह—**इत्यादि प्रतीपम् इति। उपमेयोपमा चेति।** 'तद्वल्गुना युगप'दिति प्रागुदाहृतपद्ये चक्षुर्भ्रमरयोः युगपदुन्मेषस्य उपवर्णनात् उपमितिक्रिया सम्पूर्णतया निष्पन्नैवेति उक्तोपमायां उपमालक्षणातिव्यापनं न दोषः तस्या अपि उपमोदाहरणत्वेन इष्टत्वात् इति।

**यद्यप्यत्र**—'गर्वमसंवाह्यम्' इति पद्यं उपमात्वेन संग्राह्यमित्युक्तं तथापि—प्रतीपालंकारतायाम् उपमानापकर्षस्य सद्भावे उपमितिक्रियानिष्पत्तिमात्रेण उपमालंकारतायाः वक्तुमयुक्तत्वात्।

### चित्रमीमांसा

तथाह्युदाहृतं प्रतीपं तावदुपमाविशेष एव, सादृश्य-वर्णनस्य प्रकृतविषयत्व इव अप्रकृतविषयत्वेऽपि स्मृतिरूपक सन्देहभ्रान्त्यनेकधाग्रहणापह्नवसंभावनासंभवद्वस्तुसम्बन्धनि-बन्धननिर्दिष्टसमर्थनादीनामिवालंकारान्तरत्वायोगात् ॥

### तत्त्वालोकः

अन्यथा—'शैला इवोन्नतास्सन्तः' इत्यत्र औन्नत्यांशमादाय उपमिति क्रियानिष्पत्तिरस्त्येवेति तत्रातिव्याप्तिः प्रसज्येत । अतः 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन व्यतिरेके साधारणधर्मघटितासाधारणधर्मस्य चमत्कार-जनकत्वात् व्यतिरेकता । यत्कृतः विच्छित्तिविशेषः तत्कृतः व्यपदेश एव न्य य्यः ललितालंकारन्यायात् । अत एव प्रतीपं लक्षयता कुवलयानन्दे इदमेव पद्यं प्रतीपोदाहरणत्वेनोपन्यस्तम् । परन्त्वत्र विद्यानाथलक्षणखण्ड-नैदंपर्येणैवमुपन्यस्तम् ॥

'गर्वमसंवाह्यमिति' यदुदाहृतं प्रतीपोदाहरणं तत् उपमालंकारस्यैव उदाहरणम् । ननु उपमायां प्रकृतमुपमेयं अप्रकृतमुपमानमिति स्थितिः । परन्तु प्रतीपे अप्रकृतमुपमेयं प्रकृतमुपमानमिति वैपरीत्यमस्तीति कथं उपमालं कारतेति वाच्यम्, प्रकृताप्रकृतयोरेव सर्वत्र उपमेयोपमानतेत्यत्र नियामका-भावात्, तथोपगमे स्मृत्यादावलंकारे प्रकृतविषयत्वे सति स्मृतित्वम् अप्रकृत-विषयत्वे अलंकारान्तरत्वमिति प्रसज्येत । न च तथाऽभ्युपगतमित्याचष्टे— **तथाहीत्यादिना** ।

**अयंभावः**—प्रकृतेन अप्रकृतस्य, अप्रकृतेन वा प्रकृतस्य सादृश्यं काममुपनिबध्यतां, तावता नोपमायाः अप्रसक्तिः । यथा लोके प्रकृतेन अप्रकृतस्य स्मरणं, अप्रकृतेन प्रकृतस्य स्मरणं च संभवति । यथा—दिव्या

## चित्रमीमांसा

अन्यथा तेषामपि प्रकृतविषयत्व एव स्मरणरूपक सन्देहभ्रान्तिमदुल्लेखापह्नवोत्प्रेक्षानिदर्शनार्थान्तरन्यासाद्यलंकारत्वम्, अप्रकृतविषयत्वे तु अलंकारान्तरत्वकल्पना प्रसङ्गात्।

### तत्त्वालोकः

नामपि' इत्यत्र स्ववल्लभायाः अम्भसः उत्तरन्त्याः प्रकृतायाः नायिकायाः दर्शनेन लक्ष्मीस्मरणम्, तथा 'पङ्कजं पश्यतः कान्तामुखं मे गाहते मनः' इत्यादौ अकस्मात् पङ्कजावलोकनस्य सादृश्यमूलकतया प्रकृतस्य कान्तामुखस्य स्मरणमिति अप्रकृतेन पङ्कजेन प्रकृतस्य स्मरणमित्युभयत्रापि स्मृतिरेवालंकारः। 'दिव्यानां' इति पद्ये तु जलनिधिमन्थनस्मरणं वाच्यालंकारस्य विषयः। नायिकासदृशलक्ष्मीस्मरणं तु स्मृतिध्वनेः तदंशे स्मृतेरवाच्यत्वात्।

एवं 'अस्याः सर्गविधौ प्रजापतिरभूत् चन्द्रो नु कान्तिप्रदः' इत्यादौ सन्देहस्य न प्रकृतोर्वश्याश्रयत्वं किन्तु कान्ति-सौरभसौकुमार्यविलास प्राचुर्यादीन् निमित्तीकृत्य चन्द्र-वसन्त-मदनाश्रयत्वमेवेति ससन्देहतैव न पुन रलंकारान्तरत्वम्, एवमेव रूपकादिष्वपि उन्नेयान्युदाहरणानि।

अन्यथा प्रकृतविषयत्वे स्मृत्याद्यलंकारता, अप्रकृतविषयत्वे अलंकारान्तरता इति स्यात इति दूषणमाचष्टे—**अन्यथा तेषामपीति**।

अन्यथा—अप्रकृतविषयत्वे यदि प्रतीपस्योपमातः बहिर्भावस्स्यात्, तदा तेषामपि—स्मृत्यादेरपि, प्रकृतविषयत्व एव—प्राकरणिकविषयत्वे सत्येव, स्मरणा

### चित्रमीमांसा

स्मृत्यादयश्च प्रकृतविषया इव अप्रकृतविषया अप्यलंकारभूतास्तत्र तत्रोदाहरिष्यन्ते । न चोपमायामयं नियमः यदप्रकृतेन प्रकृतसादृश्यवर्णनात्मनैव तया भाव्यमिति समुच्चयोपमाद्युदाहरणेषु प्रकृतयोरेव अप्रकृतयोरेव वा

### तत्त्वालोकः

लंकारत्वम्, अप्रकृतविषयत्वे तु–अप्राकरणिकविषयत्वे तु, अलंकारान्तरत्वम् इति--स्मरणाद्यपेक्षया अन्यालंकारत्वमिति कल्पनाप्रसंगात्–नामभेदकल्पना प्रसक्तेः । एवं च अतिरिक्तालंकारताप्रयुक्तं गौरवं प्रसज्येत । **स्मृत्यादयश्चेति** । 'दिव्यानामपी'त्युदाहरिष्यमाणे स्मृतिमति समुद्रमन्थनस्मृतेः तद्विषयत्वम् । प्राचीनमतानुरोधेन परिणामानभ्युपगमात् तदुदाहरणे 'प्रसन्नेन दृगब्जेन' इत्यत्र उपमानस्य उपमेयरूपतेत्यप्रकृतविषयत्वम् । एवमन्यत्रापि अप्रकृतविषयत्वमवगन्तव्यम् ॥

ननु अप्रकृतप्रतियोगिकं प्रकृतानुयोगिकं सादृश्यम् उपमायां नियतमिति वक्तुं शक्यम्, तथा सति समुच्चयोपमादिष्वव्याप्तिः प्रसज्येत इत्याह– **न चोपमेयोपमायामिति । समुच्चयोपमेति ।**

'इतराण्यपि रक्षांसि' इति प्रागुदाहृतपद्ये, समरांगत्वेन वानरकोटिषु इतररक्षःपतनस्य यथा प्रकृतत्वं तथा रजसां शोणितेषु पतनस्यापि प्रकृतत्वमेवेति अप्रकृतप्रतियोगिकत्वस्य प्रकृतानुयोगिकत्वस्य च इत्युभयोः मध्ये एकस्याभावादुपमा न स्यात् । अतश्च तथा नियमः नाभ्युपगन्तुं शक्यः । आदिपदात् तुल्ययोगितादावपि अप्रकृतमात्रविषयत्वे औपम्ये प्रतीतेऽपि

चित्रमीमांसा

साहश्यवर्णनस्याप्युपमात्वाङ्गीकारात् । तद्वत् प्रकृतेना-
प्रकृतस्य साहश्यवर्णनमप्युपमैवेति युक्तम् ॥

एवं चोपमेयोपमापि प्रकृताप्रकृतविषयोपमाद्वयरूप-
तया नालंकारान्तरतां भजते ।

तत्त्वालोकः

उपमामूलकतुल्ययोगित्वं न स्यात्, अतश्च उपमायां उक्तनियमः आग्रह्य एव । तद्वदिति । प्रतीपविशेषेऽपि अप्रकृतविषयकत्वेप्युमा इष्टेति भावः ॥

प्रकृतेन अप्रकृतस्य साहश्ये वर्णिते यथा वाक्यभेदेन, एकवाक्यतया वा अप्रकृतेन प्रकृतस्य, प्रकृतेन अप्रकृतस्य साहश्ये वर्णितेऽपि (समुच्चि-तोपमादिवत्) उपमाप्रभेदत्वमेवेति तादृशी उपमेयोपमाऽपि संग्राह्यैवेति प्रति-पादयितुमाह–**एवं चेति** । एवं च–प्रकृताप्रकृतयोः साहश्ये प्रतिपादितेऽपि 'खमिव जलम् जलमिव खम्' इत्यादावपि या उपमेयोपमा, सापि प्रकृता प्रकृतविषयोपमाद्वयरूपतया 'खमिव जल'मिति खजलयोः उपमा प्रकृतविषया, 'जलमिव ख'मिति जलखयोः उपमा अप्रकृतविषया इति उपमाद्वयरूपत्वेन हेतुना अलंकारान्तरताम् उपमापेक्षया भिन्नालंकारताम्–उपमेयोपमारूपताम्, न प्राप्नोति–उपमेयोपमापदवाच्यतां न लभते इत्यर्थः ॥

**अत्रेदं चिन्त्यते**— अत्र उपमेयोपमायामपीत्यनेन किं प्रकृताप्रकृत-विषयोपमेयोपमा गृह्यते , अथ केवलप्रकृतविषया केवलाप्रकृतविषया च ? यदि प्रकृता प्रकृतविषया तदा 'त्वद्वल्गुना युगपदुन्मिषितेन' इत्यस्य संग्रहेऽपि

**तत्त्वालोकः**

'खमिव जलं जलमिव खम्,हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्तारा:, तारकाणि कुमुदानि ।' इति

उपमेयोपमायाः असंग्रहः स्यात् । यतश्च स्वेनैव उपमेयोपमाप्रकरणे धर्मस्य साधारण्ये यथेति इदमेव पद्यमुदाहृतम् ।

एवं प्रकृताऽप्रकृतयोर्यथा–इत्युपक्रम्य-कुवलयानन्दे—

'गिरिरिव गजराजोऽयं गजराज इवोच्चकैर्विभाति गिरिः ।
निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥'

इत्यत्र गिरिगजराजयोः प्रकृताप्रकृतयोः उपमेयोपमेति तत्र किमुपमेयोपमा उत उपमा ।

किंचात्रोदाहरणे–ग्रीष्मवर्णनस्य प्रकृतत्वात् तदनुसारेण गिरिगजराजयोरुभयोरपि प्राकरणिकत्वमेवेति न प्रकृताप्रकृतविषयत्वम् । तथाहि–प्रकरणानुरोधेन हि सर्वत्र व्यवस्था । 'गिरिरिवे'ति पद्यं ग्रीष्ममधिकृत्य वर्तते । तदा च ग्रीष्म–वर्षासमयसन्धौ गजराजः गिरिसानुषु परिभ्रमति । तदानीं च गजराजः आकारतः वर्णतश्च गिरितुल्यः । गजराजस्य मदधारा गिरिनिर्झरतुल्या, इति द्वयोः पर्यायेण उपमा निबध्यते। उच्चैर्विभाति, स्रवतीति अनुगामिधर्मेण प्रयुक्तमुपमाद्वयं तृतीयं सदृशं व्यवच्छिनत्ति। एकं धर्ममुपादाय एकप्रतियोगिके परानुयोगिके सादृश्ये निरूपितेऽपि अपरप्रतियोगिकैकानुयोगिकस्यापि सादृश्यस्यार्थसिद्धतया शब्देन-पुनस्तदुक्तिः, स्वनिरर्थकत्वशंकां परिहर्तुं सदृशं तृतीयं व्यवच्छिनत्ति । उभयत्रापि 'इदं'शब्दप्रयोगात् गिरिगजराजयोः प्रकृतत्वमेवेति सहृदयवेद्यमेवेति प्रकृताप्रकृतयोरप्येषा संभवति इति कुवलयानन्दोक्तिः चिन्त्यैव ॥

तत्त्वालोकः

यदि तु प्रकृतत्वाप्रकृतत्वे विवक्षाधीने इति गजस्य प्रकृतत्वे गिरेरप्रकृतत्वम्, गिरेः प्रकृतत्वे गजस्याप्रकृतत्वमिति विभाव्यते तदा दोषः परिहृतः भवति । विशेषः कुवलयानन्दोन्मेषे वक्ष्यते ।

अपरं च—यदि प्रतीपविशेषोपमेयोपमयोः उपमात्वम्, तर्हि संसृष्टि रेव स्यान्न तूपमात्वम्, अन्यथा संसृष्टेः विषयापहार एव स्यात् । अभ्युपगता च ग्रन्थकृता संसृष्टिः । संसृष्टिनिरूपणावसरे 'तिलतण्डुलन्यायेन स्फुटावगम्यभेदालंकारमेलने संसृष्टि'रिति लक्षणमुक्तम् । एतद्रीत्या प्रतीपो पमामेलनरूपा, उपमाद्वयमेलनरूपा वा संसृष्टिर्भवेत् ।

एवं-'गिरिरिव गजराजोऽयम्' इत्यत्रापि उपमेयोपमाप्रकरणे ।

'अत्रोपमेयोपमाद्वयस्य परस्परानुगृहीतत्वेन विच्छित्तिविशेषोऽधिकः' ॥

इत्युक्तरीत्या उपमेयोपमयोः परस्परापेक्षया चारुत्वसमुन्मेषात्समप्राधान्य–संकरत्वमेवोपपादनीयं न पुनः उपमेयोपमेति । एवं च उपमेयो–पमायाः उपमायां अन्तर्भावोक्तिः न गरीयसी । परन्तु–तृतीयसदृश व्यवच्छेदफलकत्वस्य विवाक्षायामुपमेयोपमानत्वम्, तदभावे सत्यङ्गाङ्गिभावे, समप्राधान्ये अन्यस्मिन् वा निमित्ते संकरः–संसृष्टिर्वा भवेदिति अभ्युपगमे न कापि हानिः ।

एतेन उपमानापकर्षस्य–उपमेयोत्कर्षस्य च व्यज्यमानत्वे प्रतीपत्वम् । एवं द्वितीयसदृशव्यवच्छेदस्य विवक्षितत्वे अनन्वय इति भेदे स्फुटे उपमेयो पमायाः प्रतीपविशेषस्य च संग्राह्यत्वं, अनन्वयस्य व्यावृत्तिश्च न घटते, तत्रापि सादृश्यपरिनिष्पत्तौ बाधकाभावात् । अन्यथा व्यतिरेकोदाहरणे 'मुखेन निष्कलंकेन' इत्यादौ निष्कलंकत्वमादाय उपमानिष्पत्तावपि आह्लाद-

तत्त्वालोकः

कत्वादिना उपमितिक्रियानिष्पत्तिः अवारणीया, उपमितिक्रियानिष्पत्तिमत्सा-दृश्यवर्णनस्य तत्रापि सत्वात्। अतश्च व्यतिरेकोऽप्युपमैव स्यादिति।

एवं च–'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन यत्र यत्कृतः चमत्कारः तत्कृतस्तत्र तत्तदलंकारव्यपदेशः। तादृशस्थलेषु उपमितिक्रिया निष्पन्ना भवतु। न च तावता उपमालंकारता तत्कृतचमत्काराभावात्। यथा अनन्वये–द्वितीयव्यवच्छेदकृतः, उपमेयोपमायां तृतीयसदृशव्यवच्छेदकृतः, प्रतीपे उपमानापकर्षकृतः, व्यतिरेके साधारणधर्मसद्भावेऽपि असाधारणधर्म-कृतश्चमत्कारः इति उपमातो विभिन्नालंकारता। अत एव ग्रन्थकृता–**कुवल यानन्दे**–'गर्वमसंवाह्यम्' इत्यत्र प्रतीपता, 'खमिव जलं जलमिव खम्' इत्यत्रोपमेयोपमात्वमभ्युपगतम्। तथा **मम्मटेन काव्यप्रकाशे**–'क्वचित्तु निष्पन्नैव उपमितिक्रिया अनादरनिबन्धनम्' इत्युक्त्वा 'गर्वमसंवाह्यम्' इति पद्यमुदाहृतम्। **काव्यप्रदीपकृताऽपि**–' उपमानतिरस्कारस्यालंकार-ताबीजत्वात्' इति यश्च हेतूपन्यासः कृतः स सङ्गच्छते।

**इदमपरमवधेयम्** — संसृष्टिसङ्करयोरयं विषयः, यत्रालंकारयो विभिन्नलक्षणयोः सजातीययोर्वा संयोगन्यायेन, समवायन्यायेन यथासङ्ख्यं मेलनम्। परन्तु अङ्गाङ्गिभाव–समप्राधान्य–सन्देहैकवाचकानुप्रवेशापेक्षया अतिरिक्तांशेऽनुपस्थिते, तिलतण्डुलन्यायेन (संयोगन्यायेन) नीरक्षीरन्यायेन (समवायन्यायेन) संसृष्टिः संकरो वा भवेत्। प्रतीपादौ तु न तथा' अधिकांशस्फूर्तेः इति। विभिन्नलक्षणयोः इत्यंशस्तु–दृष्टान्तभूततिलतण्डुल न्यायशरीरे, नीरक्षीरन्यायशरीरे च तिलतण्डुलयोः, नीरक्षीरयोश्च स्वरूपं भिन्नमेवेति शब्दत एव प्रतीयते इति।

चित्रमीमांसा

अन्यथा तत्तत्प्रकरणोदाहरिष्यमाणपरस्परोपमाया अपि अलंकारान्तरत्वप्रसंगात् ।

तत्त्वालोकः

उक्तं च विद्यानाथेन—

तिलतण्डुलसंश्लेषन्यायाद्यत्र परस्परम् ।
संश्लिष्येयुरलङ्काराः सा संसृष्टिर्निगद्यते ॥ इति ।

नीरक्षीरनयाद्यत्र संबन्धः स्यात्परस्परम् ।
अलंकृतीनामेतासां संकरः स उदाहृतः ॥ इति च ॥

प्रकृताप्रकृतयोरन्यतरस्यान्यतरेण औपम्ये उपमामेनभ्युपगम्य, अप्रकृतेनैव प्रकृतस्यौपम्ये उपमाऽलंकार इति हठकरणे दोषं प्रतिपादयति–अन्यथेति । अन्यथा – 'प्रकृताप्रकृतविषयकोपमाद्वयरूपोपमातः अतिरिक्ता उपमेयोपमा' इत्यंगीकारे तत्प्रकरणे–उपमेयोपमाप्रकरणे उदाहरिष्यमाणायाः 'रजोभिः स्यन्दनोद्धूतैः' इति परस्परोपमायाः अपि अलंकारान्तरत्वप्रसंगात्–अन्यालंकारतापत्तेः । तत्र अप्रकृतानुयोगिकं सादृश्यमपि वर्ण्यते । परंतु तत्र च अप्रकृतप्रतियोगिकत्वं नास्तीति भावः । उत्तरत्र वक्ष्यमाणरीत्या–रजोभिरित्यत्र उपमेयोपमा न वक्तुं शक्या, यतश्च धर्मे साधारण्यं, वस्तुप्रतिवस्तुभावो वा उपमेयोपमात्वेऽपेक्षितम् । तच्च न संभवति । तथाहि–गनभूतलयोः परस्परं सादृश्यमुपवर्ण्यते । अथ पि गगनस्य भूतलेन सादृश्येर जोव्याप्तत्वं साधारणो धर्मः, भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिम्बप्रतिबिम्बभाव इति अत्यन्तविलक्षणत्वात् । अत एवात्र तृतीयसब्रह्मचारिव्यवच्छेदरूपं फलमपि न फलति । अतश्च अलंकारान्तरत्वमेव प्रसज्येत इति भावः ॥

चित्रमीमांसा

परस्परभ्रान्तिनिबन्धनादिष्वप्यलंकरान्तरतापत्तेश्च ॥

तत्त्वालोकः

वस्तुतस्तु–'रजोभिः स्यन्दनोद्धूतैः' इत्यस्य प्रकरणे पर्यालोचिते गगनभूतलयोः सदृशं तृतीयं वस्तु न लक्षितमिति युद्धस्य अत्यन्तविलक्षणता प्रतीयते तृतीयसदृशव्यवच्छेदफलिका उपमेयोपमा प्रकृतं वीररसं पुष्णातीत्येव वक्तुं युक्तम् । धर्मे साधारण्यमपि समानेतुं शक्यम् । तथाहि–स्यन्दनोद्धूतै घनसन्निभैः रजोभिः, घनसन्निभैः गजैश्च व्योम भूतलमिव कुर्वन्, भूतलं व्योमेव कुर्वन् ययौ इत्यन्वये, रजोभिः गजैश्च घनसन्निभैः इत्यस्यान्वये मेघतुल्यरजसां मेघतुल्यगजानां च बिम्बप्रतिबिम्बभावमूलकतया साधारण्यं संभवतीति उपमाद्वयेऽपि धर्मैक्यमक्षतमेवेति भूतलव्योम्नोः तृतीयं वस्तु नोपलभ्यते इति उपमेयोपमा निष्प्रत्यूहैवेति नालंकारान्तरताप्रसक्तिः । इत एवारुचेः भ्रान्तिमद्विशेषे अलंकारान्तरतापत्तिमाचष्टे —**परस्परभ्रान्तीति** ।

वक्ष्यमाणे अन्योन्यविषयभ्रान्तिमति —

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥

इत्यत्र वक्रत्व-लौहित्यसादृश्यात् पलाशमुकुलशुकतुण्डयोः, अलि–जम्बू फलयोः नैल्य वर्तुलत्वसादृश्यात् शुकतुण्डे प्रकृते अप्रकृतपलाशमुकुलभ्रान्तिः । एवमप्रकृते अलिनि जम्बूफलभ्रान्तिः इति भ्रान्तिमानलंकारः । परन्तु द्वितीया या भ्रान्तिः सा अप्रकृतालिविषयिणीति तस्याः अतिरिक्तालंकारतापातात् इति भावः ॥

तत्त्वालोकः

**वस्तुतस्तु**—अलिनः शुकतुण्डे पलाशमुकुलमिति भ्रान्तेः, शुकस्य अलिनि जम्बूफलभ्रान्तेश्च प्रकृतत्वे नालंकारान्तरताप्रसक्तिः।

**किंच**–'अयं प्रमत्तमधुपः त्वन्मुखं वेत्ति पंकजम्' इत्यत्र मुखे पंकज–भ्रान्तिः। 'पलाशमुकुल' इति पद्ये तु अलिनः पलाशमुकुलभ्रान्तिः शुकतुण्डे, शुकस्य अलिनि जम्बूफलभ्रान्तिरिति अन्योन्यभ्रान्तिरिति द्वयोः भ्रान्त्योः समानकालिकत्वमेव 'पतति-धर्तुमिच्छति' इति लट् प्रयोगात् ज्ञायते। अतश्च उदाहरणान्तरं मृग्यम्॥

**अपरं च**—सोऽपि जम्बूफलेत्यत्रत्यतच्छब्देन शुकतुण्डस्यैव परामर्शो युक्तः सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्, अन्यच्च तुण्डपदस्य नपुंसकत्वेन पुल्लिङ्गेन तच्छब्देन परामर्शायोगात् 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति कोशकृता, 'जातं तुण्डं दशनविहीनम्' इति **शंकराचार्यैश्च** नपुंसक–तयैव प्रयुक्तत्वात् इति चेत्।

**उच्यते**– शुकसम्बन्धिनि तुण्डे विधीयमाना इच्छा तुण्डमात्रे बाधिता 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायेन तुण्डविशेषणीभूते शुके तादृशेच्छा पर्यवस्यतीति सोऽपी-त्यत्रत्यतच्छब्देन शुकस्यैव परामर्शः क्रियते इति न किमपि बाधकम्।

**परं तु**–अनन्वयनिरूपणावसरे ग्रन्थकृता सविशेषणे हीति न्यायोप–न्यासः वाक्यमीमांसकानां शोभते, नालंकारमीमांसकानाम् इत्युक्तरीत्याश्रयणे तु गत्यन्तरमाश्रयणीयं भवेत्। अधिकविचारस्तु अनन्वयनिरूपणावसरे क्रियते॥

## चित्रमीमांसा

न च अनन्वयप्रतीपोपमेयोपमासु सादृश्यवर्णनस्य पृथक्निरूपणस्य चाविशिष्टत्वेन अनन्वयस्यानुपमात्वम् इतरयोरुपमात्वं च वक्तुमयुक्तमिति वाच्यम् ।

यत्र उपमितिक्रियानिष्पत्तिः तत्र उपमाशब्दप्रवृत्तिनिमित्तसद्भावेन, यत्र तदनिष्पत्तिः तत्र तदभावेन च वैषम्यस्य स्फुटत्वात् ॥

## तत्त्वालोकः

नन्वेवं प्रतीपोपमेयोपमयोः उपमान्तर्भाव उक्तः, अनन्वयस्य तु नेति वैषम्यमयुक्तम्, सादृश्यवर्णनस्य पृथगलंकारत्वेन निरूपणस्य चेत्यनयोरुभयत्र तुल्यत्वादित्याशंकते–**न चेति** । अयमभिप्रायः–प्रतीपे–उपमेयोपमायां यथा सादृश्यं कविभिः वर्ण्यते, तथा–अनन्वयेऽपि वर्ण्यते, एवं प्रतीपं उपमेयोपमा च यथा अलंकारान्तरविविक्ततया च वर्णिते तथा अनन्वयोऽपि वर्णितः । इत्थं सति तुल्ययोगक्षेमाणां मध्ये प्रतीपोपमेयोपमेयोः उपमात्वेन परिग्रहः अनन्वयस्य तु तदभाव इति प्रतिपादनं न युक्तमिति ।

अनन्वयस्य परित्यागे, प्रतीपोपमेयोपमयोः परिग्रहे च हेतुमाह—**यत्रेति** । यत्र लक्ष्ये उपमितिक्रियायाः–सदृशीकरणस्य निष्पत्तिः, तत्र उपमाशब्दप्रवृत्तौ–उपमाशब्दप्रयोगे निमित्तं उपमितिक्रिया तस्याः सद्भावेन प्रतीत्या उपमात्वम् । उपमेयत्यं शब्दः 'आतश्चोपसर्गे [पा. सू. ३-३-१०६] भावे अङ्प्रत्ययान्तः इति क्रियाप्रवृत्तिनिमित्त इत्यर्थः । क्रिया नाम–'अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः' इति **वाक्यपदीयोक्तरीत्या**, यदनन्तरं फलं निष्पद्यते सैव । एषैव भाव इत्यपि व्यवह्रियते ॥

**तत्त्वालोकः**

**वस्तुतस्तु**—अलिनः शुकतुण्डे पलाशमुकुलमिति भ्रान्तेः, शुकस्य अलिनि जम्बूफलभ्रान्तेश्च प्रकृतत्वे नालंकारान्तरताप्रसक्तिः।

**किंच**–'अयं प्रमत्तमधुपः त्वन्मुखं वेत्ति पंकजम्' इत्यत्र मुखे पंकज–भ्रान्तिः। 'पलाशमुकुल' इति पद्ये तु अलिनः पलाशमुकुलभ्रान्तिः शुकतुण्डे, शुकस्य अलिनि जम्बूफलभ्रान्तिरिति अन्योन्यभ्रान्तिरिति द्वयोः भ्रान्त्योः समानकालिकत्वमेव 'पतति-धर्तुमिच्छति' इति लट् प्रयोगात् ज्ञायते। अतश्च उदाहरणान्तरं मृग्यम्॥

**अपरं च**—सोऽपि जम्बूफलेत्यत्रत्यतच्छब्देन शुकतुण्डस्यैव परामर्शो युक्तः सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्, अन्यच्च तुण्डपदस्य नपुंसकत्वेन पुलिङ्गेन तच्छब्देन परामर्शायोगात् 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्' इति कोशकृता, 'जातं तुण्डं दशनविहीनम्' इति **शंकराचार्यैश्च** नपुंसक–तयैव प्रयुक्तत्वात् इति चेत्।

**उच्यते**– शुकसम्बन्धिनि तुण्डे विधीयमाना इच्छा तुण्डमात्रे बाधिता 'सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे' इति न्यायेन तुण्डविशेषणीभूते शुके तादृशेच्छा पर्यवस्यतीति सोऽपी-त्यत्रत्यतच्छब्देन शुकस्यैव परामर्शः क्रियते इति न किमपि बाधकम्।

**परं तु**–अनन्वयनिरूपणावसरे ग्रन्थकृता सविशेषणे हीति न्यायोप–न्यासः वाक्यमीमांसकानां शोभते, नालंकारमीमांसकानाम् इत्युक्तरीत्याश्रयणे तु गत्यन्तरमाश्रयणीयं भवेत्। अधिकविचारस्तु अनन्वयनिरूपणावसरे क्रियते॥

## चित्रमीमांसा

**न च अनन्वयप्रतीपोपमेयोपमासु सादृश्यवर्णनस्य पृथक्निरूपणस्य चाविशिष्टत्वेन अनन्वयस्यानुपमात्वम् इतरयोरुपमात्वं च वक्तुमयुक्तमिति वाच्यम् ।**

**यत्र उपमितिक्रियानिष्पत्तिः तत्र उपमाशब्दप्रवृत्तिनिमित्तसद्भावेन, यत्र तदनिष्पत्तिः तत्र तदभावेन च वैषम्यस्य स्फुटत्वात् ॥**

## तत्त्वालोकः

नन्वेवं प्रतीपोपमेयोपमयोः उपमान्तर्भाव उक्तः, अनन्वयस्य तु नेति वैषम्यमयुक्तम्, सादृश्यवर्णनस्य पृथगलंकारत्वेन निरूपणस्य चेत्यनयोरुभयत्र तुल्यत्वादित्याशंकते—**न चेति** । अयमभिप्रायः—प्रतीपे-उपमेयोपमायां यथा सादृश्यं कविभिः वर्ण्यते, तथा—अनन्वयेऽपि वर्ण्यते, एवं प्रतीपं उपमेयोपमा च यथा अलंकारान्तरविविक्ततया च वर्णिते तथा अनन्वयोऽपि वर्णितः । इत्थं सति तुल्ययोगक्षेमाणां मध्ये प्रतीपोपमेयोपमयोः उपमात्वेन परिग्रहः अनन्वयस्य तु तदभाव इति प्रतिपादनं न युक्तमिति ।

अनन्वयस्य परित्यागे, प्रतीपोपमेयोपमयोः परिग्रहे च हेतुमाह—**यत्रेति** । यत्र लक्ष्ये उपमितिक्रियायाः—सदृशीकरणस्य निष्पत्तिः, तत्र उपमाशब्दप्रवृत्तौ—उपमाशब्दप्रयोगे निमित्तं उपमितिक्रिया तस्याः सद्भावेन प्रतीत्या उपमात्वम् । उपमेयत्यं शब्दः 'आतश्चोपसर्गे [पा. सू. ३-३-१०६] भावे अङ्प्रत्ययान्तः इति क्रियाप्रवृत्तिनिमित्त इत्यर्थः । क्रिया नाम—'अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः' इति **वाक्यपदीयोक्तरीत्या**, यदनन्तरं फलं निष्पद्यते सैव । एषैव भाव इत्यपि व्यवह्रियते ॥

चित्रमीमांसा

इममेव विशेषमभिप्रेत्य काव्यप्रकाशिकादिलक्षणेष्व-नन्वयव्युदासार्थमेव यत्नः कृतो नोपमादिव्युदासार्थम् इति ॥

तत्त्वालोकः

यत्र तु व्यतिरेकादौ सादृश्यस्य अपरिनिष्पत्तिः तत्र उपमाप्रवृत्ति निमित्ताभात् अनुपमात्वमिति वैलक्षण्यस्य स्फुटं प्रतीतेः। अनन्वये च सादृश्यप्रयोजकसाधारणधर्मान्वयाभावादेव उपमितिक्रियायाः अनिष्पत्तिरिति तस्य नोपमाप्रभेदत्वमित्यभिमानः ॥

स्वनिर्णीतेऽर्थे संवादं प्रदर्शयितुं काव्यप्रकाशकारादियत्नविशेषमुद्धरति **इममेवेति**। इममेव विशेषम्–उपमितिक्रियानिष्पत्तितदनिष्पत्तिरूपं उपमा-नन्वयभेदप्रयोजकमंशम् अभिप्रेत्य–मनस्यनुसन्धाय, काव्यप्रकाशिकादिलक्षणे-'साधर्म्यमुपमा भेदे' इति **काव्यप्रकाशे**, 'उपमानोपमेययोः साधर्म्ये भेदाऽभेदतुल्यत्वे उपमा' इति **अलंकारसर्वस्वे** च भेदग्रहणं कृतम्। **प्रकाश** कृता तु –' भेदग्रहणमनन्वयव्यवच्छेदार्थम् ' इत्युक्तत्वात् अनन्वयस्य उपमा नन्तर्भावः तत्सम्मत इति ग्रन्थकाराशयः ॥

**वस्तुतस्तु** — **काव्यप्रकाशादिकृतभेदाद्युपादानस्य** नोपमितिक्रियानिष्पत्तितदभावरूपवैलक्षण्यप्रदर्शनार्थत्वम्। किंतु उपमानोपमेययोः भेदप्रतीतौ सत्यां यत्साधर्म्यं प्रतीयते तत्र उपमालंकारः इति प्रदर्शनार्थम्। अन्यथा—**प्रतीपनिरूपणावसरे प्रकाशकृतैव**—

आक्षेप उपमानस्य प्रतीपमुपमेयता।
तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धना ॥

चित्रमीमांसा

उपमेयोपमादेः उपमान्तर्गतत्वेऽपि व्यङ्ग्यादिकृत-

तत्त्वालोकः

इति लक्षणद्वयं प्रणीय क्वचित्तु निष्पन्नैवोपमितिक्रिया अनादरनिबन्धनम् इत्युक्त्वा यथा 'गर्वमसंवाह्यमिमम्' इति नोदाहर्तव्यं स्यात् ॥

तथा **सर्वस्वकृतापि** -- 'क्वचित्पुनर्निष्पन्नमेवौपम्यं अनादरकारणं यथा 'गर्वमसंवाह्यमिमम्' इति प्रकाशकृदुदाहृतमेव पद्यमुदाहृतम् ॥

अत एव–**प्रदीपकृता**—'प्रकाशकृदुक्तभेदग्रहणस्य अनुपादेयताम–शंक्य, 'साधर्म्यपदस्य आरोपितानारोपितसाधारणसमानधर्मसंबन्धमात्रपरत्वेन आरोपितसाधर्म्यनिबन्धनस्यानन्वयस्य व्यवच्छेद्यत्वात्' इत्येवोक्तम्, न तु उपमितिक्रियाया अनिष्पत्तिः । अत एव **भामहेन**—अनन्वयलक्षणे 'असादृश्यविवक्षातः' इति विवक्षापर्यन्तानुधावनं कृतम् ॥

**किंच**—उपमायाः अनन्वयोपमेयोपमाप्रतीपेषु सत्यामप्युपमायाम् उपमानोपमेययोर्भेदः, उपमेयोपमायां विपर्यासः, प्रतीपे तिरस्कारश्च इति एतेषां परस्परभेदकत्वम । तथा उपमायां चमत्कृतिजनकं सादृश्यम्, उपमेयोपमायां इतरोपमानव्यवच्छेदः यथा प्रतिपादितः तथाऽनन्वयेऽपि एकस्यैवोपमानोपमेयभावोऽभ्युपगतः । अत एव **सम्प्रदायप्रकाशनीकारोऽपि** अथोपमाविशेषत्वादनन्वयः उपमेयोपमा चेत्यनन्वयस्य अवतरणिकां निबद्धवान् । अन्यथा तथावतरणमसंगतं स्यात् । एवं च **काव्यप्रकाशकारादीन** उपमान्तर्भावाभिप्रायगर्भत्वाभिप्रायपरिकल्पनं न तत्तद्ग्रन्थानुगुणम् ॥

यद्येवं उपमेयोपमादेः उपमान्तर्गतत्वं प्रकाशकारादीनां सम्मतं स्यात् तदा तस्य पृथग्गणनं विरुध्येतेत्याशंक्य समाधत्ते—**उपमेयोपमादेरिति** ।

चित्रमीमांसा

**वैचित्र्यविशेषेण पृथग्गणनं न विरुध्यते । रूपकपरिणामवत् ॥**

तत्त्वालोकः

अयं भावः—रूपके, परिणामे च 'मुखचन्द्रः', 'मुखचन्द्रेणातपः शाम्यति' इत्युभयत्रापि रूपकसमासाश्रयणस्य तुल्यत्वेऽपि प्रकृतोपयोगित्वाशक्तवैचित्र्यविशेषेण पृथग्गणनं न विरोधाय भवति । तद्वत् उपमेयोपमायां–प्रतीपे च उपमितिक्रियानिष्पत्तिस्समानापि तृतीयसदृशव्यवच्छेदोप–मानतिरस्कारादिरूपव्यङ्ग्यकृतवैचित्र्यविशेषाश्रयणेन, पृथग्गणनं न विरोधाय भवति ॥

**अत्रेदं चिन्त्यम्**—उपमेयोपमादेरिति ग्रन्थभागः किं प्रकाशकारादिकृतोपमेयोपमादिपृथग्गणनाविरोधप्रदर्शनार्थः प्रवृत्तः ? आहोस्वित् स्वग्रन्थविरोधपरिहारार्थः ? न तावदाद्यः, **प्रकाशकृता**—रूपकात् भेदेन परिणामस्यानिरूपणात्, तं प्रति परिणामस्य दृष्टान्तयितुमशक्यत्वात् साध्यवैकल्यं दृष्टान्तस्य । **सर्वस्वकृतापि**—प्रकृतोपरंजकत्वप्रकृतोपयोगित्वाभ्यां वैलक्षण्यमात्रं प्रदर्शितं न रूपकान्तर्भावः ॥

न द्वितीयः—ग्रन्थकृदभिमतोपमालक्षणस्य उपमेयोपमायामपि सत्वाल्लक्ष्य एवेत्यसांगत्यमेव ॥

यदि तु–स्वातिरिक्तोपमानव्यवच्छेदफलकत्वेन अनन्वयः उपमालक्ष्यकक्ष्यावहिर्भूतस्तदा अन्योन्यातिरिक्तव्यवच्छेदफलिका उपमेयोपमापि उपमा

चित्रमीमांसा

'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादौ लक्षणाभावो न दोषः। यदि तथाभूतौ प्रवाहौ स्यातां तर्हि उपमीयेत। न च तौ संभवतः। तस्मान्न केनाप्युपमीयत इत्युनुपमापरपर्यायमित्यनिष्पत्तावप्युपमात्वस्वीकारे तत्रोपमाशब्दस्य पारिभाषिकत्वापतेः। किन्तु तत्र अतिशयोक्तिविशेषोऽलंकारः॥

तत्त्वालोकः

लक्ष्यकक्ष्यायाः पृथक्क्रियताम्। तथा उपमानतिरस्कारफलकं प्रतीपमिति। उपमातो भेदप्रयोजकस्यातिशयस्य उक्तोपमेयोपमादिषु प्रतीतेरिति (विरोधाभावप्रदर्शनमनुचितमेव) उपमान्तर्गतत्वेऽपीत्युक्तिः न समीचीना।

यद्वा—अनन्वयोऽपि उपमान्तर्भूत इत्यभ्युपगम्य पृथग्गणयित्वा अविरोधोपपादनं युक्तं स्यात। अत एव स्वेनाऽपि उपमेयोपमा पृथग्गणिता, परिणामश्च पृथग्गणितः, प्रतीपं पृथग्गणितं तत्र किं कारणमिति चिन्त्यमेव।

सम्प्रति विद्यानाथोक्तलक्षणोपरि तद्घटकं स्वतस्सिद्धत्वविशेषणमव्यापकं 'उभौ यदि व्योम्नि' इति कविकल्पितोपमायां सर्वथैवासमन्वयात् इति या अव्याप्तिरुद्घाटिता सा अस्मिन्नपि लक्षणे प्रसज्यते 'यदि पतेतां तेनोपमीयेत' इत्यादिसंभावनार्थकलिङा उपमितिक्रियाया अपरिनिष्पत्तेरेव प्रत्ययादित्याशंकामिष्टापत्या समाधत्ते—उभौ यदि इति। तर्ह्यत्र कोऽलंकार इत्यत्राह किन्त्विति। अस्य ग्रन्थस्य अतिशयोक्त्यारम्भ एव विच्छिन्नतया कोऽसौ अतिशयोक्तिविशेषः इत्यालोचनीयम्—तथाहि—अत्र व्योम्नः तादृशप्रवाह

तत्त्वालोकः

संबन्धासंभवेऽपि तत्संबन्धं संभाव्य, तादृशप्रवाहमध्ये परिदृश्यमानेन व्योम्ना सादृश्यं संभाव्यत इति **कुवलयानन्दो**क्तरीत्या सम्बन्धातिशयोक्तिवर्क्तव्या। अथवा यदि तथाभूतौ प्रवाहौ स्याताम्, तर्हि उपमीयेत। न च तौ संभवतः। तस्मान्न केनाप्युपमीयत इत्यनुपमापरपर्यायोऽयमित्युक्तरीत्या यद्यर्थातिशयोक्तिरभ्युपेयाऽतिरिक्ता ? इति सन्देहे—उच्यते।

अनन्वयान्ते लक्षणमात्रं तु इत्यारभ्य–'यत्र तेनैव तस्य स्यात्' इति **भामहोक्त**मनुसन्धेयम्। 'उभौ यदि व्योम्नि पृथक् प्रवाहौ' इत्यतिशयोक्तिविशेषेऽनुपमत्वद्योतनफलकसाम्यकल्पनावतीत्युक्त्या स्वकृते **कुवलयानन्दे** अतिशयोक्तिनिरूपणावसरे यद्यर्थातिशयोक्तेः पृथगनिरूपणात्। तत्रैव संभावनालंकारनिरूपणावसरे कस्तूरिकामृगाणामित्युदाहृत्य 'यद्यर्थोक्तौ च कल्पनमतिशयोक्तिभेद इति **काव्यप्रकाशकारः**, इति मतान्तरोल्लेखाच्च स्वस्य **सम्बन्धातिशयोक्तिरत्रेति** तात्पर्यमुन्नयामः। अत एव अत्रैव उत्तरग्रन्थे काव्यप्रकाशकारानुरोधेन यद्यर्थातिशयोक्तिरित्युपष्टम्भकतयोद्धरणात् अत्र अतिशयोक्तिविशेषशब्देन सम्बन्धातिशयोक्तिरेव विवक्षिता इत्यवधेयम्॥

**नन्वेवं तर्हि**—उक्तोदाहरणे **विद्यानाथानुरोधेनाऽपि** संबन्धातिशयोक्तिरेव वक्तव्या, नतु कविकल्पितोपमेति प्रतिपाद्य अव्याप्त्युद्भावनम्। सत्यम्–कुवलयानन्दादिवत् संबन्धातिशयोक्तेः **विद्यानाथेन** पृथक् लक्षणं न कृतम्। न वा तत्कृतं—

'विषयस्यानुपादानाद्विष्ययुपनिबध्यते।
यत्र सातिशयोक्तिस्स्यात् . . . . .॥

इति लक्षणं 'उभौ यदी'त्युक्तोदाहरणे समन्वेति । विषयस्य भगवद्रक्षस अनुपादानाभावत् । अत एव असंबन्धे संबन्धातिशयोक्तिमुदाहरता **विद्यानाथेन**—

ब्रह्मन् मेरुगिरौ कृतेऽपि किमिदं नैवं विधास्ते मुदः
स्वामिन् सत्यमधिक्रियाद्यफलिता यद्वीररुद्रः कृतः ।
मिथ्या किंतु विकत्थसे त्रिजगतस्त्राणाय मत्प्रार्थितः
शम्भुः क्ष्मामवतीर्णवान् इति कथा जाता हरिब्रह्मणोः ॥

इत्यत्र क्ष्मावतरणवाक्यार्थान्वयितया शम्भोरुपमानस्यैवोपादानं कृतं न तु राज्ञः । पूर्वार्धे उपात्तस्तु वीररुद्रशब्दः 'कृतः' इत्यनेन अन्वयेनैव क्षीणः नालान्वेतुमलमिति तन्मतानुरोधेन कल्पितोपमैव वाच्येति भावात् ॥

**नव्यमतानुरोधे तु**—' उपमानेनोपमेयस्य निगीर्याध्यवसानेऽतिशयोक्तिः । प्रकारान्तरे तु अतिरिक्तालंकारत्वमेवे'ति इत्युक्तरीत्या—उभौ यदीत्यत्र संभावनालंकारः इत्येवोचितः ।

सैषा सर्वत्र वक्रोक्तिः अनयार्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥

इति **भामहोक्त्यनुरोधेन**—

अलंकारान्तराणामप्येकमाहुः परायणम् ।
वागीशसहितामुक्तिमिमामतिशयाह्वयाम् ॥

इति **दण्डिवचनानुरोधेन** च अतिशयोक्तेः अङ्गतया घटकत्वेऽपि 'प्राधान्येन व्यपदेशाः' इत्युक्तरीत्या तत्तदलंकारत्वोक्तिर्गरीयसी अविरोधात् । अत्रार्थे उपष्टम्भकं ध्वनिकारवचनमुत्तरग्रन्थव्याख्यावसरे प्रदर्शयिष्यते ।

चित्रमीमांसा

अत एव काव्यप्रकाशिकायां—

प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ।

इति अतिशयोक्तिषु परिगणय्य, यद्यर्थोक्तौ कल्पनस्य—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥

इत्युदाहृतम् ॥

तत्त्वालोकः

उक्तोदाहरणेऽतिशयोक्तिविशेषतां प्रतिपाद्य एतादृशोदाहृतिषु अतिशयोक्तिप्रभेदता **काव्यप्रकाशकारस्याऽपि** संमतेति प्रदर्शयति–**अत एवेति** । अत एव—अतिशयोक्तिविशेषस्य युक्तत्वादेवेत्यर्थः । **प्रस्तुतस्येति** ।

'निगीर्याध्यवसानं तु' इत्यारभ्य उपमानेनान्तर्निगीर्णस्य उपमेयस्य यदध्यव सानं एका ।

यच्च तदेवान्यत्वेनाध्यवसीयते सा अपरा ।

यद्यर्थस्य-यदिशब्देन चेच्छब्देन वोक्तौ यत्कल्पनं, अर्थादसंभविनोऽर्थस्य सा तृतीया ।

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी ।

इति चतुर्विधां अतिशयोक्तिं लक्षयित्वा यद्यर्थोक्तौ कल्पनस्य 'राकायाम्' इत्युदाहृतम् । **राकायामिति** । राका—षोडशकलापरिपूर्ण चन्द्रमसा युक्ता पूर्णिमा,

'पूर्णा च पौर्णमासी च पूर्णमासी च पूर्णिका ।
चन्द्रे कलोनेऽनुमतिस्सैव राका तु पूरिते ॥'

तत्त्वालोकः

**इति वैजयन्ती**, तस्याम्, अमृतांशोः सुधाकरस्य वपुः स्वरूपम्, अकलंके चेत् कलंकरहितं चेत् तदा तस्याः नायिकायाः मुखं साम्यपराभवं साम्यरूपां पराभूतिं अवाप्नुयात् प्राप्नुयात् ॥

अत्र यदि तथाभूतश्चन्द्रो भवेत् तदा तत्साम्यसंभवप्रयुक्तं पराभवं मुखं अवाप्नुयात् । न च निष्कलंकस्येन्दोः राकायां संभवः । तस्मात् मुखे निस्साम्यरूपः अतिशयः प्रतीयत इत्यसंभवतो वस्तुनः कल्पनं क्रियत इत्यनुपमत्वं मुखे पर्यवस्यति ॥

**किंच**—अत्र राकारमणस्य अकलंकत्वप्राप्तिः त्वन्मुखस्य साम्य पराभवप्राप्तिश्चैका इति निदर्शनागर्भातिशयोक्तिः । न चैतावता निदर्शनात्र युक्ता, यद्यादिशब्दैः असंभावितस्य संभावनं वाच्यवृत्त्या गम्यत इत्यस्य अधिकांशस्य भानात् । निदर्शनायां तु प्रकृते पदार्थे वाक्यार्थे वा पदार्थान्तरस्य वाच्यार्थान्तरस्य वा सामानाधिकरण्येनारोपः क्रियते । न चात्र तथेति भेदात् ॥

तथा प्रकाशानुरोधेन निदर्शनायां उपमायां विश्रान्तिः, अस्मिन् उदाहरणे अनुपमत्वे विश्रान्तिरित्यपि भेदो विज्ञायते ॥

अन्यथा—

'अभवन् वस्तुसंबन्ध उपमापरिकल्पकः ।'

इति निदर्शनां लक्षयता **प्रकाशकृता** राकायामित्युदाहरणं निदर्शनायामेवोद्धृतं स्यात् । न च तथा कृतं तेन । किंतु 'यद्यर्थोक्तौ च कल्पन'मित्यति-शयोक्तावेव । तस्मात् नात्र निदर्शना ॥

### तत्वालोकः

**पण्डितराजमतानुरोधेन तु**--प्रौढोक्तिगर्भा यद्यर्थातिशयोक्तिः, नायिकामुखे निस्समाभ्यधिकत्वकृतातिशयप्रतिपिपादयिषया प्रसिद्धकलंकवता चन्द्रेण कलंकाभावसंसर्गस्यासतः उद्भावनात् ॥

एतादृशेषूदाहरणेषु प्राचीनेन **दण्डिना** अद्भुतोपमाभ्युपगता, लक्षिता च

'यदि किंचिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् ।
तत्ते मुखश्रियं धत्तां इत्यसावद्भुतोपमा ॥ [का. २-२४]

**रुद्रटेनच-** अनुपममेतद्वस्त्वित्युपमानं तद्विशेषणं चासत् ।
संभाव्य स यद्यर्थं या क्रियते सोपमोत्पाद्या ॥

इति काव्यालंकारसूत्रकारेण **वामनेन** संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिः [का.सू. ४-३-१०] इत्यभ्युपगम्य 'उभौ यदि व्योम्नीति' पद्यमुदाहृतम् । एतेन अत्र **प्रकाशकारादिभिः भामहवामनयोर्मत**मभ्युपगतं भवति । तदभ्युपगता अतिशयोक्तिः प्रकाशकाराद्यनुरोधेन अतिशयोक्तिविशेषे पर्यवस्यतीति बोध्यम् ॥

**भामहेन च** एवमादौ अतिशयोक्तिं मत्वा–'यदि'शब्देन योगे —

अपां यदि त्वक् शिथिला च्युता स्यात्फणिनामिह ।
तदा शुक्लांशुकानि स्युः अङ्गेष्वंभसि योषिताम् ॥ इति उदाहृत्य,

इत्येवमादिरुदिता गुणातिशययोगतः ।
सर्वैवातिशयोक्तिस्तु तर्कयेत् तां यथागमम् ॥

इति दिक्प्रदर्शनं कृत्वा अतिशयोक्तिगर्भितो ह्यन्यस्सर्वोऽलंकारवर्गः भूयसा चमत्करातिशयमाधत्ते इत्यभिप्रायः आविष्कृतः ।

तत्त्वालोकः

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥

[का.२-८५] इति ।

अत एवोक्तं ध्वन्यालोके-आनन्दवर्धनाचार्यैः —

'प्रथमं तावत् अतिशयोक्तिगर्भता सर्वालंकारेषु शक्यक्रिया । कृतैव च सा महाकविभिः कामपि काव्यच्छायां पुष्यतीति । कथं ह्यतिशय योगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत् । भामहेनाप्यतिशयलक्षणे यदुक्त-'सैषा सर्वत्र वक्रोक्तिरिति' इति । तत्र अतिशयोक्तिः यमलंकारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगः [ध्व.३-उद्यो] इति ।

एतदनुसारे तु अतिशयोक्त्यपेक्षया

'संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये'

इति **जयदेवेन** चन्द्रालोकलक्षितः संभावनालंकार एव युक्त इति पूर्वं प्रतिपादितमेव ॥

इत्थं सति-**कौस्तुभकृता**—'संभावनं यदि इत्थं स्यात्' इत्याद्यनूद्य संभावनायाः पृथगलंकारत्वमयुक्तमेति यदुक्तं तच्चिन्त्यमेव । विच्छित्ति वैलक्षण्यस्य पृथगलंकारताप्रयोजकत्वात् । अन्यथा दीपकतुल्ययोगितादीनां रूपकपरिणामयोः उत्प्रेक्षातिशयोक्त्यादेर्भेदेन परिगणनस्यानुचितत्वप्रसंगात् ॥

नन्वेवं तर्हि 'स्वतस्सिद्धेने'तिविशेषणस्य अव्याप्तिः अत्र उद्भाविता सा च अतिशयोक्त्युपगमेन परिहृतेति विद्यानाथोक्तलक्षणे स्वतस्सिद्धेनेति लक्षणो-

चित्रमीमांसा

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्य
ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ इति ।

तत्त्वालोकः

परि उद्भावितं दूषणमलग्नकमित्याशंकायां अन्यत्र कल्पितोपमास्थले अव्याप्ति दृढं लग्नैवेत्यभिसन्धाय कल्पितोपमां उदाहरति—**पुष्पमिति** । पुष्पं सितकुसुमं प्रवालोपहितं-प्रवलास्य-बालपल्लवस्य उपरि निहितं स्याद्यदि, 'प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे' इति **विश्वः** । मुक्ताफलं वा मौक्तिकं वा ' मुक्ता तु मौक्तिकम् । मुक्ताफलं शौक्तिकेयम् ' इति **वैजयन्ती** ।

वज्रं मुक्ता प्रवालं च गोमेदश्चेन्द्रनीलकः ।
वैदूर्यः पुष्परागश्च पाचिर्माणिक्यमेव च ॥
महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः ।

इति **शुक्रनीतौ** [४. अ. द्वितीयप्रक. ४१.श्लो.] ।

स्फुटे-निर्मले विद्रुमस्थ तत्स्याद्यदि, ततः तर्हि, विशदस्य शुभ्रस्य ताम्रौष्ठपर्यस्तरुचः अरुणवर्णाधरप्रसृतकान्तेः, तस्याः पार्वत्याः स्मितस्य अनुकुर्यादित्यर्थः तादृशं पुष्पं, तादृशं वा मुक्ताफलं पार्वत्याः स्मितेन सदृशं भवेदित्यर्थः । अत्र 'न माषाणामश्नीयात्' इतिवत्कर्मणः सम्बन्धमात्र-विवक्षायां षष्ठी ॥

इति तु कविकल्पितोपमानायाः उत्पाद्योपमेति व्यवहृतायाः उदाहरणम्' इति ॥

तत्त्वालोकः

अत्र उपाधिदानसमारंभादिषु प्रवालोपरि पुष्पनिधानस्य अनुभवगोचरत्वेन नासंभवो वक्तुं शक्यः । अतश्चात्र बुध्या तादृशमनुभवगोचरं उपमानं परिकल्प्य उपमितिक्रिया निष्पद्यत इति कविना कल्पितमिदमुपमानमितीयं **कविकल्पितोपमा** । या सा **रुद्रटेन-उत्पाद्योपमेति** व्यवहृता तस्याः उदाहरणं भवतीति अत्र अव्याप्तिः प्रसज्यत इति भावः । तदेतदाह-**इति तु इति** । अत्र तुशब्दः 'उभौ यदि व्योम्नी'त्युदाहरणा ऽ । बोधयति । 'उभौ यदि' इत्यत्र तादृशप्रवाहस्य संभव एव नास्तीति तत्र वामनाद्यभिमतः अतिशयोक्तिविशेषः इष्टः । अत एव **अलंकारसुधानिधिकारोऽपि**—संबन्धातिशयोक्तेः 'उभौ यदी'ति पद्यमुदाजहार ।

अत्र तु बालपल्लवोपरि निहितपुष्पस्य, विद्रुमोपरिनिहितमुक्ताफलस्य च संभवमभिप्रेत्यैव कविः कल्पितवान् उपमामिति, उपमानस्य स्वतस्सिद्धत्वाभावो नोपमां विहन्तुमलम् ॥

अन्यथा-**वामनादिभिः**— 'उद्गर्भहूणतरुणीत्यादि' प्रागुदाहृतं पद्यं कल्पितोपमोदाहरणतयोपन्यस्तं विरुध्येत ।

**एतेन**-असंबन्धे सम्बन्धस्य 'पुष्पं प्रवालोपहितं यदि स्यात्' इति पद्यं यत्सर्वस्वकृता अतिशयोक्तिनिरूपणावसरे उदाहृतं तन्मन्दमिति ध्वनितं-भवति । तथैव **काशीस्थ मानवल्लचपाख्यरामशास्त्रिणा** विद्यानाथोक्त-लक्षणसंशोधनावसरे दीक्षितोपरि 'इदं परिलोचनधूलिक्षेपमात्र'मित्यादिना

तत्त्वालोकः

पूर्वापरग्रन्थविरोधस्य स्फुटतरत्वादिति टिप्पणेऽकाण्ड एवाक्षेपः कृतः नतु वास्तवतया। दीक्षितग्रन्थयोः पूर्वापरपर्यालोचनायामुक्ताक्षेपप्रसक्तेरेवा-भावात्। यद्यर्थातिशयोक्तेः विद्यानाथेनानभ्युपगमात् दूषणाभिधानं स्वेन तदभ्युपगमात् तत्रैवान्तर्भावोऽभिहित इति पूर्वापरग्रन्थविरोधाभावात्। एवं **एतेनैव मल्लिनाथादि** व्याख्याविरोधः उद्भावितः। स च शिथिल एव। यतः 'पुष्पं प्रवालोपहितं' इति पद्यं नातिशयोक्तेरेवोदाहरणम् इति मल्लिनाथाभिमतं किंतु प्रतीपस्येति–तथाहि–

अत्र पुष्पप्रवालयोः मुक्ताविद्रुमयोश्च असंबन्धेऽपि संबन्धोक्त्या अतिशयोक्तिः। विशेषस्तु–पुष्पमुक्ताफलयोः उपमानयोः प्रकृतोत्कर्षार्थम् उपमेयताकल्पनात्प्रतीपालंकारः' इत्युक्त्या प्रतीप एव नैर्भर्यं अतिशयो-क्तेस्त्वनुप्राणकत्वमात्रमिति। इत्थं च दीक्षितानुरोधेन प्रतीपस्यापि उपमान्तर्भावात् न कोऽपि मल्लिनाथादिग्रन्थविरोधः

**किंतु**– उत्पाद्योपमेति व्यवहृतायाः' इत्युक्तिः प्राचीनसंमतोत्पा-द्योपमाया उदाहरणताव्यवहारे किंचिद्बाधिका भवति–यतश्च

अनुपगमेतद्वस्त्वित्युपमानं तद्विशेषणं चासत्।
संभाव्य समर्थं या क्रियते सोपमोत्पाद्या॥

इति **रुद्रटः** काव्यालंकारे लक्षयित्वा [का. ८–१५]

कुमुददलदीधितीनां त्वक् संभूय च्यवेत यदि ताभ्यः।
इदमुपमीयेत तया सुतनोरस्याः स्तनावरणम्॥

चित्रमीमांसा

तत्र यद्युत्पाद्यस्य उपमानस्य संभावितत्वया तेनोपमितिनिष्पत्तेः लक्षणमस्त्येवेति नाव्याप्तिः ॥ इति ।

तत्त्वालोकः

इत्युदाजहार । तत्र कुमुददलदीधितीनां त्वक् उपमानं तद्विशेषणं च्यवनं द्वयमपि सयद्यर्थं संभावितम् । अतश्च यत्र यस्य कदाचित्संभवः तत्र कथम् उत्पाद्योपमेति 'पुष्पं प्रवालोपहितं' इति पद्ये रुद्रटाभिमता उत्पाद्योपमा कथं पदं निबध्नताम् । तन्निधाने वा 'तत्र यद्युत्पाद्यस्ये' त्याद्युत्तरग्रन्थानुगुण्येनोपमितिक्रियानिष्पत्तिः' कथमिति चिन्त्यमिदमिति ज्ञेयम् ।

उक्तोदाहरणे उपमितिक्रियानिष्पत्तिरस्तीति उपमोदाहरणत्वं समर्थयन्, स्वमते नाव्याप्तिरित्याह—**तत्रेति** । तत्र-'पुष्पं प्रवालोपहितं' इत्युदाहरणे यद्युत्पाद्यस्य यदिशब्दोपादानेन निष्पत्तियोग्यस्य उपमानस्य तादृशपुष्पमौक्तिकादेः संभावितत्वया कविविवक्षागोचरतया तेन उपमानेन सह उपमेयस्य, उपमितिक्रियानिष्पत्तेः, लक्षणम असदुक्तम् उपमालक्षणमस्त्येवेति नाव्याप्तिरित्यर्थः ॥

कविकल्पितोपमायां अव्याप्तिपरिहारेऽपि 'चन्द्रबिम्बादिव विषम्' इत्यत्रोपमायाः संभव एव नास्तीत्यसंभावितोपमा अन्वर्थेति विद्यानाथोक्तलक्षणस्य विषानिलयोः स्वतस्सिद्धत्वेऽपि चन्द्रचन्दनप्रभवत्वेन कविकल्पितत्वादव्याप्तिः प्रसज्यते, अस्य लक्षणस्य उपमायां असंभावितत्वात् अव्याप्तिरिति दोषप्रसक्तिः उभयत्र समेति 'यश्चोभयोस्समोदोषः' इतिरीत्या त्वदुक्त-

चित्रमीमांसा

न चैवं—

'चन्द्रबिम्बादिव विषं चन्दनादिव चानलः' इत्यसम्भावितोपमायामव्याप्तिः। तत्र असंभावितेनैवोपमानेन उपमितिक्रियानिष्पत्तेः कविविवक्षितत्वेन विवक्षानुसार्युपमितिक्रियानिष्पत्तिसद्भावात् ॥

तत्त्वालोकः

मपि लक्षणं दुष्टमेवेति पर्यनुयोगमाशंक्य उत्तरयति—नचैवमिति। 'चन्द्रबिम्बादिव' इत्यत्र चन्द्रप्रभवविषस्य, चन्दनप्रभवानलस्य चासंभवेन तादृशविषानलप्रतियोगिकं सादृश्यमपि न संभवतीत्यनन्वयवत्, चन्द्रबिम्बादिव विषं, चन्दनादनल इव इतो वक्त्रात् परुषा वाक् असंभावितेति अर्थान्तरप्रतीतौ द्वारमात्रतया तथा वर्णनमित्युपमितिक्रिया न निष्पद्यत इत्यतिव्याप्तिरिति शंकितुरभिप्रायः।

समाधानन्तु— उपमाने यद्यप्यसंभावितम्, अथापि असंभावितेनैवोपमानेन असंभावितस्य परुषवचसः उपमेयस्य तादृशविषादिना सादृश्यं कवेर्विवक्षितमिति उपमितिक्रियानिष्पत्तेः नाव्याप्तिरिति ॥

**प्रकारान्तरेण** उपमासमर्थनप्रकारः पूर्वपक्षे एव उपक्षिप्तः। अन्यथा तु-अनन्वये यथा द्वितीयसदृशव्यवच्छेद एव कवेः संरम्भः तथात्रापि असंभावितत्व एव कवेः संरम्भः इति उपमानुदाहरणत्वं स्यात्। अथव अत्र उपमा यथा अभ्युपगम्यते तथा अनन्वयेऽपि उपमा अभ्युपेया युक्तेरुभयत्रसाम्यात् न तु अनन्वयस्य व्यावृत्तिः असंभावितोपमायाः परिग्रहः इति वैषम्यप्रकाशनं युक्तम्।

## चित्रमीमांसा

नहि ‘वस्तुसदर्थनिबन्धनोपमितिक्रियानिष्पत्तिः उपमा’ इति लक्षणम् उच्यते’ किन्तु कविविवक्षानिबन्धनी’ इति ।

## तत्त्वालोकः

दण्डिना तु — अनन्वयो यथा उपमाविशेषतया परिगणितः, तथा असंभावितोपमाप्यपीति न वैषम्यप्रसंगः ।

ग्रन्थकारानुरोधे तु वैषम्यमपरिहार्यमेवेति सुधियो विभावयन्तु ।

ननु ‘पुष्पं प्रवालोपहितम्’ इति पद्ये प्रवालोपरि पुष्पनिधानस्य, स्फुटविद्रुमे मुक्ताफलनिधानस्य च नात्यन्तमसंभावितत्वमिति उपमाभ्युपगमेऽपि ‘चन्द्रबिम्बादिव’ इत्यादौ विषादेरुपमानस्य चन्द्रबिम्बादत्यन्तं असंभावितत्वात् सादृश्यमेव न प्रतीयते । चमत्कारस्तु पुनः केन स्यादित्याशंक्य उत्तरयति —नहीत्यादिना ।

अयंभावः — ‘अकाल्पनिकयोः द्वयोर्वस्तुनोर्यत्सादृश्यपरिकल्पनं तदेवोपमा’ इति यद्यस्माभिर्लक्षणमुच्येत तदा ‘चन्द्रबिम्बादि’त्युदाहरणे चन्द्रबिम्बादनलस्य अत्यन्तमसंभावितत्वात् तद्द्वारेण सादृश्यमपि न सिध्यत इत्याशंकितुं युक्तम् । न च तथा अस्माभिरुच्यते । किन्तु कविः यमर्थमसदपि परिकल्प्य उपमां विवक्षति तत्रोपमालंकार इति । तेन चात्र कविः खण्डशः चन्द्रविषादेः वस्तुतः उत्पाद्योत्पादकभावं परिकल्प्य तेन सह साम्यमपि परिकल्पयतीति अदोषात् ।

## चित्रमीमांसा

अत एव श्लोके विवक्षितः इतिविशेषणमर्थवत् । अन्यथा 'चन्द्र इव मुखम्' इत्यादावपि लक्षणं न स्यात् । चन्द्रगतकान्त्यतिशयस्य वस्तुतो मुखेऽभावेन विवक्षानुसरणं विना गत्यभावात् ।

## तत्त्वालोकः

सत्यम्, न च तथा लक्षणे निवेशितम्, निवेशितं तु उपमितिक्रिया-निष्पत्तिमत्साहश्यवर्णनमिति चेदत्राह—**अत एवेति** ।

अत एव उपमितिक्रियानिष्पत्तेः कविविवक्षोपारूढताश्रयणादेव, श्लोके 'व्यापार उपमानाख्यः' इति उपमासान्यलक्षणश्लोके विवक्षितः इति-व्यापारविशेषणतया उपात्तं सप्रयोजनम् ।

उक्तरीत्यनभ्युपगमे सर्वानुभवगोचरेऽपि लक्ष्ये पमालक्षणसमन्वया-भावात् लक्षणस्यासंभव एव प्राप्नुयात् इति महदनिष्टं आपद्येत इत्याह—**अन्यथेति** । अन्यथा—कविविवक्षानुसरणमकृत्वा 'चन्द्र इव मुखम्' इति सर्वसम्प्रतिपन्ने उपमोदाहरणे लक्षणं न स्यात्—नान्वियात् । तत्र हेतुमाह—**चन्द्रगतेति** । चन्द्रनिष्ठो यः कान्तेः अतिरेकः, तस्य, गवये यथा गोगतः धर्मः प्रतीतिपथमवतरति तद्वत् मुखे अप्रतीत्या तद्विवक्षैव शरणम् । उपा-यान्तराऽभावात् । अत एव—भामहः—स्वकीये **काव्यालंकारे** द्वितीय-परिच्छेदे—

सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिरुपमा सुप्रयुज्यते ॥

चित्रमीमांसा

चन्द्र धवला कीर्तिः 'इत्यादौ च सर्वथैव लक्षणं नस्यात् धावल्यस्य लेशतोऽप्यभावात्' इति ॥

न चैवमनन्वयेऽपि कविविवक्षया स्वस्य स्वेनोपमिति क्रियानिष्पत्तिः संभवतीति वाच्यम् । सर्वथैवानुपमत्व-द्योतने कविसंरम्भे सति तथा विवक्षानुदयात् ॥

तत्त्वालोकः

अखण्डमण्डलः क्वेन्दुः क कान्ताननमद्युति ।
यत्किञ्चित्कान्तिसामान्यात् शशिनैवोपमीयते ॥

इति कविविवक्षामेव शरणीचकार ।

'चन्द्र इव मुखम्' इत्यत्र आह्लादकत्वादेर्धर्मस्य एकजातीयतया वर्तमानत्वं रसिकताबलात् भासताम् अथापि 'चन्द्रधवला कीर्तिरित्यादौ' कीर्तेर्धवलता न कस्याप्यनुभवपथमवतरति कविमन्तरेति एतादृशोदाहरणेषु कवि-विवक्षैव सादृश्यपरिकल्पने निबन्धनम् । तदेतदाह—**चन्द्रधवलेति** । अत एव काव्यालंकारसूत्रकृता **वामनेन**–'गुणबाहुल्यतश्च कल्पिता' [का.सू. ४२–२] इति सूत्रितं संगच्छते ।

कविविवक्षानुसरणे क्रियमाणे अनन्वयेऽव्याप्तिरित्याशंकते–**नचेति** । समाधत्ते–**सर्वथैवेति** । 'गगनं गगनाकारं' इत्यादौ गगनमसदृशमिति द्योतने कविसंरम्भे सति सादृश्यनिष्पत्तौ अनुपमत्वं न प्रतीयात् । इत्थं सति उपमितिक्रियानिष्पत्तिविवक्षानुदयात्, इत्यभिमानात् ॥

**चित्रमीमांसा**

**'वृथा चरसि किं भृङ्ग' इत्यादौ सादृश्याधिकरणस्यानुपलंभोक्त्या उपलभ्यमानेषु सादृश्यनिषेधपर्यवसानेऽपि अनुपलभ्यमानगतसादृश्याभ्यनुज्ञानात् तत्रोपमितिक्रिया-निष्पत्तिरस्तीति नाव्याप्तिः ॥**

**तत्त्वालोकः**

**वस्तुतस्तु**—'चन्द्रबिम्बादिव विषम्' इत्यत्रापि अनन्वयोदाहरणवत् राज्ञो वक्त्रात् परुषा वाक् न संभवत्येवेति असंभावितत्व एव कविसंरंभात् उपमितिक्रियानुदयादनन्वय इवात्रापि अनुपमात्वमभ्युपेयम् । अथवा उक्तो दाहरणे इव अनन्वयेऽपि उपमात्वमभ्युपेयम् । न तु वैषम्यं 'यश्चोभयोस्समो दोष' इति न्यायात् । 'गगनं गगनाकारम्' इत्यत्र 'गगनं गगनवृत्तिधर्मवत्' इति बोधस्य अनुभवसिद्धतया गगने गगनवृत्तिधर्मप्रतीतौ बाधकाऽभावादिति तु नव्याः । तथा विवक्षया च अन्यप्रतियोगिकसादृश्यानाश्रयत्वं विवक्ष्यत इति न कोऽपि विरोधः ॥

**नचैवमपि**—'वृथा चरसि किं भृङ्ग' । इति प्रागुदाहृतपद्ये मालतीकुसुमसदृशकुसुमालाभोक्त्या, उपलभ्यमानेषु कुसुमसामान्येषु सादृश्यनिषेधः पर्यवस्यतीति सादृश्यप्रतियोगिनं अजानन्नेव तत्सादृश्यमनुयोगिनि परिकल्पयितुं शक्नुयात् । यथा—गामेवाजानन् पुरुषः गोसादृश्यं गवये उपमिनुयात् । अतश्च प्रतियोगिनः बुध्द्यनुपारूढत्वात् उपमितिक्रियायाः अनिष्पत्त्याऽव्याप्तिः इत्याशंकां मनसि निधाय समाधत्ते—**वृथा चरसीति** । अयं भावः—वृथा चरसीत्यत्र सदृशीं न लप्स्यसे इति सादृश्याधिकरणस्यालाभोक्त्या उपलभ्यमानेषु कुसुमेषु क्वापि सादृश्यं नोपलभ्यत इति सादृश्यनिषेधे पर्यवसानं यद्यपि भवति ।

चित्रमीमांसा

अत एव तस्य विशिष्यानुपादानादुपमानलुप्ता ।

एवम्—

निरूप्यमाणं कविना सादृश्यं स्यात्मनो न चेत् ।
प्रतिषेधमुपादाय पर्यवस्यति सोपमा ॥

इत्यपि लक्षणमनुसन्धेयम् ॥

तत्त्वालोकः

तथापि मालतीसदृशवस्तुनस्सत्वमभ्यनुज्ञायत एवेति उपमितिक्रिया–निष्पत्तेर्न कोऽपि प्रतिरोध इत्यव्याप्तेः नावकाशः । इदमपि समाधानं सम्यगेव । यतश्च, लोकेऽपि इदानीं धनिकजनपरिग्राह्यतण्डुलाशया वणिक्पथे भ्रमतां दुर्गतानां वणिग्भिरेवमुत्तरमुपलभ्यते 'हे दुर्गताः भवतां भ्रमतामपि अध्यर्धव्रीहितण्डुलसदृशं नोपलभ्यत इति'। नैतावता राजोपभोगयोग्यतण्डुल–सत्वं प्रतिपादितं भवति, किन्तु तदलाभमात्रं तद्वदत्रापीति ज्ञेयम् ॥

यदि तु मालतीसदृशं पुष्पमेव न स्यात् तदा इदमुदाहरणम् उपमान लुप्ताया एव स्यात् । लोपो नाम विद्यमानस्य वस्तुनः अश्रवणमनुपलब्धिर्वा । अत एव व्याकरणसूत्रवृत्तिकृता **वामनेन**–काशिकायां 'अदर्शनं लोपः' [पा. सू. १-१.६०] इति सूत्रे' अदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभावः वर्णविनाशः इत्यनर्थान्तरमित्युक्तम् ॥

उक्तार्थे संमतिप्रदर्शनपरं विषयान्तरमुपादत्ते–**अत एवेति** । अत एव–उपमितिक्रियानिष्पत्तिसद्भावादेव, तस्य–सादृश्याधिकरणस्य, अनुपादानादेव उच्चारणाभावादेव, उपमानलुप्ता वृथा चरसीति लुप्तोपमोदाहरणम् ॥

चित्रमीमांसा

'उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमुपमा' इति ॥

स्वालोकः

प्रकारान्तरेण उपमासामान्यलक्षणमाह–**एवमित्यादिना**। कविना निरूप्यमाणं सादृश्यं, स्वात्मनः प्रतिषेधमुपादाय न पर्यवस्यति चेत् उपमा–निषेधपर्यवसायि सादृश्यं यत्र न वर्ण्यते तत्र उपमा इतीदमपि लक्षणमनु–सन्धेयम् ॥

कारिकाद्वयलब्धार्थं सगृह्य लक्षणद्वयं प्रणयति–**उपमितीति**। यादृशवाक्यात् सदृशीकरणव्यापारः सिद्धो भवेत् तादृशव्यापारविषयीभूतं वर्ण्यमानं सादृश्यमुपमेत्यर्थः।

अत्र **रसगङ्गाधरकृतस्त्वित्थमभिप्रयन्ति**—सादृश्यवर्णनस्य विलक्षण शब्दात्मकस्य तादृशशब्दप्रयोगहेतुभूतज्ञानात्मकस्य वा शब्दवाच्यत्वं नास्तीति, तस्य अर्थनिष्ठत्वं सुतरां बाधितमेव ॥

यदि तु सादृश्यवर्णनमित्यत्र विशेष्यतया भासमानं वर्णनं विशेषणी कृत्य सादृश्यमेव विशेष्यतया विवक्ष्यते तदा वर्णनविषयीभूतं सादृश्यमुपमेति कल्पयितुं शक्यम्। अथापि 'गौरिव गवयः' इत्यादावपि अतिव्याप्तिः।

यदि तु–चमत्कारविषयककविव्यापारस्यैव वर्णनपदार्थत्वान्नाति–व्याप्तिरिति उच्यते। तदा चमत्कारित्वस्य निवेशे उपमितिक्रियानिष्पत्ति–विशेषणवैयर्थ्यम्। न ह्यनिष्पन्नमापाततः प्रतीयमानं सादृश्यं चमत्कृति–माधत्ते। अत्रापि **रसगङ्गाधरकृत** एवमभिप्रयन्ति–व्यतिरेकानन्वययोः कमलादिसादृश्यनिषेधस्य सर्वथा सादृश्यनिषेधाय सादृश्यस्य निरूपणं न तु

## चित्रमीमांसा

**स्वनिषेधापर्यवसायिसादृश्यवर्णनम् उपमा इति ।**
**इति द्विविधमप्येतदुपमासान्यलक्षणम् । अलंकारभूतोपमा-**
**लक्षणं तु एतदेवादुष्टाव्यङ्ग्यत्वविशेषितम् ॥**

## तत्वालोकः

तत्कृतं (सादृश्यनिमित्तकं) चमत्कारित्वम् । एवं च विशेषणवैयर्थ्यं दुर्वारमेव इति ॥

**स्वनिषेधपर्यवसायीति** । यादृशवाक्यादन्ततो गत्वा सादृश्यनिषेधे पर्यवसानं न भवति तादृशं वर्ण्यमानं सादृश्यम् उपमा इति ॥

उक्तं लक्षणद्वयमुपमासामान्यस्य नत्वलंकारभूतस्येत्याह **इतीति** । पूर्वोक्तमुपमालक्षणं द्विविधमपीत्यनेन उपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनम् इति । स्वनिषेधापर्यवसायि सादृश्यवर्णनमिति चेत्यर्थः । उपमासामान्य लक्षणम्–अलकारभूतायाः अनलंकारभूतायाः उपमायाश्च साधारणं लक्षण-मित्यर्थः ॥

अलंकारभूतोपमालक्षणं किमित्यत्राह–**अलंकारभूतेति** । तुशब्दः व्यङ्ग्योपमां दुष्टोपमां च व्यावर्तयति । तेनाव्यङ्ग्यमदुष्टमुपमितिक्रियानिष्प त्तिमत्सादृश्यवर्णनमुपमा । स्वनिषेधापर्यवसायि अदुष्टाव्यङ्ग्यसादृश्यवर्णन-मुपमा इत्यलंकारभूतोपमालक्षणम् ॥

**नच**—एकस्यैवोपमालंकारस्य लक्षणवैविध्ये लक्ष्यभेदः प्रसज्यत इति वाच्यम्, लक्षणानां परस्परविरोधे सत्येव लक्ष्यभेदः । न त्वन्यथेति न लक्षणभेदप्रयुक्तलक्ष्यभेदप्रसङ्ग इत्यदोषात् । अत एव तत्तद्बुध्युन्मेषानु सारेण भिन्नभिन्नलक्षणप्रणयनं शास्त्रेषु परिदृश्यते ।

### तत्त्वालोकः

त्याद्यथा-एकत्रानेकधर्मप्रकारकं ज्ञानं संशयलक्षणम् । 'अयं स्थाणुर्वा पुरुषोवे'त्यादौ । एवम्-अनेकत्र एकधर्मप्रकारकमपि ज्ञानं संशय एव । तद्यथा-अस्मिन् समाजे सुमित्रायाः पतिरयम्, अयं वेत्यादौ । तद्वदत्रापीति । विस्तरस्तु ससन्देहप्रकरणे निरूपयिष्यते ।

अयं भावः- दीक्षितरीत्या —

वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वयि मे गात्रसंस्पर्शः चन्द्रे दृष्टिसमागमः ॥

इत्याद्युपमाध्वनिस्थले नालंकारव्यपदेशः । व्यङ्ग्यत्वालंकारत्वयोर्विरोधात् । शब्दालंकाराश्च यमकाद्याः शब्दनिष्ठाः, अर्थालंकाराश्चोपमाद्याः वाच्यार्थनिष्ठाः, वाच्यार्थनिष्ठानामुपमादीनामलंकारत्वं व्यङ्ग्यार्थोपस्कारकत्वनिबन्धनमिति । उक्तं च ध्वनिकृता —

वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ [ध्व. ३-९३]

इत्युक्तरीत्या अनुगन्तव्यस्य अनुगन्तुश्चैकता न संभवतीति अनुगन्तव्यता व्यङ्ग्ये अनुगन्तृता वाच्यालंकारे इति न व्यङ्ग्यत्वमलंकारत्वं च समानाधिकरणम् । अतश्च व्यङ्ग्योपमायाः अलंकारत्वं नेष्टम् । अत एव अव्यङ्ग्यत्वविशेषितमुपमालक्षणम् ॥

अत्र रसगङ्गाधरकारः प्रत्यवतिष्ठते — उपमालक्षणे दत्तम् अव्यङ्ग्यत्वविशेषणमयुक्तमेव । नहि व्यङ्ग्यत्वालंकारत्वयोरस्ति कश्चिद् विरोधः । यदि तयोर्विरोधस्स्यात् वाच्यत्वालंकारत्वयोरपि विरोधस्स्यात् । यदा

तत्त्वालोकः

चमत्कारातिशयाधायकतया प्राधान्येन व्यङ्ग्यत्वं तदा अलङ्कार्यत्वालंकारत्वयोस्सामानाधिकरण्यात् अलंकारलक्षणं मा प्रसांक्षीदिति उपस्कारकत्वेन विशेषणीयम् , न त्वव्यङ्ग्यत्वेन । तथा सति 'अद्वितीयं रुचात्मानम्' इत्यत्र व्यङ्ग्यभूतोपमायाः संग्रहो न स्यात् इति ।

युक्तश्चैतत् । अत एव ध्वनिकारोऽपि तृतीयोद्योते—वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशस्य अलंकारस्य, वस्तुमात्रस्य वा यथायोगमनुगमे सति, इत्यत्र व्यङ्ग्यत्वालंकारत्वयोर्विरोधे इष्यमाणे व्यङ्ग्यांशस्यालंकारस्येति न विवृणुयात् । अतश्च व्यङ्ग्यत्वालंकारत्वयोः विरोधो नास्तीत्यवगन्तव्यम् ॥

किंच - रसादिरूपव्यङ्ग्यस्य गुणीभावे रसादलंकारता कुवलयानन्दे प्रदर्शितैव । अन्यथा कथं व्यङ्ग्यत्वालंकारत्वयोस्सामानाधिकरण्येन निर्देश उपपद्येत । अतश्च स्वोक्तिव्याघातोऽप्यापद्येत ॥

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥ [ध्व.२-२७]

इत्युक्तं द्वितीयोद्योते । अत्र 'मे मतिः' इत्युक्तिः व्यङ्ग्यत्वालंकारत्वयोः सामानाधिकरण्यं नास्ति इत्यभिप्रायमाविष्कर्तुं रसादीनामलंकार्यत्वेन शब्दार्थवृत्तित्वाभावेन च नालंकारता इति वदतामौद्भटानामुक्तिः अलंकारतायां नियामकस्य अज्ञानमाविष्करोति । अलंकारतायां नियामकं न शब्दार्थवृत्तित्वम्, किन्तु चमत्कारजनकत्वमेव । तच्च व्यङ्ग्यत्वेऽप्यस्त्येव । एवमेवान्यत्रापि शतशः दीपकसमासोक्त्यादिवदन्येऽपि अलंकाराः प्रायेण व्यङ्ग्यालंकारवस्त्वन्तरसंस्पर्शिनो भवन्ति । दीपकादिषु उपमाव्यपदेशाभावः दीपकापेक्षया चमत्कारन्यूनतानिबन्धनः, 'प्राधान्येन व्यपदेशाः भवन्ती'ति न्यायात् ॥

चित्रमीमांसा

विशिष्टोपमादिस्थले विशेषणाद्युपमानां वाच्यभूत विशिष्टोपमादिसिद्ध्यङ्गत्वात् , वाच्यसिद्ध्यङ्गरूपगुणीभूत व्यङ्ग्यतैव तासां नालंकारतेति न तदव्यापनं दोषः इति ॥

अत एव ध्वनिकृता—

तत्त्वालोकः

ननु विद्यानाथोक्तोपमालक्षणे-वाच्यमिति विशेषणांशं दूषयद्भिः दीक्षितैः 'त्वदाननमधीराक्षम्' इति पद्ये विशेषणोपमायां अव्याप्तिर्या उद्भाविता सा इदानीमव्यङ्ग्यत्वविशेषणोपादानादपरिहृतैवेति इदमपि लक्षणमव्यापकमेवेत्याशंकामपनयति — विशिष्टेति । विशिष्टोपमादिस्थले—बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मप्रयोज्योपमास्थले 'त्वदाननमधीराक्षम्' इत्यादौ, विशेषणाद्युपमानां बिम्बप्रतिबिम्बभूतयोः विशेषणयोरक्षिभृंगयोः, दीधितिकेसरयोश्च या उपमा तयोः वाच्यभूतविशिष्टोपमादिसिद्ध्यङ्गत्वात् अक्ष्यादिविशिष्टाननस्य भृंगादिविशिष्टपङ्कजस्य च या उपमा तस्याः सिद्धौ अङ्गत्वात् उपकारकत्वात् विशेषणोपमासिद्ध्यधीनसिद्धिकत्वलक्षणवाच्य सिद्ध्यङ्गरूपगुणीभूतव्यङ्ग्यतैव तासाम् , नत्वलंकारता न तु उपमालंकारतेति उक्तलक्षणस्य अव्यापनम् अप्रसरः, न दोषः न लक्षणज्ञानप्रतिबन्धकः ।

एवं च विशिष्टोपमास्थले विशेषणोपमानां सिद्धिमन्तरा विशेष्योपमैव न सिद्ध्यतीति विशेषणोपमासिद्धिदशायाम् अलंकार्यस्यैवापरिनिष्पत्त्या तासामलंकारत्वमेव नास्तीत्यदोषात् इत्यभिप्रायः ॥

वस्तुतस्तु—विशिष्टोपमास्थले व्यङ्ग्योपमासिद्धिसापेक्षत्वमिति व्यङ्ग्योपमायामलंकारव्यपदेशाऽभावेऽपि,

तत्त्वालोकः

चन्द्रमयूखैर्निशा, नलिनीकमलैः, कुसुमगुच्छैर्लता ।
हंसैःशारदशोभा, काव्यकथा सज्जनैः क्रियते गुर्वी ॥

इत्यादौ अप्रस्तुतानां चन्द्रमयूखादीनां, प्रस्तुतानां सज्जनानां च कर्तृत्वेन, अप्रस्तुतानां निशादीनां प्रस्तुतायाः काव्यकथायाश्च कर्मत्वेन गुरूकरणरूपैक धर्माभिसंबन्धात् दीपके भासमाने, चन्द्रमयूखादीनां सज्जनैस्सह, निशा प्रभृतीनां काव्यकथया च साकम् उपमाप्रतीतिमन्तरा वाच्यस्य दीपकस्य न शोभातिशयशालित्वम् अतश्च व्यङ्ग्यभूतोपमा वाच्यदीपकोपस्कारिकेति व्यङ्ग्योपमायामलंकारत्वमिष्टमेव । अलंकारान्तरस्य अलंकारान्तरोपस्कारकत्वे नास्तीति न केनाप्यभ्युपगतम् ।

अत एव 'तदतिशयहेतवस्त्वलंकाराः इति वदन् वामनोऽपि अतिशयाधायकत्वं यत्र तत्रालंकारत्वं, तच्च वाच्ये वा स्याद्व्यङ्ग्येवा न तत्र कापि विप्रतिपत्तिरिति व्यनक्ति । परंतु व्यङ्ग्यार्थस्य वाच्योपस्कारकत्वे वाच्यमुखेनैव दीपकादिव्यपदेशः, नैतावता अलंकारत्वव्यङ्ग्यत्वयोर्विरोध इति मन्तव्यम् । अन्यथा-'वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशस्य अलंकारस्य वस्तु मात्रस्य वा यथायोगमनुगमे सति छायातिशयं बिभ्रल्लक्षणकारैरेकदेशेन दर्शितः इत्यादिध्वनिकारोक्तयः व्याकुप्येयुः ॥

किंच—व्यङ्ग्यालंकारस्य गुणीभावे दीपकादिर्विषयः इति वदता ध्वनिकृतैव-व्यङ्ग्यत्वालंकारत्वयोर्विरोधो नास्तीति स्फुटमेवाभिव्यञ्जितम् ॥

अपरंच— 'त्वदाननमधीराक्ष'मित्युदाहरणे विशेषणोपमायाः वाच्य सिद्ध्यङ्गस्वरूपत्वमपि दुरुपपादम्-यतश्चैकैकोऽप्यलंकारः अनेकावयवघटितः ।

## तत्त्वालोकः

प्रकृते उपमा चतुर्भिः अवयवैः घटिता, तेच उपमानोपमेय-साधारण धर्मोपमाः । वाच्यसिद्ध्यङ्गमित्यत्र वाच्यपदेन विशिष्टोपमाया ग्रहणे व्यङ्ग्योपमया अनुगृहीतयोः वस्तुतोभिन्नयोर्धर्मयोः बिम्बप्रतिबिम्बभावमूलतया साधारणधर्मतैवेति वाच्यरूपत्वमेवेति तदङ्गत्वं न संभवत्येवेति क्ववाच्यसिद्ध्यत्वम् साधारणधर्मतया सादृश्यप्रयोजकं भवेत् ? नैतावता तस्य वाच्याद्बहिर्भावः । येन वाच्यसिद्ध्यङ्गरूपगुणीभूतव्यङ्ग्यता ॥

यथाच—

'अग्निमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं योगिनीनाम् ॥

इत्युदाहरणे-जलदे भुजगत्वं रूप्यते । रूपकशरीरं तावत् उपमानमुपमेयं साधारणधर्मः इति अत्र च जलदः उपमेयं, भुजगः उपमानं, अग्न्यादि जनकत्वं साधारणो धर्मः । उक्तं साधारणधर्मं निमित्तीकृत्य जलदे भुजगत्वमारोप्यते । तादृशारोपे विषपदव्यङ्ग्यस्य गरलरूपार्थस्य रूपकशरीराद्बहिर्भूतस्य वाच्यभूतरूपकसिद्ध्यङ्गत्वाद्वाच्यसिध्यङ्गत्वम् । न चात्रतथेति ।

एतेन—विशिष्टोपमास्थले विशेषणाद्युपमानां वाच्यसिध्यङ्गतया गुणीभूतव्यङ्ग्यत्वम् । सिद्धार्थस्योपस्करणाभावात्तु नालंकारत्वमितिवदन् **रसगङ्गाधरोऽपि** चिन्त्य एव ।

तथा विशिष्टोपमास्थले 'त्वदाननमधीराक्षम्' इत्यत्र ग्रन्थकृदापादिताव्याप्तिं भृङ्गनेत्रादीनां बिम्बप्रतिबिम्बभावापन्नतया अभेदस्यैव विवक्षिततया तदुपमाया अविवक्षितत्वात् इति **कौस्तुभोक्तं खण्डनम्** अपि न युक्तम् ।

चित्रमीमांसा

'न पद्मं मुखमेवेदम्' इत्यादौ नोपमालंकारः, किन्तु प्रतिषेधाक्षिप्तप्रसक्तितया भ्रान्तिमान्, तदुपपादकतयोपमा चेत्युभयं व्यङ्ग्यम् ॥

तत्त्वालोकः

तत्रापि अभेदपरिकल्पनस्य परस्परौपम्यमूलकस्यैव सर्वसम्मतत्वात् । तद-विवक्षायां बिम्बप्रतिबिम्बभावस्यैवासिद्धिप्रसंगात् इत्यपि विभाव्यम् ॥

अथ तत्वाख्यानोपमायामुद्भावितामव्याप्तिमलक्ष्यताप्रतिपादनमुखेन परिहरति—**न पद्ममिति** । अत्र मुखे पद्मप्रतियोगिकभेदसामानाधिकरण्येन मुखत्वं निश्चीयते । नैतावता उपमा निष्पन्नेति वक्तुं शक्यम्, पद्मत्वनिषेधस्यैव चमत्कारितया व्यतिरेकादिवत् निषेधप्रतिपत्तिद्वारतामात्रत्वमेव सादृश्यस्येति नोपमालंकारः ॥

कस्तर्ह्यलंकारः ? न कोऽपि । तर्हि किंकृतश्चमत्कारः । व्यज्यमानेन भ्रान्तिमता तदुपपादिकया उपमया च व्यज्यमानयेत्याह—**किन्त्विति** ।

शुक्तिं दृष्ट्वा 'इदं रजतम्' इति भ्रमे जाते विशेषदर्शनानन्तरं यथा 'नेदं रजतं किंतु शुक्तिः' इति बाधग्रहे सति शुक्तौ रजतत्वभ्रमः निवर्तते । किंतु तादृशभ्रमे च शुक्तिरजतोभयसाधारणथाळथळ्यादिज्ञानं कारणम् । तद्वदत्रापि मुखं पद्मं नेति निषेधेन मुखं पद्ममिति पद्मत्वप्रकारिका भ्रान्तिर्व्यज्यते । तादृशभ्रान्तौ च तयोरुपमा प्रयोजिका, सापि न वाच्येति भ्रान्तिमतः उपमायाश्च व्यङ्ग्यत्वम् इति ग्रन्थाशयः ॥

तत्त्वालोकः

**ननु**—'तापं करोति सोत्कम्पं ज्वरः किं ? न सखि स्मरः ।' इतिवत् अत्रापि भ्रान्तापह्नुतिरेव कुतोनोक्ता इति चेत्—उच्यते-उत्तरत्र-

प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम् ।
साम्यात् अपह्नुतिर्वाक्यभेदाभेदवती द्विधा ॥

इति वक्ष्यमाणस्य अपह्नुतिलक्षणस्य असमन्वयात् ।

तथाहि–अपह्नुतेर्द्वौ भागौ-प्रकृतनिषेधः, अप्रकृतारोपश्च । अत्र प्रकृतनिषेधो न क्रियते किन्त्वप्रकृतस्यैव निषेधः । इत्थं सति अप्रकृतारोपः कथं कर्तुं शक्यः । एकदा एकस्यैव विधिनिषेधोभयविषयत्वायोगात् । 'न पद्मं मुखमेवेद'मित्यत्र तु मुखे मुखत्वं न निषिध्यते किंतु मुखे पद्मत्वं निषिध्यते । मुखेऽप्रकृतं पद्मत्वं नाप्यारोप्यते । इत्थं सति अपह्नुतिः कथं वक्तुं शक्या । **किंच**–भ्रान्ताह्नुतिस्तु चित्रमीमांसायां नैव लक्षिता ग्रन्थकृतेति भ्रान्तापह्नुतिसंभावनायाश्च कोऽवकाशः ।

इत्थं सति अपह्नुतौ —न चैवं 'न पद्मं मुखमेवेदम्' इति तत्वाख्यानोपमायां विषये पद्मत्वनिषेधस्य मुखत्वप्रकल्पनस्य च सत्वादतिव्याप्तिः । प्रकल्पनपदस्य आरोपपरत्वादिति शङ्कासमाधाने कथं घटेते ।

यदि तु पद्मस्यैव प्रकृतत्वं, तन्निषेधश्च क्रियत एवेति तत्र अप्रकृत मुखाऽभेदः प्रकल्प्यत इति अतिव्याप्तिरित्युच्यते, तदा पद्मे पद्मत्वं निषिध्यते चेत् सः निषेधः किमर्थः इत्यनुयोगे पद्मे मुखत्वप्रतिपत्त्यर्थः इति अकामेनाप्यभ्युपेयमेव । सा च प्रतिपत्तिः आरोपमन्तरा न भवत्येवेत्यपह्नुत्युदाहरणत्वमेव युक्तं स्यात् । न तद्बहिर्भाव इति अपह्नुतिप्रकरणस्थः **चित्रमीमांसा**ग्रन्थभागः चिन्त्य एव ॥

तत्त्वालोकः

**किञ्च**—अत्र कथं भ्रान्तिमतो व्यङ्ग्यता ? वक्ष्यमाणभ्रान्तिमदलंकार लक्षणं च 'कविसमयसिद्धसादृश्यप्रयोज्यनिषेधविषयोपमेयतापन्नवस्तुविशेष्य कोऽपमानानुभवः' इति तच्च न घटते , विषयस्य मुखस्यानिषिद्धतया विषय पिधानाभावात् । उपमानत्वनिश्चयस्तु परं व्यज्यते ।

नचात्र—पद्ममेव विषयः मुखमेवोपमानं, मुखसदृशे पद्मे पद्मत्वं निषिध्य आरोप्यमाणस्य मुखस्यानुभवो विद्यत एवेति अस्त्येवात्र भ्रान्तिमान् इति वाच्यम् । तथासति भ्रान्तिमतो व्यङ्ग्यत्वोक्तिरनुचितैव । तस्य वाच्यत्वात् ।

यदि तु—अत्र पद्मस्य प्रकृतत्वं मुखस्य चाप्रकृतत्वमित्यभ्युपगम्यते तदा दण्डचक्रमिश्रतः तत्वाख्यानोपमेति व्यवहारो न संगच्छेत ।

तथाहि—मुखे पद्मत्वभ्रमो यो जातः सः मुखमिदं पद्मं नेति वचनेन निवारितः । एवं चक्षुषोः यः भृङ्गत्वभ्रमो जातः सः इमे चक्षुषी न भृङ्गौ इति वचनेन निवारितः । पूर्वोक्तभ्रमश्च सादृश्यमूलक इति मुखे मुखत्वस्य, चक्षुषोः चक्षुष्ट्वस्य याथातथ्येन कथनात् तत्वाख्यानोपमा व्यज्यत इति तत्वाख्यानोपमाव्यवहारो युज्येत । अन्यथा तु न युज्येत इति स्पष्टमेव भवति । अतश्चात्रत्यलक्षणरीत्या भ्रान्तिमतो व्यज्यमानताऽपि न घटते ॥ एवं च 'किन्तु प्रतिषेधाक्षिप्तप्रसक्तितया भ्रान्तिमान् व्यज्यते' इत्युक्तिः व्याहतार्थिकैवेति चिन्त्यमेव ।

वस्तुतस्तु —

'भ्रान्तापह्नुतिरन्यस्य शंकायां भ्रान्तिवारणे ।'

इति जयदेवाभिमतापह्नुतिविशेषाभ्युपगमे बाधकाभावाद् भ्रान्तापह्नुतिरेवात्र

गरीयसी। अत एव ग्रन्थकृताऽपि—कुवलयानन्दे कल्पितभ्रान्तिपूर्वायाः भ्रान्तापह्नुतेः—

जटा नेयं वेणीकृतकचकलापो, न गरलं
गले कस्तूरीयं, शिरसि शशिरेखा न कुसुमम्।
इयं भूतिर्नाङ्गे प्रियविरहजन्मा धवलिमा,
पुरारातिभ्रान्त्या कुसुमशर किं मां प्रहरसि॥

इति यदुदाहरणं दत्तम्, तत्रापि वेणीकृतकचकलाप-कस्तूरी-कुसुम-पाण्डुभावेषु क्रमेण जटा-गरल-चन्द्ररेखा-भूतिभ्रान्तिर्या आसीत् तस्य निवारणं च जटा नेयमित्यादिना क्रियते, तत्प्रतिपादनपूर्वकं कचादियाथार्थ्यंचात्रेद्यते, तद्वदत्रापि मुखे या पद्मत्वभान्तिर्जाता या च चक्षुषोः भृङ्गत्वभान्तिर्जाता सा पद्मत्वभृङ्गत्वनिषेधपूर्वकं निराक्रियते, मुखत्वादियाथार्थ्यं च प्रतिपाद्यत इति भ्रान्तापह्नुतेस्समीचीनमुदाहरणं भवति। अत एव कुवलयानन्दाख्य सन्दर्भे—जटा नेयमिति पद्यमुदाहृत्य 'दण्डीत्वत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने' इत्युक्त्वा 'न पद्मं मुखमेवेति' पद्यमप्युदाहृतम्।

इत्थं सत्यपि 'अत्र उपमां व्यावर्तयतः' अपह्नुतेरतिव्याप्तिमापाद्य प्रकल्पनपदस्य आरोपपरतां परिकल्प्य तद्वारयतः, भ्रान्तिमतो व्यङ्ग्यतां प्रतिपादयतश्च को वाभिप्रायः इति न जानीमः॥

ननु 'न पद्मं मुखमेवेदम्' इत्यत्र उपमालंकारस्यासत्वे आचार्यदण्डिना उपमामध्ये कथं परिगणिता, तत्वाख्यानोपमेति व्यवहारश्च कथं कृतः

चित्रमीमांसा

तथापि भ्रान्तिमदादिकमपि साधर्म्यमूलत्वमात्रेण उपमामध्ये परिगणयता दण्डिना तत्वाख्यानोपमेत्येतादृश व्यवहारः कृतः परमिति न तत्राप्यव्याप्तिर्दोषः इति दिक् ॥

सा चेयमुपमा द्विविधा–पूर्णा लुप्ता चेति ।

तत्त्वालोकः

इत्याशंकां समाधत्ते–तथापीति । भ्रान्तिमदादिकमपि–भ्रान्तिमान् इति ख्यातो य अलंकारः सः, आदिपदात्सन्देहस्य ग्रहणं, तथा च सन्देहालंकारस्य सादृश्यमूलतामात्रेण यथा–संशयोपमेति व्यवहृत्य उपमायामन्तर्भावः कृतः तथा भ्रान्तिमतोऽपि सादृश्यमूलत्वात् उपमामध्ये परिगणय्य तत्वाख्यानोप–मेति व्यवहारः कृतः । स च युज्यत एव । यतश्च भ्रान्तिमान् सन्देहो वा नातिरिक्तालंकारतयाऽभ्युपगतो दण्डिना । अस्माभिस्तु भ्रान्तिमान् अलंकारो ऽभ्युपगत एवेति उक्तोपमालक्षणस्याव्यापनं न दोषः, तदव्यापनस्येष्टत्वादिति भावः ॥

वस्तुतस्तु–ग्रन्थकृदुक्तभ्रन्तिमल्लक्षणस्यासमन्वयात्, अन्यस्य भ्रान्ति मल्लक्षणस्याकथनात् अपह्नुतिविशेषत्वाभ्युपगमो युक्त इति प्रतिभाति ॥ एता वता 'न पद्म'मित्यारभ्य दिगन्तो ग्रन्थभागः चिन्त्यः ॥

'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्'

इत्युक्तरीत्या अलंकारान्तराद्व्यावृत्तिज्ञानफलकमुपमालक्षणं प्रणीय, तद्विशेष-ज्ञानाय तां विभजते—सा चेयमिति ।

चित्रमीमांसा

उपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णा-मुपादाने पूर्णा ॥

तेषामेकस्य द्वयोः त्रयाणां वा लोपे सति लुप्ता ॥

पूर्णायां क्वचित्साधारणधर्मस्यानुगामितया निर्देशः ।

तत्वालोकः

सा अलंकारशिरोरत्नत्वेन प्रसिद्धा, इयम् उपमा, द्विविधा द्विप्रकारा । कदा इयं पूर्णोपमेत्युच्यते कदा वा लुप्तोपमेत्याशंकां मनसि निधाय, चतुष्टयघटितपूर्णोपमायां प्रदर्शितायां तदन्यतमलोपिन्याः लुप्तायाः सुग्रहत्वात् पूर्णां व्युत्पादयति–**उपमानेति** ।

उपमानं सादृश्यप्रतियोगि, उपमेयं सादृश्यानुयोगि, साधारणधर्मः उपानोपमेयोभयानुगतः साधारणीकृतश्च धर्मः, उपमावाचकः इवादिः, एषां चतुर्णामपि उपादाने–ग्रहे पूर्णेत्युच्यते इत्यर्थः ।

तदन्यतमलोपिनीं लुप्तामाह–**तेषामिति** । तेषाम् उपमानोपमेय साधारणधर्मोपमावाचकानां मध्ये एकस्य–वाचकस्य, धर्मस्य, उपमानस्य वा लोपे, (एकलुप्ता) । द्वयोः वाचकोपमानयोः, धर्मोपमानयोः, धर्मवाचकयोः, वाचकोपमेययोर्वा लोपे (द्विलुप्ता) । त्रयाणां धर्मोपमानवाचकानां लोपे (त्रिलुप्ता) सति लुप्तोपमेत्युच्यते इत्यर्थः ।

उपमां विभज्य पूर्णालुप्तयोः स्वरूपं च प्रदर्श्य पूर्णोपमायां धर्मे साधारण्यं सप्तधा सम्पाद्यत इत्याह–**पूर्णायामिति** ।

## चित्रमीमांसा

**क्वचित् वस्तुप्रतिवस्तुभावेन, क्वचित् श्लेषेण, क्वचित् विम्बप्रतिविम्बभावेन, क्वचिदुपचारेण, क्वचिन्समासान्तराश्रयणेन, क्वचित् एषां यथासंभवं मिश्रणेन ॥**

**लुप्तायां तु नैवं भेदाः इति । तस्यां साधारणधर्मस्यानुगामित्वनियमात् इति ॥**

## तत्त्वालोकः

यथा–'वागर्थाविव सम्पृक्तौ' इत्यत्र नित्यसंबन्धित्वरूपस्यानुगामितया,

यान्त्या मुहुः' इत्यत्र 'सा तेन जगृहे' इत्यत्र च वलिताऽवृत्तत्वयोः कम्पिताधूतत्वयोश्च वस्तुप्रतिवस्तुभावेन,

'नरसिंह्महीपाल' इत्यत्र स्वपदच्युतत्वपदस्य श्लेषेण,

'पाण्ड्योऽय'मित्यत्र हरिचन्दनबालातपयोः हारनिर्झरयोश्च बिंबप्रतिबिंबभावेन,

'उद्भवन्तमुदितार्चिषं' इत्यत्र विकासस्य उपचारेण,

'तया विवृद्धाननचन्द्रकान्त्या' इत्युदाहरणे विवृद्धाननचन्द्रकान्त्येति विशेषणे उपमितसमास–विशेषणसमासभेदाश्रयेण,

'भीमकान्तैर्नृपगुणैः' इत्यादौ अनुगामित्वबिम्बप्रतिबिम्बभावयोः मिश्रणेन च धर्मे साधारण्यं संपादितम् ।

पूर्णोपमायामेव धर्मे साधारण्यसंपादकोपायानां सम्भवः । लुप्तायां तु नेत्याह—**लुप्तायान्त्विति** । तत्र हेतुमाह—**तस्यामिति** ।

तत्त्वालोकः

लुप्तोपमायां साधारणधर्मः नियमेन अनुगाम्येव भवतीति एवंरीत्या एकप्रभेदतैवेत्येषामभिप्रायः ॥

**रसगङ्गाधरकृतस्तु**–'मलय इव जगति पाण्डुः वल्मीक इवाधिधरणि धृतराष्ट्रः' इत्यत्र मलय–पाण्ड्वोः वल्मीकधृतराष्ट्रयोश्च उपमा। तत्र चन्दनवत्सुखप्रदपाण्डवजनयितृत्वेन प्रथमोपमा। द्वितीयोपमा च आशी–विषवत् उपद्रवकारिदुर्योधनादिजनयितृत्वेन। तत्र आद्ये अनुगामि धर्मस्याप्रत्ययात् धर्मलुप्तात्वम् अथापि चन्दनानां पाण्डवानां च बिम्बप्रति-बिम्बभावमूलतया धर्मे साधारण्यम्। द्वितीये सर्पदुर्योधनयोः तथेति धर्मलुप्तात्वम्। अन्यथा—एवंविधोदाहरणस्यासंग्रहप्रसंगात्। लुप्तास्वप्येवं भेदाः संभवन्तीति वदन्ति।

एवंविधोक्तौ अभिप्रायभेद एव कारणम्–स च–बिम्बप्रतिबिम्बभाव-पदार्थस्वरूपनिरूपणव्यत्यास एव। तथाहि–**अप्पय्यदीक्षिताः** पुनः बिम्बप्रति बिम्बभावस्वरूपमेवमाहुः 'वस्तुतो भिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्या दभिन्नतयाध्यवसितयोः पृथगुपादानं बिम्बप्रतिबिम्बभावः' इति।

**रसगङ्गाधरकारास्तु** — उपमेयगतानामुपमानगतानां चासाधारणा नामपि धर्माणां सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पनम् इत्याहुः ॥

तत्र **दीक्षित**मतेऽनुपात्तानां धर्माणां न बिंबप्रतिबिंबभावादिः। अत एव तदीयलक्षणे उपादानपदमुपात्तम्। अतश्च मलय इवेत्यादौ न धर्मलुप्तात्वम्।

**रसगङ्गाधरकारकृन्मते** तु–उपात्तानामिव अनुपात्तानामपि धर्माणाम्

**तत्त्वालोकः**

बिंबप्रतिबिंबभावः । अत एव तैः उपादानपदं तल्लक्षणे नोपात्तम् । अतश्च मलय इवेत्यादिपद्ये स घटते ॥

अत्र यदि धर्मोपादानमावश्यकमित्याग्रहः क्रियते तर्हि अप्रस्तुतप्रशंसादौ प्रस्तुतवाक्यार्थबोधकपदानुपादानेऽपि 'एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते' इत्यत्र चातकमानिनोः औपम्यं गम्यते । तत्र चातके शक्रव्यतिरिक्तावधिकयाचनाभावः अप्रस्तुतपरो धर्मः उक्तः । प्रकृतस्य मानिनः सम्बन्धी यः अधिकगुणव्यतिरिक्तक्षुद्रावधिकयाचनाभावरूपो धर्मः औपम्यप्रयोजकः स नोक्तः । अपि तु आर्थ एव । अथापि शक्राधिकगुणयोः शक्रव्यतिरिक्तक्षुद्रयोश्च भिन्नतया बिम्बप्रतिबिम्बभावमूलतया साधारण्यं संपाद्य प्रकृताऽप्रकृतयोः औपम्यं त्वयाऽपि संपाद्य गम्यौपम्यता निर्वाह्या । अन्यथा अप्रस्तुतप्रशंसायाः उपमाविवर्तत्वोक्तिस्तवापि असंगताः स्यात् । इत्थं च ययोर्बिम्बप्रतिबिम्बभावः तयोः शाब्दत्वमेवेति न नियमः शक्यक्रियः । अपि तु आर्थत्वमपीति बिम्प्रतिबिम्बभावस्य श्रौतार्थत्वाभ्यां द्वैविध्यमुपगम्य सांगत्यसंपादनमावश्यकं तवापीति बिम्बप्रतिबिम्बभावलक्षणे उपादानपदानुपादानं ज्यायः इति **रसगंगाधरकृदाशयः** ।

अत एव—जगन्नाथेन उपमानिरूपणावसरे—'न च शब्देनोपात्तत्वं बिम्बप्रतिबिम्बभावे तन्त्रमित्याग्रहो विदुषामुचितः । श्रौतार्थत्वाभ्यां बिम्बप्रतिबिम्बभावस्य द्वैविध्यौचित्यादि'त्युक्तम् ॥ अत एव च कोमलातपेत्यत्र धर्मेऽसाधारण्यात् कथमुपमेत्याशंक्य उपमेयगतानां उपमानगतानां चासाधारणानामपि धर्मणां सादृश्यमूलेनाभेदाध्यवसायेन साधारणत्वकल्पनादिति श्रौतार्थोभयसाधारणो बिंबप्रतिबिंबभावो लक्षित इत्यवधेयम् ।

चित्रमीमांसा

किन्तु प्रकारान्तरेण भेदा वक्ष्यन्ते । तत्र पूर्णायां धर्मस्यानुगामितया यथा —

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ इति ॥

तत्त्वालोकः

लुप्तायां प्रकारान्तरेण भेदास्संभवन्ति ते चेतरत्र वक्ष्यन्ते । तदाह **किन्त्वति** । प्रकारान्तरेणेति — प्रकारान्तरं च — वाचकलुप्तादिभेदेन श्रौत्यादिभेदेन च वक्ष्यमाणाः प्रकाराः ।

पूर्णायां साधारणधर्मस्यानुगामित्वे उदाहरणमाह—तद्वेति । वागर्थ सदृशौ वागर्थाविवेति अस्वपदविग्रहः । 'इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्चेति' **कात्यायनोक्तेः** । अस्मिन् वार्तिके नित्यसमासः इत्यपि कैश्चित् पठ्यते । परं तु —

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥

इत्यसमस्तप्रयोगदर्शनात् तदघटितपाठ एव साधुः । शब्दार्थाविवेति तदर्थः । संपृक्तौ-नित्यसंबद्धाविति पर्यवसितोऽर्थः । नित्यसंबद्धयोर्वागर्थयोः उपमानत्वेनोपादानात् । शब्दार्थसम्बन्धो नित्य इति हि **मीमांसकाः** । जगतः चराचरस्य पितरौ मातापितरौ माता च पिता चेति विग्रहे 'पिता मात्रा' [ पा. सू. २-२- ७० ] इत्येकशेषः । पर्वतस्य अपत्यं स्त्री पार्वती 'तस्यापत्यम्' [पा. सू. ४-१-९२] इत्यण् । टिड्ढाणञ् [पा. सू.

चित्रमीमांसा

'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति वागर्थयोः नित्यसम्बन्धित्वं प्रसिद्धम् ॥

तत्त्वालोकः

४-१-१५] इत्यादिना ङीप्। परमश्चासावीश्वरश्चेति कर्मधारयः। सन्म हदित्यादिना समास इति शिवतत्त्वरहस्ये नीलकण्ठदीक्षितः। पार्वती च परमेश्वरश्चेति द्वन्द्वेऽल्पाक्षरत्वात्पूर्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यज्ज्ञानाय वन्दे। पार्वतीपरमेश्वरयोः शब्दार्थस्वरूपत्वं

'शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा।
अर्थस्वरूपमखिलं धत्ते बालेन्दुशेखरः ॥

इति वायवीयसंहितोक्तरीत्या ज्ञेयम्। तेन स्वेष्टदेवताविषयकः कविनिष्ठो भावो ध्वन्यते।

ननु उक्तोदाहरणे नित्यसम्बद्धत्वरूपं सम्पृक्तत्वं शब्दार्थयोः कथं संभवति। यदादाय अनुगामित्वं धर्मे साध्यत इत्याशंकायामाह-औत्पत्तिकस्त्विति।

जैमिनीये पूर्वतन्त्रे धर्मे विधिप्रामाण्याधिकरणे-औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानमुपदेशः, अव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्। [पूर्व.मी. १-१-५] इति परिदृश्यमानस्य सूत्रस्यैकदेश अनूदितः।

अस्यार्थश्च—शब्दस्य-पदस्य स्ववाच्येन-अर्थेन सह वाच्यवाचकभावसंबन्धः औत्पत्तिकः -उत्पत्तिः स्वभावः औत्पत्तिकः स्वाभाविकः, अतः

**तत्त्वालोकः**

पदपदार्थयोः वाच्यवाचकभावरूपसंबन्धस्यैव स्वाभाविकत्वात् , सम्बन्धान्तर विरहेण बोधनसामर्थ्याभावः पदानां न शक्य इत्यभिप्रायः ।

यद्यसावसंबद्धतयोत्पन्नयोः पश्चादीश्वरादिभिः संकेतात् निर्वर्त्येत तदा वाच्यवाचकभावस्य अनित्यता स्यात् न च तथा अभ्युपगम्यते **मीमांसकैः**

किन्तु शब्दार्थयोः उत्पत्तिदशासिद्धः इत्यौत्पत्तिकः संबन्धः । अत एव **नैयायिका**ऽभिमतः पदानामीश्वरसंकेतपक्षः **शब्दनित्यत्वाधिकरणे मीमांसकैः** निराक्रियते । विशेषस्तु **भाट्टदीपिकादौ** द्रष्टव्यः । औत्पत्तिकः नित्यः इति **मीमांसाशाबरभाष्ये** स्थितम् ॥

**वैयाकरणाश्च**—शब्दार्थयोः संबन्धं नित्यमाहुः । तथा च **पातञ्जले महाभाष्ये**—किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानां ? अथ स्मर्ता ? इत्याशक्य 'सिद्धे शब्दार्थसंबन्धे' इति वार्तिकस्थस्य सिद्धशब्दस्य नित्यपर्यायत्वं पतञ्जलिना साधितम् । **महाभाष्यप्रदीपोद्योते** तु—शब्दार्थ योर्नित्यत्वपक्षे तत्सम्बन्धस्य नित्यत्वेऽपि, अनित्यत्वपक्षे शब्दार्थसंवन्धस्य प्रवाहनित्यतया अनादित्वात् नित्यत्वम् इति **परपशायां नागेशभट्टः** ।

अत्र मीमांसक-सांख्य-वैशेषिक-नैयायिक-बौद्धानामनेकधा दर्शनम् । अथापि 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति वदतो व्यासशिष्यस्य **जैमिनेः** 'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च' [ब्र.सू.अ १-३-२९] इति वदतो जैमिनिगुरोः **व्यासस्य च** कर्मब्रह्ममीमांसयोः ऐकशास्त्र्यमिति निर्णीतवतो **बोधायनस्य महर्षेः** मतमेव साम्प्रतमिति शब्दार्थसंबन्धस्य नित्यत्ववाद एवैकरस्यम् । तदेतदभिसन्धाय 'प्रसिद्धम्' इति प्रयुक्तमत्रेति अवगन्तव्यम् ॥

## तत्त्वालोकः

आलंकारिकेषु भामहोऽत्रोदास्ते। ध्वनिकार–लोचनकारौ स्वाभिप्रायमाविश्चक्रतुः।

तथाहि— विनश्वरोऽस्तु नित्यो वा सम्बन्धोऽर्थेन वा सता।
नमोस्तु तेभ्यो विद्वद्भ्यः प्रमाणं येऽस्य निश्चितौ॥

इति **भामहः** औदासीन्यं प्रदर्शितान्।

**आनन्दवर्धनश्च**–'पौरुषेयाऽपौरुषेययोर्वाक्ययोर्विशेषमभिदधता शब्दानामौत्पत्तिकशब्दार्थसम्बन्धवादिना वाक्यतत्वविदा व्यञ्जकत्वलक्षणो धर्म औपाधिकः अवश्यमभ्युपगन्तव्यः। तदनभ्युपगमे हि तस्य शब्दार्थ-सम्बन्धनित्यत्वे सत्यप्यपौरुषेयपौरुषेयवाक्ययोरर्थप्रतिपादने निर्विशेषत्वं स्यादि'त्यादिना तस्य नित्यत्वं स्फोरितवान्।

**तत्रैव लोचने**–औत्पत्तिकेति प्रतीकमुपादाय='जन्मना द्वितीयो भावविकारः सत्तारूपः सामीप्याल्लक्ष्यते, विपरीतलक्षणातो वा रूढ्या वा औत्पत्तिकशब्दो नित्यपर्यायः। तेन नित्ययोः शब्दार्थयोः शक्तिलक्षणं सम्बन्धमिच्छति जैमिनीयः' इति **अभिनवगुप्तपादाः**।

'सर्वादीनि सर्वनामानि' इति सूत्रे **कैयटश्च**-सर्वार्थाभिधानयोग्य–शब्दस्य शक्तिनियममात्रं संज्ञाकरणमिति शब्दार्थसम्बन्धनित्यताया अपि न विरोधः इत्याह [पात. म. कै १-१-६.२७]। अत्रैव उद्योते शक्तिनि–यमनं शक्तिसम्बन्धबोधनमिति **नागेशभट्टः**॥

शब्दार्थयोरिव उमामहेश्वरयोरपि अपृथग्भावः प्रसिद्ध इति दृष्टान्त-

चित्रमीमांसा

उमामहेश्वरयोरप्यनयोर्न पृथग्भावः चन्द्र-चन्द्रिकयोरिवेति तत्प्रसिद्धम् ॥

तथा च नित्यसंबन्धित्वरूपोऽत्र साधारणधर्मोऽनुगामितया निर्दिष्टः ॥

तत्त्वालोकः

प्रदर्शनपूर्वकं प्रदर्शयति–उमेति । शिवपारम्यप्रतिपादकग्रन्थेष्विति शेषः ।

इत्थमुमाहेश्वरयोः सम्बन्धस्य नित्यत्वेऽवगते संपृक्ताविति एकपदोपात्त तया अभेदाध्यवसायात् साधारणधर्मता सिद्धा अनुगामिता चेत्याह— तथाचेति ।

एतेन उक्तोदाहरणे शब्दार्थप्रतियोगिकमुमामहेश्वरानुयोगिकं नित्यसम्बद्धत्वधर्मनिमित्तकं सादृश्यं चमत्कारीति चतुर्णामुपादानात् पूर्णोपमा ।

**नन्वत्र**–धर्मेऽनुगामित्वमुच्यते तत् किंरूपमिति विवेचनीयम् । तत्र किं एकरूपेण धर्मस्योभयान्वयित्वम् ? सम्बन्धत्वेन उभयान्वयित्वम् ? पर्यवसितधर्मयोरेकधर्मावच्छिन्नत्वम् ? साधारणधर्मवाचकैकपदजन्यबोधप्रकारीभूतधर्मस्य साधारणधर्मद्वयवृत्तित्वम् ?

**नाद्यम्**–'वागर्थाविव सम्पृक्तौ' इत्यत्रैव उपमानयोः वागर्थयोः वाच्यवाचकभावरूपः, उपमेययोः पार्वतीपरमेश्वरयोः संयोगरूप इति सम्बन्ध भेदात् एकरूपेण धर्मस्योपमानोपमेयोभयान्वयित्वं नास्तीत्यव्याप्तिः । येन रूपेण यस्य धर्मस्य उपमानगामिता तेनैव रूपेण उपमेयगामिता अवश्यं वाच्या । अन्यथा उपचारस्य धर्मे साधारण्यसंपादनार्थत्वोक्तेरसांगत्यप्रसंगात् ।

## तत्त्वालोकः

अत एव न द्वितीयम्—यतश्च।

'उद्भवन्तमुदितार्चिषं ततो भानुमन्तम् . . . . .'॥

इत्युदाहरणेऽपि मुख्यलक्ष्योभयसाधारणस्य विकचत्वस्य पुष्पेषु ईक्षणेषु च अन्योन्यसंयोगजनकव्यापाररराहित्यस्य सम्बन्धत्वेन विषयविषयिसाधारण्यमस्त्ये वेति उपचारस्य पृथगुपादानमनुपपन्नं स्यात्। अतश्च पुष्पेषु विकचत्वं विजातीयपत्रविभागवत्त्वम्, ईक्षणेषु उपचारात् निमेषराहित्यम् तथासति नैकरूपेणोभयत्रान्वयः।

न तृतीयम्—उपचारोदाहरण एव विजातीयपत्रविभागवत्त्वस्य निमेष राहित्यस्य च परस्परं भेदेऽपि मिथस्संयोगजनकक्रियाराहित्यरूपैकधर्मावच्छि-न्नत्वं विद्यत एवेत्यतिव्याप्तिः॥

नापि चतुर्थम्—'पीताम्बर इव गुणवान् नीलाम्बरः' इत्यादौ गुणत्वजातिमङ्गीकुर्वतां गुणपदात् पीतत्वनीलत्वादिप्रकारेणैवान्वयबोधात् साधारणधर्मवाचकैकपद [गुणपद] जन्यबोधप्रकारीभूतधर्मस्य [पीत नील रूप] साधारणधर्मद्वयावृत्तित्वात् अननुगामित्वप्रसंगाच्च॥

तस्मादनुगामिता दुर्वचेति चेदुच्यते—

तत्तद्धर्मतापर्याप्त्यधिकरणवृत्त्येकसामान्योपस्थापकैकपदोपस्थाप्यत्वम् अनु गामित्वम् इति विवक्षणीयम्। धर्मस्यैकत्वे एकस्यैव धर्मतापर्याप्त्य-धिकरणत्वमिति, धर्मस्यानेकत्वे द्वयोरेव धर्मतापर्याप्त्यधिकरणत्वमिति धर्मस्यै-कत्वेऽनेकत्वे वा न दोषः। अतश्च यत्र अनेकेषां मिश्रणं तत्र नाव्याप्तिः। उक्तानुगामित्वलक्षणे सामान्ये 'एके'ति विशेषणोपादानं बिम्बप्रतिबिम्बभाव

## चित्रमीमांसा

**यद्यप्युमामहेश्वरयोः वागर्थवन्नित्यसम्बन्धित्ववर्णनेन तयोर्निरतिशयपरस्परप्रेमशालित्वम् , महामहिमत्वादि च व्यज्यते, तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः ॥**

तत्त्वालोकः

वारणाय । तेनैव श्लेषस्यापि निवारणं भवति । पदे ऐक्यविशेषणं वस्तुप्रतिवस्तुभावनिरासाय । तत्र धर्मैक्येऽपि पदभेदात् । एवं च वागर्थाविवेत्यत्र सम्पृक्तत्वस्य तादृशैकपदोपस्थाप्यत्वमस्तीति समन्वयः ॥

ननु 'वागर्थाविव' इत्यत्र कथमलंकारस्य प्राधान्यम् : उमामहेश्वरसम्बन्धिनः संभोगशृङ्गारस्य व्यज्यमानतया रसध्वनेः, कालिदासकविनिष्ठ–देवताविषयकरतेः पार्वतीपरमेश्वरशृङ्गारस्य उपस्कारकतया गुणीभूतव्यङ्ग्यस्य वा प्राधान्यमिति सन्दिह्य – अलंकारव्यपदेशानुगुणचारुत्वस्यानुगुण्येना --लंकारोदाहरणत्वं परिकल्प्य अत्रोपन्यस्तमित्याह---**यद्यपीति** । **उमेति** । यद्यपि परस्परतपस्संपत्फलायितयोरुमामहेश्वरयोः 'केनापि कामेन तपश्चचार' 'इत्येष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाये'त्याद्युक्तरीत्या अपृथग्भाव उचित इति तस्मिंश्च निरतिशयप्रेमशालित्वम्, तदुद्देश्यकनमस्कारात् महामहिमशालित्वं च व्यज्यते । नैतावतात्रैव कवेस्तात्पर्यमिति वक्तुं शक्यम् ।

परन्तु--'उपमा कालिदासस्ये'त्याभाणकानुसारेण सन्दर्भानुगुणोपमाप्रदर्शनचातुर्याविष्करणे मुख्यतात्पर्यमिति न ध्वनिव्यपदेशः । न वा उत्तमदेवताविषयककविनिष्ठरतिभावस्य शृङ्गारोऽङ्गभूत इति गुणिभूतव्यङ्ग्यव्यपदेशो वा विवक्ष्यते । देवताप्रसादादिजन्यवासनारूपसंस्कारविशेषो-

चित्रमीमांसा

न खलु व्यङ्ग्यसंस्पर्शप्रतिभासादेवात्र चारुताप्रतीतिः। किन्तु वाच्यवैचित्र्यप्रतिभासादपीति प्रायस्तत्र संभवद्रसादि रूपं व्यङ्ग्यमलंकारान्तरंचागणयित्वैव तत्तदलंकारा उदाहियन्ते ॥

तत्त्वालोकः

द्बुद्धाक्लिष्टपदतदर्थयोजनानिपुणनिबद्धकाव्यवाक्यप्रतिपाद्यानां विभावानु भावव्यभिचार्यन्यतमरूपता नियतैव। अन्यथा—

'नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥'

इति ध्वनिकारोक्तरीत्या तस्य अप्रशस्तकवित्वादिकं प्रसज्येत। अतश्च सत्कवीनां व्यापारगोचरा रसादय एव। अथापि—शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचित् वाच्योपमादिभ्यःप्राधान्येन चारुत्वेऽवगम्यमाने 'चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षेति' ध्वन्यालोकोक्तिरीत्या उपमादिव्यपदेशः। तथा सति गुणीभूतव्यङ्ग्यत्वं प्रसज्यत इति चेत् कामं प्रसज्यतां समासोक्त्यादिषु गुणीभूतव्यङ्ग्येषु अलंकारव्यपदेशस्य ध्वनिकारादिसम्मतत्वात्। अत एव ध्वनिकृता—

'व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।
समासोक्त्यादयस्तत्र वाच्यालंकृतयस्स्फुटाः ॥' इत्युक्तम् ॥

न खल्विति। अयमभिप्रायो ध्वनिकृता आविष्कृतः,—

**चित्रमीमांसा**

**एकस्यैव धर्मस्य सम्बन्धिभेदेन द्विरुपादानं वस्तुप्रतिवस्तुभावः ॥**

**तत्त्वालोकः**

'व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ।' इति ।

'वाच्यालंकारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥'

इति च । तस्मात्सुष्ठूक्तं प्रायस्तत्र संभवद्रसादिरूपमित्यादि ॥

धर्मे साधारण्यसम्पादकं द्वितीयमुपायं वस्तुप्रतिवस्तुभावस्वरूपमाह–**एकस्यैवेति**। एकस्यैव धर्मस्य उपमानोपमेयोभयान्वयिनः समानधर्मस्य, सम्बन्धिभेदेन–प्रतियोगिभेदेन द्विः–द्विवारम् उपादानं–निर्देशः, द्विवारमुपादानं च भिन्नयानुपूर्व्या एकयानुपूर्व्या वा भवेत् । तत्राद्या यथा–**उद्भटस्य**—

विरलास्तादृशो लोके शीलसौन्दर्यसंपदः ।
निशाः कियत्यो वर्षेऽपि यास्विन्दुः पूर्णमण्डनः ॥

इत्यत्र विरलाः, कियत्यः इति पदाभ्यां विरलत्वरूप एक एव धर्मः उपमोनोपमेयरूपसम्बन्धिभेदेन उपात्तः ।

द्वितीया यथा–**भामहस्य**—

'कियन्तस्सन्ति गुणिनः साधुसाधारणश्रियः ।

## चित्रमीमांसा

**स तु शुद्धो न सम्भवति । किन्तु विशेषणतया विशेष्यतया वा सर्वत्र बिम्बप्रतिबिम्बभावकरम्बितः इति ॥**

## तत्त्वालोकः

स्वादुपाकफला नम्राः कियन्तो वाऽश्वशाखिनः ॥'

इत्यत्र विरलत्वं कियत्पदाभ्यां निर्दिष्टम् ॥

वस्तुप्रतिवस्तुभावे विशेषमाह—**स त्विति** ।

बिम्बप्रतिबिम्बभावमाश्रित एव सर्वत्र वस्तुप्रतिवस्तुभावः । न शुद्धसामान्यरूपः इत्यर्थः । अत्र कारणं **यन्मर्मप्रकाशे नागेशभट्टेनोक्तम्**—भिन्नशब्दबोध्य एकोऽप्यर्थः विभिन्न इव प्रतीयते । अत एव—

'उदेति सविता ताम्रः ताम्रः एवास्तमेति च'

इत्यादौ द्वितीयवाक्ये 'रक्त एवास्तमेति चे'ति यदि क्रियेत तदा पदान्तर प्रतिपाद्यमानः स एवार्थो भिन्न इव प्रतीयमानः प्रतीतिं व्यवदधीतेति प्रकृतिप्रक्रमभङ्गदोषमाहुः प्राञ्चः । 'उदेति सविते'त्यत्र सम्बन्धिभेदोऽपि नास्ति तथापि प्रतीतिव्यवधानम् । प्रकृते तु सम्बन्धिभेदादपि भेदप्रत्यय-स्तयोः । भिन्नरूपेण प्रतीयमानस्य नासाधारणता । साधारणीकरणे च कश्चिदुपायोऽन्वेष्यः । स च बिम्बप्रतिबिम्बभावः । तं विना धर्मस्य कथं साधारण्यमिति वस्तुप्रतिवस्तुभावस्थले बिम्बप्रतिबिम्बभावकरम्बितत्व-मभ्युपेयमिति—**तच्चिन्त्यम्**—'भिन्नशब्दबोध्य एकोप्यर्थः' इति च न सार्व-त्रिकः । यतो 'घटः कलशः' इति विवरणविवरणिभावापन्नप्रयोगेषु विभिन्नतया प्रतीत्यभावस्य अनुभवगोचरतया व्यभिचारात् । एवं 'एक

**तत्त्वालोकः**

पदोपात्तोऽनेकोऽप्यर्थः अभिन्नतयैव भासते' इति नियमोऽपि तथैव। तथा सति नानार्थैकार्थपदानामवैलक्षण्यप्रसङ्गात्।

**किंच**—पदार्थानां भेदे सति तद्वृत्तिधर्माणां प्रातिस्विकरूपेण भेद एव वास्तविकः। परन्तु साजात्यनिबन्धनमभेदमध्यवस्य अभिन्नताबुद्धिः। तादृशैकत्वप्रतिपत्तिहेतुः वस्तुप्रतिवस्तुभाव एव संबन्धविशेषरूपः। बिम्ब-प्रतिबिम्बभाववत्। 'उदेति सविता ताम्रः' इत्यादौ उदयकालवृत्तिताम्रतायाः अस्तकालवृत्तिताम्रतायाश्च वस्तुतो भिन्नत्वात्। संबन्धिभेदतदभावौ, शब्दभेद-तदभावौ वा अर्थभेदतदभावप्रयोजकाविति।

**नन्वेवं तर्हि**—अनुगामित्व-वस्तुप्रतिवस्तुभावयोः को भेदः? यत्र साधारणधर्मोपस्थापकपदैक्यं तत्र अनुगामित्वम्, यत्र साधारणधर्मोपस्थापक-पदभेदः उच्चारणभेदो वा तत्र वस्तुप्रतिवस्तुभाव इति भेदात्। वस्तु-प्रतिवस्तुभावस्थले, एकसामान्यमूलकः अभेदः मूलम्। बिम्बप्रतिबिम्ब-भावस्थले तु धर्मभेदे सति सादृश्यमूलकः अभेदः मूलम्। अतश्च वस्तु-प्रतिवस्तुभावस्य बिम्बप्रतिबिम्बभावकरम्बितत्वमेवेति न नियमः। तत्र प्रमाणाभावात्।

अन्यथा—

'मुक्ताभिः सलिलरयात्तशुक्तिपेशी-
मुक्ताभिः कृतरुचिसैकतं नदीनाम्।
स्त्रीलोकः परिकलयांचकार तुल्यं
पल्यङ्कैः विगलितहारचारुभिस्स्वैः॥'

चित्रमीमांसा

**वस्तुतो भिन्नयोः [अपि] धर्मयोः परस्परसादृश्याद्-भिन्नतयाध्यवसितयोर्द्विरुपादानं बिम्बप्रतिबिम्बभाव इति ।**

तत्वालोकः

इति **माघपद्ये** [स ८–९] नदीनां सैकतेषु स्वपल्यंकतुल्यता प्रतीयते, तत्र रुचिरत्वचारुत्वयोः, तद्विशेषणयोः मुक्ताहारयोः भेदाऽभावात् वस्तु-प्रतिवस्तुभावे साधारण्यं संपाद्यम् । तत्र वस्तुप्रतिवस्तुभावस्य विशेष्यतया विशेषणतया वा बिम्बप्रतिबिम्बभावकरम्बितत्वमेवेति नियमे उक्तधर्मस्य साधारण्यं न स्यात् । इष्यते त्वत्र उपमा । उक्तनियमाभावे तु अत्र मुक्तारुचिरत्व-हारचारुत्वयोरपि भेदाभावात् साक्षादेव वस्तुप्रतिवस्तुभावा-त्साधारण्यमिति पूर्णोपमोदाहरणत्वं संपद्यते । एवं च वस्तुप्रतिवस्तुभाव–बिम्बप्रतिबिम्बभावौ उपमायां धर्मे साधारण्यसम्पादकाविति बोध्यम् ।

अत एव–**रसगंगाधरकृदपि**—

'विमलं वदनं तस्या निष्कलङ्कं मृगाङ्कति ।'

इत्यादौ शुद्धोऽपि वस्तुप्रतिवस्तुभावः संभवति इत्याह ॥

बिम्बप्रतिबिम्बभावस्वरूपमाह—**वस्तुत इति** ।

उपमा तावत् साधारणधर्मनिमित्ता । साधारण्यं च धर्मस्यैकत्वे भवति । अत्र च वस्तुतो धर्मस्य नैकत्वम् । नहि आननगत एव धर्मः कमलादा–वस्ति । तस्यासंभवात् । अपितु तज्जातीयोऽस्ति धर्मः । एवं मुख–कमलादिवर्तिनोर्धर्मयोः भेदात्साधारण्यं नास्तीति उपमायाः स्वरूपनिष्पत्तिरेव न स्यात् ।

**तत्त्वालोकः**

यदि धर्मयोरपि सादृश्यमभ्युपेयते तदा तत्रापि सादृश्यनिमित्तमन्यदन्वेष्टव्यम् । तत्राप्यन्यदित्यनवस्था स्यात् ।

ततश्च धर्मयोर्वस्तुतो भेदेऽपि प्रतीतावेकतावसायाद्भेदेऽपि अभेद इत्येतन्निमित्तमेकमाश्रयणीयम् । तच्च सकृन्निर्देशेऽनुगामितारूपम् । एकार्थत्वे शुद्धसामान्यरूपम् । एतदेव वस्तुप्रतिवस्तुभावरूपमित्युच्यते । असकृन्निर्देशे शुद्धसामान्यरूपत्वाभावे सत्यपि पारिशेष्याद्बिम्बप्रतिबिम्बभावरूपत्वमेव । एतेषां च धर्माणामभेदेनैव प्रतीतेः साधारणत्वम् । अभेदप्रतीतिश्चात्र सादृश्यनिमित्ता । सादृश्यस्य च सितत्वादिगुणयोगो निमित्तम् । एवमभेदप्रतीतिमुखेनात्र समानधर्मत्वम् ।

लोकोऽपि हि चित्रफलकादौ बिम्बात् प्रतिबिम्बस्य भेदेऽपि मदीयमेवात्र वदनं संक्रान्तमित्यभेदेनाभिमन्यत इति आनुभविक एवासावर्थः ।

अन्यथा हि प्रतिबिम्बदर्शने 'कृशोऽहं स्थूलोऽहम्' इत्याद्यभिमानो नोदीयात् । अतश्च उपमेयवृत्तिधर्मस्य बिम्बता । तया च धर्मे साधारण्यं संपाद्यते ।

अत एव **वामन काव्यप्रकाशकारादिभिः** प्राचीनैः—

'स मुनिर्लाञ्छितो मौञ्ज्या, कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥

इत्यादौ मौञ्जीपटादेः वस्तुतो भेदेऽपि अभेदविवक्षामाश्रित्य साधारणधर्मस्य हीनत्वमुक्तम् ।

**रसगंगाधरकृत**स्तु-उपमेयगतानामुपमानगतानां चासाधरणानामपि

## चित्रमीमांसा

तत्र वस्तुप्रतिवस्तुभावस्य विशेषणता यथा—

यान्त्या मुहुर्वलितकन्धरमाननं तत्
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥

## तत्त्वालोकः

धर्माणां सादृश्यमूलेनाऽभेदाध्यवसायेन साधारण्यकल्पनमित्युक्त्वा, उपमेयोपमानवृत्त्योर्धर्मयोः शाब्दत्वमार्थत्वं वा स्यात् । परन्तु एकस्य शाब्दत्वम्, अन्यस्यार्थत्वं माभूत् । तथा सति दोषत्वमेवेत्यप्याहुः । विस्तरस्त्वन्यत्र द्रष्टव्यः ॥

वस्तुप्रतिवस्तुभावापन्नस्य धर्मस्य बिम्बप्रतिबिम्बभावापन्नार्थविशेषणतयोपस्थितौ उदाहरणं प्रदर्शयति—तत्रेति । मालतीमवलोकयतो माधवस्योक्तिरियम् । यान्त्या – गच्छन्त्या, गमनसमयेऽपि मद्दर्शनौत्सुक्येन मुहुः—वारं वारं, वलितकन्धरं—परिवर्तितग्रीवम् अत एव आवृत्तवृन्तशतपत्रनिभं कुसुमबन्धननालअपवर्जितविकचपुण्डरीकादपि निरतिशयदीप्तियुक्तम्, तादृशपुण्डरीकतुल्यं वा आननं वहन्त्या, तया पक्ष्मलाक्ष्या क्षिप्तेष्वपि बहुषु कटाक्षेषु नीरन्ध्रतरुशाखानिरुद्धतयोपरुद्धेषु कश्चिदेकः कटाक्षः दैवान्मम हृदये, गाढं—दृढं निखातः विदार्य हृदयमन्तः प्रवेशितः । तस्यागमनसमये अवलोकनं मम हृदये लग्नमिवेत्यर्थः । अत्र गाढमित्यनेन पुनरुद्धरणाशक्यत्वं सूचयति । दृढसंलग्नतया इदानीमपि तथैव वर्तमानोऽन्तश्शल्यमिव व्यथ—

### चित्रमीमांसा

अत्र बिम्बप्रतिबिम्बभावेन निर्दिष्टयोः कन्धरा-वृन्तयोः वलितावृत्तशब्दाभ्याम् एक एव धर्मो विशेषणतया निर्दिष्टः । इति ।

विशेष्यता यथा —

'सा तेन जगृहे साध्वी हठात् साध्वसकम्पिता ।
वानरेणातिलोलेन वाताधूतेव वल्लरी ॥

### तत्त्वालोकः

यतीत्यभिप्रायः । स्मरः धनुर्गृहीत्वा तामेव लतामादाय तत्कटाक्षमेव नाराचं मन्मनसि लक्ष्ये कदाचिदप्यनुद्धरणीयं निखातवान् इति गूढाभिप्रायः । कीदृशः कटाक्षः ? अमृतेन विषेण च दिग्धः । पतनसमयेऽतिशयिताह्लादजनकत्वात्, इदानीमपि जीवनहेतुत्वाच्च अमृतेन दिग्धः । दुस्सह-विप्रयोगवेदनानिमित्तत्वात् विषेण दिग्ध इत्यर्थः ।

अत्र बिम्बप्रतिबिम्बभावमापन्ने ये कन्धरावृन्ते तयोः प्रत्येकं क्रमेण वलितत्वावृत्तत्वे वस्तुप्रतिवस्तुभावापन्ने विशेषणे । तदेतदाह–अत्रेति । अथ वस्तुप्रतिवस्तुभावापन्नधर्मस्य विशेष्यत्वे सति बिम्बप्रतिबिम्बभावापन्नस्य विशेषणतया प्रतीतिर्यत्र तादृशं लक्ष्यमुदाहरति–**विशेष्यतेति** । साध्व-सकम्पिता–भीतिसंजातकम्पा, सा साध्वी–पतिव्रता अतिलोलेन अतिचप-लेन वानरेण कपिना गृहीता वातेन–वायुना आधूता–कम्पिता वल्लरीव, मञ्जरीव, तेन पुरुषेण हठात् बलात्कृत्य, जगृहे- गृहीता ।

**चित्रमीमांसा**

अत्र साध्वसवातयोः विम्बप्रतिविम्बभावापन्नयोः कम्पिताधूतशब्दाभ्यामेक एव धर्मो विशेष्यतया निर्दिष्टः ॥

शुद्धबिम्बप्रतिबिम्बभावो यथा—'पाण्डयोऽयमंसार्पितलंबहारः' इत्यादि ।

**तत्त्वालोकः**

अत्र वस्तुप्रतिवस्तुभावमापन्नयोः कम्पिताधूतयोः विशेष्यत्वं साध्वसवातयोः विशेषणत्वम् बिम्बप्रतिबिम्बभावश्चेत्याह—अत्रेति ।

**ननु**—अत्र आननशतपत्रयोः प्रतीयमानेनैव धर्मेण सौन्दर्यादिना साम्यनिष्पत्तौ कन्धरावृन्तयोः बिम्बप्रतिबिम्बभावमूलतया आवृत्तवलितत्वयोः वस्तुप्रतिवस्तुभावमूलतया साधारण्यसंपादनेन किंफलमिति शंक्यम्—एकधर्मघटितसादृश्यापेक्षया बहुधर्मघटितसादृश्यस्य चमत्कारतिशयाधायकत्वात् तथा तत्संपादने प्रयत्नः ।

अन्यथा—यान्त्या मुहुरित्यत्र वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावयोः सर्वस्वकारादिभिः स्वीकारः अनुपयुक्तः स्यात् ।

**परन्तु**—एतावानयं विशेषः । उपमानोपमेयविशेषणानामभेदबुद्धेः क्वचित्सादृश्यप्रयोजकत्वं यथा—

'उत्खातद्रुममिव शैलं हिमहतकमलाकरमिव लक्ष्मीविमुक्तम् ।
पीतमदिरमिव चषकं बहुलप्रदोषमिव मुग्धचन्द्रविरहितम् ॥

इति **प्रवरसेन**विरचितपद्ये — शैले उत्खातद्रुमत्वं विलक्षणभूसंयोगरहि

### चित्रमीमांसा

अत्र हरिचन्दनबालातपौ, हारनिर्झरौ च बिम्बप्रति बिम्बभावेन निर्दिष्टौ ।

### तत्त्वालोकः

तत्वम्, समुद्र चोद्धृतत्वमिति विशेषात् तयोरभेदबुद्धिः सादृश्यप्रयोजिका। तयोर्धर्मान्तरप्रयुक्तसादृश्यमूलकचमत्काराप्रसिध्या उत्खातद्रुमत्वे सादृश्य प्रयोजकत्वानुसंधानं विना न प्रतीतेः पर्यवसानम् । 'यान्त्या मुहु' रिति पद्ये तु कन्धरावृन्तादीनामैक्यज्ञानाभावेऽपि सौन्दर्यादिना सादृश्यप्रतीतिपर्य- वसानं भवत्येव । अत्रापि उक्तानामैक्यज्ञानं सादृश्यज्ञाने उत्कर्षप्रति- पत्तिमात्रफलकमिति ।

अथ वस्तुप्रतिवस्तुभावाकरम्बितं बिम्बप्रतिबिम्बभावमुदाहरति— **शुद्धेति** । बिम्बप्रतिबिम्बभावे शुद्धता च वस्तुप्रतिवस्तुभावाकरम्बि तत्वमेव । पाण्ड्योऽयमिति पद्यं प्राग्व्याख्यातम् । अत्र कयोः बिम्बप्रति बिम्बभाव इत्यत्राह- **अत्रेत्यादिना** ।

**नन्वत्र** — हरिचन्दनादेर्धर्मित्वमेवेति कथं धर्मत्वमिति चेत् । धर्मिणोऽपि धर्मत्वमाश्रयाश्रयिभावाद्युज्यते । धर्मिविशेषप्रतिपादनोन्मुखाश्च धर्मिणोऽपि धर्मा इत्येवोच्यन्ते । पाण्ड्योऽयमित्यत्र च हाराङ्गरागयोरुपा- दानं हि पाण्ड्यस्य वैलक्षण्यसम्पादायैव । इन्दुमतीं प्रति पाण्ड्यस्य विलक्षणालम्बनविभावत्वेन प्रतिपिपादयिषितत्वात् । अन्यथा हि–पाण्ड्या द्रिराजयोः उपमाया उत्थानमेव न स्यात् । तादृशोपमासमुत्थाने च हारनिर्झरादीनां वस्तुतो भेदेऽपि अभेदविवक्षा अवश्यमाश्रयणीया । अत

श्लेषो यथा—

नरसिंह महीपाल समस्तोऽपि रिपुस्तव ।
पारावारसमानत्वं दधाति स्वपदच्युतः ॥ इति ।

तत्त्वालोकः

एव हारनिर्झरादिधर्मनिमित्तैवोपमा । तावन्मात्रेणैव उपमापर्यवसनात् । एवं च बिम्बप्रतिबिम्बभाव उपमानिर्वाहायाश्रयणीय एव ।

क्वचित् श्लेषेण धर्मे साधारण्यं संपाद्यत इत्युक्तं तस्य **विद्याधरोदाहृत**मुदाहरति - **श्लेषो यथेति** । हे नरसिंहमहीपाल—नरसिंहनामकनरपते । तव भवतः, समस्तोऽपि रिपुः निखिलोऽप्यरातिवर्गः, स्वपदच्युतः—स्वस्थानात् भ्रष्टः सन् स एव स्वपन् अच्युतो विष्णुर्यत्र सः क्षीरसागरः पारावारसमानत्वं अर्णवसादृश्यं दधाति प्राप्नोति । अत्र

'पारावार इवाभाति प्रमादात्स्वपदच्युतः'

इति पठो यदि स्यात् तदा स्वपदच्युत इत्यस्य उपमानांशेऽन्वेतुं शक्यो भवेत्, अन्यथा एकदेशान्वयः प्रसज्येत तदा तु पदार्थः पदार्थेनान्वेति, नतु पदार्थैकदेशेन इति न्यायविरोधस्स्यात् ।

अत्र वैरिषु स्वपदच्युतत्वं स्वस्थानभ्रष्टत्वरूपं, समुद्रे स्वपदच्युतविशिष्टत्व रूपमिति वैरिसमुद्रयोः धर्मे यद्यपि न साधारण्यम्,

अथापि एकपदोपात्तस्यानेकस्याऽप्यर्थस्यैकवद्भासमानत्वम् अनुभवसिद्ध मिति श्लेषमूलकाभेदाध्यवसायेन स्वपदच्युतत्वमभिन्नमिति कृत्वा तन्निमित्तकं सादृश्यं वैरिसमुद्रयोः परिकल्प्यते इति भावः ।

चित्रमीमांसा

उपचरो यथा —

उद्भवन्तमुदितार्चिषं ततो
　भानुमन्तमिव हेमभूभृतः ।
पङ्कजैरिव कुमारमीक्षणैः
　विस्मयेनविकचैःपपुर्जनाः ॥ इति ।

तत्त्वालोकः

क्वचिदुपचारेण धर्मे साधारण्यं संपाद्यत इत्युक्तम् तस्योदाहरणमाह —**उपचारो यथेति** । उपचारो नाम-गुणवृत्तिः लक्षणा । उपचरणमतिशयितो व्यवहारः इत्यर्थः । **उक्तं चान्यत्र**-'उपचारो नाम अत्यन्तविशकलितयोः पदार्थयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनम्' इति । गौणी लक्षणा उपचारपदवाच्येति फलति । सामान्यतो लोकेऽपि गौणे ह्यर्थे प्रयुज्यमानश्शब्दः मुख्यार्थारोपेण प्रवर्तते । स च आरोपोऽन्यथानुपपत्तिमूलः । सर्वथा ह्यन्यथानुपपत्तिः बलवती । अत एव गौणशब्दप्रयोगेष्वर्थः विपर्यस्यति न तु शब्दः । यथा 'गौर्वाहीकः' इत्यादौ ।

**उद्भवन्तमिति**—जनाः-प्रजाः हेमभूभृतः-कैलासात् , उद्भवन्तम् उद्यन्तम् उदितार्चिषम्-उद्गतरोचिषम् , भानुमन्तमिव प्रभाकरमिव बालसूर्यमिवस्थितं, कुमारं राजसुतं, पङ्कजैरिव स्थितैः-(रक्त) पुण्डरीकैरिव स्थितैः विकचैः विकासिभिः, ईक्षणैः नेत्रैः, विस्मयेन-आश्चर्येण पपुः आस्वादयामासुः इत्यर्थः मुखकमलावलोकनेन आनन्दमनु बभूवुरितियावत् ।

अत्र पङ्कजेक्षणयोरुपमा । तत्प्रयोजकश्च धर्मः विकचपदोपात्तः

चित्रमीमांसा

अत्र विकासः पुष्पधर्मः उपमेयेषु वीक्षणेषूपचरित इति ।

समासभेदाश्रयणं यथा—

तया विवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतस्सलिलश्शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ इति ।

तत्त्वालोकः

विकासः, स च उपमानभूतपुष्पमात्रवृत्तिः, न पुनरुपमेये ईक्षणेऽथापि पुष्पधर्मस्य विकासस्य ईक्षणे उपचारः । आनन्दजनकत्वात् । ततश्च आनन्दे विकासाभेदाध्यवसायेन पङ्कजेक्षणयोस्साहश्यप्रतीतिः । अन्यनिमित्तकसाहश्यस्याप्रसिद्धेः , तस्मात् कश्चिद्धर्मः साहश्यनिर्वाहकः । कश्चित्तु तदुत्कर्षप्रयोजक इत्यभिप्रायेणाह-**अत्रेति** ।

क्वचित् धर्मप्रतिपादकस्यैकस्यैव पदस्योपादानेऽपि समासभेदाश्रयणेन धर्मे साधारण्यं संपाद्यम् उपमानिर्वाहयेत्याह— **समासभेदेति** । उदाहरति **तया विवृद्धेति** । विवृद्धाननचन्द्रकान्त्या शरदा संसृज्यमानो लोकः यथा प्रफुल्लचक्षुःकुमुदः, प्रसन्नचेतस्सलिलश्च भवति, तथा विवृद्धाननचन्द्रकान्त्या तया कुमार्या संसृज्यमानः शिवः प्रफुल्लचक्षुःकुमुदः, प्रसन्नचेतस्सलिलश्चाभूत् इत्यन्वयक्रमः ।

अत्र लोक–शिवयोः उपमाप्रधानीभूता । तद्विशेषणयोः शरत्कुमार्योः उपमा तदुपसर्जनीभूता । आननमिव चन्द्रः आननचद्रः, आनचन्द्रस्य कान्तिः

तत्त्वालोकः

आननचन्द्रकान्तिः, विवृद्धा आननचन्द्रकान्तिः यस्याः सा तया विवृद्धानन चन्द्रकान्त्या शरदा संसृज्यमानः संबन्धमनुप्राप्तः लोकः–जनः यथा येन प्रकारेण चक्षूंषीव कुमुदानि चक्षुःकुमुदानि प्रफुल्लानि चक्षुःकुमुदानि यस्य सः प्रफुल्लचक्षुःकुमुदः, एवं चेत इव सलिलम्–चेतस्सलिलम् । प्रसन्नं चेतस्सलिलं यस्य सः प्रसन्नचेतस्सलिलश्चभवति, तथा आननं चन्द्र इव आननचन्द्रः आनन चन्द्रस्य कान्तिः, आननचन्द्रकान्तिः विवृद्धा आननचन्द्रकान्तिर्यस्यास्सा तया–विवृद्धाननचन्द्रकान्त्या, तया कुमार्या–पार्वत्या, संसृज्यमानः सङ्गतः शिवः ईश्वरः, चक्षूंषि कुमुदानीव चक्षुःकुमुदानि । प्रफुल्लानि चक्षुःकुमुदानि यस्य सः प्रफुल्लचक्षुःकुमुदः । एवं चेतः सलिलमिव चेतस्सलिलम् प्रसन्नं चेतस्सलिलं यस्य सः, प्रसन्नचेतस्सलिलश्च अभूत् इत्यन्वयार्थः । अव्याजसुन्दरमुखकमलया पार्वत्या सङ्गतस्य परमेश्वरस्य तदवलोकनेन चक्षुरानन्दः चित्तप्रसादश्च समजनि इति यावत् ।

एतेनेदमुक्तं भवति—लोको यथा ग्रीष्मवर्षासमययोः वातातपवृष्टि-समुद्भूतधूलिप्रक्षेप–तापाधिक्यजलबिन्दुनिपातभिया संकुचितनेत्रहृदयश्च भूत्वा शरदागमे सति मेघानाच्छादिताकाशदेशोदितराकाचन्द्रचन्द्रिका प्रसरशीतलितहृन्नेत्रः भवति, तथा कामदेहदाहप्रभवतृतीयनेत्रोद्भूत दहनताप संकुचितनेत्रहृदयः शिवः राकानिशाकरप्रतिमाप्रतिमशोभानपार्वती समागमगम सञ्जातशीतलनेत्रहृदयश्चाभूदिति ।

शरत्समयसङ्गतलोकदृष्टान्तेन च अयमर्थो ध्वन्यते—ग्रीष्मे वातेन प्रक्षिप्तभूरेणूनि, तापेन क्षीणजलानि च सरांसि भवन्ति । तथा वर्षासु मेघो-दरविनिर्मुक्ताभिः वर्षधाराभिः समं विषं मुञ्चन्तो नागाः जलाशयेषु प्रपतन्ति । तेन च अनुपभोग्यं सकलुषं च जलं भवति । शरदागमे च अगस्त्यनक्षत्रे

चित्रमीमांसा

अत्र विवृद्धाननचन्द्रकान्त्येति विशेषणं देव्यां शरदि च समासभेदेन प्रवर्तते इति ।

मिश्रणेषु अनुगामित्वबिम्बप्रतिबिम्बभावयोः

मिश्रणं यथा—

तत्त्वालोकः

उदिते जलं विशुध्यति। 'अगस्त्योदये विषशुद्धिः' इति बाणभट्टश्च । एतेन प्रकृतिप्रसादे जनानां चक्षुः मनश्च प्रसन्नं विकसितं च भवतीत्यनुभवः प्रदर्शितो भवति ।

अत्र शरदपर्णयोः उपमायां धर्मे न साधारण्यम् । यतश्च शरदि चन्द्रकान्तिप्रकर्षः । अपर्णायां आननकान्तिप्रकर्षः इति भेदात् । इत्थं सति प्रवृद्धाननचन्द्रकान्त्येति पदप्रतिपाद्यस्य नैकरूपत्वमिति चेत्, उच्यते—शरत्पक्षे आननमिव चन्द्र इति, विशेषणसमासेनोत्तरपदार्थप्राधान्यं संपाद्य चन्द्रकान्तेः, अपर्णापक्षे आननं चन्द्र इवेति उपमितसमासाश्रयणेन पूर्वपदार्थप्राधान्यं संपाद्य आननकान्तेः समासभेदलब्धार्थद्वयस्य अभेदाध्यवसायेन साधारण्यं संपाद्य उपमा निरूह्यत इति भावः । तदेतदाह-अत्रेति ।

रसगंगाधरकारस्त्वेवंविधमुदाहरणं नैव प्रदर्शितवान् । तस्य चैवमादौ श्लेषेणैव निर्वाह इति अभिप्रायात् ॥

क्वचिदेषां यथासंभवं मिश्रणेनेति प्रतिज्ञानुगुण्येन तेष्वपि अनुगामित्व बिम्बप्रतिबिम्बभावयोः मिश्रणे सति धर्मे साधारण्यं संपाद्यत इत्युदाहरति –मिश्रणेषु इत्यादिना ।

चित्रमीमांसा

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् ।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥ इति ।

अत्र अधृष्यत्वमभिगम्यत्वञ्च नृपगुणानां यादोरत्नानां च बिम्बप्रतिबिम्बभावमपेक्ष्य लब्धात्मकस्साधारणो धर्मः । इति ।

तत्त्वालोकः

सः–दिलीपः उपजीविनाम्–आश्रितानाम्, भीमैः-भीतिकरैः तेजः प्रतापादिभिः, कान्तैः–चित्ताकर्षकैः कुलशीलदाक्षिण्यादिभिश्च, नृपगुणैः राज्ञामावश्यकैः गुणैः [युक्तः] यादोभिः–जलीयैः क्रूरसत्त्वैः, रत्नैः उत्तमवस्तुभिश्च युक्तः अर्णव इव अधृष्यश्च–अनभिभवनीयश्च, अभिगम्यश्च–आश्रयणीयश्च बभूव आस इत्यर्थः ।

अत्र दिलीपार्णवयोरुपमा निबध्यते । तत्र अधृष्यत्वं, अभिगम्यत्वं च उपमानेऽर्णवे, उपमेये दिलीपे चैकरूपेणान्वीयमानोऽनुगामिधर्मः । परंतु सः स्व (अधृष्यत्वाभिगम्यत्व) प्रयोजकविषयोल्लेखरहितः उपमाप्रयोजको न भवति । अतः तत्प्रयोजकानां नृपगुणानां, यादोरत्नानां च सादृश्यमूलकमभेदमध्यवस्य अनुगामितां संपाद्य दिलीपार्णवयोरुपमा सिद्ध्यतीत्याह–अत्रेति । एतदुक्तं भवति । बिम्बप्रतिबिम्बभावमूलकतया लब्धात्मनो धर्मस्य क्वचिदनुगामित्वमिति ।

## चित्रमीमांसा

अनुगामित्वश्लेषयोर्मिश्रणं यथा—

गते तव भ्रातरि बत्स पञ्चतां
चिराय नश्चान्द्रमसं कुलं महत्।
अदृष्टसंतानतया न शोभते
वनं हरेः प्राङ्मथनादिवोदधेः॥

## तत्त्वालोकः

एवमनुगामित्व-श्लेषयोस्सांकर्यप्रयुक्त धर्मे साधारण्यं क्वचित्संभवतीत्युदाहरति-अनुगामित्वेत्यादि।

हे वत्स! इत्यनुकम्पाकृतं संबोधनम्। तव भ्रातरि-भवत्सोदरे पञ्चतां गते-मृत्युवशं गते, चिराय-बहोःकालादपि, अदृष्टसंतानतया-वंशविच्छेदसंभावनया, नः-आस्माकीनं, षष्ठीविभक्त्या बहुशाखतयावततत्वं पारिशुध्यं च सूचितं भवति। चान्द्रमसं चन्द्रसंबन्धि, तेन त्रैलोक्यविख्यातत्वं सूचितं भवति, अत एव महत् कुलं-वंशः, उदधेः समुद्रस्य मथनात् प्राक् अदृष्टसन्तानतया-अदृष्टकल्पवृक्षतया हरेः इन्द्रस्य वनम्-नन्दनवनम् यथा न शोभते तथा न शोभते इत्यर्थः।

'विष्णुः चन्द्रेन्द्रवातार्कयमाश्वांशुशुकाग्निषु।
कपिभेकाहिसिंहेषु हरिर्ना कपिले त्रिषु॥ इति वैजयन्ती।

अत्र चन्द्रवंशस्य नन्दनोद्यानस्य चोपमा निबद्धा। तत्र च साधारणो धर्मः अपेक्षितः। स च धर्मः सन्तानादर्शनं तच्च चन्द्रवंशेऽदृष्टसन्ततिरूपं, नन्दनेऽदृष्टपारिजातत्वरुपमिति भेदात् कथं साधारण्यम्?

चित्रमीमांसा

अत्र संतानशब्दश्लेषमपेक्ष्य लब्धात्मकं शोभारहितत्वं साधारणो धर्मः ॥

तटिदुज्ज्वलहेतिमुत्तरः
कुरुराजध्वजिनीं विलोकयन् ।
प्रिययेव भिया सकम्पया
परिरेभे धृतघर्मपाथसा ॥

तत्त्वालोकः

न च सन्तानपदवाच्यतावच्छेदकसंतानत्वमेकमेवेति कुतो न साधारण्यमिति वाच्यम् । सैन्धवादिपदवत पुत्रत्वं पारिजातत्वं च वाच्यतावच्छेदकं न सन्तानत्वमिति न साधारण्यम् । अत एव श्लेषमूलकः अभेदः तत्र तत्र अध्यवसीयते । तथा च संतानशब्दे श्लेषमूलकमभेदमध्यवस्य अदृष्टसंतानत्वस्य चन्द्रवंश — नन्दनोद्यानोभयसाधारण्यं इति तन्मूलतया 'न शोभत इति' शोभारहितत्वं साधारणोधर्मः इत्युपपादयति–**अत्रेति** ।

क्वचित् अनुगामित्वोपचारयोस्सम्मिश्रणेन धर्मे साधारण्यं संपाद्य उपमा निरूह्यत इत्युदाहरति— **तटिदिति** । उत्तरः- विराटसूनुः, तटिदिव सौदामिनीव उज्वला–अप्रधृष्या हेतिः–आयुधविशेषः यस्याः सा ताम् कुरुराजस्य–धार्तराष्ट्रस्य भीष्मद्रोणादिभिः युद्धविशारदैः अधिष्ठितां ध्वजिनीं सेनाम्, विलोकयन्नेव पश्यन्नेव, धृतघर्मपाथसा–सस्वेदया अत एव सकम्पया- वेपथुमत्या, प्रिययेव–वल्लभयेव सकम्पया भिया–भीत्या, परिरेभे परिष्वक्तः । उत्तरगोग्रहणेऽहमहमिकया उत्तरः बृहन्नळां स्वसारथ्ये नियुज्य युद्धायोद्यतः भीष्मादीन् युद्धविशारदान् विलोक्य भीतः सस्वेदं सकम्पश्च जात इति भावः ।

## चित्रमीमांसा

**अत्र सकम्पत्वानुगामिधर्मापेक्षया लब्धचारुभावं परिरंभकर्तृत्वं भीत्यामुपचरितम्। इति।**

## तत्त्वालोकः

लोकेऽपि भीत्या कम्पमानाः पार्श्ववर्तिनः परिरंभन्ते तदेतदुपवर्णितं

'त्रसत्तुषाराद्रिसुताससंभ्रमस्वयंग्रहाश्लेषसुखेन निष्क्रयम्।'

इति **माघे**। अत्र परिरंभश्च आलिङ्गनं तच्च चेतनव्यापारः। भीतिश्च न चेतनात्मिकेति तस्याः उक्तव्यापारकर्तृत्वं नोपपद्यत इति कविर्जानात्येव। अथापि स्वायत्ते शब्दप्रयोगे गौणशब्दं प्रयुञ्जानस्य प्रयोजनप्रतिपिपादयिषा अस्त्येव। तच्च प्रयोजनं भीतेः अत्यन्तमपरित्याज्यत्वरूपम्। एवं च चेतनव्यापारस्य परिरंभस्य उपचारेण प्रत्यायनमपि सकम्पत्वरूपानुगतधर्म संबन्धनिमित्तकचारुत्वमिति अनुगामित्वोपचारयोस्सांकर्येण प्रियाभियोः उपमायां साधारण्यं धर्मं संपाद्यत इत्युपपादयति — **अत्रेति**।

अत्र भीरोः विराटसुतस्यः भयानकहेतिधारिकुरुसेनावलोकनजन्यः कंपादिनाऽनुभावितः त्रासाख्यो (व्यभिचारी) भावः ध्वन्यते। तस्य च प्रियोपमा अलंकारः।

**यद्यपि**–उपमया वाच्योऽर्थोऽलंक्रियते। तथापि तस्य तदेवालंकरणं यद्व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधानमिति। वस्तुतो ध्वन्यात्मैवालंकार्यः। कटककेयूरादिभिरपि हि शरीरसंयोगिभिश्चेतन आत्मैवालंकार्यः। नहि चेतनापेतं शवशरीरं कुण्डलाद्युपेतमपि शोभते, अलंकार्यस्याभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति अलङ्कार्यत्वयोग्यताया अभावात्। न च

चित्रमीमांसा

अनुगामित्वसमासभेदाश्रयणयोर्मिश्रणं यथा--

श्येनपक्षपरिधूसरालकाः
सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो
नो बभूवुरवलोकनक्षमाः ॥

तत्त्वालोकः

देहस्य किंचिदनौचित्यम् इति वाच्यम्; वस्तुत तादृश आत्मैवालंकार्यः न । अहमलंकृत इत्यभि मानात् । अत एव ध्वनिकृता—

'रभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलंकृतीनां सर्वासामलंकारत्वसाधनम् ॥'

इत्युक्तं संगच्छते ॥

अथ अनुगामित्वसमासभेदाश्रयणयोस्सांकर्ये सति साधारण्यमुपपादयितुम् उदाहरणं प्रदर्शयति अनुगामित्वेत्यादि । दिशः-आशाः, अवलोकनक्षमाः–द्रष्टुमर्हाः नो बभूवुः–नाभवन् । का इव स्थिताः ? अङ्गना इव स्थिताः । कीदृश्यः दिशः ? श्येनपक्षा एव परिधूसराः अलकाः यासां ताः पक्षे, श्येनपक्षा इव परिधूसराः अलकाः यासां ताः, तथा सान्ध्यमेघा एव रुधिरार्द्राणि वासांसि यासां ताः । पक्षे, सान्ध्यमेघा इव रुधिरेण रक्तेन आर्द्रं वासः यासां ताः । रजो धूलिः असामस्तीति रजस्वलाः । 'रजः कृष्यासुतिपरिषदो वलच्' [पा.सू.५-२-११२] इति वलच् प्रत्ययः । पक्षे, रजस्वलाः ऋतुमत्यः ' स्याद्रजः पुष्पमार्तवम् ' इति अमरः । एकत्र दृष्टिदोषात् , अपरत्र शास्त्रदोषाद् दर्शनानर्हता ।

**चित्रमीमांसा**

अत्र श्येनपक्षपरिधूसरेत्यादिविशेषणयोः समास भेदाश्रयेण साधारण्यमपेक्ष्य अवलोकनाक्षमत्वमनुगामिधर्मः चारुतातिशयं पुष्णाति ॥

वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा—

लिङ्गैर्मुदः संवृतविक्रियास्ते
ह्रदाः प्रसन्ना इव गूढनक्राः ।
वैदर्भमामन्त्र्य ययुस्तदीयां
प्रत्यर्प्य पूजामुपदाच्छलेन ॥

**तत्त्वालोकः**

अत्र अङ्गनादिशोः उपमा निबध्यते । तयोश्च साधारणधर्मोऽपेक्षितः । स च अवलोकनानर्हत्वम् । तच्च कारणमन्तरा न घटते । कारणं चात्र श्येनपक्षपरिधूसरेत्याद्युपात्तम् । तच्च दिक्षु अलकाभिन्नतया अवस्थितश्येनपक्ष परिधूसरत्वादि, अंगनासु श्येनपक्षसदृशधूसरालकवत्वादीति भेदात् तत्कथं साधारण्यं इति चेत् रूपकोपमितसमासद्वयलब्धार्थस्याभेदाध्यवसायेन साधारण्यं संपाद्य अवलोकनानर्हत्वमनुगामिधर्मः चारुतातिशयं पुष्णातीति समास भेदाश्रयणस्य अनुगामित्वोपकारत्वमिति उपपादयति—अत्रेति ।

वस्तुप्रतिवस्तुभावबिम्बप्रतिबिम्बभावयोः मिश्रणेनापि धर्मे साधारण्यं परिदृश्यत इत्युदाहरति--वस्तुप्रतिवस्त्वित्यादिना । मुदः हर्षस्य, लिङ्गैः चिह्नैः मुखनेत्रप्रसादकपटहासपुलकोद्गमप्रियोक्त्यादिभिः, संवृतविक्रियाः निगूहितविकाराः, ते नृपाः, प्रसन्नाः बहिर्निर्मलाः, गूढनक्राः अन्तर्लीन

**चित्रमीमांसा**

अत्र बिंबप्रतिबिंबभावापन्नयोः क्रोधनक्रयोः, संवृत गूढशब्दाभ्याम् एक एव धर्म उक्त इति बिम्बप्रतिबिम्ब भाववस्तुप्रतिवस्तुभावः। सन्तोषचिह्नप्रसादयोः बिम्ब प्रतिबिम्बभावश्च ॥

**तत्त्वालोकः**

ग्राहाः, ह्रदा इव अतलस्पर्शजला इव, तम् भोजनृपतिम् आमन्त्र्य आपृच्छ्य, तदीयां भोजाय प्रदेयां, पूजां सपर्यां उपदाच्छलेन उपायनमिषेण प्रत्यर्प्य समर्प्य, ययुः निर्जग्मुः इत्यर्थः ॥

अत्र ह्रदानां नृपाणां चोपमा निबध्यते। तद्विशेषणयोः नक्रक्रोधयो बिम्बप्रतिबिम्बभावः। नक्रक्रोधविशेषणयोः संवृतगूढशब्दार्थयोः एकरूपत्वात् वस्तुप्रतिवस्तुभावः। सन्तोषचिह्नप्रसादयोः बिम्बप्रतिबिम्बभावश्च निबद्ध इति वस्तुप्रतिवस्तुभाव–बिम्बप्रतिबिम्बभावसांकर्यनिबन्धनं साधारण्यं धर्मे संपाद्य उपमा निरूह्यत इत्याह–अत्रेति। अत्र विशेषणतया विशेष्यतया च बिम्बप्रतिबिम्बभावकरम्बितयोर्धर्मयोः वस्तुप्रतिवस्तुभाव इति तु परं विशेषः।

अत्रेदमवधेयम्—ननु चात्र सन्तोषचिह्न–प्रसादयोः बिम्बप्रतिबिम्ब भावोऽभिहितः तत्कथमुपपद्यते? प्रसादस्यापि सन्तोषचिह्नरूपत्वेन भेदाऽभावात्। नहि सामान्यविशेषयोः भेदोऽभ्युपेतः। 'निर्विशेषं न सामान्यम्' इति न्यायात्। अत एव–'अनन्तरत्नप्रभवस्ये'ति प्रागुदाहृत पद्ये दोषगुणविशेषणां कलंककिरणानां तद्भिन्नत्वाभावादित्युक्तम् इति चेत्–

चित्रमीमांसा

श्लेष-बिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा—

पार्थनाशमुदिता नृपात्मजाः
बाष्पमूहुरभिनीतमन्यवः ।
आतपक्वथितपाथसो बहिः
शीतगर्भसलिला इव ह्रदाः ॥

तत्त्वालोकः

नृपेषु प्रसादव्यतिरिक्तस्यापि पुलकोद्गमप्रियोक्त्यादीनामपि सन्तोषचिह्नान संभवात् पुलकोद्गमादिप्रसादयोः भेदं मनसि निधायैव बिम्बप्रतिबिम्बभावोक्तिरिति दीक्षिताशयात् ॥

वस्तुतस्तु—इन्दुमतीवरणार्थमागतैः तदलाभात्कुपितैः कपटहास-मुखप्रसादप्रियोक्त्यादीनामेव प्रत्यक्षत्वं, न तु रोमाञ्चादीनां तदानीं कञ्चुकितत्वादिति सन्तोषचिह्नप्रसादस्य-हृदयगतप्रसादस्य च वस्तुप्रतिवस्तुभावकल्पनं कृत स्याद्यदि तदा सुष्टूक्तं स्यादिति विभावनीयम् । अन्यथा मुखनेत्र प्रसादयोः परित्यागः कृतो भवेत् ॥

अथ श्लेषबिम्बप्रतिबिम्बभावयोर्मिश्रणेन धर्मे साधारण्यं संपादयितव्यमिति तदुदाहरति-श्लेषेत्यादिना । नृपात्मजाः नृपसुताः, पार्थस्य अर्जुनस्य नाशेन विनष्ट इति निश्चयात्मकेन, ज्ञानेन मुदिताः हृष्टाः सन्तः, अभिनीतमन्यवः आविष्कृतशुचः 'मन्युर्दैन्ये क्रतौ क्रुधि' इति कोषः । वस्तुतः अनाविष्कृतक्रोधाः बहिः उपरि आतपक्वथितपाथसः दिवाकरकिरण सन्तप्तजलाः, अधः शीतगर्भसलिलाः शैत्ययुक्ततोयाः बाष्पमिव अम्बु

चित्रमीमांसा

अत्र बाष्पशब्दे श्लेषस्य नृपात्मजह्रदविशेषणानां बिम्बप्रतिबिम्बभावमपेक्ष्य चारुता इति ॥

उपचार बिम्बप्रतिबिम्बभावयोर्मिश्रणं यथा–

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रितौ तरौ ।

तत्त्वालोकः

धूममिव बाष्पम् अश्रु ऊहुः अधुः आविश्चक्रुरित्यर्थः । 'बाष्पोऽश्रुण्यम्बुधूमे च' इति वैजयन्ती ।

संगरे पार्थचापच्युतसायकवेधव्यथामसहमानाः तत्परिपंथिनः कदाचित्पार्थो विनष्टः इति श्रुत्वा बहिः दुःखाश्रु मुञ्चन्त इवाभिनीय आनन्दजमेवाश्रु मुमुचुः इति भावः ॥

अत्र नृपात्मज–ह्रदानामुपमा निबध्यते । तत्र च उभयानुगतो धर्मोऽपेक्षितः । स च उपमेये पार्थनाशमुदितत्वाभिनीतमन्युविशिष्टबाष्पत्यागरूपः । उपमाने बहिः आतपक्वथितपाथस्त्वअन्तश्शीतगर्भसलिलविशिष्ट–बाष्पत्यागरूपः । तत्र द्वयोर्द्वयोः बिम्बप्रतिबिम्बभावः । बाष्पशब्दबोध्यस्य तु उपमेयेऽश्रुरूपत्वं, उपमानेऽम्बुधूमरूपत्वमिति भेदेऽपि एकपदोपात्तस्य अनेकस्याप्यर्थस्य एकवद्भासमानत्वस्य अनुभवसिद्धत्वात् , तदनुरोधेन श्लेषमूलकमभेदमध्यवस्य बाष्पवहनमभिन्नमिति धर्मे साधारण्यं इति बाष्पशब्दे श्लेषेण, अन्यत्र बिम्बप्रतिबिम्बतया च साधारण्यादित्याह–अत्रेति ।

उपचारबिम्बप्रतिबिम्बभावयोर्मिश्रणे सति धर्मे साधारण्यं सम्पाद्यत इत्युदाहरति–उपचारेति । चण्डी, चणदाने 'अमन्ताड्डः'[उ.१–११९]

चित्रमीमांसा

उद्ववामेन्द्रसिक्ता भूः बिलमग्नाविवोरगौण इति ।

अत्राऽऽश्वासितेन्द्रसिक्तेत्यनयोः वरोरगाणां च विम्बप्रतिविम्बभावम् अपेक्ष्य उद्वमनमुपमानोपमेयपयोर्द्वयोरप्युपचरितम् । मुख्यार्थस्थ द्वयोरप्यसंभवात् ।

तत्त्वालोकः

इति डप्रत्ययः । बहादिषु चण्डशब्दपाठाद्वा ङीष् । 'चण्डी कात्यायनी देव्यां हिंस्राकोपनयोषितोः' इति मेदिनी । इति उणादिषु । धातुवृत्तिकारस्तु–चडि कोपे 'कृदिकारदक्तिनः' [ग. सू. ५०] इति ङीष् इत्याह। । चण्डी=अत्यन्तकोपना, सा किल कैकयी, अतिकोपनात्वेन प्रसिद्धेत्यर्थः किलेति वार्तायां, 'किलसंभाव्यवार्तयोः । हेत्वरुच्योरलीके च' इति रूपमालायाम् । भर्ता दशरथेन, आश्वासिता अनुनीता सती, तत्संश्रुतौ तेन भर्ता, संश्रुतौ–प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता पर्जन्येनाभिवृष्टा, भूः–पृथिवी बिले–वल्मीकादौ मग्नौ–अन्तर्गतौ, उरगाविव सर्पाविव, उद्ववाम–उज्जगारेत्यर्थः ।

अत्र भुवः कैकेय्याश्च उपमा प्रतिपाद्यते । तयोर्विशेषणीभूतो धर्मः-इन्द्रसिक्तत्वं आश्वासितत्वं च, तथा उरगौ वरौ च, तेषां च नोभयोरेकारूपेण वर्तनम् । स्वरूपभेदात् । अथापि बिम्बप्रतिबिम्बभावमूलकतय अभेदमध्यवस्य तन्मूलतया उद्वमने साधारण्यं सम्पाद्यम्, तस्य च न-मुख्यस्य संभवः स्वभात् । किन्तु अन्तस्स्थापयितुमशक्यस्य बलात्कारेबा। हिरुद्घाट नाभिप्रायेणौपचारिकः प्रयोगः । औपचारिकं च उद्वमनमुपमानोपमेययोरुभयोरपि तदेतदाह- अत्रेत्यादिना ।

चित्रमीमांसा

मुख्यार्थे तस्य ग्राम्यत्वाच्च । इति ।

यदाहुः-निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते ॥ इति ॥

तत्त्वालोकः

नन्वेवं तर्हि—अत्र अमुख्यस्य उद्वमनस्य प्रत्यायनमनुचितं यत्र तादृशं मुख्यमुद्वमनं संभवति तत्रैव तत्प्रत्यायनस्योचितत्वादित्याशंकायाम् आह—**मुख्यार्थेति ।** तस्य उद्वमनपदस्य, मुख्यार्थे मुख्यार्थभूतवमनार्थपरिग्रहे इत्यर्थः, भावप्रधाननिर्देशात् मुख्यार्थत्वे इत्यर्थपरः । ग्राम्यत्वाच्च अविदग्ध जनव्यवहार्यत्वापाताच्चेत्यर्थः उक्तार्थे दण्डिनः संमतिं प्रदर्शयति-**यदाहुरिति ।**

निष्ठ्यूतम्, उद्गीर्णम्, इत्येवमादि अविदग्धजनव्यवहारार्हमपि, गौण-सादृश्यमूलकलक्षणाश्रितम् । अमुख्यार्थे प्रयुक्तं अतिसुन्दरम्—अतीव रम्यम् अन्यत्तु मुख्यया प्रयुज्यमानं तु, ग्राम्यकक्षां ग्राम्यतादोषपक्षं विगाहते—प्राप्नोतीत्यर्थः ॥

अयं भावः-यदा मुख्यार्थबोधतात्पर्येण उद्वमनादिशब्दाः प्रयुज्यन्ते तदा तद्घटितवाक्येषु ग्राम्यता भवति । यदा तु त एव शब्दाः गौणवृत्ति-समाश्रयेण प्रयुज्यन्ते तदा चमत्कारमेव विदधते इति । एवं चात्र गौण-लक्षणया प्रयुक्तः उद्वमनशब्दः न दोषावह इति ॥

मुख्यार्थस्य परिग्रहे उद्वमनादीनि पदानि शारीरकफादिधातु-निस्स्रावणादिरूपार्थे शक्तानीति एवमादीनां न सहृदयावर्जकत्वं यथा 'निष्ठी-

चित्रमीमांसा

एवमन्यदपि द्वयोर्मिश्रणमूह्यम् ।।

अनुगामित्वबिम्बप्रतिबिम्बभावसमासभेदाश्रयाणां मिश्रणं यथा --

नृपं तमावर्तमनोज्ञनाभिः
सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं
स्रोतोवहा सागरगामिनीव ॥ इति ।

तत्त्वालोकः

वति वधूः' इत्यादौ । एषामेव निस्सारणादिसादृश्यमूलतया प्रयोगे सहृदयावर्जकत्वमेवेति चात्र विभाव्यम् ।

इत्थं द्वयोर्मिश्रणेन साधारण्ये उदाहरणसप्तकं प्रदर्श्य इदमनुगामित्वं-वस्तुप्रतिवस्तुभावयोः, समासभेदश्लेषयोः, समासभेद-बिम्बप्रतिबिम्बभावयोः,-वस्तुप्रतिवस्तुभावश्लेषयोः, समासभेदोपचारयोः, समासभेदवस्तुप्रतिवस्तुभाव-योः, श्लेषोपचारयोः च उपलक्षणमित्यभिप्रायेणाह-**एवमिति** ।

त्रयाणां मिश्रणेन साधारण्यं संक्षेपेण प्रदर्शयितुमुपक्रमते-**अनुगामित्वेति** । आवर्त इव-अम्भसां भ्रम इव मनोज्ञानाभिः यस्याः सा अन्यस्य-स्वयंवरे उपस्थितेषु सुषेणं विहाय अन्यस्य अजस्येति यावत् वधूः पत्नी, भवित्री-भविनी, सा-इन्दुमती, महीधरं- मह्याः धरः तं सुषेणाख्यं नृपं आवर्त एव मनोज्ञा नभिर्यस्यास्सा, सागरगामिनी सागरगन्त्री, स्रोतोवहा नदी, मार्गवशात्-मध्येमार्गमित्यर्थः । उपेतं सन्निहितं महीधर मिव पर्वतमिव व्यत्यगात् अतीयायेत्यर्थः ।

तत्त्वालोकः

अत्र 'व्यत्यगा'दित्यनुगामिधर्मः । 'अन्यवधूर्भवित्री' 'सागरगामिनी'त्यनयोः बिम्बप्रतिबिम्बभावः । 'आवर्तमनोज्ञनाभिः' इत्यत्र समासभेदाश्रयणमित्येतेषां मिश्रणम् ॥

तत्त्वालोकः

नचात्र महीं धरतीति विग्रहे कुम्भकार इतिवत 'कर्मण्यण्' [पा.सू. ३-उ-१] इति अणि महीधार इति भवितव्ये कथं महीधरः इति वाच्यम्, धरतीति धरः पचादित्वादच् ततः मह्याः । रः इति विग्रहे षष्ठीसमासे महीधरः इति रूपं साधु भवति । महीं धरतीति विग्रहे त्वसाध्वेव । उपपदसमासे सति वैरूप्यप्रसङ्गात् । अत एव 'तैः महींधरादयो व्याख्याताः' इति वामनः (का. सू. अधि ५-अ.सू २७) ।

अत्र इन्दुमतीनद्योः उपमानोपमेयभावः । तत्र साधारणधर्मश्च अतीत्य गमनं तच्च केवलं यद्यप्यनुगामिधर्मः । अथापि सहेतुकमेवातिक्रम्य गमनं चारुत्वहेतुः । हेतुभूतश्च धर्मः उपमाने सागरगामित्वं, उपमेये च अन्यवधूभवनयोग्यता । तयोश्च नैकरूपता । अतश्च तयोर्बिम्बप्रतिबिम्बभावः ।

एवम् इन्दुमत्यां नदीसाम्यायोपात्तं आवर्तमनोज्ञनाभित्वमुभयत्र भिन्नमपि समासभेदलब्धार्थद्वयस्याभेदाध्यवसायेन साधारण्यं सपाद्य उपमाङ्गतां निर्वाहेत्यभिप्रायेणाह—अत्रेत्यादिना ।

एवं चात्र बिम्बप्रतिबिम्बभावापन्नधर्मोपस्कृतः अतिक्रमणरूपो धर्मः उपमां (नदीन्दुमत्योः) प्रयोजयति । अन्यवधूर्भवित्रीत्यनेन अदृष्टो धर्मः । आवर्तमनोज्ञनाभिरित्युपमेये दृष्टः अनन्यसामान्यनृपलभ्यतां प्रकाशयति ॥

## चित्रमीमांसा

अनुगामित्व-श्लेषोपचाराणां मिश्रणं यथा—

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवागतः ॥

## तत्त्वालोकः

अनुगामित्वश्लेषोपचाराणां मिश्रणे उदाहरणमाह—**अनुगामीत्यादि** असौ परिदृश्यमानचिह्नः वसन्तकालः मधुमासः, हनुमानिव वायुसूनुरिव आगतः । कीदृशः ? मरुता वायुना चुम्बिताः संसृष्टाः चारुकेसराः मनोज्ञबकुलाः नागकेसरा वा यस्मिन् सः । हनूमत्पक्षे मरुता पवमानाधिष्ठातृदेवतास्वरूपेण पित्रा, निंसमाना सटाः यस्य सः । प्रसन्नं यत्ताराधिपस्य चन्द्रमसः मण्डलं बिम्बं तस्य अग्रणीः नेता । हनूमत्पक्षे–प्रसन्नः प्रसादं प्राप्तः यः ताराया: अंगदमातुः अधिपः सुग्रीवः तस्य यन्मण्डलं प्रकृतिमण्डलं तस्य अग्रणीः सेनानीः मुख्य इत्यर्थः। तथा वियुक्ताः विरहिताः याः रामाः स्त्रियः-तासां याः आतुराः कातराः दृष्टयः ताभिः वीक्षितः दृष्टः। हनूमत्पक्षे–वियुक्तः सीताविरहितो रामः तस्य आतुरा समुत्सुका या दृष्टिः तया विशेषेण ईक्षितः-अवलोकितः इत्यर्थः सानुग्रहमीक्षितःइति यावत् ।

अत्र यद्यपि उपमेये आतुरदृष्टिवीक्षितत्वविशेषणं तद्धटकस्य आतुरत्वस्य कातरत्वरूपत्वम्, उपमाने समुत्सुकत्वरूपत्वम्, अथापि तत्तद्धर्मतापर्याप्त्यधिकरणवृत्त्येकसामान्योपस्थापकत्वादनुगामित्वस्य न बाधः।

**चित्रमीमांसा**

**अत्र आतुरदृष्टिवीक्षितः इत्याद्यनुगामिता। रामादिशब्दश्लेषः। चुम्बितशब्दस्य वसन्तपक्षे उपचारः इत्येतेषां मिश्रणम्। एवमन्येऽपि मिश्रणोदाहरणभेदाः स्वयमेव द्रष्टव्याः॥**

**तत्त्वालोकः**

एवं 'वियुक्तरामातुरदृष्टिवीक्षितः' इत्यत्र दीर्घत्वकृतलिंगश्लेषेण अभेदमध्यवस्य वियुक्तरामातुरदृष्टिवीक्षितत्वं साधारणधर्मः। तथा हनूमत्पक्षे वक्त्रसंयोगरूपस्य चुम्बनस्य स्वारसिकत्वेऽपि वसन्तपक्षे तस्य गौणत्वमेव। एवं च निकटसंसर्गरूपात्सादृश्यादुपचार इति तन्मूलकाभेदेन चुम्बनं साधारण धर्मः इत्येतेषां मिश्रणेन उपमा चारुत्वावहा, इत्यभिप्रायेणाह–**अत्रेत्यादिना।**

इत्थं त्रयाणां मिश्रणेन उपमानिर्वाहप्रकारमुपपाद्य इदं समासभेदानुगामित्वोपचाराणाम, उपचार–समासभेद–श्लेषाणाम्, अनुगामित्वसमासभेद श्लेषाणाम्, उपचारबिम्बप्रतिबिम्बभावसमासभेदानम्, उपचारबिम्बप्रतिबिम्बभावश्लेषाणाम्, अनुगामित्व-बिम्बप्रतिबिम्बभावोपचाराणाम्, अन्येषां च एतत्सजातीयानां मिश्रणेन धर्मे साधारण्यं सम्पादयितुं शक्यमिति। एतदुदाहरणप्रभेदाः स्वयमेव उह्या इत्याह–**एवमिति।**

प्रागुदाहृतेषु 'पाण्ड्योऽयम्' 'तया विवृद्धानन' इत्यादिषु बिम्बप्रतिबिम्बभावोदाहरणेषु मयोस्सादृश्यमूलकाभेदज्ञानमन्तरा ऐक्यं दुरुपपादमिति सादृश्यप्रयोजकः समानधर्मसम्बन्ध आवश्यकः। स च धर्मः क्वचित्प्रतीयमानः क्वचिदुपात्तः। यत्र प्रतीयमानसाधारणधर्मसंबन्धयोः बिम्बप्रतिबिम्ब भावः तत्र बिम्बप्रतिबिम्बभावप्रयोजकस्य धर्मस्य प्रसिद्धिरपेक्षिता। यत्र

चित्रमीमांसा

बिंबप्रतिबिम्बभावोदाहरणेषु कश्चिद्विशेषः । क्वचित् प्रसिद्धसाधर्म्यतया प्रतीयमानसाधर्म्ययोः बिम्बप्रतिबिम्बभावः । यथा 'पाण्ड्योऽय'मित्यादौ ।

तत्वालोकः

तु बिम्बप्रतिबिम्बभावप्रयोजकस्य धर्मस्य प्रसिद्धिर्नास्ति तत्र तादृशधर्मस्योपादानमपेक्षितम् । एवं च उपमानोपमेयविशेषणयोः धर्मयोः साधारण्ये सम्पाद्ये तत्प्रयोजकस्य साधारणधर्मस्य प्रसिद्ध्युपादानयोरन्यतरदपेक्षितं भवति । किन्तु यथाकथंचित् साधारणधर्मप्रतीतिमन्तरा बिम्बप्रतिबिम्बभावो नोपपद्यत इति वक्तुमुपक्रमते–बिम्बेति । विशेषः–वैलक्षण्यम् । तच्च कचिद्बिम्ब प्रतिबिम्बभावप्रयोजकधर्मस्य प्रसिद्धत्वादनुपादानेऽपि तत्सिद्धिरिति सदृष्टान्त-माह–क्वचित्प्रसिद्धेति ।

अयं भावः–'पाण्ड्योऽयम्' इत्यत्र पाण्ड्यस्य अद्रिराजेन सहोपमा निबद्धा । सा च साधारणधर्मनिमित्ता । तज्जीवितत्वादस्याः । साधा-रण्यं च धर्मस्य एकत्वे भवति । अत्र तु न वस्तुतो धर्मस्यैकत्वम् । हरि-चन्दनबालातपयोः हारनिर्झरयोश्च भेदस्य आपामरं प्रसिद्धेः । अतश्चैकता ध्यवसानमपेक्ष्यते । एकताध्यवसाने च निमित्तं किंचिद्वक्तव्यम् । तच्च सादृश्यमेव । तत्र च साधारणधर्मोऽपेक्षितः । स चात्र हरिचन्दन-बाला तपयोः हारनिर्झरयोः शैत्यदैर्ध्यतरङ्गाकारवत्त्वम् । तच्च प्रसिद्धमिति प्रती-यमानसाधर्म्ययोः हरिचन्दन-बालातपयोः, हारनिर्झरयोश्च बिम्बप्रतिबिम्ब-भाव इति ।

क्वचित् अप्रसिद्धसाधर्म्यतया येन केनचित्प्रकारेण उपात्तसाधारणधर्मयोः बिम्बप्रतिबिम्बभावः। यथा–'तया विवृद्धाननचन्द्रकान्त्या' इत्यादौ ॥

अत्र हि शरदपर्णयोः स्वतः प्रसिद्धसाधर्म्ययोः

तत्त्वालोकः

क्वचित् बिम्बप्रतिबिम्बभावयोग्यधर्मस्याप्रसिद्ध्या येनकेनचित्प्रकारेणोपात्तसाधारणधर्मयोस्स इति सोदाहरणं प्रदर्शयति- क्वचिदप्रसिद्धेति।

अयं भावः–ननु 'तया विवृद्धाननचन्द्रकान्त्या' इत्यत्र अपर्णायाः शरदा सह उपमा निबध्यते। न च शरदपर्णयोस्साधर्म्यं पूर्वोदाहरणे यथा। अनुपात्तेन अवालनीयत्वादिना पाण्ड्याद्रिराजयोस्साधर्म्यं प्रसिद्धं न तथात्रेति उपात्तसाधारणधर्मनिमित्तकमेव साधर्म्यं वाच्यम्। स च धर्मः उपमाने प्रवृद्धाननरूपचन्द्रकान्तियुक्तत्वादिकम्, उपमेये प्रवृद्धेन्दुसदृशाननकान्तियुक्तत्वादिकमिति भेदान्न साधारणतेति चेन्न, उक्तोदाहरणे शिवस्य लोकेन सहोपमा प्रधानीभूता। तत्र च क्रमाद्विशेषणयोः अपर्णाशरदोः साधारणधर्मता वाच्या। सा च बिम्बप्रतिबिम्बभावमूलकतया, तत्र च साधारणो धर्मः–चमत्कारकारी धर्मोऽन्यो न प्रतीतिपथमवतीर्णः। तदा विवृद्धाननेत्यादेः समासभेदाश्रयणेन लब्धस्यार्थद्वयस्य अभिन्नतामध्यवस्य तयोः साधर्म्यप्रयोजकत्वमिति उपात्तधर्मनिमित्तः शरदपर्णयोः बिम्बप्रतिबिम्बभाव इति तस्य शिवलोकयोरुपमायां साधारणधर्मता बोध्येति।

तदेतदाह- अत्रहीति। इत्युपलक्षणम्–वस्तुप्रतिवस्तुभावस्थले–

## चित्रमीमांसा

विवृद्धाननेत्यादिना समासभेदाश्रयणेनोपात्तसाधारणधर्म-योरेव बिम्बप्रतिबिम्बभावः। यथाकथंचित्साधर्म्यप्रतीतिं विना बिम्बप्रतिबिम्बभावो न संभवत्येव ॥

## तत्त्वालोकः

ऽन्यत्रापि क्वचित्प्रतीयमानेन धर्मेण सादृश्यपरिनिष्पत्ति भवति, अथापि वस्तुप्रतिवस्तुभावादिमूलकतया धर्मे साधारण्यं सम्पाद्यते, एकधर्मघटित-सादृश्यापेक्षया अनेकधर्मघटितसादृश्यस्य चमत्कारातिशयाधायकत्वात्। अन्यथा 'यन्त्या मुहुः' इति पद्ये सौन्दर्यादिनैव सामान्यधर्मेणोपमानिर्वाहे संभवति सति सर्वस्वकारेण—कन्धरावृन्तयोः, बिम्बप्रतिबिम्बभावस्य, वलितत्वा वृत्तत्वयोः वस्तु-प्रतिवस्तुभावस्य चाभ्युपगमोऽनुपयुक्तस्स्यात्। उक्तं च सर्वस्वे—'अत्र वलितत्वावृत्तत्वे सम्बन्धिभेदाद्भिन्ने। धर्म्यभिप्रायेण तु बिम्ब प्रतिबिम्बत्वमेव' इति ॥

अयमत्र विशेषः—यत्र बिम्बप्रतिबिम्बभावप्रयोजकधर्मस्य प्रतीतिस्तत्र उपात्तधर्माणामभेदबुद्धेस्सादृश्यावगतौ उत्कर्षकत्वमात्रम्, यथा पूर्वोदाहृते 'यान्त्या मुहुः' इत्यादौ।

यत्र तु उपात्तधर्मस्यैव बिम्बप्रतिबिम्बभावप्रयोजकत्वं तत्र परंपरया सादृश्यप्रयोजकत्वम्। यथा 'तया विवृद्धाननचन्द्रकान्त्या' इत्यादौ। अन्यथा प्रतीतिरपर्यवसिता भवेत् इति।

ननु 'यथाकथंचित्साधर्म्यप्रतीतिं विना बिम्बप्रतिबिम्बभावो न संभवती'त्युक्तम्। तर्हि विपरीतोपमायामुपात्तेन प्रतीयमानेन वा धर्मेण

## चित्रमीमांसा

यथा त्वं गुणवान् लोके तथा ते निर्गुणो रिपुः ।
इतीदमुपमानं तु विपरीतमिति स्मृतम् ॥

इत्युक्तरूपायाः विपरीतोपमायाः कथं निर्वाहः ?

तत्र हि सगुणत्व-निर्गुणत्वयोः नोपात्तेन, न वा प्रतीयमानेन धर्मेण साधर्म्यप्रतीतिरस्ति । नैष दोषः । तत्राप्यात्यन्तिकत्वस्वाभाविकत्वादिधर्मेण प्रतीयमानेन तयोः साधर्म्यप्रतीतेः ।

## तत्त्वालोकः

साधर्म्यं न प्रतीयत इति तन्निर्वाहः कथमित्याशंकते-यथा त्वमित्यादिना ।

अनिर्वाहे कारणमुपादत्ते-तत्र हीति । प्रकृतस्य राज्ञः तद्रिपोश्चौपम्ये प्रतिपाद्ये साधारणधर्मः कः । सगुणत्वं निर्गुणत्वं च । कथमनयोः साधारण्यम् बिम्बप्रतिबिम्बभावमूलतया ? तयोश्च समानधर्मसम्बन्धः अपेक्ष्यते । तमेव तु न पश्यामः । तदा ज्ञातुं शक्यस्स्यात्, यद्युपात्तः स्यात्, यदि वा प्रतीयमानः स्यात् । न च तादृशधर्म उपात्तः । न वा प्रतीयमानः प्रतीतिपथमवतीर्ण इति नोपमा निर्वोढुं शक्या इत्याशंकायां समाधानमाह-नैष दोष इति ।

अयं भावः-यथाकथंचित्साधर्म्यप्रतीतौ बिम्बप्रतिबिम्बभावस्य संभवोक्तेः । अत्रापि सगुणत्व-निर्गुणत्वयोर्विपरीतरूपत्वेऽपि राज्ञि गुणशालित्वं यथा स्वाभाविकं तथा रिपावपि निर्गुणत्वं स्वाभाविकम् , आत्यन्तिकं वेति स्वाभाविकत्वादेः सगुणत्व-निर्गुणत्वयोर्वर्तमानतया प्रतीयमानत्वात् उक्तसाधर्म्यस्य

अन्यथा 'यथा'शब्दोदितस्य सर्वथा निरालम्बनत्व प्रसंगात्। एवं पूर्णादिगुदाहृता।

लुप्ताष्टविधा- १. वाचकलुप्ता २. धर्मलुप्ता

**तत्त्वालोकः**

आनुभाविकत्वेन उपमानिर्वाहकबिम्बप्रतिबिम्बभावस्यादिलोपात् रिपुराज्ञोः उपमानिर्वाहात् न दोष इति ॥

व्यतिरेके बाधकमाह—**अन्यथेति**। अन्यथा-उक्तरीत्या प्रतीयमानं स्वाभाविकत्वादिकं धर्ममुपादाय सगुणत्वनिर्गुणत्वयोः सादृश्यानभ्युपगमे सादृश्यप्रतिपादकयथातथाशब्दप्रयोक्तुः उन्मत्तताप्रसंगात्। न ह्यनुन्मतः कश्चित् क्वचित् किंचित् कथंचित् साधर्म्यमननुपश्यन् अकस्मात् सादृश्य=विवक्षुर्भवितुमर्हति। यथातथाशब्दप्रयोगे च कृते सति तन्निमित्तं किंचिदन्वेष्यम्, न तु तत्रोदासितव्यमित्यभिसन्धिः।

उदाहृतानि लक्ष्याणि दिक्प्रदर्शनपराणि न तु पूर्णप्रभेदपरिगणनपराणीत्याह—**एवं पूर्णेति**।

एतेन—

'उपमाया बुधैरेते भेदा ज्ञेयास्समासतः।
ये शेषा लक्षणे नोक्ताः संसाध्यास्तेऽपि लोकतः ॥

इति भरतवाक्यं स्मारितं भवति।

उक्तभरतवाक्यानुसारेण लक्षणेऽनुक्तान् लुप्तादिप्रविभागानुद्दिशति—**लुप्ताष्टविधा इति**। अयं च लुप्तोपमाविभागः,

चित्रमीमांसा

३. उपमानलुप्ता ४. वाचकोपमानलुप्ता ५ धर्मो-पमानलुप्ता ६ धर्मवाचकलुप्ता, ७. वाचकोपमेयलुप्ता ८. धर्मोपमानवाचकलुप्ता चेति ॥

तत्त्वालोकः

वर्ण्योपमानधर्माणामुपमावाचकस्य च ।
एकद्वित्र्यनुपादानाद्भिन्ना लुप्तोपमाष्टधा ॥

इति कुवलयानन्दे ग्रन्थकृता प्रदर्शितः, न पुनर्जयदेवेनकृतः, चन्द्रालोके अदर्शनात् ।

अस्यायमर्थः — उपमेयोपमानसाधारणधर्मसादृश्यवाचकानां मध्ये एकद्वित्र्यनुपादानप्रयोज्यलोपवत्युपमा अष्टधा भिन्ना ।

एवं च एकलुप्ता – १ धर्मलुप्ता २ वाचकलुप्ता, ३ उप-मानलुप्ता इति त्रेधा ।

द्विलुप्ता–१ वाचकोपमानलुप्ता २ धर्मोपमानलुप्ता, ३ धर्म वाचकलुप्ता, ४ वाचकोपमेयलुप्ता इति चतुर्धा ।

त्रिलुप्ता–१ धर्मोपमानवाचकलुप्ता इत्येकविधा ।

इति लुप्तोमाष्टधा इति ज्ञेयम् ॥

अत्र 'वाचकलुप्ता' इत्यादौ सर्वत्र लुप्ताशब्दः कर्मसाधनक्तप्रत्ययान्तः । छेदनार्थकात् लुपधातोः तौदादिकात्सकर्मकात् 'तयोरेव कृत्यक्तखलर्थाः' (पा. सू. ३-४-७०) इति नियमानुसारेण 'निष्ठा' (पा. सू० ३-२-१०२)

क्रमेणोदाहरणानि—

कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः
कुम्भोदरं नाम निकुम्भतुल्यम् ॥

तत्त्वालोकः

इति सूत्रात् भूते कर्मणि निष्ठाप्रत्ययः । तथा च 'वाचकलुप्ता' इत्यत्र वाचकः लुप्तः लोपविषयीभूतः यस्यामुपमायां सा इति विग्रहः । वाचक लोपवती उपमा इत्यर्थः । एतेन **रसिकरञ्जनीकृता** लुप्ता शब्दस्य भावसाधानक्तप्रत्ययान्तत्वमुपगम्य, अर्शआद्यजन्तत्वेन लोपवत्परत्वं यत्-साधितं तदयुक्तम्, 'लुम्पति केशान्' इत्यादिलक्ष्यदर्शनात् लुम्पतेस्स कर्मकत्वेन भावे क्तप्रत्ययस्य प्रसक्तेरभावात् ।

उद्दिष्टक्रमेण उदाहरणं प्रदर्शयति—**कैलासगौरमिति** । कैलास इव गौरः कैलासगौरः तं कैलासवच्छुभ्रमित्यर्थः । 'चामीकरं च शुभ्रं च गौरमाहुर्मनीषिणः' इति **शाश्वतः** । वृषं—वृषभं आरुरुक्षोः—आरोढुं इच्छोः, स्वस्योपरि पदं निक्षिप्य वृषभमारोहतीती यावत् । तस्य अष्टमूर्तेः अवनि-पवन सलिल-गगन—दहन-तपन-तुहिनकिरण—यजमानरूपाः मूर्तयः—आकृतयः यस्य तस्य ईश्वरस्य पादार्पणेन पादविन्यासेन योऽनुग्रहः पापनिर्हरणं तेन पूतं पृष्ठं यस्य तथोक्तम् । निकुम्भतुल्यम् कुम्भोदरं नाम किंकरं—भृत्यं मां अवेहि—जानीहि इत्यर्थः ।

चित्रमीमांसा

अत्र 'कैलासगौरम्' इत्यत्र वाचकलोपः ।

तत्त्वालोकः

वाचकधर्मयोर्लोपं उपपादयति — अत्रेति ।

अयं भावः–'कैलासगौरम्' इत्यत्र कैलास इव गौरः इति विग्रहे उपमानानि सामान्यवचनैः [पा. सू. २–१–५५] इत्यनुशासनात् सामान्य विशिष्टोपमेयवाचकेन गौरशब्देन उपमानवाचकस्य कैलासशब्दस्य समासः ।

**ननु**–अत्र गौरशब्दस्य कथं सामान्यवाचित्वम् ? सर्वस्यापि शब्दस्य शब्दान्तरसम्बन्धेन विशेषवाचकत्वादिति चेत्सत्यम्—

अथापि पदान्तरसम्बन्धात्पूर्वं सामान्यवाचित्वेन 'उपमानानी'त्यस्मात् समासः । अत एव–उपमानानीति सूत्रे वचनग्रहणं चरितार्थम् । अत एव **वैयाकरणाः**–'सामान्यमुक्तवन्तः सामान्यवचनाः । बाहुलकात् कर्तरि ल्युट् । ये पूर्वं सामान्यमुक्त्वा तद्वति द्रव्ये पर्यवस्यन्ति ते तथोक्ताः । तच्चसामान्यविशिष्टमुपमानशब्दस्य सम्बन्धिशब्दत्वादाक्षप्तमुपमेयमेव विज्ञायते' इति व्याचख्युः । एवं चात्र समासेन सादृश्यस्याभिहितत्वात् तद्वाचका प्रयोग एव लोपः । **भट्टोजिदीक्षितस्तु**–'एवमादौ पूर्वपदं लक्षणया तत्सदृशं बोधयति । अत एव लौकिकविग्रहवाक्ये इव शब्दः प्रयुज्यते' इत्याह । एवमादौ अनुच्चारणमेव लोपः ॥

**अत्रेदं चिन्त्यते**—'कैलासगौरम्' इत्यत्र कथं वाचकलोपः । वैयाकरणेषु **केश्चिदेवमुच्यते**—

## तत्त्वालोकः

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।
बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥

इति । उक्तरीत्या समासे अखण्डशक्तिस्वीकारेण 'कैलासगौर'मिति पदादेव 'कैलासनिरूपितसादृश्यप्रयोजकगौरत्ववदभिन्नो वृषः' इति विशिष्ट एवार्थः समासाद्बोध्यत इति सादृश्यस्यापि शाब्दबोधविषयत्वेन समासस्यैव सादृश्यवाचकत्वमपीति ।

सत्यमत्रोक्तरीत्या न वाचकलोपः । नापि लक्षणायाः प्रसक्तिः । नापि 'पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेने'ति न्यायव्याकोपप्रसक्तिः । एकदेशान्वयप्रयासो वा भवतीति सुगमोऽयं पन्था इति न वाचकलोपप्रसक्तिः ।

अथापि—न सर्वत्र विशिष्टशक्तिः भाष्यकारादिभिरभ्युपगता अतिरिक्तशक्तिकल्पने गौरवात् । अत एव—'उपमानानि सामान्यवचनैः' इति सूत्रे भाष्ये पतञ्जलिना—किमिहोदाहरणम् ? शस्त्रीश्यामा । क्व पुनरयं श्यामाशब्दो वर्तते ? शस्त्र्यामित्याह । केन तर्हीदानीं देवदत्ताभिधीयते । समासेन ।

यदि श्यामाशब्देन शस्त्री अभिधीयते उपमेयं समासेन, तर्हि पुंस्त्वविशिष्टदेवदत्तादेरपि उपमेयत्वे श्यामाशब्दस्य तदनभिधायकत्वात् स्त्रीत्वविशिष्टशस्त्र्यभिधायकत्वाच्च टापि 'शस्त्रीश्यामो देवदत्त' इति पुंलिङ्गप्रयोगो-न सिध्यति, 'गोस्त्रियोरुपसर्जनस्येति' ह्रस्वत्वं भविष्यति ।

यद्येवं 'कुम्भकपाललोहिनी इत्यत्र 'वर्णादनुदात्तात्'

[पा. सू.-४-१-३९]

तत्त्वालोकः

इति अनुपसर्जन इकारो न प्राप्नोति । एवं तर्हि शस्त्र्यामेव शस्त्री शब्दः देवदत्तायां श्यामाशब्दः ।

एवमपि समानाधिकरणेनेति वर्तते व्यधिकरणत्वात्समासोन प्राप्नोति । किं हि वचनान्न भवति । यद्यपि तावद्वचनात्समासः स्यात् ।

इह खलु मृगीव चपला–मृगचपला इत्यत्र समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति । एवं तस्यामेवोभयं वर्तते ।

युक्तं चैतत् ? इतरथा हि बह्वपेक्षं स्यात् । यदि तावदेव विग्रहः करिष्यते शस्त्रीव श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् ।

अथाप्येवं विग्रहः करिष्यते 'यथा शस्त्री श्यामा तद्वदियं देवदत्तेति' । एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्—इत्यभिहितम् ।

तत्र तस्यामेवेत्यस्य उपमेयायामेवेत्यर्थः । उपमानशब्दोऽपि सादृश्य मूलकाभेदाध्यवसायेन उपमेये एव वर्तत इति भाष्याशयः **कैयटेन** प्रकाशितः ।

सादृश्यनिर्वाहाय च तत्प्रयोजकस्य साधारणधर्मस्य श्यामत्वादेः 'घनश्यामो देवदत्तः' इत्यादौ तन्त्रादिना उपमाने उपमेये चोभयत्रान्वयः । तथा च उपमानश्यामघनाभिन्नः श्यामो देवदत्त इति बोधः । अत एव सूत्रे 'सामान्यवचनैः' इति वचनपदमुपात्तम् । तेन च साधारणधर्मत्वेन बोधकता लभ्यते । साधारणधर्मत्वं च अनेकवृत्तिधर्मत्वम् । उभयत्र श्यामत्वादे रन्वयाभावे च अनेकवृत्तिधर्मत्वेन श्यामादिपदानां तद्बोधकत्वाभावात्समासो न स्यात् । तस्मात् सौत्रवचनपदस्वारस्येन उभयगतगुणवाचकत्वादिति 'उपमाना

## तत्त्वालोकः

नीति' सूत्रस्थभाष्याच्च उभयत्र साधरणधर्मान्वयः शाब्दः । तत्प्रयोज्य सादृश्यस्यान्वयस्तु आर्थः ।

ननु पूर्वपदस्य घनशब्दादेः लक्षणया तत्सदृशान्वयबोधश्शाब्दः । तथा सति उपमानत्वेन बोधकानि सामान्यधर्मविशिष्टोपमेयवचनैः समानाधिकरणैः समस्यन्ते इत्यर्थकेन, उपमानानि सामान्यवचनैः' इत्यनेन समासानुपपत्तेः । पूर्वपदस्य लक्षणया उपमेयपरत्वेन उपमानवाचकत्वाभावात् । वृत्तिविग्रहयोः समानार्थकत्वाय तद्विग्रहवाक्येऽपि 'घन इव श्यामः' इत्यादौ लक्षणया तत्सदृशपरत्वमावश्यकमिति विग्रहवाक्यीयमुपमानवाचकत्वमपि नाश्रयितुं शक्यते । 'घनेन तुल्यम्' इत्यादिकं तु न तद्विग्रहवाक्यम् ।

अन्यथा—'मृग्या तुल्या चपला' इत्येतद्विग्रहवाक्यवति 'मृगचपला' इत्यत्र पुंवद्भावानापत्तिः । सामानाधिकरण्याभावात् । षष्ठीतत्पुरुषादौ अतिव्याप्तिवारणाय वृत्तौ विग्रहे च सामानाधिकरण्यस्य पुंवद्भावेऽपेक्षितत्वात् । अन्यथा- वृत्तिविग्रहयोः समानार्थकत्वनियमभङ्गापत्तिश्च ।

तस्मात् 'उपमानानी'ति सूत्रस्थस्य 'तस्यामेवोभयं वर्तते' इत्यस्य भाष्यस्य पूर्वपदस्य उपमानवाचकत्वेऽपि सादृश्यमूलकाभेदाध्यवसायादुपमेय परत्वमित्येव तात्पर्यं समीचीनमिति लक्षणाश्रयणमाश्यकमेव ।

अन्यथा बोधकाभावेन समासे सादृश्यप्रतीतिर्न स्यात् । न च घन इवेति इवशब्दः तद्बोधक इति वाच्यम् । तस्य समासे संबन्धाभावत् । सति च संबन्धे तन्निवृत्तेरयोगात् । तन्निवर्तकशास्त्राभावात् । विग्रहवाक्य गतस्तु इवशब्दः स्वघटितवाक्यस्योपमाप्रतिपादकतां संपादयितुं समर्थः ।

निकुम्भतुल्यमित्यत्र धर्मलोपः ।

तत्त्वालोकः

न वाक्यान्तरस्य । तथा सति तस्य विवरणवाक्यत्वानुपपत्तेश्च । न हि विवरणीयवाक्यगतशब्दप्रतिपाद्यस्यार्थस्य विवरणं युज्यते ।

इत्थं च 'कैलासगौरं वृषं' इत्यत्र लक्षणाया एव अभ्युपगम्यतया कैलासरूपोपमानवाचकपदस्य लक्षणया सादृश्यविशिष्टो (निरूढलक्षणया)ऽर्थः ।

तथा चैवमादौ —उपमानवाचकपदानुपस्थाप्यसादृश्यप्रतिपादकेवादि-शब्दानुपादाने, तादृशपदानुपस्थाप्यसादृश्यविशिष्टप्रतिपादकसम-सदृश-तुल्यादि शब्दानुपादाने वा वाचकलुप्तात्वम् ।

प्रकृते च—कैलासगौरम् इत्यादौ उपमानवाचकपदेन लक्षणया सादृश्योपस्थितावपि तद्भिन्नैरिवादिभिस्सादृश्यस्याप्रतिपादनात् वाचकलुप्तात्वम क्षतमित्यवधेयम् ॥

**निकुंभेति** । निकुम्भेन सदृशमिति विग्रहः । अत्र तुल्यपदं सादृश्यवदर्थकम् । सादृश्यवाचकतुलाशब्दात् 'नौवयोधर्मविषमूलसीता। तुलाभ्यः' [पा.सू. ४.४.९१] इति अनुशासनात् तुलया सम्मितमित्यर्थे यत्प्रत्यये व्युत्पन्नम् ।

न चात्र तुल्यशब्दः सादृश्यं नाभिधत्त इति वाचकलुप्तात्वमपीति वाच्यम् । तुल्यशब्दस्य धर्मिण्येव शक्तिरिति स्वीकारेण सादृश्यरूपधर्मे शक्तिविरहस्य स्पष्टत्वेऽपि विशिष्टे शक्त्यभ्युपगमे विशेषणस्यापि बोधोपपत्तौ

तत्त्वालोकः

लक्षणाया अपि न प्रसक्तिः । विशिष्टवाचकानां पदानां विशेषणबोधार्थं लक्षणानभ्युपगमात् । अत एव–तुल्यपदयोगे सति उपमानवाचकपदानुपस्थाप्यसादृश्यविशिष्टप्रतिपादकशब्दानुपादानाभावान्न वाचकलुप्तत्वं, किंतु धर्मलुप्तत्वमेव । 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' [पा.सू. २-३-७२] इत्यत्र तुलोपमाशब्दयोः तुल्यार्थत्वं नास्त्येवेति अतुलोपमाभ्याम् इति पर्युदासोऽन्यार्थ एवेत्याशंक्य तुल्यार्थैरिति भावप्रधाननिर्देश इत्यभ्युपगम्य तुल्यशब्दस्य सादृश्यपरत्वमुपपाद्य पर्युदासस्समर्थितः । अत एव न तत्र लक्षणाभ्युपगता ।

वृत्तिकारोपि— तुलया संमितं तुल्यम् । समानं सदृशमित्यर्थः इति व्याचख्यौ [काशिका-४-४-९१] । तेन नात्र वाचकलोपस्य प्रसक्तिः । तेन इवादौ सादृश्ये शक्तिः । तुल्यादौ लक्षणेति मत चिन्त्यम् ॥

किंचात्र 'वाचकलोप' इत्यत्र वाचकशब्दः न शक्त्या प्रतिपादकत्वार्थकः । तथा सति 'चन्द्रसुहृन्मुखमि'त्यादिसादृश्यलक्षकवदुपमायं लुप्तोपमात्वप्रसंगात् । अत एव ग्रन्थकृता स्वकीये कुवलयानन्दाख्यग्रन्थे 'उपमा यत्र सादृश्यलक्ष्मीः उल्लसति द्वयोः' इति जयदेवकृतचन्द्रालोकीयोपमालक्षणघटकं 'उल्लसति' इति पदं विवृण्वता उल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते इति कथितम् । एतेन सादृश्यस्य वाच्यता न ग्रन्थकृत इष्टा किन्तु व्यञ्जनां विना प्रतिपाद्यमानत्वमात्रम्–अन्यथा 'चन्द्रसुहृन्मुखम्' इत्यत्र लुप्तोपमात्वप्रसङ्गात् स्मृतौ अतिव्याप्तिप्रसङ्गाच्चेत्यपि बोध्यम् ।

अतश्च 'वाचकलोपः' इत्यत्र शक्तिलक्षणान्यतरसंबन्धेन उपमानवाचकपदानुपस्थाप्यसादृश्यकत्वमेव वाचकलुप्तत्वं विवक्षितमिति अपरे । अत एव

**तत्त्वालोकः**

विद्यानाथोक्तोपमादूषणावसरे 'शस्त्रीश्यामा' इत्यादिवाचकोपमानलुप्तायम्, चन्द्रसुहृन्मुखमित्यादिसादृश्यलक्षकत्वदुपमायाश्च इत्युक्तं संगच्छते । अन्यथा तत्र चन्द्रसुहृदित्यादि नावक्ष्यत् ।

निकुम्भतुल्यमित्यत्र धर्मलोपः कथमिति चेत्–तुल्यपदेन सादृश्य प्रतिपादने कृतेऽपि प्रभावादेस्तत्प्रयोजकस्याप्रतिपादनात् (समासगा आर्थी) धर्मलुप्ता ।

**ननु**— कथमत्र धर्मलोपः । यथा चन्द्रस्तथा मुखमित्यत्र यादृशधर्मवान् चन्द्रः तादृशधर्मवन्मुखमिति धर्मस्यापि बोधस्संभवति तद्वत् इवशब्दयोगेऽपि च 'चन्द्र इव मुखम्' इत्यादौ धर्मोपस्थितिरस्त्येव । तथा इवशब्दसमानार्थे कतुलाशब्दपरिनिष्पन्नतुल्यशब्दयोगेऽपि धर्मोपस्थितिरस्त्येव । परंतु इवशब्द स्थले धर्ममात्रं, तुल्यादिप्रयोगेषु धर्मविशिष्टं प्रतीयत इति विशेषात् इति चेत् ।

उच्यते, सादृश्यमतिरिक्तः पदार्थः । स च तत्तत्पदार्थगतधर्मबुद्धि व्यङ्ग्यः सप्रतियोगिकः संबन्धविशेष इति वादिनां **मीमांसकानां** मतमनुरुध्य तुल्यशब्दोपादानेऽपि सादृश्यमात्रमिवादिवत् प्रतिपादितं भवति । न धर्मः । अत एव 'चन्द्र इव मुखम्' इत्यत्र आह्लादकत्वादिधर्माकांक्षा इवपदोपादानेऽपि नोपशाम्यति तदुपादाने तु न तदाकांक्षेति युक्तमेवात्र धर्मलुप्तात्वम् ।

अत एव नव्यैरपि साम्यप्रतियोगिनः, तदनुयोगिनः, उपमावाचकस्य साधारणधर्मस्य चोपादाने पूर्णोपमेत्यभ्युपगम्यते । अत एव च–उत्तरत्र धर्मलुप्तामुदाहरता ग्रन्थकृता 'बलभिन्मणीव कण्ठप्रभेति' समासगा श्रौती धर्मलुप्ता उदाहृता । यदि तु सादृश्यं साधारणधर्मरूपं स्यात्तदा धर्मलुप्तेत्युक्तिः

चित्रमीमांसा

वाचकलोपः सर्वत्र समासविधायकशास्त्रकृतः। धर्मलोपस्त्वैच्छिकः। प्रभावादिना निकुम्भतुल्यम् इत्यपि वक्तुं शक्यत्वात् इति ॥

तत्त्वालोकः

असंगता स्यात्। तथा–उभयत्रापि भातीत्यादिक्रियायोगे सैव साधारणो धर्म इति धर्मलुप्ता न भवेत्।

**नन्वत्र**—साधारणधर्मलुप्तेत्यनभिधाय धर्मलुप्तेत्येतावन्मात्रं प्रयुज्यते तत् कुतो हेतोः ? उच्यते–धर्मस्य शाब्दबोधविषयत्वं 'चन्द्र इव मुखं रमणीयम्' इत्यादिस्थलेऽपि भवेत्। न तु तत्साधारण्यम्। तत्साधारण्यस्य पदार्थवाक्यार्थत्वाऽभावात् शाब्दबोधाविषयत्वम्। किंतु शाब्दबोधोत्तरमुभयो र्धर्मयोः अभेदस्य मानसविषयतया साधारण्यसंपत्तिः। बिंबप्रतिबिंबभावेन साधारण्यसंपादनस्थलेऽपि शाब्दबोधोत्तरं उभयोर्धर्मयोरभेदबोधो मानस एव। न चैतावाता धर्मलुप्तात्वम्। धर्मस्य शाब्दत्वमात्रं धर्मलुप्तात्वाभावप्रयोजकं नतु शाब्दबोधाविषयत्वम्। अन्यथा–'उपमानानि सामान्यवचनैः' [पा.सू २-२-५५] इति समासो न स्यात्, धर्मे साधारण्यस्य शाब्दबोधाविषयत्वात्।

**वाचकलोप इति।** वाचकस्य इवादेः लोपः अनुच्चारणमित्यर्थः। वाचकशब्देन सादृश्यवाचकस्येत्यर्थो बोध्यः। सादृश्यं च संबन्धरूपं पदार्थान्तरम्। नतु साधारणधर्मरूपम्। अत एव 'त्यदादिषु दृशोनालोचनेकञ्च' सूत्रस्थेन 'समानान्ययोश्चे'ति वार्तिकेन कञ्प्रत्ययान्तः सदृशशब्दः। तदन्तस्य च कृद्वृत्तित्वेन 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेना अन्यत्ररूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः' इति वार्तिकं विवृण्वता भर्तृ

चित्रमीमांसा

यच्चोराणामस्य च समागमो यच्च तैः वधोऽस्य कृतः ।

तत्त्वालोकः

हरिणा महावैयाकरणेन कृदाद्यन्तशब्दाद्विहितानां भावप्रत्ययानां संबन्ध बोधकत्वमिति उक्तं संगच्छते । प्रपञ्चितं चेदं वैयाकरणभूषणे ॥

एवं च वाचका इत्यस्य सादृश्यरूपसंबन्धस्य वाचका इत्येवार्थोऽत्र ग्राह्यः । आलंकारिकनये सिद्धान्ते इवादीनां वाचकत्वमेव । तद्बीजं तु वाक्यपदीयोक्तिरनुभवश्च । तदुक्तं हरिणा—

निपाताः द्योतकाः केचित् पृथगर्थाभिधायिनः ।
आगमा इव केऽपि स्युः संभूयार्थस्य वाचकाः ॥

इति । अधिकमन्यत्र । अत्र नागेशभट्टैस्तु लघुमञ्जूषायाम् एवमुक्तम् 'क्वचित्तु क्रियागतविशेषबोधकातिरिक्तनिपातानां वाचकत्वमपी'त्यादि ।

एतेन—'चन्द्र इव मुखम्' इत्यादौ साधारणधर्मसंबन्धरूपोपमा वाच्या साधारणधर्मप्रतीतिस्त्वार्थीति बोध्यम् । 'कमलं मुखं च तुल्यम्' इत्यादौ उभयत्रापि साम्यं विश्राम्यतीति अर्थानुसंधानमूलकत्वादार्थी उपमा ॥

समासेन सादृश्याभिधानाद्वाचकलोपः शास्त्रकृतः । समासेनाभिहितस्य सादृश्यस्य 'उक्तार्थानामप्रयोगः' इत्यप्रयोग एव उपमानानीति शास्त्रप्रयुक्त इत्यर्थः । शिष्टम् स्पष्टम् । अधिकमग्रे वक्ष्यते ॥

प्राचीनैः वाचकोपमानलुप्ता स्वरूपत एव न प्रदर्शिता । सा समासेऽस्ति । एवं धर्मोपमानलुप्ता वृत्तिवाक्ययोरेवोक्ता, सा तद्धितेऽपि दृश्यत इति प्रतिपादयितुमुदाहरणमाह-यच्चोराणामिति ।

चित्रमीमांसा

उपनतमेतदकस्मादासीद्वत काकतालीयम् ॥ इति

अत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेत क्रियावर्तिनौ । तेन काकागमनमिव, तालपतनमिव काकतालमिति इवार्थे 'समासाच्च तद्विषयात्' [पा.सू. ५-३ २०६] इति ज्ञापकात् त्सुप्सुपा इति समासः ।

तत्वालोकः

चोराणां–दस्यूनां, अस्य च देवदत्तस्य च समागमः मिलनमिति यत् यच्च देवदत्तस्य वधः तैः चोरैः कृत इति, तदेतत् द्वयम् , अकस्मात् अतर्कितया उपनतम् , काकतालीयम्–काकतालसदृशम् आसीदित्यर्थः ।

अत्र काकपदं काकागमने, तालपदं तालपतने च लाक्षणिकमित्याह अत्रेति । वृत्तिविषये–समासवृत्तिविषये इत्यर्थः । क्रियावर्तिनौ लक्षणयेति शेषः ।

नन्वत्र समासवृत्तिकरणेऽनुशासनमेव न दृष्टमिति 'सति धर्मिणि धर्माश्चिन्त्यन्ते' इति न्यायेन लक्षणापर्यन्तानुधावनं युज्यते, न चात्र तथेत्याशंकां परिहरति–तेन काकेति ।

अयमर्थः—इवार्थे [अनुशासनं] समासविधायकं नास्ति । अथापि इवार्थविषयसमासमनूद्य द्वितीये इवार्थे तद्धितविधानं नोपपद्यत इति सूत्रार्थस्य समासव्यतिरेकप्रयुक्तवैयर्थ्यभिया 'समासाच्च तद्विषयात्' इति सूत्रस्थात् तद्विषयात्समासात् इत्यस्मादेव तात्पर्यग्राहकादगतिकस्थलीयः 'सुप्सुपा' इति

## चित्रमीमांसा

उभयत्रोपमेयं क्रमेण देवदत्तागमनं, दस्यूपनिपातश्च। तेन देवदत्तदस्युसमागमः काकतालसमागमसदृश इति फलति। ततः काकतालमिव काकतालीयमिति द्वितीये इवार्थे 'समासाच्च तद्विषयात्' इति छप्रत्ययः। ततश्च पतता तालफलेन यथा काकस्य वधः एवमुपनिपतितैः दस्युभिः देवदत्तस्य वधः इत्यर्थ इति।

यदाह भगवान् भाष्यकारः–'एवं तर्हि द्वाविमावर्थौ

## तत्त्वालोकः

विभक्त्योगेन समास आश्रीयते। ततश्च काकतालशब्दे काकागमनमिव–तालपतनमिव काकतालमिति समासीयं विग्रहवाक्यमिति।

इत्थं ज्ञापकाश्रयणेन समासे उपमानद्वयस्य उपमेयद्वयं प्रदर्शति **उभयत्रेति**। उभयत्र–काकागमनस्य–तालपतनस्य चेत्यर्थः। **क्रमेणेति** काकागमनस्य देवदत्तागमनमुपमेयम्, दस्यूपनिपातस्य तालपतनमुपमेयमित्यर्थः। अत्र फलितार्थमाह–**तेनेति**।

ततोऽपि 'तालपतनेन यथा काकवधः, तथा चोरेण देवदत्तस्य वधः' इति तद्धितार्थे विवक्षिते समासाच्च तद्विषयात् [पा.सू. ५-३-१०६] इति छप्रत्ययः। तदाह–**तत इति**।

उक्तार्थे भगवतो महाभाष्यकारस्य उक्तिं प्रमाणयति–**यदाहेति**। काकस्यागमनमिव देवदत्तागमनम्, तालस्य पतनमिव दस्योरुपनिपातः इत्येक

चित्रमीमांसा

काकागमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयम्' इति ॥

तच्च विवृतं कैयटेन—

तत्र काकागमनं देवदत्तागमनस्योपमानम्। तालपतनं दस्यूपनिपातस्य। तालेन तु यः काकस्य वधः सः देवदत्तस्य दस्युना वधस्योपमानमिति ॥'

अकस्मादुपानतत्वं च समानो धर्मः। इति। तदाह वृत्तिकारः- 'तेन काकतालीयं नाम अकस्मादुपनतं चित्रीकरणमुच्यते' इति।

तत्त्वालोकः

इवार्थः। अत्रैव समासः। पतत्तालकृतकाकवध इव उपनिपतद्दस्युकृत देवदत्तवधः इति द्वितीय इवार्थः। अत्र छप्रत्ययः इति भाष्याभिप्राय इति भावः ॥

तत्रोदाहृतस्य भाष्यस्य अभिप्रायप्रकाशकं कैयटेत व्याख्यातमुद्धरति-तच्चेति। अत्र साधारणः धर्मः कः? इत्याशंकायामौचित्यादकस्मादु-पनतत्वमित्याह—अकस्मादिति।

अत्राथ संवादाय वृत्तिकृदुक्तमनुवदति-तदाहेति। एवं चातर्कि-तोपनतेष्वेतादृशमुदाहरणमुच्यते। इदमुपलक्षणम्। अन्धकवर्तकीयम्। अजाकृपाणीयमित्यादीनाम्।

## चित्रमीमांसा

ततश्चात्र काकागमनतालपतनसमागमरूपस्य, पतत्ताल कृतकाकवधरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायां उपमानलोपः ॥

### तत्त्वालोकः

अत्र समासार्थोपमा, प्रत्ययार्थोपमा च वर्तेते। तयोः प्रत्ययार्थोपमायाम् उपमानलोप इत्याह—**ततश्चेति**। अत्र काक-तालपदयोरुपादानात्, तत्समागमवधयोरनुपादानादुपमानलुप्तेति भावः।

**अत्र अपरे प्रत्यवतिष्ठन्ते**--अत्र प्रत्ययार्थोपमायां उपमानलोपो न भवति। तद्धितोत्पत्तिदशायां काक—तालपदस्य तालकृतकाकवधे लक्षणास्वीकारेण लाक्षणिकोपमानबोधकशब्दस्य श्रूयमाणत्वात्। अन्यथा केवलात्काकतालशब्दादिवार्थे तद्धितानुत्पत्तिप्रसंगात्।

न च लक्षणया उपमानस्य प्रतिपादनेऽपि शक्त्या तत्प्रतिपादनं नास्तीति उपमानलोप इति वाच्यम्। उपमानार्थकशब्दश्रवणमात्रस्य तद्धितोत्पत्तिप्रयोजकत्वेन, वाचकत्वपर्यन्तस्य विवक्षायां प्रमाणाभावात् वैयर्थ्याच्चेति।

अत एव वाचकलुप्तात्वमपि सादृश्यार्थकपदमात्राभावे सत्येवाभ्युपगतं ग्रन्थकारैः स्वया च। नहि लाक्षणिकपदयोगेऽपि इति।

अन्यथा उत्तरत्र वक्ष्यमाणायाः आर्थोपमायाः विषयापहारप्रसंगात्। आर्थोपमायां सादृश्यवाचकपदाभावस्य नियतत्वात्।

**तत्त्वालोकः**

अत एव च 'विद्यानाथोक्तोपमादूषणावसरे–'शस्त्रीश्यामा' इत्यादि वाचकलुप्तोपमायामित्युक्त्वा 'चन्द्रसुहृन्मुखम्' इत्यादिसाम्यलक्षकवदुपमायां चेति पृथगुपादानमनुचितं स्यात्। इति चेत्।

अत्र ब्रूमः—चन्द्रसुहृन्मुखम्, इत्यादिलक्ष्यानुरोधेन वाचकलुप्तात्वं, न सादृश्यार्थकपदमात्राभावे अभ्युपगम्यते किन्तु पूर्वमुक्तरीत्या 'सादृश्य-तद्विशिष्टान्यतरवाचकपदाभावे वाचकलुप्तात्वम्' इत्यभ्युपगमेन–'चन्द्रसुहृन्मु-खम्' इत्यादौ तुल्यादिशब्दवत् सुहृदादिशब्दाः सादृश्यविशिष्टमेव प्रतिपाद-यन्तीति न वाचकलुप्तात्वमिति कथंचित्समाधयेम्। अत्र कौस्तुभोक्तोपमा-नलोपाभावाक्तिश्चिन्त्या।

वस्तुतस्तु-यदि लक्षणया सादृश्यप्रतीतिर्यत्र तत्र वाचकलुप्तात्वं-नाभ्युपगम्येत तदा काव्यप्रकाशकृता—

'वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि'

इत्युक्त्वा 'पौरं सुतीयती'त्युदाहरणं वाचकलुप्तायामसंगतं स्यात्। तत्रापि प्रकृतिभूतसुतादिशब्दानां तत्सादृश्ये लक्षणाभ्युपगमात्। लक्षणया च सादृश्यप्रतीतौ कथं वाचकलुप्तात्वमिति। अतश्च उपमानवाचकपदानुपस्था-प्यसादृश्य-तद्विशिष्टान्यतरप्रतिपादकेवादिशब्दाभाववत्त्वमेव वाचकलुप्तात्वम्।

अत एव 'चन्द्रसुहृन्मुखम्' इत्यत्र उपमानपदेन न सादृश्यमुपस्था-स्यति किन्तु सुहृत्पदेन। अतश्च विशेषणाभावसत्वेऽपि विशेष्याभावान्न वाचकलुप्तात्वम्। पौरं सुतीयतीत्यादौ उपमानवाचकभिन्नपदेन लक्षणयापि सादृश्यप्रतिपादकत्वं नास्तीति वाचकलुप्तात्वमेव। एतादृशावाचकलुप्तात्वा भिप्रायेणैव 'चन्द्रसुहृन्मुखम्' इत्यादि साम्यलक्षकवदित्युक्तं नतु 'वाचकलुप्तो-पमाया'मिति। एतेन कौस्तुभोक्तं चिन्त्यम्।

चित्रमीमांसा

**समासार्थोपमायां वाचकोपमानलोपः इति ।**

**तत्त्वालोकः**

समासार्थोपमायां वाचकोपमानलोपौ चेत्युपपादयति–**समासार्थेति** । काकतालमित्यत्र काकतालशब्दयोः काकागमन–तालपतनक्रियावर्तित्वात् तयोश्च क्रमेण देवदत्तागमन–दस्युनिपातोपमानत्वात् । एतयोरनुपादानादुपमान–लुप्ता । तथा इवशब्दस्यानुपादानाद्वाचकलोपश्चेति भावः ।

**वस्तुतस्तु**–कैयटेन–'इवार्थे समासः' इति व्याख्यानात् व्याकरणस्य शक्तिग्राहकत्वात् 'समासाच्च तद्विषयात्' [पा. सू. ८–३–१०६] इतीवार्थे विहितस्य छप्रत्ययस्य सादृश्यवाचकत्वमुपगम्य तत्प्रकृतिभूतसमासस्य सादृश्यवाचकत्वं नास्तीत्यभ्युपगमः तुरगारूढस्यैव तुरगविस्मरणतुल्यः । अतश्च समासार्थोपमायां वाचकलोपः इत्युक्तिश्चिन्त्या ।

किं च-'तत्र तस्येवेति' विहितवतिप्रत्ययस्य सादृश्यवाचकत्वम्, यथेव वाशब्दाः यत्पराः तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमान विशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्ती'ति तत्सद्भावे श्रौती उपमा । तथैव 'तत्र तस्येव' [पा.सू. ५–९- ११६] इत्यनेन इवार्थे विहितस्य वतेरुपादानेऽपि' इति वदता **प्रकाशकृता**— 'सादृश्यमात्रवाचकयथेवादिशब्दवती श्रौतीति, आदिशब्देन वतिं संगृह्णता **ग्रन्थकृता च** अभ्युपगतमेव । इत्थं सति तत्सजातीयस्य छप्रत्ययस्यापि सादृश्यवाचकत्वमभ्युपगतम् । इति न पुनर्वक्तव्यमस्ति । तद्वदेव तत्प्रकृति–भूतस्य इवार्थसमासस्य सादृश्यवाचकत्वं नास्तीत्यभिधानं स्वस्यापि कथं युज्यताम् । तथासति 'एकस्याक्ष्णो नवनीतं, अपरस्याक्ष्णो मक्तोलः' इति न्यायः प्रसज्यते ॥

अत्रैव 'किमिति ब्रूमो वयमिदम्' इति तृतीयपाद प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोपः । अत्र धर्मलोपस्त्वैच्छिकः इति ॥

## तत्त्वालोकः

नन्वेवं तर्हि-'कैलासगौरं, शस्त्रीश्यामा' इत्यादावपि समासस्यैव वाचकत्वं प्रसज्यते तत्रापि सादृश्यप्रतीतेः इति न च वाच्यम् । काकतालीयमित्यत्र समासार्थतो वैलक्षण्यात् न ह्युपमानानीति सूत्रेण इवार्थसमासो विधीयते । अत्र तु इवार्थ एव समास इति । अत एव शस्त्रीश्यामा इत्यादौ वाचकलुप्तात्वं सर्वसम्मतम् ॥

यदि समासात्सादृश्यप्रतीतिश्शक्त्या न स्यात्तदा 'समासाच्च तद्विषयात्' इति सूत्रे भाष्यकृता-यदि समासोऽपि इवार्थे, छप्रत्ययोऽपि तत्रैव, तर्हि समासेनोक्तत्वात् न प्राप्नोति इति या शंका कृता सा न युज्येत । समाधानं तु प्राथमिके इवार्थे समासः द्वितीये इवार्थे छप्रत्यय इति विषयभेदात् न पौनरुक्त्यप्रसक्तिः । उक्तशंकापरभाष्यं च समासात् सादृश्यमभिधीयत इत्यत्र तात्पर्यग्राहकमात्रम् इत्युक्तम् ॥

अत्रैव श्लोके तृतीयपादस्य अन्यथाकरणे प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोपस्तु ऐच्छाकृत इति 'एकस्मिन्नेवोदाहरणे उपमानलोप-वाचकोपमानलोप-धर्मोपमानलोप-धर्मोपमान वाचकलोपानां संभव इत्याहत्य प्रतिपादितं भवति । तत्र पाठविपर्यास फलितमाह – अत्रैवेत्यादिना ।

## चित्रमीमांसा

समासार्थोपमायां वाचकोपमानलोपः इति ।

### तत्त्वालोकः

समासार्थोपमायां वाचकोपमानलोपौ चेत्युपपादयति-**समासार्थेति** । काकतालमित्यत्र काकतालशब्दयोः काकागमन-तालपतनक्रियावर्तित्वात् तयोश्च क्रमेण देवदत्तागमन-दस्युनिपातोपमानत्वात् । एतयोरनुपादानादुपमान-लुप्ता । तथा इवशब्दस्यानुपादानाद्वाचकलोपश्चेति भावः ।

**वस्तुतस्तु**-कैयटेन-'इवार्थे समासः' इति व्याख्यानात् व्याकरणस्य शक्तिग्राहकत्वात् 'समासाच्च तद्विषयात्' [पा. सू. ८-३-१०६] इतीवार्थे विहितस्य छप्रत्ययस्य सादृश्यवाचकत्वमुपगम्य तत्प्रकृतिभूतसमासस्य सादृश्यवाचकत्वं नास्तीत्यभ्युपगमः तुरगारूढस्यैव तुरगविस्मरणतुल्यः । अतश्च समासार्थोपमायां वाचकलोपः इत्युक्तिश्चिन्त्या ।

किं च-'तत्र तस्येवेति' विहितवतिप्रत्ययस्य सादृश्यवाचकत्वम्, यथेव वाशब्दाः यत्पराः तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमान विशेषणान्येते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्सम्बन्धं प्रतिपादयन्ती'ति तत्सद्भावे श्रौती उपमा । तथैव 'तत्र तस्येव' [पा.सू. ५-१-११६] इत्यनेन इवार्थे विहितस्य वतेरुपादानेऽपि' इति वदता **प्रकाशकृता**— 'सादृश्यमात्रवाचकयथेवादिशब्दवती श्रौतीति, आदिशब्देन वतिं संगृह्णता **ग्रन्थकृता च** अभ्युपगतमेव । इत्थं सति तत्सजातीयस्य छप्रत्ययस्यापि सादृश्यवाचकत्वमभ्युपगतम् । इति न पुनर्वक्तव्यमस्ति । तद्वदेव तत्प्रकृति-भूतस्य इवार्थसमासस्य सादृश्यवाचकत्वं नास्तीत्यभिधानं स्वस्यापि कथं युज्यताम् । तथासति 'एकस्याक्ष्णो नवनीतं, अपरस्याक्ष्णो मक्कोलः' इति न्यायः प्रसज्यते ॥

## चित्रमीमांसा

अत्रैव 'किमिति ब्रूमो वयमिदम्' इति तृतीयपाद प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोपः । अत्र धर्मलोपस्त्वैच्छिकः इति ॥

## तत्त्वालोकः

**नन्वेवं तर्हि**–'कैलासगौरं, शस्त्रीश्यामा' इत्यादावपि समासस्यैव वाचकत्वं प्रसज्यते तत्रापि सादृश्यप्रतीतेः इति न च वाच्यम् । काकतालीयमित्यत्र समासार्थतो वैलक्षण्यात् न ह्युपमानानीति सूत्रेण इवार्थसमासो विधीयते । अत्र तु इवार्थ एव समास इति । अत एव शस्त्रीश्यामा इत्यादौ वाचकलुप्तात्वं सर्वसम्मतम् ॥

यदि समासात्सादृश्यप्रतीतिश्शक्त्या न स्यात्तदा 'समासाच्च तद्विषयात्' इति सूत्रे भाष्यकृता–यदि समासोऽपि इवार्थे, छप्रत्ययोऽपि तत्रैव, तर्हि समासेनोक्तत्वात् न प्राप्नोति इति या शंका कृता सा न युज्येत । समाधानं तु प्राथमिके इवार्थे समासः द्वितीये इवार्थे छप्रत्यय इति विषयभेदात् न पौनरुक्त्यप्रसक्तिः । उक्तशंकापरभाष्यं च समासात् सादृश्यमभिधीयत इत्यत्र तात्पर्यग्राहकमात्रम् इत्युक्तम् ॥

अत्रैव श्लोके तृतीयपादस्य अन्यथाकरणे प्रत्ययार्थोपमायां धर्मोपमानलोपः । समासार्थोपमायां धर्मोपमानवाचकलोपस्तु ईच्छाकृत इति 'एकस्मिन्नेवोदाहरणे उपमानलोप-वाचकोपमानलोप-धर्मोपमानलोप–धर्मोपमान वाचकलोपानां संभव इत्याहत्य प्रतिपादितं भवति । तत्र पाठविपर्यास फलितमाह – **अत्रैवेत्यादिना** ।

चित्रमीमांसा

यं त्वं पालयसे धर्मं धृत्या च नियमेन च ।
स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥

तत्त्वालोकः

पाठविपर्यासे— 'यच्चोराणामस्य च समागमो यच्चतैर्वधोऽस्य कृतः ।
किमिति ब्रूमः वयमिदमासीद्धत काकतालीयम् ॥

इति पर्यवस्यति । शिष्टमवतरणे एवोक्तम् ॥

धर्मवाचकलुप्तामुदाहरति—यं त्वमिति ।

'राघवः शाल इव इत्यर्थे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति तत्पुरुषसमासः । राघवश्रेष्ठ इत्यर्थः ।

स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥

इति **अमरः** । त्वं—भवान् यं धर्मं कुलपरंपराप्राप्तं 'इज्याध्ययनदानानि । शस्त्रेणाजीवनं राज्ञः भूतानां चाभिरक्षणम् इति स्मृतं धर्मं वृत्त्या—आचरेण, नियमेन च व्यवहारेण च शौचादिभिर्वा, पालयसे—परिरक्षसि, स वै धर्मः लोकानुभवगोचरः' वैशब्दः प्रसिद्धिद्योतकः 'समुच्चये च वै पापे वाक्यारम्भ प्रसिद्धयोः' इति वैजयन्ती । त्वां भवन्तं अभिरक्षतु सर्वतोमुखं रक्षणं विधत्ताम्, प्रार्थनायां लोट् ॥

**ननु**— स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ।
सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥

## चित्रमीमांसा

इत्यत्र राघवः शार्दूल इवेत्यर्थे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासे धर्मवाचकयोर्लोपः । अत्र वाचकलोपवत् धर्मलोपोऽपि शास्त्रीयः । सामान्याप्रयोग एवैतत्समासानुशासनात् इति ॥

## तत्त्वालोकः

इत्यभिधाननाममालोक्तरीत्या शार्दूलपदस्य श्रेष्ठ्यपरत्वात् उपमितसमासानुपपत्तिः धर्मविशिष्टवाचित्वादिति चेन्न, उक्तधर्मपालनव्यापाराश्रयत्वानुगुण्येन उपमितसमासस्यैव युक्तत्वात् । शार्दूलपदस्य श्रेष्ठ्यार्थविशिष्टवस्त्वभिधायकत्वेनादोषात् ।

न चात्र रूपकसमासस्य प्रसक्तिः । पूर्वोक्तधर्मसंरक्षणानुगुण्येन उपमितिसमासस्यैवोपगन्तुं युक्तत्वात् । शौर्यादिद्वारा राघवे शार्दूलोपमायां सिद्धायां राघवशार्दूलयोः धर्मिणोरुपमायां तात्पर्यात् ।

अत्रेदमवधेयम्—समासेऽखण्डशक्तिरित्येकं मतम् । निरूढलक्षणेत्यपरं मतम् । तत्र उपमितसमासस्य उपमानसादृश्यविशिष्टे शक्तिरित्युपगमे सादृश्यस्याभिधानात्कथं वाचकलुप्तात्वम् ? निरूढलक्षणाभ्युपगमपक्षेऽपि सादृश्यस्य लक्ष्यमाणतया कथं वाचकलुप्तात्वमिति चेत्—चन्द्रसुहृन्मुखमिति साम्यलक्षकवदुपमायामिति ग्रन्थकृदुदाहरणानुरोधेन एतादृशस्थले विशिष्टशक्तपदोपमानवाचकपदान्यतरानुपस्थाप्यसादृश्य–तद्विशिष्टान्यतरप्रतिपादकशब्दानुपादानस्यैव वाचकलोपपदार्थत्वेन ग्रन्थकृदभिमतत्वात् इति नात्र वाचकलुप्तात्वस्यानुपपत्तिरिति प्रागेव आवेदनात् । अन्यथा दूषणमपि अभिव्यञ्जितमेव । तदेतत्सर्वं मनसि निधाय आह–अत्र राघव इत्यादिना । स्पष्टोऽर्थः ।

तत्त्वालोकः

**ननु**–सामन्याप्रयोग एव एतत्समासानुशासनादित्यत्र सामान्याप्रयोग इत्यस्य किं विवक्षितसामान्याप्रयोग इत्यर्थः ? अथवा विवक्षिताविवक्षितो भयसाधारणसामान्याऽप्रयोगे इत्यर्थः ? आद्ये न दोषः ।

अन्त्ये तु व्यभिचारः । तथाहि—

अयं क इत्यन्यनिवारकाणां गिराविभुर्द्वारि विभुज्य कण्ठम् ।
दृशं दधौ विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः ॥

इति **नैषधपद्ये** राजसिंह इत्यत्र राजा सिंह इवेत्युपमितसमासेन भाव्यम् ।

ग्रीवां वक्रयित्वा पश्चादवलोकनोपपत्तये उपमितसमासस्यैवावश्यक वात् । सत्यम् । ग्रीवानमनस्य राजसिंहोभयसाधारणस्य धर्मस्योपादानात् । तदनुपादान एव समासोऽनुशिष्यते । अतश्च प्रकृतानुगुणः उपमितसमासो न स्यात् । अतश्चात्र उपमानिमित्तत्वेन यद्विवक्षितं सामान्यं शौर्यादि तस्याप्रयोग इत्यर्थविवक्षायामुपमितसमास उपपद्यते । अत एव–समासगां द्विलुप्तोपमामुदाहरता **काव्यप्रकाशकारेण**-दशमे —

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
सांपरायप्रवृत्तोऽसौ राजते राजकुंजरः ॥ इत्युदाहृतम् ।

अन्यथा-प्रकाशनस्य–सांपरायप्रवृत्तत्वस्य वा राज–कुंजरोभयसाधा–रणत्वेन अविवक्षितत्वेऽपि तत्प्रयोगादुपमितसमासो न स्यात् । 'सामान्या प्रयोगे' इत्यस्य विवक्षितसामान्याप्रयोग इत्यर्थकरणे तु आकारमहत्त्वशक्ति शालित्वादिकमनुपात्तं विवक्षितं सामान्यमिति समास उपपद्यते । अन्यथा धर्मलुप्तात्वमुपपादितमनुपपन्नं स्यात् ।

तत्त्वालोकः

**ननु**—उपात्तधर्मकेऽपि लक्ष्ये यद्यनुपात्तं धर्ममादाय समासो निरुह्यते तदा धर्मोपादानवैयर्थ्यापत्तिरिति वाच्यम् ।

तथा शंकानुदयात् यतश्च उपात्तधर्मोपादानस्य अनुपात्तविवक्षितधर्म परिपोषकतयैव साफल्यत् ।

**एतेन**—अनुपात्तधर्मेण साम्यविवक्षया धर्मोपादानस्थलेऽपि समासो पपादनमसत् । धर्मोपादानवैफल्यापत्तेः । उपात्तधर्मसत्वे तेनैव साम्य-प्रतीतेरनुभवात् 'सकलकलः पुरचन्द्रो राजते' इत्यादावुपात्तधर्मातिरिक्तधर्मस्य साम्यप्रयोजकस्याभावादिति **उद्योतकृता नागेशभट्टेनोक्तं** चिन्त्यमेव ।

**किंच**—नागेशोदाहृते 'सकलकलः पुरचन्द्रो राजते' इत्यत्र हृद्यत्वादेरुपमाप्रयोजकस्य संभवादभावोक्तिरपि न साधीयसी ।

**अत एव**—नागेशभट्टादपि प्रप्राचीनैः **निगमान्तगुरुभिः तत्व टीकायां** श्रीभाष्यप्रबन्धस्याज्ञारभ्यतानिरसनप्रवृत्तं पारशर्यवचस्सुधेति पद्यं व्याख्यातुमुपक्रम्य–'वचस्सुधाम्' इत्यत्र श्लेषोपस्कृतनिजाक्षरानीतत्वादि सामान्यप्रयोगे कथमिह 'उपमितम्' इत्यादिनासमासः इत्याशंक्य–इत्थम् समाससूच्यं स्वादुत्वसामान्यमिहाप्रयुक्तम् । तदन्यस्य प्रयोगेऽपि न दोषः । 'भाष्याब्धिः क्वातिगम्भीरः' इत्यादिवत् । इत्युपपाद्य—

साधर्म्यात्स्वादुतासिद्धिः तथा (तया) स्वादुतमत्वधीः ।
वैधर्म्यादिति वैषम्यं भाव्यमत्र मनीषिभिः ॥ १८७ ॥

यद्विवक्षितसामान्यं तत्प्रयोगो निषिध्यते ।
उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥ १८८ ॥

**चित्रमीमांसा**

**नृणां यं सेवमानानां संसारोऽप्यपवर्गति ।**
**तं जगत्यभजन् मर्त्यः चश्वा चन्द्रकलाधरम् ॥**

**तत्त्वालोकः**

विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते ।
तत्पुनर्नोच्यते साक्षात्समासस्तेन सिद्ध्यति ॥ १८९ ॥

अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः ।
दृश्यते बहुशः तस्मात्समासोऽत्र न दुष्यति ॥ १९० ॥

इत्यनेन महता संरंभेण उपमितसमासः स्थापितः । अधिकं रूपके वक्ष्यते । अत एव-**प्रौढमनोरमायां-भट्टोजिदीक्षितैः**-कथं तर्हि 'भाष्याब्धिः क्कातिगम्भीरः' इति कैयटः । समान्यप्रयोगसत्वेन अस्य अप्राप्तेः । अत्र केचित् प्रमाद एवायमित्याहुः । इति परेषां मतमुल्लिख्य-इह गाम्भीर्येण सादृश्यं न विवक्षितं किन्तु विततदुरवगाहत्वादिना । तस्य हि विततत्वादेर प्रयोगोऽस्त्येवेति निर्बाधः समासः इत्यभिहितं पूर्वोक्ततत्वटीकानुगुणं युक्त च । अथापि नागेशभट्टः स्वपरमगुरूक्तिमपि विस्मृतवानित्याश्चर्यमेव नः इत्यलम् ॥

अथ धर्मवाचकलुप्तायां धर्मलोपः शास्त्रीयः, ऐच्छिक इति द्वेधा । तत्र शास्त्रीयस्य धर्मलोपस्योदाहरणं प्रदर्श्य ऐच्छिकं धर्मलोपोदाहरणं प्रदर्शयति-**नृणामिति** ।

यं चन्द्रकलाधरम् बालेन्दुशेखरम्, सेवमानानाम् शुश्रूषमाणानाम नृणाम् मनुजानाम्, संसरोऽपि-जगदपि, अपवर्गति-अपवृज्यते परित्यज्यते

चित्रमीमांसा

इत्यत्र अपवर्ग इवाचरतीत्यर्थे अपवर्गतीत्यत्र आचारार्थस्य क्विपो लोपाद्वाचकवद्धर्मस्यापि लोपः ।

चञ्चेत्यत्र चञ्चा तृणपुरुष इवेत्यस्मिन्नर्थे 'इवे प्रति-

तत्त्वालोकः

संसारोऽत्रेति अप+वृजधातोः 'हलश्चेति' [पा.सू ३-३.१२१] घञ् कुत्वञ्च । अपवर्गः–मोक्षः स इवाचरतीत्यर्थे 'कर्तुः क्यङ् सलोपश्च' [३-१-११] इति सूत्रस्थेन 'सर्वप्रातिपदिकेभ्यः आचारे क्विप् वक्तव्योऽश्वति गदर्भतीत्येवमर्थम्' [वा.स १७२२] इति कात्यायनवचनेन कर्तृवाचकादाचारे क्विप् । मोक्षतुल्यो भवतीत्यर्थः । तं चन्द्रकलाधरम्–शिवम्, अभजन्–असेवमानः, मर्त्यः संसरन् पुरुषः, जगति चञ्चा–तृणरचितपुत्थलिकेवेत्यर्थः ।

अत्र सनाद्यन्तधातुवृत्तिगतः तद्धितवृत्तिगतश्च धर्मवाचकः लोपः संभवतीत्युपपादयति–अत्रेत्यादिना । अपवर्गतीत्यत्र अपवर्गशब्दादुपमानवाचकात् कर्तरि क्विपो विधानात् क्विपस्सर्वलोपित्वेन आचाररूपसाधारण धर्ममात्रवाचकस्य लोपः । वाचकलोपस्तु-उपमानार्थककर्तृवाचकपदोत्तरं क्विपो विधानात् सादृश्यस्येवार्थस्याक्षेपाल्लभः । क्यङादीनामुपमानोपमेयोभयान्वयिसाधारणधर्मबोधकत्वेन सादृश्याक्षेपमन्तरा क्यङादिप्रकृतीनामुपमानताया एवासिद्धया तदुत्तरं क्यङादीनां प्रवृत्तिरेव न स्यात् । अतश्च आक्षेपलब्धमेव औपम्यमिति वाचकलोपोऽपीत्यभिप्रायेण वाचकवदिति सिद्धवन्निर्देशेन दृष्टान्तीकरणम् ।

अत्रैव तद्धितगां धर्मवाचकलुप्तां 'चञ्चा' इत्यत्रोपपादयति–चञ्चेत्यत्रेति । 'चञ्चेव मनुष्यः–चञ्चा' इत्यर्थे 'इवे प्रतिकृतौ' इत्यधिकारस्थेन

चित्रमीमांसा

कृतौ' इति विहितस्य कनो 'लुम्मनुष्ये' इति लुब्विधानात् वाचकलोपः, धर्मलोपश्चेति।

अस्य श्लोकस्य–

यद्भक्तानां सुखमयस्संसारोऽप्यपवर्ग इति।

तत्त्वालोकः

'संज्ञायाम्' [पा.सू. ५-३-९७] इति सूत्रेण कन्प्रत्यये तस्य मनुष्य वाचित्वात् 'लुम्मनुष्ये' [पा.सू. ५-३-९८] इति लुपि, 'लुपि युक्तवद्व्यक्ति वचने' [पा.सू. १-२-५१] इति तद्धितप्रकृतिवल्लिङ्गतेति चञ्चेति नियत स्त्रीलिङ्गता। एवं च सादृश्ये विहितस्य कनो लोपाद्वाचकलोपः। साधारण धर्मस्य अनुपादानाद्धर्मलोपोऽपीति भावः॥

न चात्र–चन्द्रकलाधरभजनराहित्यस्योपादानमस्तीति कथमत्र धर्मलोप इति वाच्यम्।

अयं क इत्यन्यनिवारकाणां गिरा विमुद्द्वारि विसृज्य कण्ठम्।
दृशं दधौ विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिह्मः॥

इत्यादौ श्रीवानमनादेः राजसिह्माद्युभयसाधारणस्योपादानेऽपि अस्य साधारण धर्मत्वेन विवक्षा नास्ति, अपितु शौर्यादिनैवानुपात्तेन विवक्षितेन साधारण्यम् इत्यभ्युपेयते। तथात्रापि उपात्तधर्मकृतं साधारण्यं न विवक्षितं किन्तु आत्म हिताकरणरूपमनुपात्तधर्मकृतमित्यभिप्रायस्य ग्रन्थकृतैवोत्तरत्राविष्करणात् एतद्ग्र थोपरि रसगंगाधरोक्तपूर्वपक्षसमाधाने नात्यन्तं गरीयसी इति बोध्यम्॥

यद्भक्तानामितिश्लोके चतुर्थपादैकदेशस्यान्यथाकरणे साधारणधर्मस्य

चित्रमीमांसा

तं शम्भुमभजन् मर्त्यः चञ्चेन्नात्महिताकृतेः ॥

इति पाठेन उभयत्रापि धर्मस्य श्रवणमपि संभवति ।

रूपयौवनलावण्यस्पृहणीयतराकृतिः ।
पुरतो हरिणाक्षीणामेष पुष्पायुधीयति ॥

तत्त्वालोकः

श्रवणं संभवतीत्येतादृशोदाहरणेषु वाचकलुप्तात्वमेवेति प्रतिपादयति-अस्य श्लोकस्येति । इत्थं धर्मवाचकलुप्तामुदाहृत्य वाचकोपमेयलोपस्य, धर्मोपमानवाचकानां लोपस्य च एकत्रोदाहरणं प्रदर्शयति-रूपेति ।

रूपम्–आवेध्यारोप्यविक्षेप्यबन्धनीयरूपेण चतुर्धा अवस्थितैः भूषणैः विना भूषितवदाभासमानश्शारीरो धर्मविशेषः । उक्तं च रसार्णवसुधाकरे शिङ्गभूपालेन—

अङ्गान्यभूषितान्येव विक्षेपाद्यैर्विभूषणैः ।
येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥ इति ।

तथा यौवनेन–तारुण्येन, युवन् शब्दात् भावे 'हायनान्तयुवादिभ्योऽण्' [पा.सू ५·१-१३०] इति अण्प्रत्यये, 'अन्' [पा.सू. ६·४-१४७] इति प्रकृतिभावश्च । लावण्येन–समुदायशोभया च । लावण्यस्वरूपं चोक्तम्

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ इति ।

एतैः स्पृहणीयतरा–अत्यन्तमपेक्षणीया, आकृतिः आकारो यस्य सः । 'द्विवचनविभज्योपपदे' [पा.सू. ५·३-५७] इति विभक्तव्ये तरप् । एषः

चित्रमीमांसा

इत्यत्र वाचकोपमेययोर्लोपः। रूपयौवनेत्यादि स्वविशेषणसामर्थ्यात् स्वात्मानं पुष्पायुधमिवाचरतीत्यस्यार्थस्य गम्यमानत्वात् स्वात्मन उपमेयस्य लोपः कवेरैच्छिकः। न चैष इत्युपमेयस्योपादानमस्तीति शंक्यम्। तस्य कर्मविभक्त्यभावेन पुष्पायुधीयतीत्यत्रोपमेयासमर्पकत्वात्॥ इति॥

तत्त्वालोकः

प्रकृतो राजा, हरिणाक्षीणां मृगलोचनानां, पुरतः अग्रे, पुष्पायुधीयति काम इवाचरति–आत्मनं कामदेवमिव प्रदर्शयतीत्यर्थः। अत्र वाचकोपमेययोः लोपप्रकारमाह–अत्रेति।

अयं भावः–'पुष्पायुधीयति' इत्यत्र पुष्पायुधमिवात्मानमाचरतीत्यर्थे 'उपमानादाचारे' [पा.सू. ३-१-१०] इत्युपमानात्कर्मणः सुबन्तादाचाररूपधर्ममात्रे क्यचो विधानात् इवार्थस्य आक्षेपलभ्यत्वेन वाचकलोपः। उपमेयभूतस्य स्वस्यापि रूपयौवनेत्यादिविशेषणबलादाक्षेप इति स्वात्मन उपमेयस्यापि अनुच्चारणमिति लोप एव।

ननु चात्र 'एषः' इति उपमेयसमर्पकस्योपादानमस्ति सर्वनाम्नां च 'बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्ति'रित्यभ्युपगमादिति कथमत्र उपमेयलोप इति आशंक्य, एष इत्यस्य कर्मविभक्त्यन्तत्वाभावेन सामानाधिकरण्याभावात् क्यजर्थक्रियाजन्यफलाश्रयासमर्पकत्वात् नोपमेयसमर्पकत्वमित्याह–**न चैष इत्यादिना**।

तत्त्वालोकः

एतेन–एतत्पद्यं व्याख्यास्यता रसगंगाधरव्याख्यात्रा **पण्डितश्री मदनमोहनझा शर्मणा–रसगंगाधरव्याख्यायां चन्द्रिकायां**–'पुष्पायुधीयति–पुष्पायुधः कामः स इवाचरतीत्यर्थः इति यद्व्याख्यातम् , तत्प्रामादिकं, अन्यथा 'पुष्पायुधायते' इति आत्मनेपदेन भाव्यम् । तथाहि–कर्तुः क्यङ् सलोपश्च [पा.सू.३ १-११] इति सूत्रेण उपमानात्कर्तरि क्यङि, तस्य ङित्वात् 'अनुदात्तङित आत्नेपदम्' [पा.सू. १ ३·१२] इति आत्मनेपदे , 'अकृत्सार्वधातुकयोर्दीर्घः' [पा.सू. ७·४-२५] इति दीर्घे श्येनायते इतिवत् पुष्पायुधायते इति स्यात् । क्यचि तु 'दीर्घापवादेन क्यचि च' [पा.सू ७-४-३३] इत्यनेन ईकारः अनात्मनेपदित्वं चेति विशेषः । एवं च पुष्पायुधीयतीति प्रतीकमुपादाय उक्तरीत्या व्याख्यानप्रदर्शनमनुचितम् ॥

**किंच**—व्याख्यात्रभिमतरीत्या 'पुष्पायुधायते' इति पाठव्यत्यासकरणे तु कर्तृविभक्त्यन्तत्वेन एषः इत्युपमेयसमर्पकत्वं अस्त्येवेति उपमेयलोपाभावाद्वाचकोपमेयलुप्तायामुदाहरणत्वेनोपादानम्, 'नचैष' इत्युपमेयस्य उपादानमस्तीत्याशंक्य तस्य कर्मविभक्त्यभावेन उपमेयासमर्पकत्वादिति शंकासमाधाने, स्वात्मानं पुष्पायुधमिव आचरतीति तत्रैव (चित्रमीमांसायामेव) विग्रहवाक्य प्रदर्शनं च असंगतं स्यादिति विभावनीयम् ॥

**यत्तु–चित्रमीमांसाखण्डनकृता** खण्डने—'पुरतः' इत्यपशब्दितं तैः इत्युक्तम् । तदपि न युक्तम् । नात्र ग्रन्थकृता नगरादित्यर्थे पूर्वमित्यर्थे वा पुरतः इति प्रयुक्तम् । किन्तु अग्रे इत्यस्मिन्नेवार्थे । अस्मिन्नर्थे च पुर अग्रगमने [धातु.तु.६४सं] इति तौदादिकस्य इगुपधत्वात् 'इगुपधज्ञप्रीकिरः कः' [पा.सू.३–१–१३५] इति कप्रत्यये सार्वविभक्तिकतसिप्रत्यये च साधुरिति विभाव्यम् ।

## चित्रमीमांसा

इत्यत्र वाचकोपमेययोर्लोपः । रूपयौवनेत्यादि स्वविशेषणसामर्थ्यात् स्वात्मानं पुष्पायुधमिवाचरतीत्यस्यार्थस्य गम्यमानत्वात् स्वात्मन उपमेयस्य लोपः कवेरैच्छिकः । न चैष इत्युपमेयस्योपादानमस्तीति शंक्यम् । तस्य कर्मविभक्त्यभावेन पुष्पायुधीयतीत्यत्रोपमेयासमर्पकत्वात् ॥ इति ॥

### तत्त्वालोकः

प्रकृतो राजा, हरिणाक्षीणां मृगलोचनानां, पुरतः अग्रे, पुष्पायुधीयति काम इवाचरति–आत्मनं कामदेवमिव प्रदर्शयतीत्यर्थः । अत्र वाचकोपमेययोः लोपप्रकारमाह–अत्रेति ।

अयं भावः– 'पुष्पायुधीयति' इत्यत्र पुष्पायुधमिवात्मानमाचरतीत्यर्थे 'उपमानादाचारे' [पा.सू. ३-१-१०] इत्युपमानात्कर्मणः सुबन्तादाचाररूपधर्ममात्रे क्यचो विधानात् इवार्थस्य आक्षेपलभ्यत्वेन वाचकलोपः । उपमेयभूतस्य स्वस्यापि रूपयौवनेत्यादिविशेषणबलादाक्षेप इति स्वात्मन उपमेयस्यापि अनुच्चारणमिति लोप एव ।

ननु चात्र 'एषः' इति उपमेयसमर्पकस्योपादानमस्ति सर्वनाम्नां च 'बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्ति'रित्यभ्युपगमादिति कथमत्र उपमेयलोप इति आशंक्य, एष इत्यस्य कर्मविभक्त्यन्तत्वाभावेन सामानाधिकरण्याभावात् क्यजर्थक्रियाजन्यफलाश्रयासमर्पकत्वात् नोपमेयसमर्पकत्वमित्याह–न चैष इत्यादिना ।

तत्त्वालोकः

एतेन–एतत्पद्यं व्याख्यास्यता रसगंगाधरव्याख्यात्रा **पण्डतश्री मदनमोहनझा शर्मणा–रसगंगाधरव्याख्यायां चन्द्रिकायां**–'पुष्पायुधीयति–पुष्पायुधः कामः स इवाचरतीत्यर्थः इति यद्व्याख्यातम्, तत्प्रामादिकं, अन्यथा 'पुष्पायुधायते' इति आत्मनेपदेन भाव्यम्। तथाहि–कर्तुः क्यङ् सलोपश्च [पा सू. ३ १-११] इति सूत्रेण उपमानात्कर्तरि क्यङि, तस्य ङित्वात् 'अनुदात्तङित आत्नेपदम्' [पा.सू. १ ३·१२] इति आत्मनेपदे, 'अकृत्सार्वधातुकयोर्दीर्घः' [पा.सू. ७·४-२५] इति दीर्घे श्येनायते इतिवत् पुष्पायुधायते इति स्यात्। क्यचि तु 'दीर्घापवादेन क्यचि च' [पा.सू ७-४-३३] इत्यनेन ईकारः अनात्मनेपदित्वं चेति विशेषः। एवं च पुष्पायुधीयतीति प्रतीकमुपादाय उक्तरीत्या व्याख्यानप्रदर्शनमनुचितम्॥

**किंच**—व्याख्यातभिमतरीत्या 'पुष्पायुधायते' इति पाठव्यत्यासकरणे तु कर्तृविभक्त्यन्तत्वेन एषः इत्युपमेयसमर्पकत्वं अस्त्येवेति उपमेयलोपाभावाद्वाचकोपमेयलुप्तायामुदाहरणत्वेनोपादानम्, 'नचैष' इत्युपमेयस्य उपादानमस्तीत्याशंक्य तस्य कर्मविभक्त्यभावेन उपमेयासमर्पकत्वादिति शंकासमाधाने, स्वात्मानं पुष्पायुधमिव आचरतीति तत्रैव (चित्रमीमांसायामेव) विग्रहवाक्यप्रदर्शनं च असंगतं स्यादिति विभावनीयम्॥

**यत्तु–चित्रमीमांसाखण्डनकृता** खण्डने—'पुरतः' इत्यपशब्दितं तैः इत्युक्तम्। तदपि न युक्तम्। नात्र ग्रन्थकृता नगरादित्यर्थे पूर्वमित्यर्थे वा पुरतः इति प्रयुक्तम्। किन्तु अग्रे इत्यस्मिन्नेवार्थे। अस्मिन्नर्थे च पुर अग्रगमने [धातु.तु.६४सं] इति तौदादिकस्य इगुपधत्वात् 'इगुपधज्ञप्रीकिरः कः' [पा.सू.३–१–१३५] इति कप्रत्यये सार्वविभक्तिकतसिप्रत्यये च साधुरिति विभाव्यम्।

चित्रमीमांसा

अत्रैव 'हरिणस्याक्षिणी इव आयते अक्षिणी आसाम्' इत्यस्मिन्नर्थेऽनुशिष्टे हरिणाक्षीणामितिपदे धर्मोपमान वाचकानां लोपः। सर्वोऽप्ययं सप्तम्युपमानपूर्वपदस्य' इत्यादिशास्त्रकृत एव लोपः ॥

तत्त्वालोकः

एवं-रसगंगाधरमर्मप्रकाशे— 'वस्तुतस्तु – पुर अग्रगमने' इति चौरादिकाण्णिजभावे इगुपधलक्षणे के सार्वविभक्तिकः तसिः इति तौदादिक स्यापि पुरधातोः चौरादित्वभ्रान्त्या णिजभावोपपादनक्लेशः किमर्थं स्वीकृतो **नागेशेनेति** न जानीमः। धातुपाठे पुरधातोः चुरादावदर्शनात्। तथा रसगंगाधरमर्मप्रकाशमात्रावालम्बिनां **रसगंगाधरव्याख्यातॄणामुक्तयोऽपि** निर्मूलाः ॥

पुष्पायुधीयतीत्यत्र वाचकोपमेयलोपं प्रतिपाद्य अत्रैव हरिणाक्षीणां इत्यत्र धर्मोपमानवाचकानां त्रयाणामपि लोप इत्युपपादयति–**अत्रैवेति**। अत्र प्रथमं हरिणस्याक्षिणी इत्युपमानपूर्वपदः षष्ठीसमासः। तस्य उत्तराक्षि शब्देन सह 'अनेकमन्यपदार्थे' [पा.सू. २–२–२४] इत्यनेन बहुव्रीहिः।

अत्र हरिणाक्ष्णोः कान्ताक्षिणी प्रति उपमानता। हरिणावयवत्वात् हरिणमप्युपमानं। एवं स्थिते हरिणाक्षिशब्दः उपमानपूर्वपदः तत्र षष्ठी समासे यदुत्तरपदं प्राथमिक अक्षिशब्दः तस्य 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहि र्वाच्यो वाचोत्तरपदलोपश्च' [का.वा. १३५८] इति उपमानवाचकस्याक्षि शब्दस्य लोपे 'हरिणाक्षी' इति रूपम्। अत्र इवशब्दस्य आक्षेपलभ्यत्वाल्लोपः। आयतत्वस्यापि सामर्थ्यलभ्यत्वात् लोपः। उपमानस्याक्षि शब्दस्य अनुच्चारणात् लोप इति 'हरिणाक्षी' इति पदं त्रिलुप्तोदाहरणम् ॥

तत्त्वालोकः

अत्रायं विशेषः—'हरिणाक्षीणाम्' इति पदे धर्मोपमानवाचकानां लोप इति स्पष्टमुपमानवाचकलोपमुपपादयता ग्रन्थकृता–हरिणस्य अक्षिणी इव आयते अक्षिणी यस्याः इति विग्रहे सति समासे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्चे'ति पाठानुरोधेन द्वितीयस्यैवाक्षिशब्दस्य समासचरमावयवत्वम् अत एव उत्तरपदत्वं चेति तस्यैवात्र लोपेन भाव्यमित्युपमेयवाचकधर्माणां लोप इति त्रिलुप्तेति वदतां मतं निराकृतं भवति । उक्तमताभ्युपगमे तु–कण्ठेकालः, उरसिलोमा, करधनः इत्यादिरूपासिद्धिप्रसङ्गाद्धि उक्तोदाहृतिषु कण्ठे स्थितः कालोऽस्य, उरसि स्थितं लोम यस्य, करे स्थितं धनं यस्येति विग्रहे कालादिशब्दानामुत्तरपदत्वेन तेषामेव लोपे उक्तरूपाणामसिद्धिरिति ॥

अतः उक्तवार्तिकस्यैवमर्थो ग्राह्यः सप्तम्युपमानपूर्वपदस्य– म्यन्तं उपमानपदं वा यस्मिन् पूर्वपदे विद्यते तस्य पदान्तरेण उपमेयपदेन वा समासे बहुव्रीहिर्वाच्यः, तथा सप्तम्यन्तपूर्वपदकसमासे–उपमानपूर्वपदकसमासे यदुत्तरपदं तस्य लोपश्चेति । एवं सति 'सप्तमी उपमानान्यतरपूर्वपदकसमासे उत्तरपदं स्थितनयनादिपदं न तु काल–लोम–धन–अक्ष्यादिपदमिति नोक्तरूपाऽसिद्धिः । 'उत्तरपदशब्दः' इत्यादि संप्रदायव्याकोपो वा, बहुव्रीहिसमासात्पूर्वं कृते समासे स्थितादिपदानामुत्तरपदत्वानपायात् । अन्यथा तत्रत्यभाष्यकैयटव्याकोपः प्रसज्येत । तथा च भाष्यम्–सप्तमीपूर्वस्य, उपमानपूर्वस्य च बहुव्रीहिर्वक्तव्यः । उत्तरपदस्य च लोपो वक्तव्यः । कण्ठे स्थितः कालोऽस्य कण्ठेकालः । उष्ट्रमुखमिव अस्योष्ट्रमुखः । खरमुखः इति ।

अत्र कैयटः—उष्ट्रमुखमिवेति–अवयवधर्मेण समुदायस्य व्यपदेशात् ।

तत्त्वालोकः

उष्ट्रस्योपमानतेति उपमानपूर्वपदः उष्ट्रमुखशब्दः । उपमानस्योपमेयवृत्तित्वात् पदयोः वैयधिकरण्यमत्रेति वचनमुत्तरपदलोपार्थमिति ।

**यत्तु**—अत्र उक्तं–अप्रयोग एव लोपशब्देनात्रोच्यते–तथाहि उष्ट्र मुखमस्येति विग्रहः । न च प्राणी प्राण्यन्तरावयवो भवतीति उष्ट्रशब्दस्य तन्मुखे लक्षणेति **कैयटेन**–तदेतत्पूर्वपक्षमात्रम्–अमुमेव पूर्वपक्षमवलम्ब्य **काव्यप्रकाशकृता** त्रिलोपे च समासगा इति प्रदर्श्य 'मृगनयना हरते मुनेर्मनः' इत्युदाहृत्य–अत्र यदा 'सप्तम्युपमान' इत्यादिना समासलोपौ भवतः तदेद मुदाहरणम् इत्युक्तम् । अस्याभिप्रायश्च विवृतः **काव्यप्रदीपकृता**–अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणमिति ।

यद्यपि लक्षणापक्षोऽस्ति, तथापि ग्रन्थकृतो नात्र नैर्भर्यमिति वाचको पमानधर्मलुप्तात्वोपपादनादेव ज्ञायते । अत एव क्वापि लक्षणापक्षो नोट्टंकितः ।

**एवं उद्भटादिभिः**—धर्मोपमेयवाचकलुप्तापि संभवतीति मत्वा 'आयश्शूलिकः' इति त्रिलुप्तोदाहृता । तथाहि–अत्र अयश्शूलपदेन क्रूरः आचारः उपमेयः, तीक्ष्णत्वादिकं साधारणधर्मः, न च तयोरेकमप्युपात्तं नापि इवादिः इति ।

तन्न युक्तं 'आयश्शूलिकः' इत्यत्र अयश्शूलपदेन क्रूरमाचारं निगीर्या ध्यवसानेन अतिशयोक्त्या वा उपमेयस्योपादानादतिशयोक्तिरियं नोपमा । अन्यथा–अध्यवसानलक्षणामूलातिशयोक्तिः निर्विषया स्यात् इति उद्भटादि संमतः धर्मोपमेयवाचकलोपो न परिगणितो ग्रन्थकृतेति च भाव्यम् । उद्भटा- द्यभिमता च पूर्वोक्ता त्रिलुप्ता प्रकाशतद्व्याख्यातृभिरपि निराकृतैवेत्यलम् ॥

चित्रमीमांसा

त्रिलोपे धर्मलोपस्त्वैच्छिकोऽपि संभवति। यथा 'यच्चोराणमस्य' च इति श्लोकस्य द्वितीयपाठे समासार्थोपमायाम्। एवं लुप्तायाः अष्टौ विधाः प्रदर्शितः।

काव्यप्रकाशकारादिभिस्तु पूर्णायाः षड्विधाः, लुप्तायास्तु धर्मलुप्तादिष्ववान्तरभेदेन कश्चिदेकोनविंशतिः, अन्यैः विंशतिविधाः प्रदर्शिताः।

तत्त्वालोकः

त्रिलोपे धर्मलोपस्य शास्त्रीयत्वमिव इच्छापरिकल्पितत्वमपि संभवतीत्याह त्रिलोप इति। अयं भावः 'यच्चोराणामस्यचे'त्यत्र उपनतमेतदकस्मात् इति पाठं परित्यज्य किमिति ब्रूमो वयमेद्रमिति तृतीयपादपाठे समासार्थोपमायां अकस्मादुपनतत्वस्यानुपादानाद्धर्मलोपस्यैच्छिकत्वमिति त्रिलुप्तात्वमपि इति। अष्टधा भिन्नां लुप्तोपमां प्रदर्श्य उपसंहरति-एवमिति।

इतः पूर्वं ग्रन्थकृता स्वाभिप्रायानुसारेण पूर्णालुप्ताप्रभेदाः प्रदर्शिताः। संप्रति काव्यप्रकाशकारादि-प्राचीनमतानुरोधेन पूर्णालुप्तादिभेदान् प्रदर्शयितुमारभते-काव्यप्रकाशकारादिभिस्त्विति। तुशब्दः अस्वरसद्योतकः। श्रौत्यादिविभागस्य व्याकरणशास्त्रव्युत्पत्तिप्रदर्शनमात्रपरत्वमेव, नालंकारशास्त्रव्युत्पत्तिप्रयोजकत्वं सामस्त्येन विभागपरत्वं वा संभवति द्विर्भावादिषु धर्मलुप्तादीनामसंग्रहात् इति। अत्रादिशब्दात् विद्यानाथभोजराजादीनां परिग्रहः।

विद्यानाथेन लुप्तोपमा एकोनविंशतिभेदा (१९) प्रदर्शिता। काव्यप्रकाशकृतापि-एकोनविंशतिलुप्ताभेदाः (१९) प्रदर्शिताः। स्वमते

## चित्रमीमांसा

तत्रायं विभागः। पूर्णा तावत् द्विविधा श्रौती आर्थी च।

## तत्त्वालोकः

-णिनिप्रत्ययगतवाचकलुप्ताभ्युपगमात् विंशतिविधा (२०) इति भावः। **सरस्वतीकण्ठाभरणकृता** - अष्टादशविधा (१८), **साहित्यदर्पणकृता** - एकविंशतिर्लुप्ताभेदाः २१) प्रदर्शिताः। उपमा द्विविधा। पूर्णा लुप्ता चेति। तत्र पूर्णां विभजते-**तत्रेति**।

तन्मात्रवाचकत्वं नाम तदितरमुख्यविशेष्यकज्ञानाजनकत्वे सति तन्मुख्यविशेष्यकज्ञानजनकत्वम्। प्रकृते च सादृश्येतरमुख्यविशेष्यकज्ञानाजनकत्वे सति सादृश्यमुख्यविशेष्यकज्ञानजनकत्वरूपम्। तुल्यादिपदस्य न सादृश्यमुख्यविशेष्यकज्ञानजनकत्वं किन्तु सादृश्यविशिष्टवस्तुविशेष्यकज्ञानजनकत्वमिति न तत्र श्रौतीत्वम्। अयं च श्रौत्यार्थीस्वरूपविवेकः ग्रन्थकृदभिमतः। अधिकमन्यत्र।

**काव्यप्रकाशकृता तु**—यत्र साधारणधर्मस्य उपमाने उपमेये चोभयत्र संबन्धबोधकत्वं तत्र श्रौतीत्वम्। उपमेयमात्रे संबन्धबोधकत्वं यत्र तत्र आर्थीत्वमिति। उक्तं च **काव्यप्रकाशे दशमे**-'यथेववाशब्दाः यत्पराः तस्यैवोपमानताप्रतीतिरिति यद्यपि उपमानविशेषणा एते, तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत्संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा' इति।

अयं भावः-शब्दशक्तेः खल्विदं माहात्म्यं यन्नियमेनोपमान वाचका अपि इवादयः 'राज्ञः पुरुषः' इत्यादौ

तत्त्वालोकः

'भेदकत्वेऽपि नियते षष्ठीवदिववादयः ।
द्विष्ठं श्रुत्यैव संबन्धं गमयन्ति स्वभावतः ॥'

इति वाक्यपदीयोक्तरीत्या राजपुरुषोभयनिष्ठं संबन्धं बोधयन्ति । तद्वदत्रापि उपमानोपमेयोभयसंबन्धं इवाद्या अपि । अत एवोक्तम्—'शब्दशक्तेर्महिमा न पर्यनुयोगमर्ह'तीति । एवं चैतन्मते–श्रुत्या उपमान संबन्धमेव बोधयन्त इवाद्याः उपमेये पर्यवस्यन्ति । तुल्यादयस्तु श्रुत्या सदृशमेव बोधयन्तोऽर्थात् सादृश्ये पर्यवस्यन्तीति आर्थीत्वम् इति ॥

अत्र काव्यप्रदीपकृतैवमुक्तम्–'श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वमिति । अर्थापत्तिगम्यत्वं चार्थत्वमिति च । एवमत्रैव उत्तरत्र तेनैव 'तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च संबन्धबोधे विशेषात् श्रौतार्थविभाग इति मन्तव्यम् । तथाहि–'पद्ममिव मुखम्' इत्यादावुपात्तस्य आक्षिप्तस्यास्यरमणीयत्वादेः संबन्धमविषयीकृत्यापर्यवसानम् । यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात् । तुल्यादिशब्दास्तु नैवम् । 'पद्मेन तुल्यं मुखम्' इत्यादावुपमेये, 'पद्मं मुखस्य तुल्यम्' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेः' इति ।

अत्र प्रभा–उभयत्र सादृश्यप्रत्ययाविशेषे यथेवादिश्रुतिः साधारण धर्मविशेषरूपाह्लादकत्वसंबन्धमप्रत्याय्य न पर्यवस्यति ।

तुल्यादिपदश्रुतिस्तु धर्मविशेषसंबन्धावगमं विनापि सामान्यतः

तत्त्वालोकः

साधर्म्यबोधमात्रेण पर्यवसिता प्रतीतसामान्यस्य विशेषं विना अनुपपत्त्या पश्चाद्विशेषमाक्षिपति इति ।

अत्रैवं चिन्त्यते—सादृश्यं किं साधारणधर्मरूपं, अथा तत्संबन्धरूपं दीक्षिताभिमतम् ? इति—

अत्र **नैयायिकाः**—'घटो न पटः' इत्यत्र यथा नञ्पदजन्याभावोपस्थितौ प्रतियोगित्वांशस्य संसर्गतया भानम्, तद्वत् इवपदजन्यसाधारणधर्मरूपसादृश्योपस्थितौ प्रतियोगित्वानुयोगित्वयोः संसर्गविधया भानम् । एवं च सादृश्यं साधारणधर्मरूपमिति वदन्ति ।

एवंप्रवृत्तोऽपि वादः साधुरेव-यतः सदृशशब्दाद्भावे ष्यञ् । भावश्च यद्धर्मवत्त्वेन ज्ञातेऽर्थे यश्शब्दः प्रयुज्यतें स धर्मः तच्छब्दप्रवृत्तौ निमित्तम् । इदमेव 'प्रकृतिजन्यबोधे प्रकारीभूतो भाव इत्युच्यत' इति जातिगुणक्रियाद्यात्मकानां संग्राहकं रूपं **भट्टोजिदीक्षितैर**भिहितम् । सदृशशब्दश्च 'समानान्ययोश्चे'ति वार्तिकात् कर्तरि कञ्प्रत्ययान्तः । ततश्च भावे ष्यञ् । उक्तं च 'तस्य भावस्त्वतलौ' [पा. सू. ५-१-११९] इति सूत्रे-'सिद्धं तु यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ' इति **वार्तिककृता**। विवृतं च **कैयटेन**-'गुणशब्देन यावान् कश्चित्पराश्रयो भेदको जात्यादिरर्थः । स सर्वे इह गृह्यते । भावात् विद्यमानत्वादित्यर्थः' इति ।

एतेन सादृश्यंसाधारणधर्मरूपमित्यपि वक्तुं शक्यम् ॥

**मीमांसकास्तु**-सादृश्यं न द्रव्यम् । गुणकर्मणोरपि वृत्तेः । अत एव न गुणकर्मणी । नापि सामान्यम्, अनुवृत्तप्रत्ययनिमित्तत्वाभावात् ।

तत्वालोकः

नापि भूयोऽवयवसामान्यरूपं सादृश्यम्, प्रतीतिवैलक्षण्यात् । सादृश्यं हि सप्रतियोगिकमेव प्रतीयते 'अयमनेन सदृशः' इति । तस्मात् पृथक् तत्वान्तरमिति आहुः (प्राभाकराः ।)

**ग्रन्थकृतस्तु**–मीमांसकवत् पदार्थान्तरत्वमिष्टम् । तथाहि–उपमेयोपमायां वक्ष्यमाणरीत्या सादृश्यप्रयोजकसाधारणधर्मसम्बन्ध एवोपमा । कर्तरि कृत्प्रत्ययान्तात् सदृशशब्दात् भवन् भावप्रत्ययः संबन्धमेवाभिधत्ते । अनुवृत्तप्रत्ययनिमित्तत्वाभावाच्च न धर्मरूपत्वम् । अत एव च 'कृत्तद्धितसमासेभ्यः संबन्धाभिधानम् अन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः' इति वार्तिकोक्तिः सङ्गच्छते ।

यद्यपि कृत्तद्धितसमासाः केवलं संबन्धं नाभिदधति, तथापि संबन्धिनि वर्तमानाः संबन्धं प्रवृत्तिनिमित्तमपेक्षन्त इति तेभ्यः संबन्धे भावप्रत्ययः । तथा च 'राजपुरुषत्व'मित्यादौ स्वस्वामिभावस्य यथा प्रतीतिः तथा 'चन्द्र इव मुखम्' इत्यादौ इवादिपदात् सदृशस्यस्याभिधानम् । अत एव **मीमांसकैरपि**—

यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः ।
तदा गत्यन्तराभावात् संबन्धो वाच्य आश्रितः ॥

इत्यभ्युपगम्यते । तद्वदेवात्रापि मते । परं तु नैयायिकवत् प्रतियोगित्वानुयोगित्वादीनां रूपकेऽभेदवत् संसर्गमर्यादयैव लाभः । तस्य च न प्रकाशकारादिवदुपमानविशेषणत्वं किन्तु उपमानभूतचन्द्रादीनामेव इवार्थे सादृश्ये विशेषणत्वम् । सादृश्यस्य चेवार्थस्य अनुयोगितासंबन्धेन मुख–

## चित्रमीमांसा

धर्मलुप्तापि पूर्णावदेव विभागवती । किन्तु श्रौती तद्धिते न संभवतीति एवं पञ्चविधा ॥

वाचकलुप्ता-कर्तृकर्मणमुलोः, कर्माधिकरणक्यचोः, क्यङि, णिनौ, समासे चेत्येवं सप्तविधा ॥

## तत्त्वालोकः

धर्मलुप्तापि पूर्णावदेव विभागवती । किन्तु तद्धितगा धर्मलुप्ता श्रौती न संभवतीति पञ्चविधेत्याह-धर्मलुप्तापीति ।




वाचकलुप्ता (७) सप्तविधा

१ कर्मणमुलि २ कर्तृणमुलि ३ कर्मणि क्यचि

४ अधिकरणक्यचि ५ क्यङि ६ णिनिप्रत्यये

७ समासे च ।

## चित्रमीमांसा

उपमानलुप्ता–वाक्यसमासयोः द्विविधा ॥
धर्मवाचकलुप्ता क्विप्समासयोर्द्विविधा ॥
धर्मोपमानलुप्ता–वाक्यसमासयोर्द्विविधा ॥

## तत्त्वालोकः

उपमानलुप्तापि द्विविधा—




धर्मवाचकलुप्तापि द्विविधा—




धर्मोपमानलुप्तापि द्विविधा—



चित्रमीमांसा

उपमेयवाचकलुप्ता–क्यचि एकविधा ॥

धर्मोपमानवाचकलुप्ता–समास एवैकविधेति ॥

यदाहुः—

पूर्णा लुप्ता च सा द्वेधा श्रौत्यार्थी चेति ते पुनः ।
द्विविधे, प्रथमा वाक्ये समासे तद्धिते भवेत् ॥

तद्वल्लुप्तापि धर्मस्य लोपे श्रौती न तद्धिते ।
इवादिलोपे द्विविधे णमुलि, क्यचि च क्यङि ॥ २ ॥

तत्त्वालोकः

उपमेयवाचकलुप्तापि एकविधा—

उपमेयवाचकलुप्ता (१)
|
क्यजगता

धर्मोपमानवाचकलुप्तापि एकविधैव—

धर्मोमानवाचकलुप्ता (१)
|
समासगता

पूर्णालुप्ताभेदेन विभक्तामुपमां कारिकाभिः संगृह्णाति–यदाहुरिति ।

चित्रमीमांसा

तथा णिनौ समासे च सप्तधा परिकीर्तिता ॥
उपमानस्य लोपे तु द्विधा वाक्यसमासयोः ॥ ३ ॥

इवादिधर्मलोपेऽपि द्विविधा क्विप्समासयोः ।
धर्मोपमानयोर्लोपे वाक्यगा च समासगा ॥

इवादेरुपमेयस्य द्वयोर्लोपे भवेत्क्यचि ।
इवादिधर्मोपमानलोपे त्वेषा समासगा ॥ ॥ ५ ॥ इति

अत्रोदाहरणानि तन्मतरीत्या संगृह्यास्माभिर्लिख्यन्ते—

यस्याज्ञा शिरसोह्यते सुमनसां वृन्दैर्यथामालिका
बध्वा मुञ्चति यः पशूनिव जनान् यस्याभ्रवद्वैभवम् ।

तत्त्वालोकः

षड्विंशतिविधा अप्युपमाः पञ्चसु श्लोकेषु निबध्य प्रदर्शयितुमुपक्रमते—अत्रेति ॥

षड्विधायाः पूर्णोपमायाः उदाहरणानि प्रदर्शयति—यस्याज्ञेति । तस्मै शम्भवे—जगत्संहर्त्रे । शं सुखं भावयतीति शंभुः । अत्र 'शम्' इत्यव्ययं सुखवाचि । भवतिश्चान्तर्भावितण्यर्थः । डुप्रकरणे 'मितद्वादिभ्य उपसंख्यानम्' [वार्तिक २१५२] इति कर्तरि डुप्रत्ययः ॥

ननु शम्भुशब्दस्य संहर्तृत्वपरत्वे दुःखकरत्वमेव स्यान्न सुखकरत्वमिति चेन्न अनादौ संसारचक्रे नानायोनिषु परिभ्रमतां जीवानां कतिपयकाल–

चित्रमीमांसा

हृद्यं शेवधिना समं हृदि भजन्त्यानन्दसारोपमं
यं धन्याः शशिवत्प्रसन्नवपुषे तस्मै नमः शम्भवे ॥

तत्त्वालोकः

विश्रान्तिरूपोपसंहारसुखप्रवर्तकत्वप्रदर्शनादुपपन्नम् । भिषक्कृतव्रणच्छेदः व्रणार्तानामिव ईश्वरकृतोपसंहारः प्रजानां अन्ततोगत्वा सुखावहत्वात् दययैव कृतः । तदुक्तं वायुपुराणे —

निदानज्ञस्य भिषजः रुग्णे हिंसां प्रयुञ्जतः ।
न किञ्चिदस्ति नैर्घृण्यं घृणैवात्र प्रयोजिका ॥ इति ॥

एवंविधाय, नमः–प्रह्वीभावोऽस्त्विति शेषः । कीदृशश्शम्भुरित्यत्राह यस्याज्ञेति । सुमनसां बृन्दैः-देवनिकायैः, बुधैश्च, 'सुमनाः पुष्पमालत्यो स्त्री, देवबुधयोः पुमान्' इति यादवः । यस्य–शम्भोः आज्ञा–शासनम्, मालिका यथा–मालेव शिरसा उह्यते, वहेः कर्मणि लट् । अभ्युपगम्यते । यः जनान् जन्मिनो जीवान्, पशूनिव–चतुष्पद इव, बध्वा–कर्मरज्जुभिरुद्बध्य, पश्चात् मुञ्चति–त्यजति, 'बध्वा' इति समानकर्तृकयोः पूर्वकाले [पा. सू. ३–४–२१] इति क्त्वा प्रत्ययः । तेन

पशवः पाशिताः पूर्वं परमेण स्वलीलया ।
तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ॥

इत्युक्तं स्फोरितं भवति ।

## चित्रमीमांसा

अत्र षड्विधापि पूर्णा दर्शिता । तत्र प्रथमवाक्ये वाक्यगा श्रौती इति ।

## तत्त्वालोकः

एतेन भगवान् रुद्रान्तरात्मतया अवस्थाय लोकान् मोचयतीत्यर्थः । यस्य वैभवं–व्यापकत्वम्, अभ्रवत्–अभ्रस्येव. वर्तते । धन्याः–सुकृतिनः, यं ईश्वरम् आनन्दसारोपम्-आनन्दसारेण तुल्यम्, शेवधिना समं निधिसदृशं अत्र 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' [पा. सू. २–३–७२] इति तृतीया । हृदयस्य प्रियं -हृद्यम् । अत्र हृदयस्य प्रिय इत्यर्थे विवक्षिते हृदयशब्दात् 'हृदयस्य प्रियः' [पा. सू. ४–४–९५] इति सूत्रात् यत्प्रत्यये हृदयशब्दस्य 'हृदयहल्लेखयद' पा. सू. ६–३–५०] इति हृदादेशः। तम् हृदि भजन्ति–सेवन्ते, तस्मै, शशिवत् शशिना तुल्यम्, प्रसन्नवपुषे निर्मलवपुषे मनः अस्त्विति पूर्वेणान्वयः ॥

अत्र षड्विधा पूर्णा श्रौती उपपादितेत्याह अत्रेत्यादिना । तत्र प्रथमवाक्ये 'यथा मालिका तथा आज्ञा' इत्यन्वयेन सादृश्यमात्रवाचक यथादिशब्दश्रवणात् श्रौती वाक्यगा–तत्रेति ।

अयं भावः—अत्र यथाशब्दः 'प्रकारवचने थाल्' [पा.सू. ५-३-६९] इति प्रकारे परिनिष्पन्नः । प्रकारशब्दस्य सादृश्यार्थकत्वात् सादृश्ये वृत्तिः अत्र च न समासः 'यथाऽसादृश्ये'[पा.सू. २-१-७]इतिनि । निषेधात् अस्मादेव निषेधाज्ज्ञापकादव्युत्पन्नो यथाशब्दो वीप्सादिवृत्तीति ज्ञायते । वीप्सादिषु वृत्तो यथाशब्दः समासं लभत इति अव्युत्पन्नयथाशब्दविषय

तत्त्वालोकः

समासः । 'सादृश्यसम्पत्ति' इति प्राप्तस्य समासस्य असादृश्ये इति निषेधः क्रियत इति यथाशब्दस्य सादृश्यवाचकत्वं सिद्धम् ।

भट्टोजिदीक्षितास्तु सिद्धान्तकौमुद्याम्—'यथा हरिस्तथा हरः, इत्युदाहृत्य हरेरुपमानत्वं यथाशब्दो द्योतयतीत्याहुः । अत्रैव व्याख्यातं च **नागेशभट्टेन**—'सामान्यस्य भेदको यो विशेषः तद्रूपे प्रकारे थाल्' इति यद्विशेषवान् हरिः तद्विशेषवदभिन्नो हर इति बोधे यत्तच्छब्दाभ्यां तयोः एकत्वावगमेऽर्थादुपमानत्वप्रतीतेरिति भावः' इति । थाल्सूत्रे सादृश्यस्य प्रकारशब्देन ग्रहणे यत्सादृश्यवान् हरिः तत्सादृश्यवान् हरः 'इत्येव बोधः स्यान्न तु हरिसदृशो हर' इति । यथाशब्दः उपमानत्वं द्योतयतीति सकलाभियुक्तोक्तेः 'यद्विशेषवान्' इत्यादिबोधोत्तरमुपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्त इति बोधः । गृहीतविशेषधर्म एव च साधारणधर्मः । लक्षणामूलव्यञ्जनाजन्यबोधस्थल एव उभयोः शाब्दत्वं सुवचम् । अत एवोपमानोपमेययोस्समानविभक्तिकत्वसिद्धिरिति । एवं च पूर्वपदार्थप्राधान्याभावेन नात्र अव्ययीभावप्रसक्तिः । अथापि समासः वचनात्प्राप्नोति तद्वारणार्थमसादृश्ये इत्यभिहितमित्यभिप्रायः **शब्देन्दुशेखरे** निरूपितः ।

एतदभिप्रायेणैव **काव्यप्रकाशोद्योते** च—यथातथाशब्दप्रयोगे तु पश्चाज्जायमानसादृश्यविषयबोधमादायेदं बोध्यम् । यद्धर्मवांश्चन्द्रः तद्धर्मवन्मुखमित्येव तत्र बोधात् इति चाभिहितम् । एवं च सादृश्यप्रयोजकसाधारण धर्मसम्बन्धो ह्युपमा । सादृश्यं चातिरिक्तः पदार्थः । धर्मविशेषश्च क्वचिदुपात्तः क्वचिदाक्षिप्त इत्यन्यत् । 'यथादयश्च तत्प्रयोजकधर्मविशेषसम्बन्ध एव उक्ताः न तुल्यादयः' इति परमतावलम्बेनोक्तम् ।

## चित्रमीमांसा

**द्वितीयवाक्ये समासगा श्रौती। 'इवेन नित्य समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति वार्तिक कृद्वचनेन पशूनिवेत्यस्य समासपदत्वादिति।**

## तत्त्वालोकः

स्वमतं तु मञ्जूषायां व्यक्तीकृतमिति तत्रैव द्रष्टव्यम्। पूर्वोक्तं च मतं **अलंकारचक्रवर्तिनो**ऽनुगुणमिव भाति। तैरेवमुच्यते–'चन्द्र इव मुखम्' इत्यादौ उपमानप्रकारकोपमेयविशेष्यकबोधसम्भवेऽपि 'यथा चन्द्रः तथा मुखम्' इत्यादौ न तदुपपत्तिः। तत्र 'यादृशधर्मवान् चन्द्रः तादृशधर्म वन्मुखम्' इत्युभयविशेष्यकबोधात्। तेन चन्द्र इवेत्यादावपि उभय–विशेष्यक एव बोधः। एवं वदतश्चक्रवर्तिनोऽयमभिप्रायः—'यथा चन्द्रः' इत्यत्र प्रकारार्थकथाल्प्रत्ययवशात् यत्तच्छब्दाभ्यां वाक्यभेदावगमाच्चोभय विशेष्यकबोधः। परन्तु चन्द्र इवेत्यत्रोभयविशेष्यकबोध इत्यभ्युपगमे कारणं न समञ्जसमिति। तथा च मालिकायाः आज्ञायाश्चो मानोपमेय–भावे यादृशवहनकर्मीभूता मालिका तादृशवहनकर्मीभूता आज्ञा' इति बोधो जायत एतन्मते। एवंवदतामिदं श्रौत्या उदाहरणं अथवा आर्थ्या इति विवेचनीयम्॥

'यथा मालिका तथा आज्ञा' इत्यत्र वाक्यगां श्रौतीमुपपाद्य द्वितीय वाक्ये 'पशूनिव जनान्' इत्यत्र समासगां श्रौतीमुपपादयति–**द्वितीयेति**। 'पशूनिव' इत्यत्र पशुसदृशान् इति विग्रहः। 'अविग्रहः अस्वपदविग्रो वा नित्यसमास' इति वैयाकरणसंप्रदायात्। अविग्रह इत्यस्यायमर्थः। न विद्यते विग्रहः–वृत्यर्थावबोधकं वाक्यं यस्य सः। यत्र नित्यसमासः तत्र

तत्त्वालोकः

विग्रहेण विवरणमेव न कार्यमित्यर्थः। अस्वपदविग्रहः–स्वपदेन–समासान्तर्गतपदेन विग्रहः–विवरणं यस्य न क्रियते, अपितु तत्समानार्थकपदान्तरेण क्रियते तत्रेत्यर्थः।

ग्रन्थकृता समासगायामेव इवशब्दघटितोदाहरणप्रदर्शनं, वाक्यगायां च तदप्रदर्शनं च प्रकाशाद्यनुरोधेन। तदुक्तं प्रकाशे 'इवेन समासः विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' [२-१-४] इति नित्यसमासे इवशब्दप्रयोगे समासगेति। एवं च इवेन सह नित्यसमासविधानात् तत्प्रयोगे उपमाया वाक्यगतत्वोदाहरणविरोधादिति हि तेषामाशयः। एतदनुरोधिन एव विद्यानाथादयः।

अत एव मल्लिनाथेन-रघुवंशसञ्जीविन्यां 'वागर्थाविव संपृक्तौ' इत्यत्र वागर्थाविव इत्येकं पदम्। 'इवेन सह नित्यसमासो विभक्त्यलोपश्चे' त्याद्यभिहितम्।

नव्यास्तु — ( भट्टोजिदीक्षितनागेशभट्टप्रभृतयः ) 'अयमपि समासः काचित्क एव। तेन 'जीमूतस्येव' इत्यादौ तैत्तिरीयाणां पृथक्पदत्वेन पाठः, 'उद्बाहुरिव वामनः' इत्यादिव्यस्तप्रयोगश्च संगच्छते, इत्याहुः [ मनोरमा ]। 'व्याकरणे वैकल्पिकत्वाङ्गीकाराद्वार्तिके तथा अपाठाच्च नित्यपदप्रक्षेपः अप्रामाणिकः' इति उद्योते।

अत एव — 'सह सुपा' [पा.सू. २-१-४] इति सूत्रे भाष्ये 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च इति वार्तिकम्। इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' वक्तव्यम्। इति भाष्यं च पुस्तकेषु दृश्यते। अन्यथा 'उद्बाहुरिव वामनः' इत्यत्र वामन इव इत्येत्र प्रयोगापत्तेरिति भावः।

तत्त्वालोकः

**वस्तुतस्तु**–समासस्य वैकल्पिकत्वोक्तिरुभयथाप्रयोगदर्शनात् । अथापि सति संभवे कृतसमासस्यैव प्रयोगः धर्माधिक्यफलकः ‘वैकल्पिकेष्वपि भावानुष्ठानं धर्माधिक्याये’ति भाष्यकृत्सिद्धान्तात् । अत एव मल्लिनाथादयोऽपि ‘वागर्थाविव’ इत्यादेवेकपदत्वम् , ‘उद्बाहुरिव’ इत्यादौ तदभावं चाङ्गचकार्षुरिति बोध्यम् ।

अत्र इवशब्दः सादृश्यवाचक इति ग्रन्थकृतां सिद्धान्तः । तत्र सादृश्यं साधारणधर्मरूपमथ तदतिरिक्तं पदार्थान्तरम् ? साधारणधर्मरूपमिति नैयायिकाद्याः । पदार्थान्तरमिति मीमांसकाः । तयोरन्त्यपक्षः ग्रन्थकृत्सम्मतः । तत्रापि विचारयामः–अतिरिक्तत्वेऽपि संबन्धरूपत्वमभ्युपेयत एव । स च संबन्धः भेदघटितः उत अभेदघटित उत उभयघटितः इति । अत्र उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा इति भेदप्राधान्यं व्यतिरेकादिवत् ॥ अभेदप्राधान्यं रूपकादिवत् । द्वयोस्तुल्यत्वं यथा स्यामितिं **अलंकारसर्वस्वकारः** । अत्र प्रमाणं च तेनैव ‘उपमानानि सामान्यवचनैः’ [ पा.सू. २-१-५५ ] इति सूत्रस्थं भाष्यमुपन्यस्तम् । तथाहि–यत्र किञ्चित्सामान्यं कश्चिच्चविशेषः स विषयस्सदृशतायाः, तत्र उपमानोपमेये भवतः इति । अत्र व्याख्यातं च **प्रदीपे कैयटेन** ‘शस्त्रीश्यामा’ इत्यादौ श्यामत्वस्य आधारभेदाद्भेदोऽप्याश्रीयते, गुणजातेरेकत्वादभेदोऽपीत्यर्थः [व्या.म.भा ५८. २-१-५५] इति ।

एवं भाष्यकृतैव पूर्वपक्षोक्तसूत्रे [२-१-५५] किं यदेवोपमानं तदेवोपमेयम् ? आहोस्वित् अन्यदुपमेयम् ? किंचातः । यदि यदेवोपमानं तदेवोपमेयं क इहोपमार्थः गौरिति । अथान्यदेवोपमानं अन्यदुपमेयं क इहोपमार्थः गौरिवाश्वः इति **भाष्यम्** । अत्र कैयटेन–पदार्थद्वयवृत्ति

तत्त्वालोकः

गुणद्वारकाभेदाश्रयणे उपमानस्येवोपमेयरूपत्वमभ्युपगतं भवति । न च तद्युक्तम् । शस्त्रीशब्दप्रयोगवैयर्थ्यप्रसंगात् । अथाधारभेदात् श्यामत्वस्य भेदः तदा शस्त्रीदेवदत्तार्थयोर्भेदान्नास्ति तद्वारकः उपमानोपमेयभावः । इत्युक्तत्वात् भेदोऽभेदश्चौपम्यप्रयोजक इति व्यञ्जितं भवति । एवं च सादृश्यं भेदाभेदोभयघटितमिति ग्रन्थकृदाशय इति जानीमः ।

अत एव **कुवलयानन्दे**—समप्रधानसंकरनिरूपणावसरे स्वेनैवोक्तम् 'प्रातिस्विकरूपेण भेदवत् अनुगतसादृश्यप्रयोजकरूपेणाभेदोऽप्यस्ति । स चात्र विवक्षित एव । भेदाभेदोभयप्रधानोपमेति सिद्धान्तात्' इत्युक्तं संगच्छते । एतेनैतदुक्तं भवति-ग्रन्थकृतः भेदाभेदोभयघटितं सादृश्यमित्यत्रैव तात्पर्यमिति ॥

**काव्यप्रकाशादि**मते तु सादृश्यं भेदघटितमेव । अत एव 'साधर्म्य-मुपमाभेदे' इत्युक्तं **प्रकाशकृता** । तत्र न ह्यभेदे सादृश्यात्मकं साधर्म्यम् । तथापि आरोपितसाधर्म्यनिबन्धनानन्वयव्यवच्छेदाय भेदे इति **काव्यप्रदीप कृता**, 'न ह्यभेदे' इति प्रदीपप्रतीकमुपादाय तद्भिन्नत्वे सति तद्गतभूयोधर्म वत्त्वस्येव सादृश्यपदार्थत्वादिति भावः इति **प्रदीपोद्योते नागेशभट्टेन** च उक्तत्वात् सादृश्यं भेदघटितमिति सिद्धं भवति ।

अत एव **महाभाष्यकृता**—अकर्तरि च कारके संज्ञायाम् [पा.सू. ३-३-१९] इति सूत्रे 'अकर्तरि' इति पर्युदासाश्रयणेन कर्तृभिन्ने कर्तृसदृशे कारकान्तरे घञ् विधीयत इत्यभिप्रायमाविष्कुर्वता 'नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इत्युक्त्वा स्वेनैव विवृतं नञ्युक्तं च अन्यस्मिन् तत्सदृशे कार्यं विज्ञायते तथाह्यर्थो गम्यते इति । उदाहृतं च-तद्यथा-अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति । नासौ लोष्टमानीय कृती भवतीति ।

तत्त्वालोकः

एवं च ब्राह्मणभिन्नः ब्राह्मणसदृशः प्रतीयते न तु ब्रह्मण एव । एवं 'चन्द्र इव मुखम्' इत्यादौ अपि चन्द्रभिन्नं चन्द्रसदृशं प्रतीयते ।

**परिभाषेन्दुशेखरे तु**— अत्र अन्यसदृशेत्युक्त्या सादृश्यं भेदघटितमिति सूचयतीत्युक्तम्–तत्तु न समीचीनम् । इवादिपदोपादाने सति अभेद सादृश्यस्याननुभवात् । प्रत्युत–सादृश्ये प्रतीते भेदो नियमेन प्रतीयत एवेति सर्वसम्मतम् । अत एव–**ग्रन्थकृतैवो**त्तरत्र **अनन्वये** स्वस्य स्वेनोपमा न अन्वेतीत्यनन्वय इत्यन्वर्थं नाम भवतीति वक्ष्यते ।

अत एव च-**दहराधिकरणे शांकरभाष्ये** [शा.२-३-१४] अभेदे सादृश्यं न घटत इत्यभिप्रेत्यैव काल्पनिकभेदमाश्रित्यापि उपमानोपमेयभावः संभवतीत्यभिप्रायः आविष्कृतः । तथा हि–यद्यप्याकाशशब्दो भूताकाशे रूढः । तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशंका निवर्तिता भवति । ननु एकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेन उपमानोपमेयभावः संभवतीत्युक्तम् । नैवं संभवति अगतिका हीयं गतिः । यत्काल्पनिकभेदाश्रयणमिति ।

अत्रैव भामत्यां **वाचस्पतिमिश्रैः** (शा.भाम. २–३–१४) तेन तस्य उपमेयत्वं रामरावणयुद्धवत् । अगत्या भेदमारोप्य गतौ सत्यां न युज्यते इत्यभिहितम् । अत्रैव **कल्पतरौ अमलानन्दसरस्वतीभिः**–ह्रस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते—

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ इति, इति विवृतम् ।

## तत्त्वालोकः

**परिमले तु ग्रन्थकृता**—'युद्ध इति' गगनसागरयोरप्युपलक्षणम् तदभिप्रायेणारोपग्रहणमप्यर्थवत्। 'गगनं गगनाकारं' इत्यत्र उपमालंकार इति मतमनुरुध्येत्थमुक्तम्। यदि तु 'गगनं गगनाकारम्' इति श्लोके नोपमालंकारः किन्तु भेदकल्पनमनपेक्ष्य अत्यन्ताभेदे निबध्यमानमौपम्यं नान्वेतीत्यन्वर्थनामालंकारः, अनन्वयितोऽप्यौपम्यस्य निबन्धनमनुपमत्वद्योतनाय। यथा वा स्वयं दासत्ववचनं दासरहितत्वद्योतनायेति मतमनुरुध्यते तदापि नात्रानन्वयेन निर्वाहपत्याशा। अयमिति एषोन्तर्हृदय इति चोपमानोपमेयरूपयोः परस्परव्यावर्तकविशेषणनिवेशेन 'उपाददे तस्य सहस्ररश्मिः' इत्यत्रेव कल्पितभेदोपाधिकौपमाप्रभेदस्यैव वक्तव्यत्वात् इत्यभिदधता—सादृश्यं भेदघटितं यथा, तथा अभेदघटितमपीति व्यज्यते—अभेदे सत्यपि धर्मभेदे उपमा अभ्युपेयत एव। अत एव अनन्वयसिद्धान्ते—धर्मभेदे तु एकधर्मावच्छिन्नेन स्वेनैव धर्मान्तरावच्छिन्नस्य स्वस्योपमा अन्वेति इति वक्ष्यते।

वस्तुतस्तु— सादृश्यं भेदघटितमेव। 'गगनं गगनाकारम्' इत्यादौ भेदविवक्षायामुपमायाः, उपमानान्तरव्यावृत्तौ अनन्वयस्य प्रसरः, अभेदेऽपि भेदः औपचारिकः इत्येव वक्तुं युक्तः न तु सादृश्यं भेदाघटितमिति **कौस्तुभकृदाशय** एव ज्यायान्। अत एव **रसगंगाधरमर्मप्रकाशे**-इव-शब्दादिसमभिव्याहारे तु तेन (नियमेन) भेदगर्भसादृश्यस्यैवोपस्थापनात् न अभेदप्रतीतिः इति मम प्रतिभाति इत्युक्तम्।

एतेन सादृश्यस्य साधारणधर्मरूपत्वे, पदार्थान्तरत्वेऽपि वा भेदघटितत्वम्। न तु भेदाभेदोभयघटितत्वमित्यत्रैव ग्रन्थकृतामन्येषां नैर्भर्यम्। सादृश्यं च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपम्। यदि समासाद्वृत्तेर्वा परस्य भावप्रत्ययस्य संबन्धबोधकत्वं तदा अतिरिक्तरूपत्वम्, यदि तु

तृतीयवाक्ये तद्धितगा श्रौती। अभ्रवत् इति षष्ठीसमर्थाद्वतेः 'तत्र तस्येवे'ति [पा.सू. ५-२-१२६] सूत्रेण विहितत्वादिति ॥

तत्त्वालोकः

प्रवृत्तिनिमित्तरूपत्वं तदा साधारणधर्मरूपत्वमिति मतभेदेनेष्टसिद्धिरिति भावः।

इदानीम् इवशब्दः सादृश्यवाचकः ? सदृशवाचको वेति परम वशिष्यते। बोधवैलक्षण्यं तु कौस्तुभादावसेयम् ॥

अत्र केचित्—

'स वाचको विशेषाणां संभवात् द्योतकोऽपि वा'

इति ह्युक्तरीत्या वाचकत्वपक्षोऽपि। तत्रापि यदीवादेः सादृश्यवाचकत्वं तदा प्रतियोगित्वस्य संसर्गविधया भानेन 'चन्द्र इव मुखम्' इत्यदौ चन्द्रप्रतियोगिक सादृश्यानुयोगि मुखम् इति बोधः। यदा सदृशवाचकत्वं तदा 'चन्द्र इव मुखम्' इत्यत्र स्वप्रतियोगिसादृश्याश्रयत्वं संसर्गतया भासत इति चन्द्रप्रतियोगिकसादृश्याश्रयाभिन्नमिति बोध इत्याहुः।

तथा सदृशवाचकत्वाङ्गीकारे 'चन्द्र इव मुखम्' 'चन्द्रेण तुल्यं मुखम्' इत्ययनयोः श्रौत्यार्थीत्वकृतं वैलक्षण्यं न भासेत। अतश्च इवादीनां सादृश्य वाचकत्वमेव युक्तम्। इवादीनामसत्ववाचित्वाच्चेति।

अत एव ग्रन्थकृतापि सादृश्यमात्रवाचकयथेवादिशब्दवती श्रौती। सादृश्यविशिष्टधर्मिपर्याप्ततुल्यादिशब्दयोगे आर्थीति विभक्तं युज्यते।

'यस्याभ्रवद्वैभवम्' इत्यत्र तद्धितगतां श्रौतीमुपमामुपपादयति–तृतीय

चित्रमीमांसा

हृद्यं शेवधिना समं हृदि भजन्ति इत्यत्र वाक्यगा आर्थी ॥

आनन्दसारोपमम् इत्यत्र समासगा आर्थी । हृद्य मिति विशेषणमत्राप्यपेक्ष्यते । अन्यथा धर्मलुप्तैव स्यान्न पूर्णा ॥

तत्त्वालोकः

वाक्य इति । अत्रशब्दात् षष्ठ्यन्तात् व्यापकत्वादिसंबन्धविवक्षायां इवार्थे वतिप्रत्ययः ।

शेवधिना सममित्यत्र वाक्यगां आर्थीमुपमामुपपादयति–हृद्यमिति । अत्र समशब्दः तुल्यपर्यायः । अस्य श्रुत्या सदृशपरत्वम् अर्थात्तु सादृश्य पर्यवसानम् इति सादृश्यस्य आर्थीत्वम् । साम्यपर्यालोचनमुखेनैव तुल्यप्रतीतिरिति भावः ।

'आनन्दसारोपमम्' इत्यत्र समासगामार्थीमुपमामुपपादयति–आनन्देति । अत्र आनन्दसारेण सदृशम् 'आनन्दसारोपमम' इति नित्यसमासः । 'स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः' इति अभिधानमालायाम् उत्तरपदनियमात् । अत एव समासगेयमार्थी । उपमादिशब्दानां नित्यसमासविषयत्वात् 'आनन्दसारेण उपमम्' इत्यादिना विग्रहः न कार्यः । अविग्रहोऽस्वपदविग्रहो वा नित्यसमास इति सिद्धान्तात् । एतद्विवरणं तु पूर्वत्र दत्तम् । अमरव्याख्यात्रा क्षीरस्वामिना च–'उत्तरपदे इत्युक्तेः चन्द्रेण निभमिति न भवति' इत्युक्तम् । शिष्टं स्पष्टम् ।

## चित्रमीमांसा

'शशिवदि'त्यत्र तद्धितगा आर्थी। तत्रत्यवतेः 'तेन तुल्यं क्रिया चेद्वतिः' [पा.सू. ५-१-११५] इति तुल्यार्थे विहितत्वात् ॥

## तत्त्वालोकः

शशिवदित्यत्र तद्धितगामार्थीमुपपादयति—**शशिवदित्यादिना** । शशिना तुल्यं शशिवत् इति तुल्यार्थे वतिविधानात्तस्य च सदृशार्थकत्वमेव, न सादृश्यमात्रार्थकत्वमिति आर्थीत्वम् ।

ननु कथमत्र शशिना तुल्यमिति विगृह्यते ? कथं विगृहीतव्यम् ? शशिन इवेति । तर्हि 'तत्र तस्येवे'ति वतिना भाव्यम् । न पुनस्तेन तुल्यमिति । कश्चानयोर्विशेषः ? आद्ये आर्थी, द्वितीये श्रौतीति । शशिना तुल्यमिति कुतो न विगृहीतव्यम् । वत्यर्थसादृश्यस्य क्रियायामेवा-न्वयस्य आनुशासनिकत्वात् । न चात्र क्रियोपलभ्यते 'यत्तुल्यं सा क्रिया चेत्' इति हि **भाष्ये** भाषितम् । अत एव **वैयाकरणैः**

संबोधनान्तं, क्त्वोर्थाः, कारकं, प्रथमो वतिः ।
धातुसंबन्धाधिकारनिष्पन्नम्, असमस्तनञ् ॥

तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम् ॥ इत्युक्तम् ।

एतेषां क्रमेणोदाहरणानि—संबोधनान्तस्य क्रियायामन्वये ब्रूहि देवदत्त । क्त्वोर्थानां क्रियान्वये—सकृत्पचति, द्विःपचतीति । कारकस्य क्रियाया

चित्रमीमांसा

मूर्तिर्यथा नवसुधा, बलभिन्मणीव
　कण्ठप्रभा, सुसदृशश्च जटास्तटिद्भिः ।
शङ्खाक्षि काञ्चननिभं, पदमब्जदेश्यं
　यस्यैषमेऽस्तु हृदि दैवतसार्वभौमः ॥

तत्त्वालोकः

मन्वये-तण्डुलं पचति । प्रथमवतिप्रत्ययस्य क्रियायामन्वये–ब्राह्मणवदधीते । धातुसंबन्धाधिकारविहितप्रत्ययानां क्रियान्वये-भोक्तुं पचति । असमस्तनञः –'न त्वं पचसि' । भावलक्षणसप्तम्याः–'गोषु दुह्यमानासु गतः' । अनादरे षष्ठ्याः–'रुदति रुदतो वा प्राव्राजीत्' इति प्रतिपादितम् । इत्थं सति वति प्रत्ययार्थान्वयः क्रियते इति ।

सत्यम् । अथापि प्रसत्तिरूपक्रियाविशिष्टयोः सादृश्यं पर्यवस्यतीत्यत्र ग्रन्थकृत्तात्पर्यात् । अतश्चार्थीत्वोक्तिर्न विरुध्यते ।

**ननु – यास्ककृतनिरुक्ते**— 'ब्राह्मणवत्, वृषलवत्' इत्यस्य ब्राह्मणा इव वृषला इवेति विवरणदर्शनात् तुल्यार्थविहितवतिप्रत्यययोगेऽपि श्रौती स्यादिति वाच्यम् ।

'तुल्यार्थे विहिता तृतीया सर्वविभक्त्यर्थानन्तर्भावयती'ति **कैयटोक्त** रीत्या निरुक्तकृता अभिहितं विवरणं फलितार्थकथनमात्रतात्पर्यकम् । तेन तुल्यमिति तृतीयान्तादेव वतिर्विधीयते न प्रथमान्तादिति विभाव्यम् ॥

इत्थं षड्विधां पूर्णां प्रतिपाद्य पञ्चविधां लुप्तां सोदाहरणमुपपादयति **मूर्तिर्यथेति** । यस्य मूर्तिः नवसुधा यथा तथा विद्यते, यस्य च कण्ठप्रभा

## तत्त्वालोकः

बलभिन्मणीव दृश्यते, यस्य च जटाः तटिद्भिः सुसदृशः, यस्य शङ्खाक्षि काञ्चननिभम् , यस्य च पदम् अब्जदेश्यम , एषः दैवतसार्वभौमः मे हृदि अस्तु इत्यन्वयः ॥

यस्य–ईश्वरस्य मूर्तिः–देहः, नवसुधा सद्योमथितममृतं यथा तथा विद्यते, तथा यस्य च कण्ठप्रभा–गलशोभा, बलभिन्मणीव इन्द्रनीलमणिरिव दृश्यते, बलभीन्मणीव' इति प्रयोगस्तु रात्रिः रात्री इत्यादिप्रयोगवत् , 'कृदिकारादक्तिनः' [पा.सू. ४-१-४५ गण] इती ङीषि साधुः । तथा यस्य जटाः–सुश्लिष्टाः केशा तटिद्भिः सुसदृशः सौसा दृश्यविशिष्टा विद्युत इवेषत्ताम्राः इत्यर्थः ॥

यद्यपि विद्युद्दृष्टान्तोपादानमात्रेण ईषत्ताम्रत्वं न निर्णेतुं शक्यम् ।
'वाताय कपिला विद्युत् , आतपायातिलोहिनी ।

पीता वर्षाय. विज्ञेया, दुर्भिक्षाय सिता भवेत् ,
इति तटितः नानावर्णत्वात् । तथापि—

'ईषत्ताम्रजटाग्रपल्लवयुतो न्यस्तो जगन्मण्डपे ।
शम्भुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे' ॥

इत्युक्त्यनुसारेण तथाविवृतम् । एवं यस्य शङ्खाक्षिललाटलोचनं 'शंखो निधौ ललाटास्थिकम्बौ' इति **नाममाला** । काञ्चननिभं काञ्चनेन सदृशमित्यस्वपदविग्रहः । स्वर्णवर्णमित्यर्थः । यस्य पदं चरणं 'अब्जदेश्यम्'–कमलतुल्यं,' ईषदसमाप्तमब्जं' इत्यर्थे 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' [पा. सू. ५–३–६७] इति देश्यप्रत्ययः । एषः दैवतसार्वभौमः मे हृदि अस्तु–वर्तताम् । अत्र पञ्चविधापि धर्मलुप्ता दर्शितेति उत्तरत्र व्यक्तो–भविष्यति ।

चित्रमीमांसा

अत्र पञ्चविधापि धर्मलुप्ता प्रदर्शिता । तत्र मूर्तिर्यथा नव सुधेति वाक्यगा ।

बलभिन्मणीव कण्ठप्रभेति समासगा श्रौती ।

उभयत्रापि भातीत्यादिक्रियाप्रयोगे सैव साधारणो धर्म इति धर्मलुप्ता न भवेत्, अतस्तदप्रयोगः इति ।

श्रौती तु धर्मलुप्ता तद्धिते न संभवति । षष्ठी-समर्थात्सप्तमीसमर्थाद्वा इवार्थे विहितस्य वतेः धर्मोपादानं-विना अन्वयसौकर्याभावात् इति ॥

तत्त्वालोकः

पञ्चविधासु धर्मलुप्तासु वाक्यगां धर्मलुप्तामुपपादयति — तत्रेति । सादृश्ये यथाशब्दस्य 'यथा सादृश्ये' (पा. सू. २-१-७) इति समासनिषेधात् भातीत्यादिधर्माप्रयोगाद्वा वाक्यगा धर्मलुप्ता यथाशब्दोपादानात् श्रौती च । 'बलभिन्मणीवे'त्यत्र इवेन सह समास इति पक्षे समासगां धर्मलुप्तां उपपादयति । **बलभिन्मणीवेति** । स्पष्टोऽर्थः । मूर्तिर्यथा नवसुधा बलभिन्मणीवेत्युभयत्रापि भातीत्यादिप्रयोगः किमर्थं न कृत इत्यत्र हेतुमाह- **उभयत्रापीति** । उभयत्रापि-उक्तोदाहरणद्वयेऽपि, भातीत्यादिप्रयोगे- क्रियावाचकपदोपादाने, सैव-भानरूपक्रियैव, साधारणधर्मः इति अतो हेतोः धर्मलुप्ता न भवेत् अतः तदनुच्चारणम् इत्यर्थः ।

ननु श्रौती धर्मलुप्ता वाक्यसमासगतत्वेन द्विविधा प्रदर्शिता । तद्धिते श्रौती धर्मलुप्ता कुतो न प्रदर्शिता इत्याशंकां मनसि निधाय तत्र हेतुमाह— **श्रौतीत्यादि** ।

## चित्रमीमांसा

**न च वाच्यम्–'इवे प्रतिकृतौ' इत्यधिकारे इवार्थे विहितस्य तद्धितस्य धर्मोपादानं विना नैराकांक्ष्यमस्ति । 'कुशाग्रीया बुद्धिः, शैलेयं दधि, पौण्डरीकं मुखम्' इति दर्शनात् । अतस्तत्र श्रौति धर्मलुप्ता तद्धिते उदाहर्तुं शक्यत इति ।**

## तत्त्वालोकः

अयं भावः–सादृश्यवाचकतद्धितप्रत्यययोग एव तद्धितगायाः धर्मलुप्तायाः सम्भवः । सादृश्यप्रतीतिश्च वतिना कल्पबादिभिः अन्यैश्च भवति । अथापि कल्पबादयः इवार्थे न विहिताः । इवार्थे 'तत्र तस्येव' इति विहिता वतिरेव । इयं च षष्ठ्यन्तात् सप्तम्यन्ताच्च समर्थाद्विधीयते । सा च उपमेये उपमानसम्बन्धबोधिका । तस्याश्च साधारणधर्मोपादानं विना न निराकांक्षप्रतिपत्तिजनकत्वम् । 'न हि मथुरायामिव स्रुघ्ने' इत्येतावन्मात्रं प्रयुक्तं परिनिष्ठितं भवति । सप्तम्यर्थानन्वयात् । किन्तु 'मथुरावत्स्रुघ्ने' इति संभवति । तस्मात् सप्तम्यर्थवृत्तिर्वस्य आधारत्वस्य वा यद्विशेषणं साधारणो धर्मः तस्य, षष्ठ्यन्ताद्वतिस्थले षष्ठ्यर्थसम्बन्धविशेषणस्य वा साधारणधर्मस्य उपादानं विना निराकांक्षप्रतिपत्तिर्न सम्भवतीति धर्मोपादानं नियतमेव 'मथुरायामिव मथुरावत्पाटलिपुत्रे प्राकारः' इति प्राकारस्योपादानं युज्यते इति ॥

ननु इवार्थक (तद्धिते) वतियोगे श्रौतीधर्मलुप्ता माभूत् । तथापि इवार्थकतद्धितान्तरे धर्मलुप्ता उदाहर्तुं शक्यत इत्याशंकते–**न च वाच्यमिति ।** अयं भावः-'इवे प्रतिकृतौ' [पा.सू. ५–३-९३] इति पांचमिकं

चित्रमीमांसा

'इवे प्रतिकृतौ' (पा.सू. ५-३-९६) इत्यधिकारे विहित प्रत्ययानां तुल्यार्थ एव विधानात्।

अन्यथा तेषां सादृश्यविशिष्टधर्मिपर्यन्तत्वाभावेन 'कुशाग्रीया बुद्धिः' इत्याद्युपमेयसामानाधिकरण्यासंभवात् सादृश्यविधानमपि सदृशे पर्यवस्यति, सामानाधिकारण्य दर्शनादिति सूत्रे इवग्रहणं न विरुध्यते ॥

तत्त्वालोकः

सूत्रमधिकृत्य कुशाग्रशब्दात् 'कुशाग्राच्छः' [पा. सू. ५ ३-१०५] इति इवार्थे छो विहितः। तथा-शिलाशब्दात् 'शिलाया ढः'[पा. सू. ५-३-१०२] इति इवार्थे ढप्रत्ययो विहितः। तथा पुण्डरीकशब्दात् 'शर्करादि-भ्योऽण्' [पा.सू. ५-३ १०७] इति इवार्थेऽण् विहितः। अतः पूर्वोक्तोदाह-रणेषु सौक्ष्म्यकाठिन्याह्लादकत्वादिसाधारणधर्मोपादानमपेक्षितं भवति। तं विनापि प्रयोगदर्शनात् उक्तधर्मप्रयोगविरहेऽपि तद्धिते धर्मलुप्ता श्रौती स्यादिति।

तदेतन्निराचष्टे-इवे प्रतिकृतौ इति। अस्मिन्नेव सूत्रेऽश्वप्रतिकृतिः अश्वसदृशः इत्यत्रेवार्थे कन् विधीयते इति इवार्थविहितानां कनादीनां सादृश्य विशिष्टार्थकत्वमत एव-आधुनिकैरपि विवृतम्। अश्वकः इत्यत्र अश्व-शब्दोऽश्वे वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृशे वर्तते इति।

तदेतत्कथं ज्ञायते इवार्थे विहिताः प्रत्ययाः तुल्यार्था एव, न तुलार्था इति सन्देहे विनिगमकमाह-अन्यथेति। अन्यथा-'इवे प्रतिकृतौ' इत्यधि कृत्य विहितानां प्रत्ययानां तुल्यार्थकत्वानभ्युपगमे सादृश्यमात्रार्थकत्वे इत्यर्थः।

चित्रमीमांसा

सुसदृशश्चेत्यादिवाक्यत्रये क्रमेणार्थी वाक्यगा समासगा तद्धितगा चेति ।

तत्त्वालोकः

यावत् । तेषां छप्रत्ययादीनां, सादृश्यविशिष्टधर्मिपर्यन्तत्वाभावेन–सदृशपरत्वाभावेन 'कुशाग्रीया बुद्धिः' इत्यादौ कुशाग्रसादृश्याभिन्ना बुद्धिरिति बोधापत्तिः । निपातातिरिक्तनामार्थयोः अभेदेनान्वयस्यैव व्युत्पत्तिसिद्धत्वात् । तथा सति उपमेयसामानधिकरण्यं न स्यात् । अतश्च धर्मबोधकस्यापि शब्दस्य विवक्षानुसारेण धर्मिपरत्वं दृष्टमिति तदनुसारेण 'इवे प्रतिकृतौ' इत्यत्र सादृश्ये विधानमपि सदृशे पर्यवस्यति । एवंरीत्या अर्थे परिकल्पिते सूत्रे इवग्रहणं कृतं न विरुध्यत इति ।

**अत्र यत् उपमेयसामानाधिकरण्याभावेत्युक्तं** तत्र सामानाधिकरण्यं किंरूपमिति विव्रियते । समानम्–एकम् अधिकरणम्–अभिधेयः–अर्थयोः तौ समानाधिकरणौ तयोर्भावः–सामानाधिकरण्यम् । तदुक्तं **काशिकावृत्तौ**–अधिकरणशब्दोऽभिधेयवाची । समानाभिधेयः इति ।

नन्वेवं तर्हि–'घटः कलशः' इत्यादावपि सामानधिकरण्यं स्यात् अतः 'भिन्नप्रवृत्तिनिमित्तकानां शब्दानां एकस्मिन् अर्थे वृत्तिः सामानाधिकरण्यम्' इति । अस्यार्थश्च भिन्नधर्मावच्छिन्नार्थोपस्थापकानां शब्दानां एकस्मिन्नर्थे वृत्तिः––अभेदसंबन्धावच्छिन्नप्रकारताकबोधजनकत्वम् ( सामानधिकरण्य–पदार्थः) इति ।

तेन 'विशेषणतो विशेष्यतश्चैकार्थकयोः 'घटः कलशः' इत्यादिकयो न सामानाधिकरण्यम् । प्रवृत्तिनिमित्तभेदाभावात् । एकस्मिन्नर्थे वृत्ति-

## चित्रमीमांसा

'अब्जदेश्यम्' इत्यत्र ईषदसमाप्तौ विहितोऽपि

### तत्त्वालोकः

इत्यनेन 'विशेषणतो विशेष्यतश्च भिन्नार्थकानां 'गौरश्वः' 'अश्वो महिषः' इत्यादीनां न सामानाधिकरण्यम् ।

एवं च प्रकृते कुशाग्रीया बुद्धिः इत्यादिवाक्यघटकबुद्ध्याद्युपमेयेऽभेद संबन्धेन अन्वयजनकत्वानुरोधात् धर्मिपर्यवसानं समीचीनमिति भावः ।

इत्थं श्रौतीं द्विविधां धर्मलुप्तामुपपाद्य वाक्यत्रये उपयुक्तेषु उदाहरणेषु वाक्यसमासतद्धितगामार्थीं धर्मलुप्तामुपपादयति–**सुसदृशेति** । सुसदृशः इत्यत्र समाना दृक् यस्मिन् तत् सदृक् समानशब्दोपपदकात् दृशेः 'समानान्य योश्चेति' वार्तिकात् क्विनि समानशब्दस्य 'दृक्दृशवतुषु' [पा. सू. ६–३–८९] इत्यस्मात् सभावे प्रादिसमासे सुसदृक् इति रूपम् । सदृक्शब्दस्य सदृशार्थे रूढिः । अत एव **दण्डिना**–'सदृक् सदृशसंवादीति उपमार्थेषु परिगणितः । प्रथमवाक्ये वाक्यगा आर्थी । ताम्रवर्णानुपादानाद्धर्मलुप्ता च । 'शङ्खाक्षिकाञ्चननिभम्' इत्यत्र निभशब्देन तुल्यार्थकेन समासात् धर्मानुपादानाच्च समासगा आर्थी धर्मलुप्ता ।

ननु तद्धितगायाः अर्थ्याः धर्मलुप्तायाः 'अब्जदेश्यम्' इत्युदाहृतं तत्कथं युज्यते ? न हि देश्यप्रत्ययः तुल्यार्थे विहितः । अपि तु 'ईषद-समाप्तौ 'कल्पब्देश्यदेशीयरः' [पा.सू.५–३–६७]इति ईषदसमाप्तिरूपेऽर्थे, इत्याशंक्य समाधत्ते–**अब्जदेश्यमित्यत्रेति** ।

'अब्जदेश्यं पदमिति' सामानाधिकरण्यानुरोधात् सदृशे पर्यवस्यति । अत एव ईषदसमाप्तिविशिष्टार्थबोधकात् सुबन्तात् देश्यप्रत्ययः स्वार्थे ।

देश्यप्रत्ययः सादृश्ये युज्यते। सोऽपि सामानाधिकरण्यात् सदृशपर्यवसायी।

ननु सदृशादिशब्दप्रयोगे सादृश्यविशिष्टधर्मिपर्यन्त-त्वादार्थीति युक्तम्। सादृश्यादिशब्दप्रयोगे कथम्? किं श्रौती, उतार्थी?

तत्त्वालोकः

एव ईषदसमाप्तिः प्रकृत्यर्थविशेषणमिति काशिकाकृतोक्तं संगच्छते। दण्डिनापि 'कल्पदेशीयदेश्यादिः' इत्युपक्रम्य' 'शब्दाः सादृश्यसूचकाः' इत्युक्तम्। एवं च प्रत्ययस्य द्योतकत्वपक्षः ग्रन्थकाराद्यभिमतः इति बोध्यम्।

लोकेऽपि विद्वत्त्वशून्ये न विद्वद्देश्य इति प्रयुज्यते, अपि तु वैदुष्यस्य प्रायशस्सद्भाव एव। किंचिन्न्यूने विदुषि तत्प्रयोगश्च वैदुष्यसत्तामेव तस्मिन्नवगमयति। ईषदसमाप्तत्वेन किंचिन्न्यूनतालाभात्। तेन चात्यन्त साम्य एव तथा प्रयोग इति लभ्यते। एवं च ईषदसमाप्तेरपि सादृश्ये पर्यवसानम्। एतेन पदेऽब्जस्य ईषदसमाप्तिश्च सौगन्ध्यादिगुणवत्त्वे सति किंचिन्न्यूनतामात्रम्। अत एव कैयटेन-'गुडादिभ्य उपमानवाचिभ्यः उपमेये द्राक्षादौ प्रत्ययः। गुड इवेयं द्राक्षा ईषदसमाप्ता—गुडकल्पेति। यद्यप्युपमानग्रहणं नोपात्तं तथापि सामर्थ्यादत्रोपमानोपमेयभाव आश्रीयत' इत्युक्तं संगच्छते।

अथ सादृश्यादिपदप्रयोगे निर्णयं प्रदर्शयितुं विचारमुपक्षिपति — नन्वित्यादिना।

चित्रमीमांसा

यथा —

परस्पराक्षिसादृश्यं अदूरोज्झितवर्त्मसु ।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥ इति ॥

तत्त्वालोकः

विचारस्थलं उदाहरति—**यथा परस्परेति**। तौ दम्पती–सुदक्षिणा दिलीपौ वनराजिषु गच्छन्तौ विस्रम्भातिशयात् अदूरं यथा भवति तथा उज्झितं- परित्यक्तं वर्त्म–पन्थाः यैस्तेषु। तथा स्यन्दनाबद्धदृष्टिषु स्यन्दने–रथे आबद्धाः आसञ्जिताः दृष्टयः नेत्राणि यैस्तेषु, 'दृष्टिर्धीदर्शनाक्षिषु' इति वैजयन्ती। कुतूहलवशात् रथासक्तदृष्टिषु इत्यर्थः। न तु भियेति यावत्। अन्यथा अदूरे मार्गत्यागः अनुपपन्नः स्यात्। मृगद्वन्द्वेषु मृगाश्च मृग्यश्च मृगाः, 'पुमान् स्त्रिया' [पा.सू. १-२-६७] इत्येकशेषः। तेष द्वन्द्वेषु मिथुनेषु, द्विशब्दस्य द्वित्वे 'कर्मधारयवदुत्तरेषु' [पा सू. ८–१–८१] इति कर्मधारयवद्भावे सुपो लुकि समुदितात्पुनः सुपि पूर्वपदावयवस्य इकारस्य अम् , उत्तरपदान्त्यस्य अकारादेशश्च निपात्यते।

यद्वा मृगद्वन्द्वेषु एकत्र संगत्य पृथगवस्थितेषु मृगेषु मृगीषु च परस्परेषु अक्ष्णां सादृश्यं, मृगीणामक्षिषु सुदक्षिणाक्षिसादृश्यं दिलीपः, दिलीपाक्षिसादृश्यं च मृगाक्षिषु सुदक्षिणेत्येवंपश्यन्तौ–अवेक्षमाणौ, पश्यंश्च पश्यन्ती च पश्यन्तौ इति विग्रहः 'पुमान् स्त्रिये'ति एकशेषः। गुरोः वसिष्ठस्य आश्रमं जग्मतुः इत्यर्थः।

अत्र यद्यपि 'सादृश्यं पश्यन्तौ' इत्यत्र सादृश्यस्य नीरूपस्य दर्शनकर्मता-

चित्रमीमांसा

इत्यादौ श्रौत्येवेति ब्रूमः। तत्र तद्धितप्रकृत्या धर्मिपर्यन्ताभिधानेऽपि प्रधानप्रत्ययाभिहितस्य सादृश्यस्यैव वाक्यार्थान्वयित्वात् इति ॥

तत्त्वालोकः

न सम्भवति इति सादृश्यविशिष्टाक्षिकर्मकमेव दर्शनमिति परस्परसदृशानि अक्षीणि पश्यन्तावित्यर्थो वाच्यः ।

तथापि–'पश्य मृगो धावति' इत्यादौ यथा उत्कटधावनक्रियाविशेस्यैव दर्शनकर्मतया अन्वयस्य प्रतिपिपादयिषितत्वं, तद्वदत्रापि सादृश्यस्यैव दर्शनकर्मतया वाक्यार्थान्वयित्वस्य प्रतिपिपादयिषितत्वात् श्रौतीत्वमेव वक्तुं युक्तं इति सिद्धान्तयति–इत्यादाविति ।

तत्र परस्पराक्षिसादृश्यं इत्यत्र तद्धितप्रत्ययष्यञ्प्रकृतिभूतेन सदृश शब्देन, धर्मिपर्यन्ताभिधानेऽपि (सादृश्यविशिष्टाभिधानेऽपि), प्रधानप्रत्ययाभिहितस्य 'प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणमिति' न्यायेन प्राधान्यमनु–भवन् यः प्रत्ययार्थः संबन्धरूपं सादृश्यं तस्यैव वाक्यार्थान्वयित्वात्–शाब्दबोधविषयत्वात् – सादृश्यवाचकसादृश्यपदस्यैव सत्वाच्च श्रौत्येवेति ब्रूमः इत्यर्थः। कृदन्ताद्विहितस्य भावप्रत्ययस्य प्रकृत्यर्थतावच्छेदके शक्ततया तदुक्तसादृश्यस्यैव वाक्यार्थान्वयित्वादिति भावः ।

**परे तु**–यत्पदार्थविशेषणस्योपमानत्वनियमः तत्रैव श्रौती। इवादि विशेषणीभूतस्य चन्द्रादेरुपमानत्वनियमात् । सादृश्यादिविशेषणस्य च नोपमानत्वनियमः । 'चन्द्रसादृश्यं' इत्यादौ तथात्वेऽपि 'चन्द्रमुखःयो

चित्रमीमांसा

यं पश्यन् दीपदर्शं सपदि मनसिजः कीटनाशं स नष्टः
स्वान्ते योऽन्तःपुरीयत्यतिभजनकृतस्तं कुमारीयति द्राक् ।
मूलस्तम्भायते यः त्रिभुवनभवने कोकिलालापिनी यँ
वामाङ्के कल्पवल्ली श्रयति कुवलयश्यामला तं भजामि ॥

इति ॥

तत्त्वालोकः

सादृश्यम्' इत्यादौ व्यभिचारात् इति आर्थ्येवेत्याहुः । लक्ष्यानुरोधेनोभयरूपत्वं वा युक्तं वक्तुमुचितमिति भाति ।

इत्थं पञ्चविधां धर्मलुप्तामुदाहृत्य सप्तविधां वाचकलुप्तामुदाहरति– **यं पश्यन्निति** । यः मनसिजः–कामः, यम्–ईश्वरम्, दीपदर्शं पश्यन् दीपमिव दृष्ट्वा इत्यर्थे 'उपमाने कर्मणि च' [पा. सू. ३–४–४५] इति उपमानोपपादकात् दृशधातोः कर्मणि णमुल्प्रत्ययः । कषादित्वात् 'कषादि

यथाविध्यनुप्रयोगः, [पा .सू. ३-४–४६] इति णमुल्प्रकृतिभूतधातोरेवानुप्रयोगः इति नियमात् पश्यतीत्याख्यातान्तस्यानुप्रयोगात्, दीपदर्शम् इति । सपदि सद्यः, कीटनाशं नष्टः–कीट इव नष्ट इत्यर्थे उपमानात्कर्त्रुपपदात् नशेः कर्तरि णमुल् । पूर्ववदेव नशेरनुप्रयोगः । तथा य ईश्वरः अतिभजनकृतः नितरां स्तुवतः स्वान्ते–मनसि अन्तःपुरीयति अन्तः पुरे इव आचरतीत्यर्थे 'अधिकरणाच्चेति वक्तव्यम्' [पा. सू. ३–१–१० वार्ति] इति वार्तिकादधिकरणे क्यचि साधुः । तथा तं भजनशीलं य ईश्वरः प्राक्–अञ्जसा कुमारीयति–कुमारः स्कन्दः तमिवाचरतीत्यर्थे 'उपमानादाचारे' [पा. सू. ३–१–१०] इति उपमानात्कर्मणः क्यच् । तथा त्रिभुवनभवने–भुवनत्रयवेश्मनि यः मूलस्तम्भायते मूलस्तम्भ इवाचरतीत्यर्थे 'कर्तुः

चित्रमीमांसा

अत्र सप्तविधाऽपि वाचकलुप्ता दर्शिता। तत्र दीपमिव पश्यन् इत्यर्थे 'दीपदर्शमिति' कर्मणमुलि,

तत्त्वालोकः

क्यङ् सलोपश्च' [पा. सू. ३-१-११] इति कर्तरि क्यङ्। भट्टबाणोऽपि –

'त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे' इति हर्षचरिते।

यम् ईश्वरम्, वामाङ्ग-वामभागावच्छेदेन कोकिलालापिनी-कोकिलवत् अव्यक्तमधुरालापा, कोकिल इव आलपतीत्यर्थे 'कर्तर्युपमाने' [पा. सू. ३-२-७९] इति णिनौ रूपम्। कुवलयश्यामला-नीलोत्पलमिव श्यामवर्णा इत्यर्थः 'अत एव' अर्धनारीश्वरमनुसंदधानाः,

'वामे मरकतश्यामा दक्षिणे विद्रुमारुणा। देवता दम्पतिमयी'

इति अनुसन्दधते। कल्पवल्ली कामधुक्त्वात् कल्पवल्लीत्वेन अध्यवसिता पार्वती श्रयति अवलम्बते तं भजामि इत्यर्थः।

उक्तोदाहरणे क्रमेण दीपदर्शमित्यत्र कर्मणमुलि, कीटनाशम् इत्यत्र कर्तृणमुलि, अन्तःपुरीयतीत्यत्र अधिकरणक्यचि, कुमारीयतीत्यत्र कर्मक्यचि, मूलस्तम्भायत इत्यत्र कर्तरि क्यङि, कोकिलालापिनीत्यत्र णिनौ, कुवलयश्यामला इत्यत्र समासे च वाचकलुप्ता द्रष्टव्या। तदेतदाह–अत्रेति। कर्मणमुलि वाचकलोपमुपपादयति–तत्रेति।

साहित्यदर्पणकृता–अमृतद्युतिदर्शमित्युदाहृत्य धर्मलुप्तेत्युक्तम्। तस्य अयमभिप्रायः–मनोज्ञत्वादिरूपस्य साधारणधर्मस्य अप्रयोगाल्लोप इति। तद्वदत्रापि उपादेयत्वस्य अप्रयोगात्साधारणधर्मलोपः इत्यपि वक्तु शक्यम्।

चित्रमीमांसा

**कीट इव नष्ट इत्यर्थे 'कीटनाशं नष्ट' इति कर्तृणमुलि, 'स्वान्तेऽन्तःपुरीयति' इत्यन्तःपुर इव आचरतीत्यर्थे अधिकरणक्यचि, कुमारं स्कन्दमिवाचरतीति कर्मक्यचि, त्रिभुवनस्योत्पत्तौ मूलस्तम्भ इवाचरतीत्यर्थे 'मूलस्तम्भायते' इति कर्तरि क्यङि,**

तत्त्वालोकः

एवं णमुलोऽपि तुल्यार्थ एव विधानमिति न वाचकलोपोऽपि। अत एव-'उपमाने कर्मणि च' पा. सू ३-४-४५) इति सूत्रे वृत्तिकृता-'घृतनिधायं निहितः' इत्युदाहृत्य, 'घृतमिव निहित इत्यर्थः' इति विवृतम्। इदमुत्तरत्र समाधास्यते।

कर्तृणमुलि वाचकलोपमुपपादयति — **कीट इवेति**। अत्रापि अचिरकालनाश्यत्वं साधारणो धर्मः स च लुप्त इति धर्मलुप्ता, णमुल् च तुल्यार्थक इति वाचकलोपाभावश्च **साहित्यदर्पणकृदनुरोधात्**।

अधिकरणक्यचि वाचकलोपमुपपादयति —**स्वान्त इति**। अत्रापि **दर्पणकारानुरोधात्** सुखविहारास्पदत्वं साधारणो धर्मः। स च लुप्त इति धर्मलुप्तात्वम्। क्यचस्तुल्यार्थकतया वाचकलोपाभावश्च।

कर्मक्यज्गतां वाचकलुप्तामुपपादयति — **कुमारमिति**। अत्रापि **दर्पणकारानुरोधात्** स्नेहनिर्भरत्वं साधारणो धर्मः। स च अनुपात्त इति धर्मलुप्तात्वम्। क्यचः तुल्यार्थकत्वात् वाचकलोपाभावश्च।

कर्तृक्यङ्गतां वाचकलुप्तामुपपादयति **त्रिभुवनेति**— अत्रापि **दर्पण-**

चित्रमीमांसा

कोकिला इव आलपतीत्यर्थे 'कोकिलालापिनी' इति णिनौ वाचकलुप्ता द्रष्टव्या इति।

तत्त्वालोकः

कारानुरोधात् यावदाश्रयत्वं साधारणो धर्मः। स च लुप्तः इति धर्मलुप्तात्वम्, क्यङ एव तुल्यार्थकत्वात् वाचकलोपाभावश्च।

णिनिप्रत्ययगतां वाचकलु प्रकाशकाराद्यनुल्लिखितां वाचकलु मुपपादयति—**कोकिला इवेति**। अत्र यद्यपि कर्तर्युपमाने [पा. सू. ३-२-७९] इति णिनौ वाचकलुप्ता संभवति। नचैतावता काव्यप्रकाशकाराधिकतयोद्भावनमुचितम्। यतोऽत्र उपमानरूपोपपदस्य णिनिप्रत्ययान्तेन 'उपपदमतिङ्' इति समासस्य सद्भावेन समासगागणनेनैव तस्यापि क्रोडीकारः विभाजकतावच्छेदकधर्मानवच्छिन्नत्व एवाधिक्यस्योद्भावयितुमुचितत्वात्।

न चैवं वत्यादीनामपि तद्धितत्वादिना विभागे न्यूनतापत्तिरिति वाच्यम्। इष्टापत्तेः। विभागस्यैच्छिकत्वात्।

इयानेव हि विशेषः। तद्धितत्वं साक्षाद्विभाजकोपाधः वतित्वादयः परंपरया विभाजकाः। वतित्वादिनैव विभागे तु त एव विभाजकोपाधयः।

किन्तु समासत्वमेव विभाजकतावच्छेदकमिति वदतां कथं तदवच्छिन्नस्थल एव अव्याप्तिरुद्भाव्यत इति नवीनमेतद्भवदीयपाण्डित्यं न विद्मः इति तु अलंकारकौस्तुभकारः।

तत्त्वालोकः

ननु तदेतदपि चिन्त्यम् —तथाहि-वाचकलोपं विभजता काव्य-प्रकाशकारेणापि —

'वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि । कर्मकर्त्रोर्णमुलि' ।

इत्यभिहितम् । तत्रापि कर्मणमुलि कर्तृणमुलि च 'उपपदमतिङ्' [पा.सू. २-२-१९] इति समासप्राप्त्या समासगात्रेनैव संग्रहे तयोः पृथगुपादानमसंगतं स्यात् इति ।

यदि तु काव्यप्रकाशगतकारिकायां समासपदस्य पारिशेष्यात् अन-व्ययसमासत्वं विभाजकतावच्छेदकं विवक्षितमिति समाधीयते । तदापि णिन्यन्तमुदाहरणं प्रकाशकारेण कुतो नोपन्यस्तम् ? अतश्च तत्संग्रहोऽपि युक्त इत्युदाहरणमात्रेणोपन्यस्तम् इति न च वक्तुं शक्यम् । सप्तविधापि वाचकलुप्ता प्रदर्शितेति प्रागुक्तग्रन्थविरोधात् ।

न चैतावता ग्रन्थकृत एवायं दोष इति वक्तुं शक्यम्, उत्तरत्र णिनिना सह अपरैः सप्तविधेति परमतोपन्यासादिति कथंचित्समाधेयत्वात् । प्रकाशोक्तविभागरीतिरेव गरीयसीति तु विभाव्यम् ।

अत्रेदमवधेयम्-उक्तासु वाचकलुप्तासु सप्तसु 'दीपदर्शम्' इति कर्मणमुलि, कीटनाशम् इति कर्तृणमुलि, अन्तःपुरीयतीत्यधिकरण क्यचि, कुमारीयतीत्यादि कर्मक्यचि, मूलस्तम्भायत इत्यादिकर्तृक्यचि च साहित्यदर्पणकारेण धर्मलुप्तैवोक्ता । न वाचकलुप्ता । तथैव तेनो-दाहृतमुपपादितं च—

तत्त्वालोकः

अन्तःपुरीयसि रणेषु, सुतीयसि त्वं
पौरं जनं, तव सदा रमणीयते श्रीः ।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र
संचारमत्र भुवि संचरसि क्षितीश ॥

इति । अत्र सुखविहारास्पदत्वस्य, स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः । एवमन्यत्रेति । एवं वदतो दर्पणकारस्यायमाशयः-

दीपदर्शमित्यत्र दीपमिव दृष्ट्वा, कीटनाशमित्यत्र कीट इव नष्ट इति, अन्तःपुरीयतीत्यत्र अन्तःपुर इवाचरति इति, कुमारीयतीत्यत्र कुमारं स्कन्दमिव आचरतीति, मूलस्तम्भायत इत्यत्र मूलस्तम्भ इवाचरतीति विवरणानुरोधेन वृत्तिविग्रहयोः समानार्थत्वस्य अपेक्षितत्वाच्च क्यजादयः सादृश्यं बोधयन्ति । अन्यथा दीपमिव दृष्ट्वा दीपदर्शमित्यादि विवरणविवरणिभावो नोपपद्येत । अतश्च क्यजादयः सादृश्यबोधका इति तेषामुपादाने न वाचकलुप्तात्वम् किन्तु धर्मलुप्तात्वमेवेति ।

उक्तोदाहृतिजातीयेषु वाचकलुप्तात्वं प्रतिपाद्य धर्मलोपमनभ्युपगच्छतः काव्यप्रकाशकारस्य अयमाशयः-'धातोः कर्मणः समानकर्तृकादिच्छायां वा' [पा. सू. ३-१-७] इति इच्छायां यथा सन् विहितः तथा 'उपमानादाचारे' इत्यस्मादपि आचारे क्यच् विहितः । तथा च सन्नर्थेच्छास्थानीये आचारे क्यजादीनां शक्तिः । क्यजादिप्रकृत्यर्थस्य उपमानत्वनियमात् इवार्थोऽध्याहृतपदार्थः । स च क्यजाद्यर्थाचारानुमेयः नैतावता इवार्थे क्यजादीनां शक्तिः कल्प्या । नापि सादृश्यविशिष्टाचारे वा शक्तिः कल्प्या । अनुशासनविरोधात् अन्यथा 'उपमानात्सादृश्याचारे' इति पाणिनिना सूत्रितव्यं स्यात् । न च तथा सूत्रितम् । एवं च विवरणवाक्येपि अध्याहारलभ्यस्य

इवशब्दस्य प्रयोगः। नहि विवरणवाक्यजेषु सर्वेष्वर्थेषु शक्तिरित्येव नियमः। अनन्यलभ्यस्यैव शब्दार्थत्वाभ्युपगमात्। एवं च आचारादि रुक्तोदाहरणेषु साधारणो धर्मः इवार्थश्चाध्याहारलभ्यः अत एव न धर्मलोपः। अपि तु वाचकलोप एवेति।

**ननु**–उक्तोदाहरणेषु सुखविहारास्पदत्वादीनां प्रतीतेरभावात् कुतो न धर्मलुप्तात्वम्? इति चेत्––

उच्यते––'उपमानादाचारे' इति सूत्रं प्रणयतः पाणिनेः आचाररूप धर्मस्य सादृश्योपपादकत्वं नास्तीत्यत्र तात्पर्यमिति वक्तुं न शक्यम्। तथा सति 'उपमानादाचारे' इति उक्तिसम्भवाभावप्रसंगात्।

अतश्च उक्तसूत्रे 'उपमानात्' इति पदं नानाविधानामुपमानानाम् उपमानत्वेन अनुगमकं तद्वत् आचारे इत्यपि आचारत्वेन तत्तद्धर्माणामनुगमक मात्रम्। तत्तदुपमानोपमेयवाचकपदसमभिव्याहारबलात् क्यजादिभ्योऽपि आचारविशेषरूपेणोपस्थितिः। तदादिसर्वनामपदवत्।

परन्तु––यत्र धर्मः प्रसिद्धिमुपगतः तत्र तादृशधर्मस्य उपादानमनाव श्यकम्। यथा–'चन्द्रायते मुखम्' इत्यादौ। यत्र तु स धर्मः अप्रसिद्धः 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ तत्र 'सुपर्वभिः शोभितमन्तराश्रितैः' इत्यादीनामुपादानम्। एतदभिप्रायेणै वक्यङादीनां प्रयोगे धर्मवाचकसद्भा-वात् धर्मलोपानभिधानं संगच्छते।

अत एव **भाष्यकृता**––'आधिकरणाच्चेति वक्तव्यम्' इति वार्तिक मुदाहरता 'कुटीयति प्रासादे, प्रासादीयति कुट्याम्' इत्यनुपात्तसाधारणधर्मा-र्थकशब्दान्तरोपादानं संगच्छते। एवं च क्यजाद्याः साधारणधर्मप्रतिपादकाः

## चित्रमीमांसा

पूजनं पुररिपोस्तनोतु मे
चित्तमन्यदपहाय चापलम् ।

### तत्त्वालोकः

इति सिद्धम् । एतेन दर्पणकाराद्युक्तं नातीव हृदयङ्गमम् । अत एवात्र ग्रन्थकृतापि प्रकाशकारपक्ष एवाभ्युपगत इत्यलम् ।

**रसगंगाधरकारेण** तु-धर्मवाचकोभयलुप्तात्वं प्रतिपादितम् । तथाहि अत्रेदमवधेयम् । कर्माधारक्यचि क्यङि च वाचकलुप्तोदाहरणं प्राचामसंगत मिव प्रतीयते । धर्मलोपस्यापि तत्र संभवात् । न च क्यजाद्यर्थः आचार एव साधारणधर्मोऽस्तीति वक्तव्यम् । धर्ममात्ररूपस्य आचारस्य उपमा-प्रयोजकत्वाभावात् । 'नारीयते सपत्नसेना' इत्यादौ वृत्त्यन्तरनिवेदितैः कातरत्वादिभिः अभिन्नतयाध्यवसितस्योपमानिष्पादकत्वात् ।

यदि च क्यङर्थ आचारमात्रं उपमानिष्पादकं स्यात्तदा 'त्रिविपं तत्खलु भारतायते' इत्यादौ सुप्रसिद्धत्वादिरूपाचारोपस्थितावपि उपमालंकृतेर निष्पत्तेः तस्यैव च 'सुपर्वभिः शोभितमन्तराश्रितैः' इति चरणान्तरनिर्माणे तस्याः निष्पत्तेः क्यङाद्यर्थः साधारणोऽपि नोपमां प्रयोजयति । उपमा-प्रयोजकतावच्छेदकरूपेण साधारणधर्मवाचकशून्यत्वस्यैव धर्मलोपशब्देनाभि धानात् । अन्यथा-'मुखरूपमिदं वस्तु प्रफुल्लमिव पङ्कजम्' इत्यादौ पूर्णो पमापत्तेरिति दिक्, इत्युक्तम् ॥

पूर्वमुपमानलुप्ता वाक्यसमासयोर्द्विविधा इत्युक्ता तामुदाहरति-**पूजन-मिति** । मे मम चित्तं मनः, अन्यत् चापलम् पशुपतिपूजाप्रतिबन्धक

चित्रमीमांसा

यत्समं प्रियहितं न दृश्यते
येन नापि सदृशं निशम्यते ॥

तत्त्वालोकः

चित्तचांचल्यम्, अपहाय परित्यज्य पुररिपोः पुराणां 'तेषामसुराणां तिस्रः पुरः आसन्' इति तैत्तिरीयश्रुत्यनुसारेण पुरत्रयस्य, तात्स्थ्यात् तद्वासिनां कमलाक्षविरूपाक्षविद्युन्मालीनां त्रयाणामसुराणाम्, त्रिपुरासुरत्वेन प्रसिद्धस्य गृत्समदनाम्नो मुनिकुमारस्य वा नाशयितुः ईश्वरस्येत्यर्थः पूजनं सेवां, तनोतु विस्तारयतु। पूजां विशिनष्टि-यत्सममिति। येन पूजनेन समम्, अन्यत् व्यापाररूपम्, प्रियहितम् प्रियाय महेशाय हितम् हृद्यं पथ्यं च, न दृश्यते-न ज्ञायते, येन सदृशं नापि निशम्यते न श्रूयते इत्यर्थः। 'शमो दर्शने' इति गणसूत्रे दर्शने मित्त्वनिषेधात् शाम्यतेरर्थान्तर सद्भावोऽवगम्यत इति श्रवणे वृत्तिः। अत एव 'प्रणयिनो निशमय्य वधूः कथाः' इत्यादिप्रयोगाः संगच्छन्ते।

अत्र पूजनेन सदृशस्य क्रियान्तरस्योपमानभूतस्य अज्ञायमानतया अश्रूयमाणतया चोपमानलुप्तात्वम ॥

**ननु-अत्र**-कथमुपामानलुप्तात्वम्? उपमानाभावे सति सादृश्याभाव एव पर्यवसानम्, परिनिष्पन्नं हि सादृश्यमुपमाजीवातुभूतमिति। अतोऽत्र असमाख्यमलंकारान्तरमेवेति **अलंकाररत्नाकरकारादयो** वदन्ति इति शंक्यम्?

स्वस्य असर्वज्ञतया तादृशव्यापारान्तरस्य दुष्प्रापताप्रत्यायनार्थमेव थोक्तम्, न त्वात्यंतिकाभावावगतये। अन्यथा 'यत्समं नास्ती'त्येव ब्रूयात्

## तत्त्वालोकः

न तु न दृश्यते नापि निशम्यत इति। अत एव **मम्मटभट्टैः काव्य प्रकाशे** —

> ढुण्ढुलन्तो मरीहसि कण्टककलि आइ के अइ वणाइम्।
> मालइ कुसुमसरिच्छं भमर भमन्तो न पा वहिसि॥

इति पद्यमुपमानलुप्तायामुदाहृतम्। अत एव च **विद्याधरेणैकावल्याम्**–उपमानस्यासंभवो निराकृतः। अत्रोपमानस्य सत्तायाः संभाव्यमानवादिति। अयमेव पक्षः **ग्रन्थकृतोऽपि** संमतः। अत एव उपमासिद्धान्ते

> वृथा चरसि किं भृङ्ग तत्र तत्र वनान्तरे।
> मालत्या सदृशीं क्वापि भ्रमन्नापे न लप्स्यसे॥

इत्यादौ सादृश्याधिकरणस्यानुपलम्भोक्त्या उपलभ्यमानेषु सादृश्यनिषेधपर्यव सानेऽपि अनुपलभ्यमानगतसादृश्याभ्यनुज्ञानात् तत्रोपमितिक्रियानिष्पत्ति रस्तीति नाव्याप्तिः। अत एव तस्य विशिष्यानुपादानादुपमानलुप्तेति स्पष्टमुक्तम्।

**यद्यपि**–उपमानलुप्तायाः 'वृथा चरसि किं भृङ्ग' इत्युदाहरणमत्राप्यु पन्यस्तं स्यात्, अथापि तत्र उपमानलोपसाहित्येन साधारणधर्मस्यापि लोप इति द्विलुप्तोदाहरणं तद्भवितुमर्हतीति 'पूजनं पुररिपोः' इत्युपन्यस्तम्। अत एव चात्र प्रियहितमिति साधारणधर्मोक्तिरपि युज्यते।

**ननु**—उपमानलुप्तायां वाक्यगासमासगयोः समसदृशमात्रघटितोदा हरणदानेन आर्थी प्रदर्शिता भवति। न श्रौती। तत्र सन्दिह्यते उपमान लुप्तायां श्रौती संभवति वा न वेति। यद्यपि—

तत्त्वालोकः

त्वमिव कोऽपि परापकृतौ कृती
न ददृशे न च मन्मथ शुश्रुवे ।
स्वमदनादहनात् ज्वलनात्मना
ज्वलयितुं परिरभ्य जगत्सु यः ॥

इत्यत्र भैमीकर्तृककामोपालंभस्य प्रकृतत्वात् काम एव प्रकृतः तस्योपमान भूतोऽन्यः न ददृशे न च शुश्रुवे इत्युक्त्या श्रौती उपमानलुप्तापि लभ्यते ।

सत्यम्—अथापि—इवादिपदानां यदुत्तरं प्रयोगः तस्यैवोपमानत्वमिति उपमानपदं विना इवादीनामन्वयाबोधकत्वात् । अन्यथा उक्तनियमव्याघातः प्रसज्येत । अतश्च श्रौती उपमानलुप्ता नास्तीत्युच्यते चेत्, युष्मत्पदार्थस्यैव मन्मथस्योपमानताभ्युपगता भवति । इष्यत एवेति चेत् तर्हि अप्रकृतस्योप मानत्वं प्रकृतस्योपमेयत्वमित्यनुभवविरोध इति वाच्यम् । न हि प्रकृतत्वा प्रकृतत्वे उपमेयतोपमानताप्रयोजके । अन्यथा तुल्ययोगितायां गम्यौपम्यकत्वं न स्यात् । अपि तु सादृश्यानुयोगित्व—प्रतियोगित्वे एवेति आलंकारिकाणां समयः ।

ततश्चात्र—युष्मत्पदार्थमन्मथप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवण गोचरत्वाभाववान् इति बोधो यद्यभ्युपगम्यते, तदा श्रौती उपमानलुप्ता न संभवतीति सिद्धं भवति । अत एव इवादिघटितमुपमानलुप्तोदाहरणं ग्रन्थ कृता न प्रदर्शितम् । तर्हि तत्समानन्यायेन समादिशब्दप्रयोगेष्वपि नोपमान लोप इति शक्यं वक्तुम् । समादिपदानां साक्षादुपमेयान्वय एव, उपमाने तु आर्थतयेति दोषाभावात् ।

वस्तुतस्तु—'इवादिपदानामुपमानोत्तरमेव प्रयोग' इति नियममः

**तत्त्वालोकः**

'उद्बाहुरिव वामनः' इत्यादिप्रयोगबलात्परित्याज्य एव। कस्यचित्पदार्थयोत्कर्षप्रतिपिपादयिषयैव उपमेयत्वं परिकल्प्यते यथा 'चन्द्र इव मुखम्' इत्यादौ 'त्वमिव कोऽपि परापकृता'वित्यत्रापि परापकारनिर्वहणधुरंधरे मनसिजे उत्कर्षप्रत्यायनाय उपमेयत्वेनैवोपादानं कृतं नोपमानतया।

अत एव 'त्वत्तोऽधिकः परापकारसमर्थो दुष्प्राप' इति प्रदर्शनेन उपमेयभूते मन्मथ एव उत्कर्षः पर्यवस्यतीति श्रौत्यपि उपमानलुप्ता संभवतीति वक्तुं शक्यम्। यदि युष्मदर्थस्य मन्मथस्य इवार्थे सादृश्येऽनुयोगितासंबन्धेनान्वयः। इवार्थस्य च प्रतियोगितासंबन्धेन कोऽपीत्यन्यपदार्थेऽन्वयः अभ्युपगतः स्यात्, 'असति बाधके प्रमाणानां सामान्ये पक्षपात' इति 'प्रतीतिव्यवहाराभ्यामर्थसिद्धिः' इति न्यायानुग्रहो वा यदि स्यात्।

**अत एव प्रकाशकृता**—'ढुंढुं कृत्वा मरिष्यसि' इति धर्मोपमानलुप्तायामुदाहृतम्। द्विलोप एवोदाहार्यत्वात् इत्यभिप्रायात्। तर्हि स्वेनापि पूर्वं वृथा चरसीत्यादौ धर्मोपमानलुप्तेति नोपन्यस्तमिति वाच्यम्। तत्र तदुपन्यासस्य उपमानसत्तायाः संभाव्यमानतां प्रदर्श्य अनन्वयशंकानिवर्तनपूर्वकमुपमाया अव्याप्तिवारणमात्रफलकत्वा(त्तदुपन्यासस्ये)त्यपि बोध्यम्। एवं चात्र (ढुंढुं कृत्वा) उभयलुप्तात्वं **कौस्तुभकारस्यापि** संमतमेव।

अत एव **रसगंगाधरकृता**—'ढुंढुंकृत्वा मरिष्यसि' इति नेयमुपमानलुप्तोपमा। तस्याः संभवदुपमानानुपादानविषयत्वात्। अपि तु असमाख्योऽलंकारः। इति **रत्नाकरोक्तमसत्**। मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि इत्युक्त्या वर्ततां नाम तत्सदृशं क्वापि त्वया तु दुष्प्रापमेवेति प्रत्ययात् आत्यन्तिकोपमाननिषेधाभावादुपमानलुप्तोपमैवेयं भवितुमर्हति।

चित्रमीमांसा

**अत्र यत्सममिति समासे, येन सदृशमिति वाक्ये चोपमानलुप्ता द्विविधापि दर्शिता ।**

तत्त्वालोकः

नासनालंकारः, अन्यथा मालतीकुसुमसदृशं नास्तीत्येव ब्रूयात् न तु प्राप्स्यसि इति अलंकाररत्नाकरकृन्मतं निराकृतम् ।

परंतु उपमानलुप्तोपमेदेत्येदकारेण धर्मलोपेऽप्यत्र निराकृत इति भाति । तत्तु चिन्त्यम् । यत्रोपमानव्यतिरिक्तानां सत्वं उपमानस्य असत्वं (अनुपादानं) तत्रैव उपमानलुप्तात्वस्य वक्तुं युक्तत्वात । इष्यते चायं क्रमो **जगन्नाथ** स्यापि । अन्यथा–जगन्नाथेनैव **चित्रमीमांसाखण्डने**– यदपीत्याद्युपक्रम्य पटुपटुर्देवदत्त· इति धर्मलुप्तोदाहरणत्वाभिधानमनुचितम् स्यात् । अत्र च उपमावाचकस्यापि अनुपादानाद्वाचकधर्मलुप्तायामेतदुद्भावनमुचितम् । न तु धर्मलुप्तायाम् इति **चित्रमीमांसाया** दूषणाभिधानमसंगतं स्यात् । इत्थं सति अयं पण्डितराजः स्वीयं चित्रमीमांसाखण्डनमेव व्यस्मार्षीत् । अन्यथा धर्मोपमानलुप्तोपमैवेयम् इत्येव वदेत् ।

'पटुपटुर्देवदत्त' इत्यत्र वाचकलोपोऽस्ति न वेति तदवसरे विवेचयिष्यते । प्रकृतमनुसरामः–प्रकाशानुरोधेन उपमानलुप्तायां तद्धितगता श्रौती, वाक्यगा समासगा वा श्रौती न संभवति । उपमानानुपादाने वत्यादेर संभवात् । इवादेश्च तदनुपादानेऽन्वयाबोधकत्वात् । अत आर्थी द्विविधैव इति पर्यवस्यति । तदाह–**अत्रेति** ।

वृथा मम भ्रमत्यहो मनः स्थिते महेश्वरे

तत्त्वालोकः

अथ अवशिष्टाः षड्विधाः लुप्ताः उदाहरति—वृथेत्यादिना। मम मनः–चित्तं महेश्वरे–शिवे, 'महेश्वरः त्र्यंबक एव नापरः' इति कालिदासोक्तरीत्याश्रयणात्। यद्वा–'शिवो वा विष्णुर्वा श्रुतिशिरसि गिरामस्तु तात्पर्यभूमिः' इति ग्रन्थकृदुक्तरीत्या विष्णौ इत्यर्थः।

नन्वत्र कथं महेश्वरशब्दस्य विष्णवर्थकत्वमुक्तम्? 'द्वितीयगामी न हि शब्द एषः' इत्युक्तत्वादिति चेत्–उच्यते। दहरविद्योपास्यदेवताविशेष विषयकजिज्ञासायां नारायणस्य दहरविद्योपास्यत्वं प्रतिपादयितुं सकलपरविद्योपास्यत्वौपयिकं महेश्वरत्वं नारायणस्येति 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः॥' इतीयं श्रुतिः प्रतिपादयति। वेदस्य आदौ अन्ते च प्रतिष्ठितः स्वरः कः प्रोक्त इत्युक्तौ प्रणव एव। तदुक्तं मनुना—

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते॥ इति।

एवं च वेदानामाद्यन्तयोः प्रतिष्ठितः प्रणवः। तस्य प्रकृतिः अकारः। समस्तशब्दमूलत्वादकारस्य। विष्णोः पूर्णांशसम्भूतः कृष्णः, स एव भगवद्गीतायाम् 'अक्षराणामकारोऽस्मि' इत्युपादिशत्।

अत्र भगवद्रामानुजभाष्यम्— अक्षराणां मध्ये 'अकारो वै सर्वा वाक' इति श्रुतिसिद्धः सर्ववर्णानां प्रकृतिः अकारोहम्' इति।

चित्रमीमांसा

श्रुतोऽस्ति तेन किं समः स्मृतोऽथवास्ति तत्समः ।

तत्त्वालोकः

'अ इति भगवतो नारायणस्य प्रथमाभिधानम् . . .' इति अभियुक्तैरभ्यधायि' इति श्रीभाष्यद्यपद्यव्याख्याने श्रुतप्रकाशिका च ।

तादृशोऽकारे प्रकृतिभूते लीनस्य तदन्तर्गतस्य यः परः प्रतिपाद्यः 'इदंपरः तत्परः' इत्यादौ परशब्दस्य वाच्ये प्रयोगदर्शनात् । 'यत्परः स शब्दार्थः' इति न्यायाच्च ।

'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः' 'अकारो विष्णुवाचकः'

इति श्रुतिस्मृतिभ्याम् अकारवाच्यो वि ष्णुः स एव महान् ईश्वरः । पदश्रुत्यैव निरतिशयैश्वर्यवतित्र् तेः । निरतिशयैश्वर्यं च भगवतो नारायणस्यैवेति स एव महेश्वरः । तस्मिन् स्थिते सति, वृथा—शास्त्रोक्तनियमातिक्रमेण, व्यर्थमिति वा । उभयत्रापि प्रयोगदर्शनात्

'आविकं सन्धिनीक्षीरं वृथा मांसं तथैव च' इति

'प्रयुक्तमप्यस्त्रमितो वृथा स्यात्' इति च रघौ । भ्रमति नावतिष्ठते, इत्यहो शोच्यं दयनीयं वा मदीयं चेतः इत्यर्थः ।

महेश्वरे मनस्स्थापने हेतुविशेषमाह—श्रुतोस्तीति । तेन समः महेश्वरनिरूपितसादृश्याश्रयाभिन्नः किं श्रुतः ? श्रुतिविषयीभूतः वेदप्रतिपाद्यः अस्ति किं ? न, अथवा तत्समः तेन समः स्मृतोऽस्ति । स्मृतिपथमुपगतोऽस्ति ? न । अत्र तेन समः इति वाक्यगा धर्मोपमानलुप्ता, तत्सम इति समासगा धर्मोपमानलुप्ता द्विविधा ।

## चित्रमीमांसा

षडङ्घ्रयत्वदः सदा तदङ्घ्रिपङ्कजद्वये
चकोरकीयतु स्थिरं तदानने शशिप्रभे ॥ इति ॥

अत्र अवशिष्टाः षड्विधा अपि लुप्ताः प्रदर्शिताः ।
तत्र द्वितीयपादे वाक्यसमासयोः धर्मोपमानलुप्ता द्विविधा ।

## तत्त्वालोकः

अतः अदः—महेश्वरस्य तदङ्घ्रिपङ्कजद्वये निरतिशयितफलप्रदे पाद कमलयुगले सदा—सर्वदा, षडङ्घ्रयतु भ्रमरवदाचरतात् । तथा शशिप्रभे शशिनः प्रभा—शशिप्रभा, शशिप्रभेव प्रभा यस्य तस्मिन् तदानने 'चकोर कीयतु' चकोरवदात्मानमाचरत्वित्यर्थः । 'उपमानादाचारे' [पा.सू. ३-२-२०] इति क्यच् । अत्र 'षडंघ्रयतु' इत्यत्र क्विपः सर्वलोपित्वात् क्विब्गता धर्मवाचकलुप्ता । 'अंघ्रिपङ्कजद्वये' इत्यत्र समासगा धर्मवाचकलुप्ता । 'चकोरकीयत्वि'ति क्यजगता वाचकोपमेयलुप्ता । 'शशिप्रभे' इत्यत्र धर्मोपमानवाचकलुप्ता च क्रमेण ज्ञेया ।

तदेतदाह — अत्रेति । तत्रेति । 'तेन समः' इत्यत्र महेश्वरस्य उपमानभूतः कश्चन श्रुतिस्मृत्यगोचरः अस्तीति प्रतीत्या स्वनिष्ठसादृश्यप्रति योगी निषिध्यत इति श्रुतिस्मृत्यगोचरोपमानप्रतियोगिकेश्वरानुयोगिकसादृश्य प्रयोजकधर्मस्य, उपमानस्य चानुपादानाद्धर्मोपमानलुप्ता वाक्यगा । तथा 'तत्समः' इत्यत्र समासगा धर्मोपमानालुप्ता ।

वस्तुतस्तु—सादृश्यप्रतियोगि उपमानम्, सादृश्यानुयोगि उपमेय मिति प्रसिद्धिः । तत्र स्वनिष्ठसादृश्यप्रतियोगिनिषेधस्य यथा उत्कर्षपर्यव

## चित्रमीमांसा

### तृतीयपादे क्विप्समासयोः धर्मवाचकलुप्ता द्विविधा ।

#### तत्वालोकः

सायित्वं तद्वत् स्वप्रतियोगिकसादृश्यानुयोगिनिषेधस्यापि उत्कर्षपर्यवसायित्वेन उक्तोदाहरणे भगवत एव प्रतियोगित्वं, तत्प्रतियोगिकसादृश्यानुयोगिनः श्रुति स्मृत्यगोचरत्वोक्त्या उत्कर्षो भगवति प्रतीयत एव 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः लोकत्रयेऽपी'त्याद्यानुगुण्यात् ।

न च स्वप्रतियोगिकसादृश्याश्रयागोचरत्वोक्तेः स्वस्मिन् उत्कर्षप्रत्याय कत्वं यद्यपि विद्यते । अथापि प्रतीपविशेषत्वं स्यादिति वाच्यम् । तस्यापि उपमाविशेषरूपत्वस्याभ्युपगमेनादोषात् । परंतु अत्र धर्मोपमेयलुप्ता स्यादिति विभावनीयम् ।

अत एवमादौ —नोपमानलुप्ता किन्त्वसमालंकार इति अलंकाररत्ना करकारादयः । एतेन—'ढुंढुलन्तो मरीहसी'त्यादौ मालतीकुसुमस्यैवोपमान ताप्रत्यायनेऽपि उपमेयधर्मलुप्तात्वमेवोद्भावनीयम् । न त्वलंकारान्तरत्वमिति रत्नाकरकारोपरि दोषो दृढ एव ॥

द्विविधेत्युक्त्या-वाक्यगा श्रौती, तद्धितगा च श्रौती न संभवतीति पूर्वोक्तरीतिरेवाश्रयणीयेत्यभिमानात् । उत्तरत्र स्वेन तद्धिते तत्सम्भवस्य प्रदर्शयिष्यमाणत्वात् ।

**तृतीयपाद इति** । अत्र क्विपि—समासे चोदाहृता । न वाक्ये 'मुखं चन्द्रः' इत्यतः सादृश्यं वाच्यतया न प्रतीयते इति । नापि तद्धिते वत्या-

चित्रमीमांसा

चकोरकीयत्विति वाचकोपमेयलुप्ता। शशिप्रभेति धर्मोपमानवाचकलुप्ता च क्रमेण द्रष्टव्या॥ इति॥

एवमयं पूर्णालुप्ताविभागः वाक्य-समास-प्रत्ययगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनमात्रप्रयोजनः नातीवालंकारशास्त्रे व्युत्पाद्यतामर्हति। न वा लुप्तानामयं सामस्त्येन विभागः।

तथाहि धर्मलुप्ता वाक्य-समास-तद्धितेषु दर्शिता। द्विर्भावेऽपि दृश्यते-'पटुपटुर्देवदत्त' इति। अत्र हि

तत्त्वालोकः

देरेव धर्मवाचकत्वेन तल्लोपाभावात् संभवतीति परे। तद्धितेऽपि तत्सम्भवस्य वक्ष्यमाणत्वात्।

'षडंघ्रयतु' 'चकोरकीयतु' इत्युभयत्रापि मन एवोपमेयं उपात्तमिति कथमुपमेयलोप इति शंक्यम् अथापि कर्तृत्वेनोपस्थितस्य मनसः कर्मत्वोपस्थापकविभक्त्यभावेन चकोरकीयत्वित्यत्रोपमेयासमर्पकत्वात्। कर्मीभूतस्य मनसोऽश्रूयमाणत्वादुपमेयलोपः। शिष्टं स्पष्टम्। अन्यत्र सजातीय स्थले व्याख्यातं चेति।

प्रकाशकारादिमतरीत्या पूर्णालुप्ताविभागः प्रदर्शितः सोऽपि वैयाकरणताप्रदर्शनमात्रफलः नातीवालंकारशास्त्रे व्युत्पादयितुमर्हः। नापि लुप्तानां सामस्त्येन विभागः। केषांचिदसंग्रहात् इत्याह—**एवमित्यादिना**।

धर्मलुप्तासु वाक्यसमासतद्धितेषु यथा तथा द्विर्भावेऽपि दृश्यत इत्युपपाद्य न्यूनतां प्रदर्शयति—**तथाहीत्यादिना**।

### चित्रमीमांसा

'प्रकारे गुणवचनस्य' [पा.सू. ८-१-१२] इति सादृश्ये द्विर्भावविधानात् । पटुसदृश इत्यर्थः । यो हि शास्त्रादिष्वपटुरेव पटुवदभिनयति स उच्यते पटुपटुरिति । न तावदियं वाक्ये धर्मलुप्ता । 'कर्मधारयवदुत्तरेषु' [पा.सू ८-२-८२] इति समासवद्भावविधानेनैकपद्यसिद्धेः । अत एव न समासेऽपि धर्मलुप्तेयम् ॥

### तत्त्वालोकः

अयं भावः—'प्रकारे गुणवचनस्य' [पा.सू. ८-१-१२] इत्यत्र प्रकार शब्देन सादृश्यं गृह्यते । गुणवचनस्य यस्य कस्यचित्प्रकारत्वं यदा न संपद्यते तदवस्थायां गुणवाचकस्य शब्दस्य स्थाने द्वित्वं भवतीत्यर्थः तदुक्तं **कैयटेन** 'इह च सादृश्यं प्रकार आश्रीयते न तु भेदः । 'पटुपटुः' इति ह्युक्ते पटुसदृशः प्रतीयते' [म.भा.कै ८-१-१२] इति एवं च वस्तुतोऽपटावयं प्रयोगः इति ।

न च पटुपटुरिति पदद्वयश्रवणाद्वाक्यगा धर्मलुप्ता स्यादिति शंक्यम्, 'कर्मधारयवदुत्तरेषु' (पा.सू ८-२-८२) इति समासवद्भावविधानेन समुदायस्य 'कृत्तद्धितसमासाश्च' [पा.सू. २-२-४६] इति प्रातिपादिकसंज्ञायाम् 'सुपो धातुप्रातिपादकयोः' (पा.सू.२-४-७१) इति सुपो लुकि समुदायात्सुबुपत्तौ एकपदत्वमेव तस्येति न वाक्यगात्वप्रसक्तिरिति आशयेनाह—**न तावदिति** । तर्हि समासगा धर्मलुप्ता भवतु कर्मधारयवद्भावविधानादित्याशंक्य तत्त्वमपि निराकरोति—**अत एवेति** ।

अयं भावः—'कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि इति वार्तिककृता प्रयोजनोपन्यासात् समाससंज्ञा अत्र आतिदेशिकी न त्वौप-

## चित्रमीमांसा

वाचकलुप्ता णिनिं विना कैश्चित् षड्विधा दर्शिता ।
णिनिना सहापरैः सप्तविधा । क्विप्तद्धितयोरपि दृश्यते—

यद्भक्तानां सुखमयः संसारोऽप्यपवर्गति ।
तं शम्भुमभजन् मर्त्यः चश्चैव स्वहिताऽकृतेः ॥

इति । विवृतमेतदधस्तात् ।

## तत्त्वालोकः

देशिकी ' गौणमुख्यन्यायात् मुख्यसमासस्थल एव समासगा उदाहार्या न त्वातिदेशिकी । अत एव-काव्यप्रकाशिकाकारेण- 'करवाल इव' इति इवेन समासमभिप्रेत्योक्तम् । अन्यथा द्विर्भावेऽप्युदाहृतं स्यात् । न च तेन तथोदाहृतम् । एवं च 'पटुपटुरिति' द्वित्वगा धर्मलुप्ता प्राचीनैः अनुदाहृतेति न्यूनतैवेति भावः ।

अत्र वाचकधर्मलुप्तैव न तु केवलधर्मलुप्ता । न च सादृश्ये द्विर्भावविधानात् न वाचकलोप इति वाच्यम् । सादृश्ये द्योत्ये द्विर्भवत इति दर्शनात् द्विर्भावस्य वाचकतायाः भाष्यकैयटविरुद्धत्वात् इति **रसगङ्गाधरकृत्**।

यदि द्विर्भावस्य सादृश्यद्योतकत्वमात्रेण वाचकलोप इति प्रतिपादनं क्रियेत तदा इवादेस्सादृश्यद्योतकत्वमते 'चन्द्र इव' इत्यादावपि वाचकलुप्तात्वप्रसंगात् रसगंगाधरोक्तमपि न युक्तम् । प्रत्युतात्र वास्तवातिदेशिकोभयसाधाणसमासगा धर्मलुप्तैवेति तु **कौस्तुभकृत्** ।

वाचकलुप्ता सप्तविधेति प्राक् प्रतिपादितम् । तत्र मतभेदमाह -**वाचकलुप्तेति** । अथापि क्विप्तद्धितयोरसंग्रहात् न्यूनतेति तत्प्रदर्शयति -**क्विप्तद्धितेति** ।

**तत्त्वालोकः**

**नन्वत्र**—संसारापवर्गयोः औपम्ये सुखमयत्वं साधारणो धर्म उपात्त एवेति क्विपि वाचकलोपवद्धर्मलोपोऽपीति प्रागुक्तं कथं संगच्छताम् । यदि तु सुखमयत्वं उपमेयमात्रे विशेषणतया विवक्षितं न तु सादृश्यविशेषणापवर्गे विशेषणतयेति न धर्मसाधारण्यम इत्युच्यते—तदा अत्रोपात्तं यद्भक्तानाम् इत्युदाहरणं क्विपि वाचकमात्रलुप्तायाः कथमुपात्तम् ? आचारार्थस्य क्विपो-लोपादुभयलुप्तास्वेवोदाहर्तुं योग्यत्वात् इत्यादिना सन्दर्भेण **चित्रमीमांसा खण्डनकृता** यदभ्यधीयत,

तदपि मन्दम् । यद्भक्तानामित्यत्र वाचकमात्रलुप्ताया एव प्रदर्शने ग्रन्थकृत्तात्पर्यात् । अत एव—क्विब्गतायां वाचकलुप्तायां सुखमयः इत्युपा-दानं संगच्छते ।

यद्यपि आचारार्थस्य क्विपो लोपेऽपि तत्सजातीयस्य सुखमयत्वस्यो पादानाद्धर्मलुप्ताया न प्रसरः । अत एवात्र वाचकमात्रलुप्तासु क्विब्गतोदाहरण प्रदर्शनं युज्यते । पूर्वं धर्मवाचकोभयलुप्ताप्रसंगे सुखमयत्वादिविशेषण रहितं—नृणां यं सेवमानानां संसारोऽप्यपवर्गति' इत्येतावन्मात्रमुपादाय आचारार्थस्य क्विपो लोपाद्वाचकवद्धर्मस्यापि लोपः इत्युपपादितः ।

अथापि चेत्त्वत्र ईश्वरभजनराहित्यस्य न विशेषणत्वविवक्षा, अपि तु मर्त्यमात्रे कस्यचिद्धर्मस्य कचिदुपादानेऽपि उभयत्रान्वयविरहो दृष्टः । यथा 'भाष्याब्धिः क्वातिगम्भीरः' इत्यादौ गाम्भीर्यस्य, अन्यथा उपमितसमासेन पूर्वपदार्थप्राधान्यं न प्रतीयात् । तद्वदत्रापि स्वात्महितकरणे एवोभयत्रान्वय विवक्षा इत्यभ्युपगमे बाधकाभावात् । अत एव **रसगंगाधरकृता** आक्षेपः समाधानं चेत्युभयमभिहितम् ।

## चित्रमीमांसा

वाक्यसमासयोरुपमानलुप्तापि दर्शिता । 'उपनतमेतदकस्मात् बत काकतालीयम्' इति तद्धितेऽपि दृश्यते । वाचकोपमानलुप्ता स्वरूपत एव नोदाहृता । सापि काकतालीयमिति प्रकृतिभूतसमासे दृश्यते । धर्मोपमानलुप्तापि तद्धिते काकतालीयमित्यत्र दृश्यते । धर्मवाचकलुप्ता क्विप्

## तत्त्वालोकः

वाक्यगा समासगा च उपमानलुप्ता दर्शिता । सा तद्धितगापि संभवति । अथापि प्राचीनैः नैवोदाहृता अस्माभिः प्रागेवोदाहृतेति स्मारयति–**वाक्येति** । तद्धितगा उपमानलुप्ता । 'समासाच्च तद्विषयात्' [पा.सू. ७–३–२०६] इति प्रत्ययार्थोपमायामुपमानलोपादित्यर्थः । तालपतनजन्य काकवधस्यानुपादानात् उपमानलुप्तेति भावः ।

प्राचीनैः **काव्यप्रकाशकारादिभिः** वाचकोपमानलुप्ता स्वरूपत एव नोदाहृतेति न्यूनतैव सापि 'काकतालीयम्' इत्यत्रैव छप्रत्ययप्रकृतिभूते समासे दृश्यत इत्याह–**वाचकेति** । छप्रत्ययस्य प्रकृतिः 'काकतालम्' इति पदम् । तत्र काकतालसमागमरूपमुपमानं सादृश्यं च नोपात्तमिति समासगा वाचकोपमानलुप्ता ।

धर्मोपमानलुप्ताऽपि तद्धितगा 'काकतालीयम्' इत्यत्र दृश्यते । सा च प्राचीनैः नोक्ता । साऽपि अस्माभिः पूर्वं निरूपितेति स्मारयति–**धर्मोपमानेति** ।

'यच्चोराणामस्य च' इति पद्ये (तृतीयपादविपर्यासे) तालपतनजन्य

चित्रमीमांसा

समासयोरिव तद्धितेऽपि दृश्यते । 'तं जगत्यभजन् मर्त्यः चञ्चा चन्द्रकलाधरम्' इति हि प्रागुदाहृतम् ।

तस्मात् लुप्ताविभागे दिङ्मात्रप्रदर्शनमेवेदं प्राचां न तु सामस्त्येन विभागः ।

ये चान्ये काव्यालोकादिषु उपमायां प्रकरभेदा दर्शितास्ते सर्वे तेष्वेव द्रष्टव्याः ।

तत्त्वालोकः

काकवधस्यानुपादानात् धर्मलोप इति तद्धितगापि धर्मोपमानोभयलुप्ता संभवति सा न प्राचीनैरुल्लिखितेति भावः ।

धर्मवाचकलुप्ता क्विप्समासगतत्वेन द्विधैव प्रदर्शिता । सा तद्धितेऽपि दृश्यते । साऽपि पूर्वं प्रतिपादितेत्याह—धर्मवाचकेति । चञ्चा अत्र 'इवे प्रतिकृतौ' इत्युनुवर्त्य लुम्मनुष्ये 'इति' कनो लोपे तृणरचित प्रतिकृतिरिवेत्यर्थः । स्वहिताकरणस्य, कनश्च लोपात् धर्मवाचकयोर्लोपः इति भावः । अतः प्राचीनैः कृतो लुप्ताविभागः दिङ्मात्रप्रदर्शकः न तु समस्तलुप्तोपमाविभागप्रदर्शकः इति निगमयति—तस्मादिति ।

ननु भवतापि दण्ड्यादिभिर्निरूपिताः उपमाः साकल्येन नैव प्रदर्शिता इति त्वदीयग्रन्थेऽपि न्यूनता अपरिहार्येत्याशंकायामुत्तरयति-ये चान्य इति । काव्यादर्शादिषु इत्यर्थः । आदिपदात् रुद्रटकाव्यालंकारसरस्वतीकण्ठाभरणप्रभृतयो गृह्यन्ते । तत्र काव्यादर्शे दण्डिना प्रदर्शितोपमाप्रभेदेषु द्वात्रिंशदुपमासु अष्टादशानामुपमाप्रभेदानामलंकारान्तरत्वमेवेष्टं नव्यानाम् ।

तत्त्वालोकः

तथाहि **दण्डिना** प्रदर्शिताः उपमाभेदाः प्रदर्श्यन्ते ।

| | | | |
|---|---|---|---|
| १ धर्मोपमा | | १७ प्रशंसोपमा | **९ प्रतीपम्** |
| २ वस्तूपमा | **१ श्रौती धर्मलुप्ता** | १८ आचिख्यासोपमा | |
| ३ विपर्यासोपमा | **२ प्रतीपम्** | १९ विरोधोपमा | |
| ४ अन्योन्योपमा | **३ उपमेयोपमा** | २० प्रतिषेधोपमा | **१० व्यतिरेकः** |
| ५ नियमोपमा | | २१ चाटूपमा | **११ विशेषोक्तिः** |
| ६ अनियमोपमा | | २२ तत्वाख्यानोपमा | **१२ भ्रान्तापह्नुतिः** |
| ७ समुच्चयोपमा | | २३ असाधारणोपमा | **१३ अनन्वयः** |
| ८ अतिशयोपपा | | २४ अभूतोपमा | **१४ उत्प्रेक्षा** |
| ९ उत्प्रेक्षितोपमा | **४ अतिशयोक्तिभेदः** | २५ असंभावितोपमा | |
| १० अद्भुतोपमा | **५ संभावना** | २६ बहूपमा | **१५ मालोपमा** |
| ११ मोहोपमा | **६ भ्रान्तिमान्** | २७ विक्रियोपमा | |
| १२ संशयोपमा | **७ सन्देहः** | २८ मालोपमा | |
| १३ निर्णयोपमा | | २९ वाक्यार्थोपमा | **१६ विशिष्टोपमा** |
| १४ श्लेषोपमा | | ३० प्रतिवस्तूपमा | **१७ प्रतिवस्तूपमा** |
| १५ समानोपमा | | ३१ तुल्ययोगोपमा | **१८ तुल्ययोगिता** |
| १६ निन्दोपमा | **८ व्यतिरेकः** | ३२ हेतूपमा | |

**चित्रमीमांसा**

**दर्शिताश्चेहापि लेशतो लक्षणविचारप्रस्तावे । रूपक प्रकरणे चास्याः प्रकारभेदान् प्रदर्शयिष्यामः इति ।**

**पुनश्चेयमुपमा संक्षेपतस्त्रिधा—क्वचित् स्ववैचित्र्यमात्र विश्रान्ता ।**

**तत्त्वालोकः**

इत्थं द्वात्रिंशदुपमाप्रभेदेषु षोडशानां केषांचित्प्रभेदानामुपमातिरिक्तत्वम् । द्वयोः उक्तेष्वेवान्तर्भावः । चतुर्दशानामवशिष्टानां काव्यादर्शएवावलोकनं युक्तम् ।

**दर्शिताश्चेति** । 'चन्द्रबिम्बादिवे'त्यत्र [illegible]वितोपमा, 'अनवरतकनकवितरणे'त्यत्र रशनोपमा, 'रजोभिः स्यन्दने'त्यत्र परस्परोपमा, 'उपाददे तस्य सहस्रे'त्यत्र अभिन्नधर्मिकोपमा, 'इतराण्यपि रक्षांसि' इत्यत्र समुच्चितोपमा, 'ज्योत्स्नेव नयने'त्यत्र मालोपमा, 'न पद्मं मुखमेवे'त्यत्र तत्वाख्यानोपमा, 'त्वदाननमधीराक्ष'मित्यत्र विशिष्टोपमा, 'पुष्पं प्रवालोपहित' मित्यत्र उत्पाद्योपमेति **भोजराजादिभिः** परिगणितत्वाच्चेति प्रसंगतः प्रदर्शिताश्चेति भावः ।

अस्याः केवलनिरवयवत्वादिभेदाः रूपके सावयवादिभेदनिरूपणप्रस्तावे प्रदर्शयिष्यन्त इत्यभिप्रायः ॥

पुनरपीमां संक्षेपतो विभजते—**पुनश्चेति** । क्वचिल्लक्ष्ये इयमुपमा स्ववैचित्र्यमात्रविश्रान्ता–स्फुटप्रतीयमानार्थानुपस्कारकत्वे सति मञ्जूषादिगत

**यथा — ‘ स छिन्नमूलः क्षतजेन रेणुः ’ इत्यादौ ।**

**तत्त्वालोकः**

कटककुण्डलादिवत् स्वतश्चमत्कारिणी इत्यर्थः । तस्योदाहरणमाह—**स च्छिन्नमूल इति ।**

स च्छिन्नमूलः क्षतजेन रेणुः
तस्योपरिष्टात्पवनावधूतः ।
अङ्गारशेषस्य हुताशनस्य
पूर्वोत्थितो धूम इवाबभासे ॥

इति संपूर्णं पद्यम् । यः संग्रामेऽश्वैरुत्थापितः स्यन्दनवंशचक्रैः सांद्रीकृतः कुञ्जरकर्णतालैः विस्तारितः गगनचुम्बी, क्षतजेन-शस्त्रक्षताश्वद्विपवीरजन्मना रुधिरेण छिन्नमूलः त्याजितभूतलभागः, तथा तस्य रुधिरस्योपरिष्टात् ऊर्ध्वभागे, पवनावधूतः वाताहतश्च, सः रेणुः रजः, अङ्गारः—प्रशान्तार्चिषः अग्नेराश्रयः [केण्ड इति कर्णाट देशभाषायाम्] एव शेषः अवशेषो यस्य तस्य हुताशनस्य अग्नेः प्रशान्तार्चिषः अग्नेः सकाशात् इत्यर्थः पूर्वं—अर्चिषः प्रशमावस्थायाः प्राक् उत्थितः उत्पन्नो धूम इव आबभासे प्रचकाशे ॥

अत्र अर्चिःप्रशमपूर्वकालोत्थितो धूमो यथा बालारुणबभ्रुः प्रदृश्यते ‘तथा क्षतजसंपर्कादारुण्यं स्वतो धूम्रतां च बिभ्रद्रेणुः ददृशे इति धूमस्य रेणोश्चोपमोपनिबद्धा ।

तथा च अत्रत्या उपमा न स्फुटप्रतीयमानार्थान्तरोपस्कारिणी, न वा उक्तार्थोपपादनपरा, किन्तु स्ववैचित्र्यमात्रे पर्यवसितेति भावः ॥

**तत्त्वालोकः**

अत्र-**चित्रमीमांसाखण्डनकारः**-'अलंकारभूतोपमालक्षणं तु' इत्यादिब्रुवता त्वया अव्यङ्ग्यत्वविशेषितमुपमालक्षणमित्युक्तम्। तेन चेदं व्यक्तं भवति व्यङ्ग्योपमायाः अन्यानुपस्कारकत्वात् अलंकारत्वं नास्तीति। अत एव च मुख्यवाक्यार्थभूतोपमायाः अपि नालंकारत्वमिष्टम्। अत एव च अव्यङ्ग्यत्वविशेषणं सार्थकं भवन्मते। इत्थं सति अलंकारभूतोपमां लक्षयित्वा तद्विभजता 'स्ववैचित्र्यमात्रविश्रान्तेति अभिधानं कथं संगच्छते। व्यङ्ग्योपमाया इव वाच्योपमाया अपि परित्याज्यत्वमेव अन्यानुपस्कारकत्वस्योभयत्रापि समत्वात् 'यश्चोभयोस्समो दोषः' इतिन्यायेन व्यङ्ग्यवाच्ययोरुपमयोः परिग्रहः परित्यागो वा कार्यः न तु वाच्यायाः परिग्रहः व्यङ्ग्यायाः (अन्यानुपस्कारिकायाः) निरासः इत्यनौचित्यमापतत्येव।

किं च प्रबन्धव्यङ्ग्योपस्कारकत्वेन 'स च्छिन्नमूलः' इत्याद्युपमा संगृह्यते इति चेत् अन्योपस्कारत्वमापतितमेवेति कुत्र स्ववैचित्र्यमात्रविश्रान्तिरिति स्वकृतविभागव्याघातः।

अपरं च 'नयने शिशिरीकरोतु मे शरदिन्दुप्रतिमं मुखं तव' इत्यत्र रसालंकारोभयभिन्ने नयनशिशिरीकरणरूपे वस्तुनि वाच्ये शरच्चन्द्रोपमानिकोपमायामव्याप्तिः। वाच्यवस्तूपस्कारकत्वात्। अत एव न स्ववैचित्र्यमात्रविश्रान्तत्वम्। नाप्युक्तार्थोपपादनपरत्वम्, उक्तार्थस्यान्यथाप्युपपन्नत्वात्। नापि व्यङ्ग्यप्राधान्यम्, चमत्कारातिशयाधायकव्यङ्ग्यार्थाप्रतीतेः इति अहृद्य एवायं विभाग इत्याह।

**अत्रोच्यते**-यदुक्तं व्यङ्ग्योपमाव्यावर्तकाव्यङ्ग्यत्वविशेषणदानात् अनुपस्कारकत्ववति सर्वत्रालंकारत्वं नास्तीति व्यक्तं भवतीति स्ववैचित्र्यमात्र

**तत्त्वालोकः**

विश्रान्ता उपमा नोपलभ्यत इत्युक्तविभागोऽनुपपन्नः अव्याप्तश्चेति। तत्रानुपपत्तिः परिह्रियते—

ग्रन्थकृता व्यङ्ग्योपमाव्यावर्तकविशेषणदानं च उपस्कार्यभूतोपमायां चमत्कारातिशयाधायकत्वनिबन्धनं प्राधान्यं विद्यते इत्यर्थोऽस्कारकत्वं न सम्भवतीति तत्रातिव्याप्तिपरिहारायैव। लक्षणघटकस्य अव्यङ्ग्यमित्यस्य कवितात्पर्यविषयाव्यज्यमानोपमितिक्रियानिष्पत्तिमत्सादृश्यवर्णनमुपमा इत्यत्र तात्पर्यात्।

किञ्च 'यदव्यङ्ग्यमपि चारु तच्चित्र' मिति काव्यविशेषलक्षणं प्रणयतो ग्रन्थकारस्य न अन्योपस्कारकत्वमेवालंकारलक्षणम्, किं तु प्राधान्येन अव्यङ्ग्यत्वे सति चमत्कारजनकोपमाद्यन्यतमत्वरूपम्। तस्य च न व्यङ्ग्योपमायां प्रसक्तिः, तत्रोपमायाः प्राधान्येन अभिव्यज्यमानत्वात्। नापि 'स च्छिन्नमूलः' इत्यत्राव्याप्तिः। उपमायाः वाच्यत्वेन स्वतश्चमत्कारजनकत्वेन च अलंकाररूपत्वात्। न चैतावता अन्योपस्कारकत्वं सर्वथा नास्तीति वक्तुं शक्यम्। 'मुखं चन्द्र इवे'त्यादावपि सादृश्येन मुखस्यैवोत्कर्षात्तस्य विभावतया तदुत्कर्षेणैव रसोत्कर्षात्। अथापि न वाच्यवैचित्र्यहानिः। अत एव-पूर्वं ग्रन्थकृता—'न खलु व्यङ्ग्यसंस्पर्शप्रतिभासादेव चारुताप्रतीतिः। किं तु वाच्यवैचित्र्यप्रतिभासादपीति प्रायस्तत्र संभवद्रसादिकं व्यङ्ग्यं अलंकारान्तरं चागणयित्वैव तत्तदलङ्कारा उदाह्रियन्ते इत्युक्तं संगच्छते॥

एतेन—'नयने शिशिरीकरोतु मे' इत्यत्रापि नाव्याप्तिः वाच्यवैचित्र्यप्रतिभासस्य प्रतीतेः। विशिष्टोपमादिस्थले विशेषणाद्युपमानां गुणीभूतव्यङ्ग्यत्वमेव नालंकारता इत्युक्तिरपि प्रौढिवादमात्रम्। स्वेनैव रसवदाद्यलंकाराणां गुणीभूतव्यङ्ग्यानां निरूपणात्। एतेन व्यङ्ग्यत्वालंकारत्वयोर्विरोधो नास्तीत्यपि सूचितं भवति। परन्तु लक्षणेऽव्यङ्ग्यत्वविशेषणदानं

तत्त्वालोकः

प्रधानव्यङ्ग्यवारकमेव, न व्यङ्ग्यसामान्यनिवारकं, न वा वाच्यवस्तूपस्कारकोपमावारकं वेति प्रतिभाति ।

किंच— अलंकारत्वं न रसोपस्कारकत्वलक्षणं ग्रन्थकृतोऽभिमतं किन्तु शब्दार्थान्यतरोपस्कारकत्वरूपम् । अन्यथा 'सुपर्वपर्वतो भाति सर्वोर्वीधरधूर्वहः' इत्यादौ अनुप्रासाद्यश्चमत्कारः सोऽपलपितः स्यादित्यव्याप्तिश्च । लोकेऽपि यथा सचेतसो राज्ञोऽलंकाराः दृश्यन्ते तथा अचेतसोऽपि तच्चित्रस्य । न चैतावता चित्रवर्तिराजादिगतत्वमात्रेण कटकमुकुटादीन् अलंकाराः इति न व्यपदिशन्ति महाजनाः । एवं चात्र स्ववैचित्र्यमात्रविश्रान्तेत्यादि विभजतो ग्रन्थकृतः शब्दार्थोपस्कारकत्वमेव अलंकारलक्षणमभिमतम् । अव्यङ्ग्यत्वविशेषणदानं च क्वचित् गुणीभूतव्यङ्ग्यस्थले नाधमकाव्यवदलंकार व्यपदेशो मुख्य इत्यवगमयितुम् । अत एव **ध्वनिकृतोक्तम्**—

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम् ।
धत्ते, रसादितात्पर्यपर्यालोचनया पुनः ॥ (ध्व. ३–९७)

इति । एवं चेदृशस्थले ध्वनिप्रायत्वेनेति उत्तमकाव्यत्वमेव नाधमकाव्यत्वमिति स्फुटम् ।

अत एव **प्रकाशकृता** अष्टमे–'उपस्कुर्वन्ति तं सन्तं' इत्यादिना अलंकारान् लक्षयित्वा सन्तमिति पदोपादानफलं आविष्कुर्वता यत्र तु नास्ति रसः तत्र उक्तिवैचित्र्यमात्रपर्यवसायिनः इति विवृतम् । व्याख्यातं च ग्रन्थकृतः स्यालकैः **राजचूडामणिदीक्षितैः** ये हि धर्माः सन्तमेव रसं उपस्कुर्वन्ति उत्कर्षयन्ति न त्वसन्तम्, तदसत्त्वे केवलमुक्तिवैचित्र्यमात्रपर्यवसिता भवन्तीति यावत् इति ॥

चित्रमीमांसा

क्वचिदुक्तार्थोपपादनपरा यथा- 'अनन्तरत्नप्रभवस्य' इत्यादौ।

तत्त्वालोकः

यद्यपि —

'नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ॥'

इति ध्वनिकृदुक्तरीत्या रसाभावे काव्यत्वमेव न संभवतीति कथमुक्तिवैचित्र्य-पर्यवसानमेषामिति सन्देह उपजायते। अस्योत्तरं ग्रन्थकृता पूर्वमेव 'प्रायस्तत्र संभवद्रसादिकमगणयित्वा अलंकारा उदाह्रियन्ते' इति अभिहितम्। तेनैतदुक्तं भवति यत्र व्यङ्ग्यबोधनान्न चमत्कारः यत्र वा न रसादिव्यङ्ग्यता त्पर्यं, किन्तु वाच्यवैचित्र्यादेव तत्र उपमादीनां प्राधान्यम् इति।

उक्तार्थोपपादनपरामुपमामुदाहृतां स्मारयति – क्वचिदिति।

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥

इति संपूर्णं पद्यं पूर्वमेव व्याख्यातम्।

अत्र 'हिमलक्षणो दोषविशेषः, रत्नरूपोगुणविशेषश्चेतिद्वयं तत्र रत्नरूपगुण समुदायशालिनि हिमवति हिमलणक्षस्य सौभाग्यविघातकत्वाभावरूपविशेष समर्थनार्थं 'एको हि दोषो गुणसन्निपाते निमज्जतीति' सामान्यं विन्यस्य तत्प्रसिद्धावपि अपरितुष्यता कविना सामान्यसमर्थनार्थं 'इन्दोः किरणेष्वि-

चित्रमीमांसा

यथावा —

विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥

तत्त्वालोकः

वाङ्कः' इति उपमानरीत्या किरणाङ्करूपौ गुणदोषौ विन्यस्ताविति उपमान-तद्रीत्या विन्यस्तस्यार्थस्यार्थान्तरन्यासोपपादकत्वमन्तर्गतीयमुपपादिकोपमा । एवं च उक्तार्थे—सामान्यार्थे, उपपादनपरा—प्रतीतिविशदीकरणार्थमत्रप्रयुक्तोपमेत्यर्थः ।

यदि तु—उक्तोदाहरणे- विमर्शिनीकाराद्यनुरोधेन—यत्र स्वतस्सिद्धयैव प्रतीतिविशदीकरणार्थं तदेकदेशभूतो विशेष उपादीयेत तत्र उदाहरणालंकारः । यतोऽत्र गुणसन्निपाते दोषनिमज्जनात्मनः सामान्यस्य नैराकांक्ष्येण सिद्धस्य 'इन्दोः किरणेष्विवाङ्कः' इति तदेकदेशभूतो विशेषस्तत्र प्रतीतिविशदीकरणार्थमुपात्त इति इवशब्दः एकदेशैकदेशिभावलक्षकः न पुनः उपमाप्रतिपादक इत्यभ्युपगम्यते तदा उदाहरणान्तरं प्रदर्शयति—**यथावेति** ।

**विस्रब्धेत्यादि** । श्रीहर्षस्य ज्येष्ठभ्रातरं राज्यवर्धनं गौडाधिपः शशांकनामा राजा मिथ्योपचारैः विश्वासमुत्पाद्य मुक्तशस्त्रमेकाकिनं स्वभवन एव व्यापादितवान् । तद्वृत्तं कुन्तलनाम्ना अश्ववारेण सः अशृणोत् । श्रीहर्षः गौडाधिपं जघान । तदेतत्कविः सामान्यविशेषभावरूपेण भावि पश्चाच्च वर्णनमपि उच्छ्वासादौ संजग्राहानेन पद्येन ।

करिणः स्तम्बेरमस्य, स्तम्बेरमकर्तृक इत्यर्थः, हरिनिद्रातस्करः-हरेः

तत्त्वालोक

सिह्मस्य निद्रायाः सुखस्वापस्य तस्करः चोरः-अपहारी, 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्चेति' 'पारस्करप्रभृतीनि च संज्ञायाम्' (पा.सू. ६-२-२५७) इति सूत्रस्थेन कात्यायनवचनेन निपातितस्तस्करशब्दः। नवतरुभंगध्वनिरिव रसभरिततया कठिनस्कन्धस्य तरोः भङ्गाज्जातो यः ध्वनिः स इव, खलस्य कपटिनः कपटिकर्तृक इत्यर्थः। वीरकोपकरः-विक्रवमत क्रोधकरः, विस्रब्धघातदोषः विस्रब्धस्य विश्वस्तस्य यो घातः तत्प्रयुक्तो यो दोषः मनसः अप्रीतिः, स स्ववधाय आत्मवधाय भवति।

एतेनैतदुक्तं भवति-लोके यथा न कोऽपि मां प्रबोधयतीति विश्वस्य सुखसुप्तस्य सिह्मस्य गजकृतस्तरुभंगध्वनिः आत्म (गज) वधायैव भवति तथा कश्चित् कस्मिंश्चित् विश्वासंप्रदर्श्य तमेव हन्ति चेत् तद्धननं परिणामे आत्मघातायैव भवतीति।

अत्र विस्रब्धघातदोषः स्वघातक एव भवति इति सामान्यवाक्यार्थे प्रस्तुते तत्समर्थकः विशेषवाक्यार्थः करिकर्तृकनवतरुभंगध्वनिः आत्मनो वधायेति उपात्त इति अत्र अर्थान्तन्यासः 'समर्थासमर्थकयोः सामान्यविशेष संबन्धेऽर्थान्तरन्यास' इति स्वकृते कुवलयानन्दे-निर्णीतत्वात्।

परन्त्वत्र 'अनन्तरत्नप्रभवस्ये'तिवत् पूर्वार्धोपात्तार्थस्य लोकसिद्धत्वाभावात्। प्रतीतिविशदीकरणार्थं तदेकदेशोपादानं नास्तीत्युदाहरणालंकार विषयत्वस्य अयोगादुपमानविधयार्थान्तरन्यसोपपादकत्वमस्तीत्युक्तार्थोपपादनपर उपमा ॥

**एतेन**—रजगंगाधरोक्तोदाहरणालंकृत्युदाहरणत्वोक्तिश्चिन्त्या।

## चित्रमीमांसा

क्वचित् व्यङ्ग्यप्रधाना सा ।

### तत्त्वालोकः

इत्थं स्वतश्चमत्कारवतीम्, वाच्यालंकारान्तरोपस्कारिकाम् उपमामुदाहृत्य वस्त्वलंकाररसलक्षणं वाक्यार्थीभूतमर्थमनुवर्तमानाः यत्र शब्दार्थालंकाराः परस्परं ध्वन्यपेक्षया च विभिन्नरूपाः व्यवस्थिताः तत्र काव्ये ध्वनिव्यपदेशः । तथा सत्येव अलंकाराणामलंकारत्वमिति मन्यमानः व्यङ्ग्यप्रधानामुपमां विभजते— **क्वचिदिति** ।

क्वचित् काव्यैकदेशे, सा अलंकारशिरोरत्नत्वेन प्रख्याता उपमा, व्यङ्ग्यः प्रधानः चारुत्वोत्कर्षकः यस्यां सा व्यङ्ग्यप्रधाना । चारुत्वातिशयाधायकव्यङ्ग्यार्थोपस्कारिकेति यावत् । अत्र व्यङ्ग्यप्राधान्योक्त्या उत्तमकाव्यसामान्ये व्यङ्ग्यसामान्यस्यावर्जनीयसन्निधित्वम्, अन्यथा तस्याधमकाव्यत्वमेवेति स्मारितं भवति ।

तथा चोपमायाः रसांगभूतविभावानुभावव्यभिचारिषु प्रत्येकं समुदाये वा उत्कर्षाधानद्वारा रसोत्कर्षकत्वम् । विभावानुभावव्यभिचार्यभिव्यक्तस्वरूपत्वाद्रसस्य । अत एव **भरतेन**—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'

इति सूत्रितं संगच्छते ।

तत्र उपस्कार्यः वस्त्वलङ्कारसरूपतया त्रिधावस्थितः चमत्काराधाय

## चित्रमीमांसा

व्यङ्ग्यस्य वस्त्वलंकाररसरूपतया त्रैविध्यात् त्रिविधा ॥

तत्र वस्तुध्वनिर्यथा—

दर्पान्धगन्धगजकुम्भकपाटकूट-
सङ्क्रान्तिनिघ्नघनशोणितशोणरोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥

### तत्त्वालोकः

कस्सन् वाच्यार्थमतिशेते इति प्रतिपादयितुकामः व्यङ्ग्यं विभजते व्यङ्ग्यस्येति । तत्र उपमालंकारेण वस्तुध्वनिं उदाहरति— दर्पान्धेति

यस्य नृपतेः करे कृपाणः युधि आहवे वीरैः योधैः व्यलोकि अवलोकितः । कीदृशः कृपाण इत्यत्राह-दर्पेति । दर्पेण मदेन अन्धाः विवेकरहिताः, अत्र अन्धशब्दः 'अन्धोऽयं पुरोऽपि न पश्यति' इत्यादिवत् प्रमादादिमत्त्वमभिव्यनक्ति । तादृशाः ये गन्धगजाः गन्धहस्तिनः, यस्य गजस्य स्वेदमूत्रपुरीष-मज्जान्यतमाघ्राणमात्रेणापि इतरे गजाः माद्यन्ति नावतिष्ठन्ते वा ते गजा गन्धगजाः । तदुक्तं-पालकाप्याख्ये गजशास्त्रे—

'स्वेदं मूत्रं पुरीषं च मज्जां चैव मतङ्गजाः ।
यस्याघ्राय विमाद्यन्ति तं विद्यात् गन्धहस्तिनम् ।' इति ।

'यस्य गन्धं समाघ्राय नतिष्ठन्ति प्रतिद्विपाः ।
तं गन्धहस्तिनं विद्यात् नृपतेर्विजयावहम् ॥'

इति चोक्तम् । तेषां कुम्भा एव कपाटाः अरराणि, तेषां कूटेषु समूहेषु

## चित्रमीमांसा

अत्र कृपाणस्य कुपितकालीकटाक्षसादृश्यवर्णनेन सकलरिपुबलक्षयः क्षणादेव करिष्यत इति वस्तु व्यज्यते ॥

### तत्त्वालोकः

अग्रभागेषु या या संक्रांतिः अन्तःप्रवेशः तेन निघ्नत्वेन घनैः घनीभूतैः शोणितैः रुधिरैः शोणा अरुणवर्णा रोचिः दीप्तिः यस्य सः तथा, तादृशावस्थायां कोपारुणशोभकालीकटाक्षप्रतिमः, अस्य कृपाणः व्यलोके इत्यनेन संबन्धः ।

अत्र कृपाणे तादृशोपमया व्यज्यमानं वस्त्वाह–अत्रेति । अयंभावः-स्वभावत एव कालीप्रभृतयो देवताः रुधिरोपहारप्रियाः तत्रापि ताः कुपिताश्चेत् सर्वानप्येकपद एव क्षपयिष्यन्ति इति अनुभावः । एवं च कुपितायाः काल्याः कटाक्षो यथा सकलानपि एकपदे क्षय नयति तद्वत् राज्ञः कृपाणोपिऽ सकलशत्रुबलंक्षणादेव क्षयं नयतीति वस्तु कृपाणे कुपितकालीकटाक्षोपमा अभिव्यनक्ति ।

अत्र कालीकटाक्ष इव कृपाणः करे वीरैः व्यलोकीति योजनायां उपमायाः पूर्वोक्तवस्त्वभिव्यञ्जकत्वम् । यदि तु यस्य करे कृपाणः कालीकटाक्ष इव व्यलोकीति योजना, तदा कृपाणे कुपितकालीकटाक्षत्वेन संभावनात् उत्प्रेक्षायाः पूर्वोक्तवस्त्वभिव्यञ्जकत्वम् इति केचित् ।

यद्यपि अत्रैव उत्प्रेक्षाप्रकरणे 'यत्र अप्रकृततादात्म्यसंभावनोपयुक्त–विशेषणकल्पना तत्र सर्वत्र उत्प्रेक्षा' इति वक्ष्यमाणग्रन्थानुगुण्येन कोपकषायितत्वस्य आधिकविशेषणस्योपादानात् उत्प्रेक्षैव स्वरसेति प्रतिभाति अथापि

तत्त्वालोकः

'उत्प्रेक्षायामनुगतधर्मस्यैव प्रयोजकत्वं न बिम्बप्रतिबिम्बभावापन्नस्य। अत्र तु शोणरोचिषः, कषायकान्तेश्च बिम्बप्रतिबिम्बभावेन समानधर्मता। अतः इयं स्वतस्संभविनी उपमेत्यत्र ग्रन्थकृत्तात्पर्यम्। अत 'एव दर्पान्धे'त्युदाहरणे उपमालंकारेण सकलरिपुबलक्षयः क्षणात्करिष्यते इति वस्तु व्यज्यत इति ब्रुवता काव्यप्रकाशकृता उपमैवोद्भाविता नोत्प्रेक्षेति संवदति॥

रसगंगाधरकारस्तु—उत्प्रेक्षायां बिम्बप्रतिबिम्बभावमूलकतयापि धर्मे साधारण्यं संभवतीति मत्वा—

कलिन्दजानीरभरेऽर्धमग्नाः
बकाः प्रकामं कृतभूरिशब्दाः।
ध्वान्तेन वैरादिव निगीर्यमाणाः
क्रोशन्ति मन्ये शशिनः किशोराः॥

इत्युदाहृत्य क्रोशनक्रियाकर्तृत्वोत्प्रेक्षायां क्रोशनशब्दयोरपि बिम्बप्रतिबिम्ब-भावेनाभेदः इति उपपादयामास।

यद्यपि—

मुनिद्रुमः कोरकितोऽसितद्युतिः
वनेऽमुनाऽमन्यत सिंहिकासुतः।
तमिस्रपक्षत्रुटिकूटभक्षितं
कलाकलापं किल वैधवं वमन्॥

इत्यत्र कोरकनिर्गमनविशिष्टस्य मुनिद्रुमस्य विधुकलाकलापवमनविशिष्टराहुरूप-त्वोत्प्रेक्षणे असितत्वंविशेष्योत्प्रेक्षायां निमित्तमुपात्तम्। विशेषणभूतकोरके विधुकलातादात्म्यसंभावनायां बिम्बप्रतिबिम्बभावापन्नयोः निर्गमन—वमनयोः

चित्रमीमांसा

अलंकारध्वनिर्यथा—

> यशसि तव विकसिते नृप हिमकरकिरणच्छटाधवले ।
> भ्रमर इव पुण्डरीके विराजते विष्णुपदमेतत् ॥

तत्त्वालोकः

निमित्तत्वं संभवतीति न विशेषणोत्प्रेक्षायां नानुपात्तनिमित्तत्वम् । **तथापि** उत्प्रेक्षायां बिम्बप्रतिबिम्बभावापन्नस्य न निमित्तत्वमिति अभिदधतां **प्रदीपकारादीनामनुरोधेन** इहापि विशेषणोत्प्रेक्षायां कोरकविधुकलाकलापसाधर्म्यरूपं नोपात्तम्, इत्युत्प्रेक्षायां ग्रन्थकृतैवाभिधास्यमानत्वेन उत्प्रेक्षायां साधारण धर्मस्य बिम्बप्रतिबिम्बभावमूलकत्वं न भवेदिति ग्रन्थकृतोऽपि गूढाभिसन्धिरस्तीति जानीमः ।

अन्यथा—विशिष्टोपमायां विशेषणयोरपि उपमा दृश्यते तत्र तद्विशेषणानां बिम्बप्रतिबिम्बभावमूलतया वस्तुप्रतिवस्तुभावमूलतया वा साधारण्यं यथा सम्पद्यते तद्वत् उत्प्रेक्षायामपि बिम्बप्रतिबिम्बभावमूलतया धर्मे साधारण्यं संपाद्य उपात्तनिमित्तत्वं उपपादयितव्यं स्यात्' न च तथोपपादितम् । अत एवमादौ उपमैवेति ग्रन्थकृत्सिद्धान्तः ।

उपमालंकारेण वस्तुध्वनिमुदाहृत्य उपमालंकारेण वस्तुध्वनिमुदाहृत्य उपमालंकारेण अधिकालंकारध्वनेः उदा-हरणं प्रदर्शयति—**अलंकारध्वनिर्यथेति** ।

हेनृप ! हे राजन् ! हिमकरस्य—शीतकिरणस्य, किरणानां छटेव निकरमिव धवले—शुभ्रवर्णे, अत्र छटाशब्दः समूहाभिप्रायः अत एव ग्रन्थकृता **वरदराजस्तवीय**—'ज्योतिश्छटाघटितचक्रपरिष्कृतोऽसि' इति पद्यव्याख्यावसरे 'ज्योतिश्छटया तेजोनिकरेण घटितं यच्चक्रं सुदर्शनम्' इति व्याख्यातम् ।

**तत्त्वालोकः**

तथा ग्रन्थकृतोऽपि प्राचीनेन–मल्लिनाथेनाऽपि **माघव्याख्यायां सर्वंकषायाम्** -'सटाच्छटाभिन्नघनेन बिभ्रता' इति पद्ये सटाच्छटा केसरसमूह- इति व्याख्यातम् । विकसिते प्राप्तविकासे अत्र पुष्पधर्मो विकासः यशसि उपचरितः । तवयशसि त्वत्कीर्तिरूपे आधारे एतत् विष्णुपदम्–आकाशः भगवतो विष्णोः स्थानं पुण्डरीके सिताम्भोजे स्थितः भ्रमर इव विराजते प्रकाशते । अत्र भ्रमर- गगनयोः उपमा वाच्या

नन्वत्र कथमुपमा ? सा च उपमानोपमेययोस्साधारणधर्मावलम्बिनी । न चात्र साधारणधर्मं पश्यामः । ननु अस्ति खलु यशः पुण्डरीकयोः अनुगतो धर्मः हिमकरकिरणच्छटाधवलत्वरूपः । यद्यप्यस्ति अथापि नासौ साधारणः पुण्डरीकस्य रक्तवर्णत्वात यशसश्शुभ्रत्वात् इति ।

सत्यम् पुण्डरीकं रक्तमेवेति कथमवगतम् ? उच्यते–'यथा कप्यासं पुण्डरीकमेवमक्षिणी इति श्रुतेः 'पुण्डरीकाक्षः' इत्याद्यनुरोधेन च पुण्डरीकं रक्तपद्ममेव इत्यवगतम ।

किं च–मोद्गे चरौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इतिं श्रुतं तत्र बर्हिः–पदेन तत्कार्याणि हावरासादनवेदिस्तरणहोतृषदनपवित्रकरणादीनि लक्ष- यित्वा तदुद्देशेन पुण्डरीकाणि विधीयन्त इति पूर्वन्यायानुसारेण (प्रकृति वद्विकृतौ कर्तव्या) वेदिस्तरणे प्रकृतिप्राप्ते 'दर्भैः स्तृणीत हरितैस्सुपर्णैः । निष्का इमे यजमानस्य ब्रध्ने' इति मन्त्रे यथा बर्हिः पदे दर्भपदे चोहितव्य एवं हरितपदेऽप्यूहितव्यो न वेति शंकायां दर्भपदस्थाने रक्तपदस्योहः कार्यः । तथा च 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः कार्य एवेत्येकं मतमिति **भाट्टदीपिकायां** खण्डदेवेन प्रतिपादितम् ।

तत्त्वालोकः

**शास्त्रदीपिकायां तु**—'पुण्डरीकपदस्यैव रक्तत्वरूपगुणविशिष्टवाचकत्वेन दर्भपदस्थाने ऊहितेन पुण्डरीकपदेनैव रक्तगुणप्रकाशनोपपत्तेः न पुना रक्तपदोपादानापेक्षा' इत्युक्तत्वात् पुण्डरीकपदं शक्त्या रक्तकमलं बोधयति इति कथमत्रोपमानोपमेयभावः धर्मसाधारण्याभावात् इति चेत् भाट्टदीपिकाकारमते रक्तपदस्याप्यूहः इति श्वेतपुण्डरीकस्यापि सद्भावः प्रतिपादितो भवति। अत एव च **अप्पय्यदीक्षितैरेव**—

युक्त्यागमेन च भवान् शशिवर्ण एव
निष्कृष्टसत्वगुणमात्रविवर्तमूर्तिः।
धत्ते कृपाम्बुभरतस्त्विषमैन्द्रनीलीं
शुभ्रोऽपि साम्बुरसितः खलु दृश्यतेऽब्दः, ॥

इति स्वकीये **वरदराजस्तवीयपद्यविवरणे**

'तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः।
शेतेऽशेषजगत्सूतिः शेषाहिशयने हरिः॥ इति

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।

इति **कूर्मपुराणवचनं**, **शिवराघवसंवादस्थ** वाक्यं चोपादाय पुण्डरीकदलद्युतिरित्यनेन शुभ्रवर्णत्वमेव विवक्षितम्। पुण्डरीकशब्दस्य सिताम्भोजे वैशेषिकनामत्वस्यापि सत्वात्, इति व्याख्यातत्वाच्च सिताम्भोजवाचकत्वं पुण्डरीकपदस्यास्तीति उपमानोपमेयभावः, तत्प्रयोजकस्य धर्मस्य साधारण्यं च सुसंपादमिति यशःपुण्डरीकयोः विष्णुपदभ्रमरयोश्चोपमा तथा च आधारभूतस्य आधिक्यं आधेयस्य अल्पत्वं च प्रतीयत इति आधाराधेययोः अनानुरूप्यलक्षणः अधिकालंकारो व्यज्यते। तदुक्तं **जयदेवेन**—

अत्रोपमालंकारेण यशसः पुण्डरीकवद्वैपुल्यस्य गगनस्य च भ्रमरवदल्पत्वस्य प्रतीतेः आश्रयाश्रयिणोरनानुरूप्यलक्षणोऽधिकालंकारो व्यज्यते ।

तत्त्वालोकः

'पृथ्व्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम्' ।

इति । तदेतदाह—अत्रेत्यादिना ।

**अयं भावः**—अत्र पुण्डरीकयशसोः उपमानोपमेयभावः, विष्णुपदभ्रमरयोश्च उपमानोपमेयभावः कविकल्पितः । अल्पप्रमाणभ्रमराश्रयपुण्डरीकसादृश्यस्य यशसि परिकल्पनाद्विष्णुपदस्याधारभूते यशसि वैपुल्यं प्रतीयते । भ्रमरविष्णुपदयोः सादृश्यस्य परिकल्पनात् विष्णुपदे आधेयेऽल्पत्वं प्रतीयते इति आधारस्य यशसः आधेयस्य विष्णुपदस्य च अनानुरूप्यलक्षणः अधिकालंकारो व्यज्यत इति ग्रन्थार्थः ।

**अत्रेदं चिन्त्यते** — अधिकालकारो द्विविधो निरूपितः — कुवलयानन्दे—वस्तुनो महत आधारादाधेयस्याधिक्यवर्णनलक्षणः एकः । विपुलादाधेयात् आधारस्याधिक्यवर्णनलक्षणो द्वितीयः ।' नात्र प्रथमः— भ्रमरसदृशविष्णुपदाधारत्वं यशसि वर्ण्यत इति आधेये विष्णुपदे आधिक्यस्यावर्णनात् । अपितु द्वितीयेन भाव्यम् वस्तुतो विपुलाद्विष्णुपदादाधारस्य यशस आधिक्यस्य प्रतीतेरिति ।

सत्यम्—अथाप्यत्रोपपादनसमये गगनस्य भ्रमरवदल्पत्वस्य प्रतीतेरित्युपपादनादाधेयाल्पत्वं तत्प्रयुक्तं आश्रयाश्रयिणोरनानुरूप्यं चेति द्वयमधिकालं-

कारशरीरप्रविष्टमिति प्रतीयते। तन्न युज्यते आधाराधेयान्यतरावधिकमाधेया–धारान्यतराधिक्यमेव लक्षणघटकं न तु अल्पत्वम्। अत एव **चन्द्रालोके**–'आधेयाधिक्यवर्णनम्। यदाधाराधिक्यं तदपि तन्मतम्' इति उभयविधाधिकलक्षणमुक्तम्। वस्तुतो विचार्यमाणे अल्पत्वं विष्णुपदेनास्त्येव। अथपि भ्रमरसादृश्योक्त्या अल्पत्वं परं द्योत्यते। तावता तस्य अलंकारघटकत्वं न तल्लक्षणानुगुणम्। अन्यथा **द्वितीयाधिकालंकारस्य**—

'कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव'

इति **जयदेवेन** उदाहृतमयुक्तं स्यात्। वाग्रूपे ब्रह्मणि तनुत्वस्य वस्तुतः अभावात्। तादृशतनुत्वं मा प्रतीयतामित्येव 'कियद्वाक्' इत्येतावदनुक्त्वा 'वाग्ब्रह्म' इति ब्रह्मपदं समभिव्याहृतम्। ब्रह्म च धपरिच्छेदरहितं उत्कृष्टं चेति वृद्ध्यर्थकबृहबृहिधात् बोधयतः। स चोत्कर्षः स्वरूपगुणविभूतिनिबन्धनः। ततश्च अल्पत्वस्य आश्रयाश्रयिणोः अनानुरूप्यमित्यस्य च अधिकालंकारशरीरे प्रवेशः कारित इति कथमिदमधिकालंकारोदाहरणमिति चेत् —

उच्यते–स्वेनैव–कुवलयानन्दाख्यसन्दर्भे —

'ब्रह्माण्डानि जले यत्र तत्र मान्ति न ते गुणाः।'

इत्युदाहरणव्याख्यावसरे महाजलौघस्याधारस्य अतिविशालत्वं प्रदर्श्य तत्र न मान्तीत्याधेयानां गुणानामाधिक्यं वर्णितमिति। तथा—

'कियद्वाग्ब्रह्म यत्रैते विश्राम्यन्ति गुणास्तव'

इत्युदाहरणव्याख्यावसरेऽपि एते इति प्रत्यक्षदृष्टमहावैभववत्त्वेनोक्तानां

## तत्त्वालोक

गुणानां विश्राम्यन्तीत्यसंबाधावस्थानोक्त्या आधारस्य वाग्ब्रह्मणः आधिक्यं वर्णितम् ।' इत्युक्तत्वात् उभयत्रापि ब्रह्माण्डे-गुणेनाल्पत्वं प्रतिपादितमिति अल्पत्वस्य अनानुरूप्यस्य च न लक्षणघटकत्वं ग्रन्थकृतोऽत्र विवक्षितं किन्तु आहार्यमल्पत्वमनानुरूप्यं चेति द्वयं स्वरूपकीर्तनमात्रप्रयोजनकमिति मन्तव्यम् ॥

**एतेन**–'इत्थं च आधाराधेयान्यतरस्य तनोरपि आधिक्यवर्णनमिति सामान्यलक्षणम्' इति **कुवलयानन्दचन्द्रिकोक्तं** चित्रमीमांसोपपादितात्रत्यग्रन्थाशयानाकलननिबन्धनम्, अत्रत्योपपादनं तु मतान्तराश्रयणनिबन्धनम् । अत एव **अत्रत्यो ग्रन्थभागः काव्यप्रकाशकाराभिमत**-लक्षणानुगुणः इति मन्तव्यः । **काव्यप्रकाशकृता** —

महतोर्यन्महीयांसौ आश्रिताश्रययोः क्रमात् ।
आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्' ॥

इति लक्षितत्वात् 'आश्रितमाधेयं, आश्रयस्तदाधारः तयोर्महतोरपि विषये तदपेक्षया तनू अपि आश्रयाश्रयिणौ प्रस्तुतप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः तदिदं द्विविधमधिकं नाम' इत्युपपादितत्वाच्चेत्येवं विवृतत्वेऽपि चन्द्रालोकोक्तलक्षणानुगुणदीक्षितव्याख्याननुगुणत्वात् चन्द्रिकोक्तं सामान्यलक्षणमनुपादेयमेव ॥

**अत्रत्यविवरणं तु**–काल्पनिकाकाशगताल्पत्वप्रयुक्तमिति कथंचित्काव्यप्रकाशानुगुणमिति वक्तुं शक्यमिति । प्रागुपदर्शित**काव्यप्रकाशी**यलक्षणानुगतिरत्र ग्रन्थेऽभिप्रेतेति 'तद्रीत्यैवात्र अल्पत्वोपपादनमपि नायुक्तं भवति । अतश्च यशसि तवेत्युदाहरणं प्रकाशानुसारेणैवेति विभावनीयम् ।

चित्रमीमांसा

रसध्वनिः 'वागर्थाविव' इत्यादावुदाहृतः ।

तत्त्वालोकः

न पुनश्चन्द्रालोकोक्तलक्षणविरोधमापाद्य अयुक्तत्वचिन्तनम् मतभेदेन ग्रन्थकृतां लेखनस्य बहुशो दृष्टत्वादिति दिक् ॥

इत्थं व्यङ्ग्यालंकारोपस्कारिणीं उपमां निरूप्य रसौपम्यारिकामुपमां उपलक्षणविधया भावाद्युपस्कारिणीमुदाहरति–**रसध्वनिरिति** ।

रसपदं प्राधान्येन भावादिपरं न तु 'वागर्थाविवे'त्यत्रैव रसध्वनिरिति । कथमिदमवगतम् ? उच्यते **अत्रैव ग्रन्थे** 'वागर्थाविवेति' पद्यमेवोदहृत्य उक्तम्–'यद्यप्युमामहेश्वरयोः वागर्थवन्नित्यसंबन्धित्ववर्णनेन तयोर्निरतिशय–परस्परप्रेमशालित्वं महामहिमत्वमित्यादि व्यज्यते, तथापि न ध्वनिगुणीभूत व्यङ्ग्यव्यवहारः । न खलु व्यङ्ग्यसंस्पर्शप्रतिभासादेव चारुत्वप्रतीतिः, किन्तु वाच्यवैचित्र्यप्रतिभासादपीति प्रायस्तत्र संभवद्रसादिरूपं व्यङ्ग्यमलंकारान्तरं चागणयित्वैव तत्तदलंकारा उदाहियन्ते' इति मुद्रितपाठो दृश्यते ।

अत्र तु तद्विरुद्धतथा 'रसध्वनिः' वागर्थाविव इत्यादाविति पाठः परिदृश्यते । **रसगंगाधरकृता** उद्धृते 'यत्त चित्रमीमांसायां वागर्थाविव सम्पृक्तौ इत्यत्र रसध्वनिः । निरतिशय प्रेमशालिता व्यञ्जनात्' इति पाठो दृश्यते । इमं च पाठं न चित्रमीमांसायां पश्यामः ।

प्रत्युत उपमासिद्धान्तानन्तरोपात्तचित्रमीमांसायां, 'यद्यपीत्यादिना निरतिशयप्रेमशालित्वं महामहिमत्वमित्यादि व्यज्यते तथापि न ध्वनिगुणीभूत–

तत्त्वालोकः

व्यङ्ग्यव्यवहारः' इति रसध्वनित्वं निराकृतमिव ज्ञायते । इत्थं सति अत्रैव पूर्वोत्तरग्रन्थविरोधः , खण्डनकृता अनूद्य खण्डिते सिद्धसाधनतेत्येवमादयो दोषाः परिस्फुरन्ति ।

अतश्चात्र-यदि 'यद्यपि उमामहेश्वरयोः वागर्थवन्नित्यसंबन्धित्ववर्णनेन तयोर्निरतिशयपरस्परप्रेमशालित्वं महामहिमत्वम् इत्यादि व्यज्यते, तथापि न ध्वनित्वमपि तु गुणीभूतव्यङ्ग्यव्यवहारः' इति पाठ उपलभ्येत तदा पूर्वोत्तरग्रन्थविरोधः खण्डनोद्धारश्च कृतो भवेत् ।

अस्मदुक्तरीत्यैव पाठः ग्रन्थस्थो भवेदियूह्यते । तथाहि – द्वयमिह चमत्कारप्रयोजकं चित्रत्वं व्यङ्ग्यत्वं चेति । ततश्चालंकारेण वस्तुध्वनौ व्यङ्ग्य प्राधान्येन ध्वनित्वेऽपि चित्रत्वविवक्षया द्वयोः तुल्यप्राधान्याद्गुणीभूतव्यङ्ग्यतापि सम्भवति । अयं चार्थो 'यद्यपीत्यादिवाक्येन स्पष्टीकृतः 'उमामहेश्वरयोः वागर्थवन्नित्यसंबन्धित्ववर्णनेन तयोर्निरतिशयस्परस्परप्रेमशालित्वं, महा महिमहित्वं व्यज्यते' इत्यनेन उपमालंकारेण तादृशप्रेमशलित्वमहामहित्वरूपं वस्तु व्यज्यते इति व्यङ्ग्ये प्राधान्यविवक्षया ध्वनित्वं वाच्यया उपमयाऽपि चमत्कारात् चित्रत्वमित्यलंकारस्यापि प्राधान्यम्–तदेतदुभयमप्यत्र चमत्कार प्रयोजकमिति तुल्यप्राधान्यलक्षणो गुणीभूतव्यङ्ग्यप्रभेद इति । तदेतदपि ग्रन्थकृता तत्रैव आविष्कृतम्- 'न खलु व्यङ्ग्यसंस्पर्शप्रतिभासादेवात्र चारुताप्रतीतिः, किन्तु वाच्यवैचित्र्यप्रतिभासादपि' इत्यादिनेति ।

अत्र रसध्वनिरित्यत्र रसपदं भावादीनामुपलक्षकम् । तथा च वागर्थाविवेत्यत्र वागर्थोपमया अभिव्यक्ता या प्रेमशालित्वरूपा उमामहेश्वरयोः अन्योन्यनिष्ठा रतिः अभिव्यज्यते, साऽपि कविगतां पार्वतीपरमेश्वरविषयिणीं रतिं पुष्णातीति । देवताविषयकत्वात् रतिः भावतां गतेति प्रेयोलङ्कारता ।

तत्त्वालोकः

यद्वा–'लक्ष्मीविलोकनोत्फुल्ललोचनं शीलये हरिम्'

इत्यत्रेव पार्वतीपरमेश्वरयोरन्योन्यविषयकः शृङ्गारः कविगतरतिभावस्य अङ्गं भवति, ध्वन्यमानत्वाच्च रसध्वनिरिति व्यवहृ, ग्रन्थकृतातो न तु रस एव ध्वन्यत इत्यदोषात्। एवं च परिष्कृतपाठभेदोपलब्धौ तुल्यप्राधान्यलक्षण गुणीभूतव्यङ्ग्यप्रभेदत्वम्। उक्तशृङ्गारस्य स्थायिनो रतेः कविगतदेवता विषयकरत्युपस्कारकत्वेन रसस्य भावाङ्गतालक्षणं रसवदलंकारत्वमिति अपराङ्गत्वलक्षणगुणीभूतव्यङ्ग्यप्रभेदत्वमिति तयोस्सांकर्यम्। उपधेयसंकरेऽपि उपाधेरसांकर्यात् न कोऽपि विरोधः॥

**यद्वा प्राञ्चः प्रकाशकारादयः** अभिधामूलध्वनिमसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विधा विभज्य

'रसभावतदाभासभावशान्त्यादिरक्रमः'

इति रसादीनां संलक्ष्यक्रमत्वं क्वापि नास्तीत्यभिप्रायेण संलक्ष्यक्रमव्यङ्ग्यनिरूपणावसरे – शब्दशक्तिमूलः अर्थशक्तिमूलः उभयशक्तिमूलो व्यङ्ग्यः वस्त्वलंकारभेदेनैव विभिन्न इति मत्वा 'अलंकारोऽथ वस्त्वेवेति' एवकारेण रसादीनां संलक्ष्यक्रमत्वं पर्यहार्षुः।

न च तद्युक्तम्–परिपुष्टा हि विभावादयः रसमभिव्यञ्जयन्ति। तत्परिपोषश्च अलंकारादिना। अलंकारस्य रसपरिपोषकत्वं क्वापि न साक्षात्संभवति, किंतु रसाङ्गभूतविभावानुभावव्यभिचारिभावपरिपोषाधानमुखेनैव। **प्रकाशकारादिभिरपि**

'पदैकदेशरचनावर्णेष्वपि रसादयः'

### तत्त्वालोकः

इत्यादिना पदतदेकदेशादीनामभिव्यञ्जकत्वमभ्युपगतमेव । इत्थं सति अलंकारात् रसादीनां संलक्ष्यक्रमतयाऽभिव्यक्तौ किं बाधकम् ।

विभावादिप्रतीतिसमकालमिव प्रतीतिपथमुपगते रत्यादौ प्रतिपत्तृप्रतीतेर्व्युत्पन्नतमतया तीव्रप्रवृत्तिमत्त्वात् घनगर्जितेन मेघानुमितिवत् विभावादि-रत्याद्योः पूर्वापरीभावः न लक्ष्यत इत्यस्तु तत्रासंलक्ष्यक्रमता रसीभवन-योग्यस्य रत्यादेः । न चैतावता रसादीनां भावानां वा असंलक्ष्यक्रमत्वमे-वेति वक्तुं युक्तम् । यत्र प्रकरणज्ञानं प्रथमतः ततश्च विभावाद्युन्नयनं ततश्च रत्यादेरभिव्यक्तिः यथा 'पश्यात नलिनीपत्रे' 'परिमृदितमृणालीम्लानम्' इत्यादौ रत्यादिभावस्य, रत्यादेः स्थायिनश्चाभिव्यक्तिर्दृष्टैवेति रसादीनां संलक्ष्य क्रमत्वमपि । अत एव ध्वनिकृता–एवंवादिनि' इत्यादौ व्यभिचारिणः सलक्ष्य क्रमत्वमुक्तं संगच्छते । अन्यथा तदीयग्रन्थविरोधः स्फुट एवेति उत्तरत्र निरस्यत एवेति बोध्यम् ।

रसादीनामपि संलक्ष्यक्रमव्यङ्ग्यतां स्थापयन्नाह–रसध्वनिरिति । 'वागर्था विव' इत्यादौ, अस्मिन् पदेऽतद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन रसं विना भावस्य ग्रहणमित्यपि वक्तुं शक्यत्वात् ॥

इत्थं गौणं रसध्वनिमुदाहृत्य–संलक्ष्यक्रमभेदेऽर्थशक्तिमूलके ध्वनौ-रसध्वनिर्नास्तीत्यभिप्रायेण व्यङ्ग्यादपि अर्थात् अर्थान्तराभिव्यक्तिरस्तीति प्रदर्शनपूर्वकम् 'अर्थादीनां न व्यञ्जकत्वं किन्तु पदस्यैवेति वदतां मतं 'पश्या-त्रे'ति गाथासप्तशतीस्थं पद्यमुदाहृत्य अत्र निष्पन्दत्वेनाश्वस्तत्वं, तेन च जनरहितत्वं अतः संकेतस्थानमेतत् इति कयाचित् कंचित् प्रति उच्यते इत्युप-पादयता प्रकाशकृता निराकृतं भवति, । अथाप्यत्र अलंकारेण वस्तुध्वनेः तेन च अलंकारान्तरध्वनेः तेन च संभोगश्रृंगारस्य च अनुरणनरीत्याभिव्यक्ति

चित्रमीमांसा

क्वचिदेकत्रैव त्रिविधोऽपि ध्वनिः दृश्यते यथा—

पश्यात्र नलिनीपत्रे बलाका परिदृश्यते ।
हरिन्मणिमये पात्रे शुक्तिकेव प्रतिष्ठिता ॥

किमावयोः संकेतस्थानं भविष्यतीति प्रष्टुमनसः जन

तत्त्वालोकः

रस्ति, अथापि संलक्ष्यक्रमत्वं न रसादीनां इत्यभिप्रयतां प्रकाशकारादीन् तं न तावद्युक्तं अनुभवविरोधादित्युपपादयितुं वस्त्वलंकाररसानां त्रिविधानामपि ध्वनीनाम् एकत्रैवाभिव्यक्तिरस्तीत्यभिप्रायेण अवतार्योदाहरति— क्वचिदित्यादिना ।

गाथासप्तशतीस्थं पद्यमिदम् । पश्येति मध्यमपुरुषप्रयोगात् दयितेति संबोधनान्तपदाप्रयोगाच्च संबोध्यः इमां विदग्धां नायिकां इंगितादिनैव संकेतस्थानमवगन्तुम् ईहते । स च संनिहितश्च वर्तते इति प्रच्छन्नकामुकत्वं ध्वन्यते । अत्र बिसिनीषण्डस्थिते बिसिनीपत्रे नीलकमलिनीदले (निश्चला–निस्पन्दा) बलका बकी हरिन्मणिमये मरकतमणिरचिते पात्रे प्रतिष्ठिता स्थापिता शुक्तिकेव मुक्तास्फोट इव परिदृश्यते ज्ञायते पश्य—अवलोकयेत्यर्थः ।

अत्र कैश्चिद्व्याख्यातं कयापि हालिकस्नुषया कंचिद्ग्रामतरुणं प्रत्युच्यते । अतश्च अस्य पद्यस्य प्रहेलिकाप्रायत्व । तन्निराकृत्य विदग्धोत्तमनायिकया स्वानुगुणप्रच्छन्नकामुकमधिकृत्यैव प्रोक्तमिति स्थापयितुं अभिप्रायमाविष्कुरुते—किमावयोरित्यादिना । आवयोः अनुरक्तयोः, संकेत-

चित्रमीमांसा

**समक्षमपृच्छतश्च प्रच्छन्नकामुकस्याभिप्रायमिङ्गितेन विदित-वत्याः विदग्धायाः संकेतस्थानसूचनार्थमिदं वचनमिति ॥**

**तत्त्वालोकः**

स्थानं समागमोचितं स्थानं किं भविष्यति ? यत्र संकेतभङ्गो न भवेत् इति प्रष्टुमनसः प्रष्टुमिच्छोः जनसमक्षं जनानां प्रत्यक्षं (तेषां ज्ञायमानतया) अपृच्छतश्च प्रश्नमकुर्वतश्च, प्रच्छन्नकामुकस्य अन्याविज्ञाततया रन्तुकामस्य, अभिप्रायं आशयम्, इंगितेन बुद्धिपूर्वककृतनेत्रकनीनिका-भ्रूदृष्ट्यादि-विकारेण—

'तारापुटभ्रूदृष्ट्यादिविकारानिङ्गितं विदुः ।'

इत्युक्तेः । विदितवत्याः ज्ञातवत्याः विदग्धायाः अग्राम्यायाः कर्तरि षष्ठी, विदग्धनायिकाकर्तृकं इत्यर्थः, संकेतसूचनार्थं-समागमोचितस्थान सूचनाय, प्रवृत्तं वाक्यमिदम् । एवं च वक्तृबोद्धव्य-वाक्यानां वैलक्षण्यात् व्यङ्ग्यार्थप्रतीतिरिति प्रकरणबलात् लभ्यत इति उक्तं भवति ।

एतेन **साहित्यदर्पणकृता**-अन्यासंनिधिवैशिष्ट्यात् अर्थान्तस्य प्रतीति रित्युपपादनं अनपेक्षितम् । विदग्धायाः वक्त्र्याः, जनसमक्षमेव वा अवस्थितस्य प्रच्छन्नकामुकस्य सन्निधेश्च सहकारित्वम् ।

अत्र श्लोके **प्रकाशकृता**-निस्पन्दत्वेनाश्वस्तत्वम् व्यज्यते, तेन जन-रहितत्वं व्यज्यते, अतः संकेतस्थानमेतदिति व्यज्यते इत्युक्तम् । तत्र तु परं पाठः—

## चित्रमीमांसा

अत्र पद्मपत्रस्थितबलाकायाः मरकतपात्रप्रतिष्ठित-शुक्तिकासादृश्यवर्णनेन तस्यास्तद्वन्निश्चलत्वप्रतीतेः अश्वस्तत्वं व्यज्यते। तेन तत्प्रदेशस्य निर्जनत्वं व्यज्यत इति वस्तु ध्वनिः।

ततश्च किं तदेवसंकेतस्थानं आवयोरिति प्रकाशनात् संलक्षितसूक्ष्मार्थप्रकाशनरूपसूक्ष्मालंकारध्वनिः।

## तत्त्वालोकः

पश्य निश्चलनिस्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनप्रतिष्ठिता शंखशुक्तिरिव ॥

इति, तत्रैव किंचित्पाठव्यत्यासकरणपूर्वकं ग्रन्थकृत् उपन्यस्तवानिति ज्ञायते। सत्यपि पाठभेदेऽभिप्रायभेदो नास्तीति। एवं चात्र व्यज्यमानाः त्रयः। तत्र वस्तुध्वननप्रकारमाह—अत्रेति।

अयं भावः—मरकतमणिमयपात्रप्रतिष्ठिता अचेतनभूता शुक्तिका किंचिदपि यथा न चलति तद्वत् सचेतनापि बलाका कमलिनीपत्रमुपश्लिष्य स्थिता परिदृश्यते। यद्यत्र बलाकायाः आश्वासो न भवेत्तदा निष्क्रिया नावतिष्ठेत्। अस्याः आश्वासवत्ता व्यज्यते। आश्वासे हेतुश्च जनराहित्यमेव। जनरहित अतश्चात्र एव प्रदेशे बलाकादेराश्वासेनावस्थानं युज्यत इति जनराहित्यमपि तस्य प्रदेशस्यावगम्यते।

ततश्च किं प्रतिपिपादयिषितं यदर्थं आश्वासवत्त्वनिर्जनत्वादीना-मनेनाभिव्यञ्जितमित्याशंकायामाह—ततश्चेति।

## चित्रमीमांसा

**एवं तदभिप्रायानुरूपवर्णनात्परस्परं रतिभावो व्यज्यत इति रसध्वनिश्च ॥**

### तत्त्वालोकः

तादृशव्यङ्ग्याच्च वस्तुनः सकाशात् आश्वस्तत्व-निर्जनत्वप्रत्यायन फलीभूतमावयोः समागमोचितं तत्स्थानमिति प्रच्छन्नं कामयमानस्य पुंसोऽवगतं भवतीति—

'कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ।
धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ॥'

इति लक्षणलक्षितः सूक्ष्मालंकारः ध्वन्यते ।

तादृशसमागमोचितस्थानपर्यनुयोगमनसस्तस्य अभिप्रायानुगणतया संकेतस्थानसूचनाच्च नायकस्य विदग्धायां तस्यां, विदग्धायाश्च तस्याः नायके वर्तमानो रतिभावः नायकारब्धः नायिकानिष्ठः विप्रलम्भातिशयो व्यज्यते इत्ययं त्रिविधोऽपि ध्वनिः परिदृश्यत इति रसस्यापि संलक्ष्यक्रमव्यङ्ग्यत्वमचालनीयमित्यभिप्रायेणाह-**एवमिति** । यद्यत्रैवंविधविप्रलंभतापन्नरतिभावो न स्यात्तदा विदग्धा नायिका तादृशोपमया आश्वस्तत्वादीन् नाभिव्यञ्जयिष्यत् । अतश्च उक्तविधविप्रलंभाभिव्यञ्जकत्वं वस्त्वलंकारध्वन्योरिति अर्थशक्तिमूल ध्वनिस्थले **काव्यप्रकाशकारादिभिः** अलंकारेण रसादिध्वनीनामुदाहरणाप्रदर्शनं नातीव हृदयंगममिति भावः ॥

ननु **ध्वनिकारादिभिः**—' रसभावतदाभासभावशान्त्यादिरक्रमः ' इत्यादिना महता सन्दर्भेण रसभावादीनामसंलक्ष्यक्रमव्यङ्ग्यत्वमेव ।

## चित्रमीमांसा

ननु रसादिध्वनिः असंलक्ष्यक्रम इति प्रसिद्धिः । कथमत्र तस्य अनुरणनेन व्यङ्ग्यतोच्यते ।

मैवम् । यत्र विभावानुभावादिवशादाशुभाविनी रसाभिव्यक्तिः तत्रासंलक्ष्यक्रमता । अन्यत्र तु रसध्वनिरपि संलक्ष्यक्रम एव ।

## तत्त्वालोकः

अन्यथा तु तस्य वस्तुत्वमेव । अत एव च संलक्ष्यक्रमव्यङ्ग्यध्वनिविभाग[1] वसरे–वस्तुध्वनिः अलंकारध्वनिरिति द्विधैव निरूपितो न रसादिः । इत्थं सत्यपि अत्र कथं रसादीनां संलक्ष्यक्रमत्वमुपपादितमित्याक्षिपति–**नन्वित्यादिना** । रसादिध्वनिः रसभावरसाभासभावाभासभावशान्तिभावोदयभावसन्धि भावशबलताः यदा प्राधान्येन अभिव्यज्यन्ते तदा तेषामसंलक्ष्यक्रमता इति प्रसिद्धिः । प्रसिद्धिपदमत्र तत्परित्यागायोगं स्फोरयति । अत एव ध्वनि–कारोऽपि–**द्वितीयोद्योते**—

रसभावतदाभासतत्प्रशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥

इत्याह । एवं प्रसिद्धिमुपगतेऽप्यस्मिन् किमिति वैमत्यप्रदर्शनमित्यत्र समाधानमाह–**मैवमित्यादिना** ।

अयं भावः—यद्यपि प्रथमतः शब्दश्रवणम् , ततो विभावादिप्रतीति रिति विभावादिप्रतीतेः रसाभिव्यक्तेश्च क्रमस्य लक्ष्यमाणत्वात् नालक्ष्य-क्रमत्वम् । अथापि व्युत्पन्नतमायाः प्रतिपत्तृप्रतीतेः **'उत्पलपत्रशतभेद–**

**चित्रमीमांसा**

**तदुक्तम् अभिनवगुप्तपादाचार्यैः–'यद्यपि रसभावादि रर्थो ध्वन्यमान एव, न वाच्यः कदाचिदपि,**

**तत्त्वालोकः**

**न्यायेन'** तयोः पूर्वापरीभावस्य अनवगममात्रादलक्ष्यक्रमत्वमुच्यते । न तु क्रमो निरस्यते । अन्यथा निर्हेतुकरसाभिव्यक्तिप्रसंगः, सर्वदा रसाभिव्यक्ति प्रसंगश्च स्यात् । अतः विभावादिवशाद्यत्र रसाभिव्यक्तिर्झटित्युत्पद्यते तादृशसंदर्भे एव रसादीनां असंलक्ष्यक्रमत्वम् । नैतावता सर्वत्रापि सर्वेषामपि रसाभिक्तेरसंलक्ष्यक्रमविषयैव भानम् । एवंरीत्या भाने प्रमाणाभावात् । प्रत्युत 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति विभावादीनां, रसस्य च पूर्वापरीभावस्य, तेन च कार्यकारणभावस्य भरतमुनिमतानुसारेण अभ्युपगमात् प्रथमतः विभावादीनां प्रतीतिः ततश्च रसनिष्पत्तिरिति योयं क्रमस्सः क्वचित् संलक्ष्यत एव, यथोदाहृते 'पश्यात्रे'त्यत्र विप्रलम्भस्येति ।

उक्तार्थे संमतिप्रदर्शनाय प्रमाणतमस्य **अभिनवगुप्तपादग्रन्थस्य** संवादमुपदर्शयति–**तदुक्तमित्यादिना** ।

अर्थशक्तिमूलं संलक्ष्यक्रमव्यङ्ग्यविषयमधिकृत्य प्रवृत्ताम् 'अर्थशक्त्युद्भव स्त्वन्यः' (ध्व.लो. २-२३) इति कारिकां विवृण्वता लोचनकृता इत्थं विश्लेषितम्–एतदुक्तम् भवति–यद्यपि रसभावादिरर्थो ध्वन्यमान एव भवति न वाच्यः कदाचिदपि तथापि, न सर्वोऽलक्ष्यक्रमस्य विषयः ।

यत्र हि विभावानुभावेभ्यः स्थायिगतेभ्यः व्यभिचारिगतेभ्यश्च पूर्णेभ्यः झटित्येव रसव्यक्तिः तत्रासंलक्ष्यक्रमः । यथा— **कुमारसंभवे** मधुप्रसंगे वसन्तपुष्पाभरणं वहन्त्याः देव्याः—

**चित्रमीमांसा**

निर्वाणभूयिष्ठमथास्य वीर्यं
संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभी-
रदृश्यत स्थावरराजकन्या ॥

इत्यादौ संपूर्णालम्बनोद्दीपनविभावतायोग्यस्वभाववर्णनम् ।

प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा
धनुष्यमोघ समधत्त बाणम् (सायकम्) ॥

इत्यनेन विभावतयोपयोगः उक्तः ।

हरस्तु किंचित्परिवृत्तधैर्यः
चन्द्रोदयारंभ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥

अत्र हि भगवत्याः प्रथममेव तत्प्रवणत्वात्, तस्य चेदानीं तदुन्मुखीभूतत्वात् प्रणयिप्रियतया च पक्षपातस्य सूचितस्य गाढीभावाद्रत्यात्मनः स्थायिभावस्य, औत्सुक्यावेग-चापल्यहर्षादेश्च व्यभिचारिणः साधारणीभूतोऽनुभाववर्गः प्रकाशित इति विभावानुभावचर्वणैव व्यभिचारिवर्णनायां पर्यवस्यति । व्यभिचारिणां पारतन्त्र्यादेव स्रक्सूत्रकल्पस्थायिचर्वणाविश्रान्तेः अलक्ष्यक्रमत्वमिति लोचने उक्तम् ।

अत एव ध्वनिकृता—'यतो यत्र साक्षात् शब्दनिवेदितेभ्यः विभावा-

चित्रमीमांसा

तथापि न सर्वोऽसंलक्ष्यक्रमस्य विषयः इति' ॥

अत एव ध्वनिकारोऽपि—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥

इत्यत्र लज्जाख्यं संचारिभावमनुरणनव्यङ्ग्यमुदाजहार इति ॥

तत्त्वालोकः

नुभावव्यभिचारिभ्यः रसादीनां प्रतीतिः स तस्य केवलस्य मार्गः । यथा **कुमारसम्भवे** मधुप्रसंगे वसन्तपुष्पाभरणं वहन्त्याः देव्याः आगमनादिवर्णनं मनोभवशरसन्धानपर्यन्तम्, शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादिसाक्षाच्छब्दनिवेदितमिति उक्तं संवदति ।

**तथापि न सर्व इति ।** अयं च ग्रन्थभागः उत्तरत्रोदाहरिष्यमाणः 'एवं वादिनि' इत्येतद्विषयः । इह तु इत्यादिध्व**निकारोक्तमुपादाय** 'एतदुक्तं भवति' इत्युपक्रम्य मूले संक्षिप्तस्य विस्ताररीत्या, विस्तृतस्य च संक्षेपरीत्या व्याकुलस्य समाधितया च विवरणं कुर्वता **लोचनकृता**–इहतु पद्मदलगणनं अधोमुखत्वं चान्यथापि कुमारीणां संभाव्यते झटिति न लज्जायां विश्रमयति हृदयम् अपि तु प्राग्वृत्ततपश्चर्यादिवृत्तान्तानुसारेण तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव । रसस्त्वत्रापि दूरत एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षया लक्ष्यक्रमतैव । लज्जापेक्षयापि तत्र लक्ष्यक्रमत्वम् । अमुमेव भावमेवशब्दः केवलशब्दश्च सूचयतीति ।

उक्तार्थे ध्वनिकारोक्तिं संवादायाह–**अत एवेत्यादिना** । अत एव

रसभावादेः सर्वस्यापि असंलक्ष्यक्रमाविषयत्वादेव । ध्वनिकारोऽपि आनन्दवर्धनाचार्योऽपि अर्थशक्तिमूलध्वन्युदाहरणसमन्वयावसरे 'एवं वादिनि' इति पद्यमुपादाय अत्र हि लीलापत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैव (लज्जाख्यं) अर्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति । न चायमलक्ष्य क्रमव्यङ्ग्यस्यैव ध्वनेर्विषयः । इति ॥

नैतावता व्यभिचारिभावादेरेव संलक्ष्यक्रमत्वं, रसस्य तु अत्रापि असंलक्ष्यक्रमत्वमेवेति विभावनीयम् । यतः उत्तरत्र ध्वनिकृतैव 'इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः तस्मादयमन्यो ध्वनेः प्रकारः' इति । तेन च रसादीनां संलक्ष्यक्रमत्वमपि ध्वनिकारादिसंमतम् इति स्थिरीकृतं भवति ।

नन्वेवं तर्हि—**लोचने** अनुरणनभेदप्रसंगे 'अर्थशक्तिमूलस्य द्वादश-भेदाः' इत्युक्तिः न संगच्छते अष्टादशविधत्वप्रसंगादिति मत्वा, इमां लोचन कारोक्तिं प्राधान्येनावलम्ब्य संलक्ष्यक्रमतया व्यज्यमानस्य रत्यादेः वस्तुमात्र त्वमेव न रसादित्वमिति प्रतिपादयन्तो नव्याः 'रसभावादिरर्थो ध्वन्यमान एव' इत्यत्र लोचनकरोक्तौ रसादिशब्दः रत्यादिपरः । इति तात्पर्यं परिकल्पितवन्तः ।

**नागेशभट्टैस्तु** – नव्यास्तु इत्युपक्रम्य– वक्तृवैशिष्ट्यप्रकरणादिज्ञानसहितस्यैव व्यञ्जकत्वात् तत्सहितविभावादिज्ञानोत्तरं जायमानरसप्रतीतेः विभावादिज्ञानापेक्षया विद्यमानक्रमालक्षणेन चालक्ष्यक्रमत्वम् । तच्च प्रकरणादि ज्ञानविलम्बेन विभावादिज्ञानविलम्बेऽपि पूर्वोदाहरणेऽक्षतमेव । न हि विभावादिज्ञानस्य तज्जनकस्य च क्रममादायालक्ष्यक्रमत्वम् । अपि तु तज्ज

## चित्रमीमांसा

अथोपमाव्यङ्ग्यप्रसङ्गादुपमाध्वनयः प्रदर्श्यन्ते ।
तत्र शब्दशक्तिमूलो ध्वनिर्यथा—

### तत्त्वालोकः

न्यस्य । एतदेवाभिप्रेत्य—'अर्थशक्तिमूलस्य द्वादशभेदाः' इत्यभिनवगुप्तोक्तिर्यत्किंचिद्वाच्यार्थापेक्षया क्रमोऽपि गृह्यत इत्यभिप्रेत्य लक्ष्यक्रमत्वोक्तिर्यथाकथंचिन्नेया । न हि विभावादिप्रतीतिरहितयत्किंचिद्वाच्यार्थमात्रप्रतीतौ विगलितवेद्यान्तरता सहृदयानुभवसाक्षिणी । येन तत्क्रमग्रहणेऽपि रसत्वहानिस्स्यादित्याहुः' इति **मर्मप्रकाशे** अभिहितम् ।

**ग्रन्थकृतस्तु**—एवंवादिनीत्यादौ 'उपपन्नमिदं सर्वं' इत्यारभ्य सुतासंबन्धविधिना 'भव विश्वगुरोर्गुरुः' इत्यन्तं उक्तवतो देवर्षेः पार्श्ववर्ती पिता विभावः, अधोमुखत्वम् लीलाकमलपत्रगणनं चानुभावः, ताभ्यां अभिव्यञ्जितौ लज्जावहित्थौ व्यभिचारिणौ, एतैश्च पार्वतीनिष्ठा ईश्वरविषयिणी रतिरभिव्यज्यत इति विभावादेः रसाभिव्यक्तेश्च अनुरणनव्यङ्ग्यत्वमस्त्येवेत्यत्रैव तात्पर्यं तर्कयामः ॥

इत्थमुपमया अभिव्यक्तान् वस्त्वलंकाररसादीन् सोदाहरणं प्रदर्श्य व्यङ्ग्यप्रसङ्गात् शब्दार्थशक्तिमूलोपमाध्वनीन् सोदाहरणं प्रदर्शयितुमनाः प्रतिजानीते–**अथोपमेति** । तत्र शब्दशक्तिमूलोपमाध्वनिमुदाहर्तुमवतरणमाह **तत्रेत्यादिना** ।

ननु–उपमालंकारस्य अर्थमुखप्रेक्षितत्वात् अर्थस्य च शब्दद्वारकत्वात् शब्दार्थयोरुभयोरपि तुलाधृतवदपेक्षा नियतैवेति शब्दशक्तिमूलोपमाध्वनि,

चित्रमीमांसा

किरति प्रकरं गवां प्रकामं
सुमनः स्वच्छतरं निधौ-कलानाम् ।
कतिचित्कलयन्ति यत्प्रबोधं
कतिचिन्नेति स तत्स्वभाव एव ॥

तत्त्वालोकः

अर्थशक्तिमूलोपमाध्वनिरिति विभागः कथं युज्यते इति चेत् सत्यम् । अत्र शब्दार्थयोरपेक्षा आलोकापेक्षिणो दीपशिखावत व्यङ्ग्यार्थोपलब्धौ विद्यते ।

अथापि पर्यायपरिवृत्त्यसहिष्णुत्वतत्सहिष्णुत्वाभ्यां शब्दशक्तिमूलार्थ-शक्तिमूलध्वन्योः विभागः ।

**पण्डितराजस्तु**—पर्यायपरिवृत्त्यसहिष्णूनां पदानां प्राचुर्ये तत्प्रयुक्त प्राधान्यात् विद्यमानाया अप्यर्थशक्तेरप्राधान्यमाश्रित्य व्यङ्ग्यार्थे शब्द शक्तिमूलत्वव्यवहारः । पर्यायपरिवृत्तिसहिष्णूनां पदानां प्राचुर्ये सति विद्यमा-नाया अपि शब्दशक्तेः अप्राधान्यमाश्रित्य **मल्लग्रामादिवद्व्यपदेशः** इत्याहुः । अयं च पक्षोऽग्रे विवेचयिष्यते । तदुदाहरणं प्रदर्शयति **किरतिप्रकरमिति** ।

कलानां निधौ–ज्ञाननिधौ 'कला महाभूतेष्विन्द्रियेषु ज्ञानावयव योरपि' इति **यादवप्रकाशः** । सुमनस्तु–बुधेष्वपि–शिष्येषु 'सुमनाः पुष्पमालत्योः स्त्री, देवबुधयोः पुमान्' इति **वैजयन्ती** । गवां प्रकरम्–वाङ्मयम् प्रकामम् पर्याप्तम् अच्छतरम् स्फुटतरम् किरति सत्यपि–बोधयत्यपि यत्प्रबोधं यस्मात्प्रबोधं–प्रगल्भताम् कतिचित् परिमिताः शिष्याः कलयन्ति शिक्षन्ते, कतिचित् केचन यत्प्रबोधं नैव कलयन्तीति सः विशेषः तत्स्वभाव

**तत्त्वालोकः**

एव-तेषां ग्रहीतॄणां स्वभावकृत एव । एवकारेण बोधनविशेषकृतत्वव्यवच्छेदः । उक्तं च-**भगवता पतञ्जलिना**-'समानमीहमानानामधीयानां च केचिदर्थैर्युज्यन्ते केचिन्न' इति । **भवभूतिनापि**—उत्तररामचरिते—

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न च खलु तयोर्ज्ञाने शक्तिं करोत्युपहन्ति वा ।
भवति तु पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिः न मृदां चयः ॥ इति

गुरुशिष्यभावपक्षे—उपदेष्टा सर्वेष्वपि शिष्येषु एकरूपेणैवोपदिशति, अथापि शिष्येषु केषुचित् प्रागल्भ्यमवलोक्यते केषुचिन्नेत्यनुभवः । तत्र हेतुः गुरोः बोधनकृतो विशेषो न भवति किन्तु शिष्येषु ग्रहणशक्तितदभावकृत एवेति फलति ॥

यद्वा शिष्यणां गुरुषु प्रतिपत्तितारतम्येन फलभेद इति फलति ।

अत्रैव अनेकार्थकानां गोःसुमनःकलानिधिशब्दानामुपादानात् अप्रकृतोऽप्यर्थः स्फुरति-तथाहि कलानां-'कलाशिल्पे वित्तवृद्धौ, 'चन्द्रांशे कलने कला' इति वैजयन्ती, निधौ-आश्रये चन्द्रमसि कर्तरि अमृतांशौ इत्यर्थः, सुमनस्सु पुष्पेषु 'सुमनाः पुष्पमालत्योः स्त्री' इति कोशात् । अच्छतरम् अतिस्वच्छम् गवाम् किरणानां प्रकरम्-राशिम् , प्रकामम्-यथेप्सितम् किरति प्रसारयत्यपि, कतिचित् कानिचित् कतिपयान्येव सुमानि, यत्प्रबोधं यस्मात् विकासम्, कलयन्ति गृह्णन्ति विकसन्ति इति यावत् 'कलिः कामधेनुः' इति न्यायात् , कतिचिन्नेति, स विशेषः तत्तत्स्वभाव एव तत्तत्पुष्पाणां साहजिक एव, एवकारेण चन्द्रस्य किरणविशेषप्रसरादिकृतत्वव्यवच्छेदः ।

**तत्त्वालोकः**

अत्रेदं चिन्त्यते–अत्र द्वितीयोऽर्थः स्फुरति खलु। स किं श्लेषस्य विषयः, अथ ध्वनेः? **एकावलीकाराद्यनुरोधेन** श्लेषस्य अत्र प्रसक्तिरेव नास्ति। यतः–**एकावलीकृता** प्रकृताप्रकृतश्लेषो नाभ्युपगतः।

'यत्र विशेष्यविशेषणसाम्यं श्लेषः एष तु द्वेधा।
किंचास्मिन् वाच्यत्वं विशेष्ययोः तुल्ययोरेव॥'

इत्युक्तत्वेन केवल प्राकरणिकयोः केवलाप्राकरणिकयोर्वा अभिधेयत्वेन भवन् न द्वैविध्यमतिक्रामति [एका. ८ उन्मेषे] इत्युक्तत्वात्। अतश्च तन्मतानुरोधेन शब्दशक्तिमूलव्यञ्जनयैवाप्रकृतार्थस्यापि प्रतीतिः। तदपि तेनैवोक्तम्–

'संयोगादिभिरभिधा शृंखलिता यत्र कुण्ठतामेति।
अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र॥'

इति **द्वितीयोन्मेषे**। अत्र च गुरुशिष्यभावस्य प्रकृतत्वेन तदनु गुणेऽर्थे प्रकरणेन नियंत्रिते अप्रकृतानां किरण-चन्द्र-पुष्पादिरूपाणामर्थान्तराणामवगति व्यंञ्जनयैवेति' अप्रकृतार्थस्य तयोरुपमायाश्च शब्दशक्तिमूलत्व-मभिहितं भवति। अत एव **काव्यप्रकाशकृता**–वाच्यसिद्ध्यङ्गं गुणीभूत व्यङ्ग्यमुदाहरता—

भ्रमिमरतिमलसहृदयतां प्रलयं
मूर्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं
प्रसह्य कुरुते विषं वियोगिनीनाम्॥

इत्यत्र विषपदेनाप्रस्तुतं गरलरूपंव्यङ्ग्यं वाच्यस्य 'जलद एव भुजगः' इति

तत्त्वालोकः

रूपकस्य सिद्धिकृत्, इति शब्दशक्तिमूलो व्यङ्ग्यः उक्त इति नानार्थकस्थले द्वितीयस्याप्यप्रकृतार्थस्य शब्दशक्तिमूलव्यक्तिविषयत्वमिति ॥

**ग्रन्थकृतस्तु**—नानार्थकस्थले प्रकृतेऽर्थे प्रकरणादिना नियन्त्रितेऽपि अप्रकृतार्थस्य अभिधयैव प्रतीतिः । तथाहि—

असावुदयमारुढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुलैः करैः ॥

इत्यादौ प्राकरणिकेऽर्थे प्रकरणवत्, अप्राकरणिकेऽर्थेऽपि राजमण्डलकरादि शब्दानां पस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचकानां समभिव्याहाररूप शब्दान्तरसन्निधिः अभिधानियामकोऽस्त्येवेति अप्राकरणिकार्थोपस्थितौ न व्यञ्जनापेक्षा ।

एवं यत्रैकमेव पदं नानार्थकं अप्राकरणिकेऽपि तात्पर्यवत् तत्रापि समभिव्याहृतपदप्रतीतविरोधितयार्थान्तरं अभिधीयत एव यथा—

'करोति कंसादिमहीभृतां वधात्
जनो मृगाणामिव यत्तव स्तवम् ।
हरे हिरण्याक्षपुरस्सरासुरद्विप
द्विषः प्रत्युत सा तिरस्क्रिया ॥'

इत्यत्र हरिपदात्कृष्णस्य प्रतीतिः । सा च प्रकरणबलात्, अस्मिश्चार्थेऽभिधया नियन्त्रिते पश्चात् 'असुरद्विप'पदप्रतीतविरोधितारूपेणान्येनाभिधानियामकेन हरिपदं सिंहरूपमर्थमप्यभिधत्ते ।

एवं च तत्र तत्र अभिधानियामकैरेवाप्रकृतार्थस्याप्यभिधाने

संभवति तादृशेषु अर्थेषु व्यञ्जनाऽनपेक्षितैव यत्र यस्यार्थस्य शब्दात्प्रतीतिरेव न संभवति तत्र तस्यार्थस्य प्रतीतौ व्यञ्जनावश्यकी । यथात्रैव–[किरति प्रकरं गवां प्रकामम् ] गुरुचन्द्रोभयविषयकार्थप्रतीत्यनन्तरं गुरुशिष्यविषयक वाक्यार्थस्य–चन्द्रकुसुमविकासविषयकवाक्यार्थस्य च कस्सम्बन्ध इत्याकांक्षायां वाक्यस्यासंबद्धार्थाभिधायित्वं मा प्रसांक्षीदिति प्राकरणिकाप्राकरणिकयोरर्थयोः उपमाभिव्यञ्जने कवेस्तात्पर्यमिति निश्चीयते । यथा चन्द्रे किरणानां निकरं अविशेषेण सर्वकुसुमेषु विकिरत्यपि कानिचिदुत्पलादीनि विकसन्ति, कानिचित् पंकजादीनि नेति एष विशेषः तत्तत्पुष्पस्वभावकृत एव, न तु चन्द्रस्य किरणप्रसरणविशेषकृतः, एवं ज्ञाननिधौ सर्वेष्वपि शिष्येषु अविशेषेण वाङ्मयं विकिरत्यपि तेषु केचित् प्रगल्भन्ते नान्ये इति विशेषः गुरोः बोधनविशेषप्रयुक्तो न भवति किन्तु शिष्येषु ग्रहणधारणतारतम्यरूपस्वभावकृतः गुरुविषये शिष्याणां प्रतिपत्तितारतम्यकृतश्च इत्युपमैव शब्दशक्तिमूलध्वनेर्विषयः इति आशयो ज्ञायते ।

न चैवमभ्युपगमे–एकावलीकाराद्यभिप्रायविरोध इति वाच्यम् । तेषामपि अत्रैव तात्पर्यात् । अत एव हि **एकावलीकृता विद्याधरेण** द्वितीयोन्मेषे —

आच्छादितायतदिगम्बरमुच्चकैर्गा–
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनं
उद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥

इत्यत्र 'शब्दशक्तिमूलानुरणनरूपव्यङ्ग्याभिधानस्य ध्वनेर्महिम्ना नगेशं नगेश

तत्त्वालोकः

मित्रेत्युपमालंकारः प्रतीयत' इत्युक्तम् । तथा प्रकाशकृता मम्मटाचार्येणाऽपि–चतुर्थोल्लासे शब्दशक्तिमूलध्वनिमुदाहरता —

उल्लास्य कालकरवालमहाम्बुवाहं
देवेन येन जठरोर्जितगर्जितेन ।
निर्वापितस्सकल एव रणे रिपूणां
धाराजलैस्त्रि जगति ज्वलितः प्रतापः ॥

इत्युपादाय, 'अत्र वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसांक्षीदिति यथा पर्जन्येन मेघमुद्धाव्य दावानलादिसंतापः परिह्रियते, एवं राज्ञा खड्गमुत्कृष्य शत्रुतापः परिह्रियते इत्यप्राकरणिकप्राकरणिकयोः उपमानोपमेयभावः कल्पनीयः इति उपमालंकारो व्यङ्ग्यः' इत्युक्तम् । एवं ध्वनिकृतापि–द्वितीयोद्योते 'यत्र तु सामर्थ्याक्षिप्तं सदलंकारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः' इत्युक्तं च संगच्छते ॥

द्वितीयार्थेऽपि व्यञ्जना प्रसरतीत्यत्रापि संवादाः प्रदश्यन्ते–तथाहि–ध्वनिकृता-'अत्रान्तरे कुसुमसमययुगमुपसंहरन् अजृम्भत ग्रीष्माभिधानो संफुल्लमल्लिकाधवलाट्टहासः महाकालः' । इति बाभट्टस्यहर्षचरितोक्तिमुदाहृत्य उपमायाः अर्थाक्षिप्तत्वमभिधाय अर्थाक्षिप्तोऽयं श्लेषः न शब्दोपारूढः इति विभिन्न एव श्लेषादनुस्वानोपमाव्यङ्ग्यस्य ध्वनेर्विषयः' इत्यभिहितम् । श्लेषश्च अनेकोऽर्थ कमुच्चारणमेव नान्यः इति अर्थान्तरस्य व्यञ्जनावगम्यतां स्फोरयति । तथात्रैव लोचनकृता=महांश्चासौ दिनदैर्घ्यदुरतिवाहता योगात् कालः समयः । अत्र ऋतुवर्णनप्रस्तावनियन्त्रिभिधाशक्तयः अत एव 'अवयव प्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' इति न्यायमपाकुर्वन्तो महाकालप्रभृतयः शब्दाः एकमेवार्थमभिधाय कृतकृत्या एव । तदनन्तरमर्थावगतिर्ध्वनन

व्यापारादेव शब्दशक्तिमूलात्, इत्युक्तम्। तेन चात्र ग्रीष्मे भीषण-देवतासादृश्यं प्रतीयत इति, अत्रत्यमहाकालशब्दात्

आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम्।
मर्त्यलोके महाकालम्....॥

इति **स्कान्दपुराणोक्तो** देवताविशेषः न शब्दशक्त्याऽभिधीयत इत्यभिव्यञ्जितं भवति। परं तूपमैव व्यञ्जनाया विषयः इति।

**यत्तु राजचूडामणिदीक्षितैः काव्यदर्पणे** प्राचामप्रस्तुते शब्दशक्ति मूलव्यञ्जनाख्यव्यापाराभिधानं अप्रस्तुतार्थप्रतीतिमूलकोपमाद्यलंकारे व्यञ्जना व्यापारावश्यंभावाभिप्रायपरं न त्वप्रस्तुतार्थेऽपि व्यञ्जनास्तित्वपरमिति ग्रन्थ-कृन्मतमनूद्य–तदपि न युक्तम् 'भ्रमिमरतिमि'त्युदाहरणे विषशब्दव्यङ्ग्यं गरलमिति कण्ठत एव गरलस्य विषशब्दव्यङ्ग्यत्वाभिधानेन प्राचामप्रस्तुतार्थे व्यञ्जनास्तित्वाभिप्रायनिरासासंभवात् इति निराकृतम्,

तदपि–**लोचनाननुगुण**–यतश्च 'भ्रमिमरतिम्' इति पद्यं व्याख्या-तुमुपक्रम्य भुजगशब्दार्थपर्यालोचनबलादेव विषशब्दो जलमभिधायाऽपि न विरन्तुमुत्सहते। अपि तु द्वितीयमर्थं हालाहललक्षणमाह। तदभिधानेन विना अभिधाया एव असमाप्तत्वात्। भ्रमिप्रभृतीनां मरणान्तानां साधारण एवार्थः' इति अभिहितत्वाद्विषपदं अभिधयैव हालाहलमभिधत्ते इति विशदमेव प्रतिपादितम्। अत एवात्र **ध्वनिकृता** यत्र शब्दशक्त्या साक्षा दलंकारं वाच्यं सत्प्रतिभासते स सर्वः श्लेषस्य विषयः इत्युक्त्वा भ्रमिमरतिम् इत्युदाहृत्य 'अत्ररूपकच्छायानुग्राही श्लेषोवाच्यतयैवावभासते' इत्युक्तम्। अतश्चात्र **प्रकाशकारोक्तः** शब्दशक्तिमूलः वस्तुध्वनिरिति इति व्यवहारः

अप्रस्तुतार्थप्रतीतिमूलतया प्रतीयमानयोः वस्त्वलंकारयोः व्यवस्यवश्यंभाव दाढर्याश्रितं 'अप्रस्तुतार्थेऽपि व्यक्तिः' इति प्रौढिवादमात्रमवलम्ब्य तत्प्रवृत्तमिति नात्राभिनिवेशः कार्यः, इति यत् ग्रन्थकृता वृत्तिवार्तिके स्थापितं तदतीव युक्तमिति राजचूडामणिदीक्षितकृतखण्डनमयुक्तमेव ॥

यदपि ग्रन्थकृता-वृत्तिवार्तिके-'आच्छादितायतदिगम्बरमुच्चकैर्गाम्' इत्यादिना शब्दशक्तिमूलस्यालंकारध्वनेरेवोदाहरणत्वेन तैरपि लिखितत्वात्' इत्यनेन ग्रन्थसन्दर्भेण एकावलीकर्तुरपि स्वोपपादितार्थे संवाद उपदर्शितः सोऽप्यनुपपन्न इव । यतः एकावलीकर्तुर्विद्याधरस्यापि नानार्थस्थले (प्रकृता प्रकृतश्लेषस्थले) द्वितीयार्थे व्यञ्जनैव प्रकाशकारादिवदभिमता । यतश्च एकावलीकारेण श्लेषप्रकरणे केवलप्राकरणिकः, केवलाप्राकरणिकश्चेति द्विविध एव श्लेष अभ्युपेयते न तृतीयः । इत्थं सति प्रकृताप्रकृतनानार्थस्थले न श्लेषालंकारस्य प्रसक्तिः । तर्हि कश्चमत्कारकारीति आलोच्यमाने शब्द शक्तिमूलः द्वितीयोऽर्थः उपमा चेत्युभयमपीति तदीयवाक्यान्निर्णयामः ।

तथाहि – द्वितीयोन्मेषे तावत्

'संयोगादिभिरभिधा शृङ्खलिता यत्र कुण्ठतामेति ।
अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र' ॥

इति अभिधाय उत्तरत्र-आच्छादितायतेति पद्यमुदाहृत्य, अत्रतावन्न श्लेषः । केवलप्राकरणिकगतत्वेन च तस्य भावात् । नाभिधा-प्रकरणनियमितायास्तस्याः अप्राकरणिकाभिधाने सामर्थ्याभावात् । न तात्पर्य-सिद्धानां साध्यार्थपरत्वं तात्पर्यमुच्यते । तत् उपात्त एव संभवति यथा 'उमां स पश्यन् ऋजुनैव चक्षुषा' इत्यत्र चक्षुषः प्रमाणान्तरत एव सिद्धे दर्शनकरणत्वे विशेष

णार्थमुपादानम् । नापि लक्षणा, गवादिपदानां मुख्यार्थबाधादिविरहात् । इति अभिधातात्पर्यलक्षणारूपव्यापारत्रयातिवर्ती ध्वननद्योतनप्रत्यायनावगमनादि व्यपदेशनिरूपितश्चतुर्थो व्यापारो दुरपन्हव एव' इति। **श्लेषप्रकरणे च** तेनैव—

हिरण्यकशिपुक्षेत्रदानदर्शिताविस्मयः ।
न कस्य श्लाघनीयोऽसि नरसिंह जगत्पते ॥

इत्युदाहृतम् । विवृतं चान्यत्र अत्र राजनि प्राकरणिकत्वेन अभिधायाः नियन्त्रितत्वात् अप्राकरणिकनृसिंहलक्षणद्वितीयार्थाभिधाने कुतश्शक्तिः ! इति । अत्रैव **एकावलीतरलायां मल्लिनाथेन** व्याख्यातं अत्र हिरण्यादि वितरणाद्भुतो राजा इति प्रकृतोऽर्थः वाच्यार्थः । असुरगात्रखण्डनाद्भुतो भगवान् देवो नृसिंहः 'इत्यप्रकृतो व्यङ्ग्यार्थः इति । एतेन द्वितीयार्थस्य शब्दशक्तिगम्यत्वं प्रतिपादितं भवति न तु अभिधेयत्वमिति' एतावता प्रपञ्चेन प्राचांमते द्वितीयेऽप्रकृतार्थे उपमायां च व्यङ्ग्यत्वमेवेति आपाततः प्रतीयते ।

**नन्वेवमपि**–'किरति प्रकरं गवां प्रकामम्' इत्यत्र द्वितीयार्थस्य उपस्थितिः किमभिधया आहोस्वित् व्यञ्जनया ? कुतोऽत्र सन्देहः । गुरु-शिष्यभावसंबन्धावलम्बनेन प्रवृत्तत्वात् प्रकरणं प्रकृतमर्थं नियमयतीति अभिधाया विरतत्वादर्थान्तरे तस्याः न पुनः प्रसरः इति व्यञ्जना द्वितीयमर्थं प्रत्यायाययतीति द्वितीयार्थस्य प्रतीतिः व्यञ्जनयैवेति प्राप्ते—

**उच्यते**–शब्दशक्तिमूलध्वनिस्थले प्रकृताप्रकृतयोरर्थयोः उपस्थितौ, विरतायामपि अभिधायाम् वह्निना दाहे संभवति प्रतिबन्धकमणिसमवधानात् दाहे विरतेऽपि उत्तेजकमणिसमवधानदशायां पुनरपि दाहोत्पत्तिरिवात्र अर्था-न्तरोपस्थितौ प्रतिरुद्धायामपि 'करोति कंसादिमहीकृतां वधादि'त्यत्र यथा वा

## तत्त्वालोकः

प्रकरणात् हरिपदं वासुदेवोपस्थापकमपि अर्थान्तरोपस्थापक' विरोधितावलात् हरिपदं सिंहस्याप्युपस्थापकं तद्वत्-'किरति प्रकरं गवां प्रकामम्' इत्यत्रापि प्रकरणाद्गुरुशिष्यविषयकार्थस्य अभिधया प्रतीतावपि 'कलानिधि गो-सुमन-इशब्दोपादानरूपाऽभिधानियामकशब्दान्तरसन्निधिबलात् अप्रकृतार्थस्य लाभो-ऽभिधयास्त्ये वेतिकृतो व्यञ्जना ।

ननु किमिदं अन्यसान्निध्यम्, यद्वशादप्रकृतमर्थान्तरं प्रतीतं भवेत् । अत्र विकल्प्यते किं नियतार्थकपदसामानाधिकरण्यम्, यद्वा पदान्तरसाचिव्यम् ? अथवा नानार्थकपदैकवाच्यमात्रसंसर्ग्यर्थान्तरवाचिपदसमाभिव्याहारः ? इति ? तत्राद्यः पक्षः **प्रदीपकर्तुर्गोविन्दठक्कुरस्य** । द्वितीयः पक्षः **भट्ट-गोपालस्य**, तृतीयः पक्षो ग्रन्थकारस्य सम्मतः । अस्मिन् विषयेऽन्यैरपि विचारः कृत एव ।

तत्र प्रदीपकारानुरोधेनोच्यते–अन्यसन्निधिर्नाम–नियतार्थकशब्दान्तर सामानाधिकरण्यम् । 'देवस्य त्रिपुरारेःरातेः' इत्यत्र देवशब्दस्य अनेकार्थकत्वेऽपि त्रिपुरारातिशब्दस्य शम्भौ योगारूढत्वात् **'रूढिर्योगमपहरतीति** न्यायेन योगार्थस्य प्रतीतावपि तस्याप्रयोजकत्वादन्यत्र प्रयोगाऽभावत् । त्रिपुराराति पर्यायस्य त्रिपुरारिपदस्य शम्भौ रूढिरित्यत्र मानं च 'त्रिपुरारिर्दृगायुधः' इत्यादिकोश एव । कोशस्य च शक्तिग्राहकत्वमभियुक्तसंमतमेव ।

तथा च अनेकार्थकस्य देवशब्दस्य अर्थसन्देहे योगरूढस्य 'त्रिपुरारातेः' इत्यस्य व्यवस्थितार्थकपदस्य सामानाधिकरण्यात् देवपदं विरिञ्च्यादि व्यावृत्ति द्वारा शम्भौ अभिधां नियमयति ।

न च 'सशङ्खचक्रो हरिः' इत्यत्रापि शङ्खचक्रपदयोः नियतार्थकत्वम–

तत्त्वालोकः

स्तीति संयोगोदाहरणेऽतिव्याप्तिरिति वाच्यम् । शंखचक्रपदयोः नियतार्थबोधकत्वे सत्यपि अत्यन्तं भिन्नार्थकत्वात्सामानाधिकरण्यं न भवतीत्यदोषात् । अत एव 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इत्युक्तम् अत एव नीलोत्पलं, गौर्वाहीक इत्यादौ सामानाधिकरण्यम् । 'गौरश्वः, छागो वेसरः इत्यादौ न सामानाधिकरण्यम् इति ॥

अयं च अन्यसन्निधिर्ग्रन्थकृतो नाभिमतः । तदुक्तं–वृत्तिवार्तिके अप्पय्यदीक्षितैः—समभिव्याहृतशब्दस्य नियतार्थकत्वे तत्प्रतिपादित (लिङ्गेनैव) लिङ्गादिनैव तन्नियमनम् । अन्यथा लिङ्गादावुदाहरणेऽपि शब्दान्तर सन्निधेरेव नियामकत्वापत्तेः ।

अतो न नियतार्थकपदसामानाधिकरण्यं शब्दान्तरसन्निधिः । किन्तु नानार्थकपदवाच्यैकार्थसंबन्ध्यर्थान्तरगृहीतसंकेतकनानार्थशब्दसमभिव्याहार — एव, तस्य च 'निषधं पश्य भूभृतम्' इत्युदाहरणम् । अत्र च जनपद-विशेषसाधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसंनिधिना पर्वतविशेषेऽभिधा नियम्यते । भूभृत्पदस्य च राजसाधारणस्य पर्वतविशेषवाचिनिषधपदसंनिधिना पर्वतेऽभिधा नियम्यते ।

न च अन्योन्याश्रय इति वाच्यम् । न ह्यत्र समभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनायापेक्षते । किं तु स्वार्थेन गृहीतसंसर्गकेऽर्थे व्युत्पन्नो यः शब्दः तत्समभिव्याहारमात्रम् । तथा च यथा संबन्धिदर्शनं संबन्ध्यन्तरस्मरणायापेक्षते , न तु तद्दर्शनानन्तरं तत्संबन्धस्मरणमपीति नान्योन्याश्रयः तथा इहापि निषधभूभृत्पदयोः अभिधानियमनाय गृहीतस्वस्वा

**तत्त्वालोकः**

र्थसंसर्गैकपदार्थव्युत्पन्नभूभृन्निषधपदसमभिव्याहारमात्रमपेक्ष्यत इति तदर्थ-प्रतिपादनस्यानपेक्षितात्वात् न अन्योन्याश्रयः ।

एवं यद्युच्यते तदा 'सशंखचक्रो हरिः' इत्यादावपि नानार्थैकपदवाच्येषु अर्थेषु विष्णुमहेन्द्रादिषु एको योऽर्थः विष्णुः तत्संबन्धियदर्थान्तरं शंखचक्रादिरूपं (तत्संसर्गि यदर्थान्तरं) तद्वाचकस्य शंखचक्रादिपदस्य समभिव्याहारः वर्तत एवेति संयोगोदाहरणेऽपि शब्दान्तरसन्निधिनैव अभिधानियमनं भवतीति संयोगादीनां वैयर्थ्यप्रसंगः इति चेत्. ॥

**नैवम्**— अन्तरंगेणैव शंखचक्ररूपार्थसंयोगादिना अभिधानियनने संभवति बहिरङ्गभूतः तद्वाचकपदसमभिव्याहारसापेक्षः अन्यसन्निधिः न प्रसरति । तस्मात्–'निषधं पश्य भूभृतं' इत्यादौ यत्रोभयस्य नानार्थता तया न कस्याप्यर्थस्य प्रथममुपस्थितिः तत्रैव बहिरंगस्यापि तस्य अभिधानियामकत्वेनोदाहरणत्वमिति न कश्चित्संकरः । तथा 'व्यालो दानेन राजते इत्यत्रापि अन्यसन्निधिरेव अभिधानियामिका 'इत्युक्तत्वात्' नानार्थैकपद-वाच्यैकार्थससंबन्ध्यर्थान्तरसंसर्गैकनानार्थकशब्दसमभिव्याहारस्यैव अन्यसन्निधि रूपत्वमिति । **एतेन** 'पश्यात्र नलिनीपत्रे' इत्यत्र अन्यसन्निधिवैशिष्ट्येन व्यङ्ग्यस्य प्रतीतिरिति **दर्पणकृदुक्तं** चिन्त्यमेव, वक्तृबोद्धव्यवाक्यानां वैशिष्ट्यादेव तात्सिद्धेः इत्यपि ध्वनितं भवतीत्यवधेयम् ॥

तथा च उक्तशब्दान्तरसान्निध्यं अत्राप्युपपादयितुं शक्यम् । तथाहि. चन्द्रसाधारणस्य कलानिधिशब्दस्य वाङ्मयवाचिगोपदसन्निधानबलात् ज्ञान-निधौ अभिधा नियम्यते । तथा गोपदस्य वाङ्मयसाधारणस्य चन्द्रवाचि-कलानिधिसन्निधानबलात् किरणेऽभिधा नियम्यते इति समभिव्याहाररूपमेव

तत्त्वालोकः

शब्दान्तरसान्निध्यम् । अस्माच्च अप्रकृतस्यार्थस्य अभिधयैव प्रतीतिः ।

**न च**–अन्योन्याश्रयदोष इति वाच्यम् । एकसंबन्धिज्ञानमपर-संबन्धिस्मारकम् 'इत्यत्र यथा संबन्धिदर्शनात्संबन्ध्यन्तरस्मृतौ न संबन्धापेक्षा तद्वदत्रापि कलानिधि गो–सुमनश्शब्दसमभिव्याहारमात्रमभिधानियमनायै वापेक्ष्यत इति तत्तदर्थप्रतिपदनस्यानपेक्षणात् ।

इत्थं च विरोधितादेरिव शब्दान्तरसमभिव्याहारस्याप्यर्थविशेष – स्मारकत्वाभ्युपगमेनैव द्वितीयस्यापि अप्रकृतार्थस्य अभिधयैव बोध उपपद्यत इति व्यर्थं तत्र व्यञ्जनाश्रयणम् ।

**ननु काव्यदर्पणकृता**–प्रकरणस्य स्वव्यतिरिक्तेभ्यो बलवत्वं प्रतिपा-दितम्–अन्यथा 'कृष्णा नालोकनजातविस्मयाः' इत्यादौ प्रसिद्धिसाहचर्या-भ्यां पाण्डवस्यैवार्जुनस्य बोध उदियात न तु यमलार्जुनयोः । अतश्चयम-र्जुनवृक्षभङ्गप्रकरणस्थत्वेन प्रकरणं साहचर्यप्रसिद्धी अपिबाधत इति ।

सत्यं, नैतावा सर्वत्रापि प्रकरणस्य बलवत्त्वं । न हि सर्वत्र सर्वेषां एकं बाधकम्, अपि तु सति निमित्ते बाधकत्वम् । यथा उक्तस्थले क्वचिद्विष यभेदादपि विरोधो निवर्तते 'यथा–किरति प्रकरं' इत्यादौ । अन्यथा– 'करोति कंसादिमहीभृताम् 'इत्यत्र भगवद्रूपार्थोपस्थित्यनन्तरं हरिपदात् सिंह रूपार्थोपस्थितिरेव न स्यात । तथा सति 'असुरद्विपद्विषः 'इत्यत्र कविना उक्तं द्विपपदोपादानमनुपयुक्त स्यात । न चानुपयुक्तत्वकल्पनागरीयसी । तस्मादसुरेषु द्विपत्वे रूपिते तद्विरोधितायाः बलात् हरिपदं सिंहमुपस्थापयति तेन नात्र प्रकरणविरोधितयोर्विरोधः । अतश्च उभयोरप्यर्थयोः अभि-धयैव प्रतीतिः । एतादृशस्थले च विरोधिता नास्तीति न शक्यमभिधातुम् ।

## तत्त्वालोकः

यत्र अन्यतरपदस्य व्यवस्थितार्थकत्वं तत्रै विरोधितायाः अभिधानियाम-कत्वमिति ग्रन्थकृतैव वृत्तिवार्तिके, अहितम् । अभित्रापि द्विपहरिपदयोर्मध्ये द्विपपदस्य गजरूपार्थमात्रोपस्थापकत्वं अस्त्येव ।

एवं च हरिपदं प्रकरणाद्धरिं स्मारयति विरोधितया च तदेव हरिपदं सिंहं स्मारयति न चैतावता प्रकृतार्थस्य वाच्यस्य प्राधान्यं हीयते इन्द्रसकाशात् सन्देशमाहृत्य आगतस्य नारदस्य भगवदाभिमुख्यसंपादनोद्देशेनैव तथा प्रयोगात् । वासुदेवसिंहयोः उपमामात्रं व्यज्यत इत्यत्र न कस्यपि विवादः । एतेन–काव्यदर्पणकृता यत् प्रकरणस्य स्वेतरयावद्बाधकत्वमभिहितम् तद-युक्तमेव ।

अत एव-प्रकाशकृता—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगादिभिरेकै कैर वाच्ये व्यक्तिरेवतु ॥

इत्यनुक्त्वा

संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ।

इत्यभिहितम् । अत्र संयोगाद्यैरिति बहुवचनात् यत्र द्वयोरभिधानियामकत्वं तत्रापि उभयोरर्थयोश्शब्दशक्त्या अलभ्यो य उपमादिः तस्य तु परं व्यञ्जनेयोपलब्धिरिति सूचितं भवति । अत एव अवाच्यार्थधीकृत्, इति वदता यस्यार्थस्य कथमपि शब्दशक्त्या प्रतीतिर्नास्ति तस्यैव व्ञ्जनाविषयत्वमित्यपि गूढाभिप्रायोऽव्यण्यते । एवं च अवाच्यपदेन वाच्याभिन्नः वाच्यसदृशो व्यङ्ग्यएवार्थो ग्राह्यः नपुनर्द्वितीयोऽर्थः । 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति न्यायानुरोधात्, अ तएवं' अब्राह्मणमानये

त्युक्ते ब्राह्मणभिन्नं ब्रह्मणसदृशः पुरुषमानयति इतिक्तेः भाष्यो। द्वितीयार्थस्य शब्दान्तरसान्निध्यादिसहकारेण अभिधयैव बोधननात् ॥

यत्तूक्तं **रसगंगाधरकृता**—उपमादेर्व्यङ्ग्यस्य वाचकतानियन्त्रणानपेक्षत्वात्। नह्यनेकार्थस्य शब्दयोपमादिवाचकत्वं प्रसक्तं येन तन्नियन्त्रणाय संयोगाद्यनुसरणमर्थवत्स्यात्। द्वितीयार्थवाचकतायां अनियन्त्रितायामप्युपमादेर्व्यङ्ग्यत्वस्य निष्प्रयूहत्वात्। तस्मात् तद्ग्रन्थानाकलननिबन्धनं तदभिप्रायवर्णनमिति स्फुटमेव' इति ॥

**तच्चिन्त्यम्**—प्रकरणादीनां नियन्त्रकत्वपक्षे अनेकार्थकशब्दप्रयोगे प्रकरणेन एकस्मिन्नर्थे उपस्थापिते वृत्त्यन्तरस्य प्रतिरुद्धत्वात् तत्र अर्थान्तर प्रतीतिमन्तरा केन उपमा परिकल्प्येत ? अतश्च अर्थान्तरप्रतीति रावश्यकी सा च कथमिति चेत् समभिव्याहाररूपादेव शब्दान्तरसन्निधिबलात्।

न च व्यङ्ग्यार्थप्रतीतौ ये वक्तृबोद्धव्यादयस्सहकारितयामताः तेष्वेकस्यापि नात्र संभवः। अपितु समभिव्याहाररूपशब्दान्तर सान्निध्यस्यैव। शब्दान्तरसन्निधिबलाच्चाप्रकृतार्थस्योपस्थितौ तयोः असंबद्धताप्रसक्तौ तन्निवारणाय उपमाद्यलंकारपरिकल्पना तथा च चमत्कारातिशयः।

**अत एव ध्वनिकृता**—शब्दशक्तिमूलध्वनिनिरूपणावसरे 'अत्रान्तरे कुसुमसमययुगमुपसंहरन् अजृम्भत ग्रीष्माभिधानः संफुल्लमल्लिकाधवलाट्टहासो महाकालः' इत्याद्युदाहृत्य एषूदाहरणेषु शब्दशक्त्या प्रकाश्यमाने सत्यप्राकरणिकेऽर्थान्तरे वाक्यस्यासंबद्धार्थभिधायित्वं मा प्रसांक्षीदिति अप्राकरणिकप्राकरणिकयोः उपमानोपमेयभावः परिकल्पयितव्यः सामर्थ्यात्। इत्युक्तं **वं-एकाशकृतापि**- 'उल्लास्य कालकरवालमहाम्बुवाहं' इत्युदाहृत्य यत्र

**तत्त्वालोकः**

वाक्यस्यासंबद्धार्थाभिधायित्वं माप्रसांक्षीदिति अप्राकरणिकप्राकरणिकयोः उपमानोपमेयभावः कल्पनीय इत्यत्रोपमालंकारो व्यङ्ग्यः इत्युक्तम् ।

तेन चेदं फलितं भवति । नानार्थकस्थले अन्यार्थप्रतीतौ न वक्तृबोद्धव्यादीनां सहकारित्वं अपेक्षितं किन्तु समभिव्याहारादेः तेन अप्रकृतार्थस्य प्रतीतौ प्रकृतार्थेन साकं असंबद्धतैव । सा च अनुपपद्यमानतारुपा सा चार्थापत्तिमूलभूता तथा चार्थापत्तिः कल्प्यते सा चार्थापत्तिरस्मन्मते व्यञ्जनैव । अर्थापत्तेश्च अनुमानरूपत्वं अनुमानस्य च व्यञ्जनायामन्तर्भावो ध्वनिकारसंमतः इति अर्थापत्तिरूपात् व्यञ्जनाव्यापारादुपमाप्रतीतिः इति । अत एव **प्रकाशकृता**–वक्तृबोद्धव्यादिवैशिष्ट्यबलात् व्यङ्ग्यार्थप्रतीतौ अनेकार्थकपदघटितमेकमपि पद्यं नोदाहृतम् । एतेन वक्तृबोद्धव्यादीनां सहकारित्वं अर्थशक्तिमूलध्वनिस्थालादावित्यवधेयम् ॥

एवं च शब्दशक्तिमूलध्वनिस्थले अपरार्थोपस्थापकविरोधितादिसापेक्षतयैवोपमादेः व्यङ्ग्यत्वम् इत्यवश्यमभ्युपेयम् । अन्यथा वक्तृबोद्धव्यादीनां अभावेऽपि उपमादेर्व्यञ्जनाभ्युपगमे सर्वत्र सर्वस्मादपि अर्थान्तरस्य यस्य कस्यचिदप्यभिव्यक्तिः स्यात् । अतश्च यं कंचन सहकारिणमपेक्ष्यैवोपमादेरभिव्यञ्जनेऽपेक्ष्यमाणे समभिव्याहारादिमूलकार्थान्तरप्रतीतिमूलव्यञ्जनाया अपेक्षा युक्तेति रसगंगाधरकृदभिहितं अविचारितरमणीयमेव, ग्रन्थकृदुपरि आग्रहमात्रनिबन्धनं च ।

किंच तत्रैव **रसगंगाधरकृता**–नियन्त्रणपदस्य प्राचीनानुरोधेन प्रकरणस्य अभिधया अर्थान्तरप्रतीतिप्रतिबन्धकत्वमुपगम्य प्रकृतार्थबोधोत्तरं साऽप्रकृतार्थोपस्थितिप्रतिबन्धकता केनापहृता इत्याशंक्य, अन्यत्र क्लृप्तस्य व्यञ्जनाव्यापारस्य कल्पयितुं युक्तत्वादिति ।

तत्त्वालोकः

तदपि मन्दम् । यतः प्राचीनानुरोधेऽपि प्रकरणेन प्रकृतार्थे प्रतिरुद्धे अर्थान्तरप्रतीतिः क्लृप्तादेव शब्दान्तरसन्निधेर्बलात् उपपद्यत एवेति क्लृप्तेनैवोपपत्तौ कल्पितेनोपपत्तिकल्पनमयुक्तम् । तस्य च प्रतिप्रसवरूपत्वं उत्तेजकत्वं वा अभ्युपेयमेवेति व्यक्तीकरणं ग्रन्थकृता कृतमेवेति न पुनः पर्यनुयोगस्य अवसरः । एवं सत्यपि रसगंगाधरकृतात्र व्यञ्जनाश्रयणाभिधानं प्रकरणादीनामिव विरोधिता–शब्दान्तरसान्निध्यादीनां अभिधानियामकानां सद्भावविस्मरणमूलमिति जानीमः ॥

वस्तुतस्तु नानार्थकप्रयोगस्थले यत्र शब्दशक्तिमूलध्वनित्वं तत्र अप्रकृतार्थे अभिधैव न व्यञ्जना इति पक्षः आनन्दवर्धनाभिनवगुप्तपादयोरपि संमत एव । अत एव च–ध्वनिकृता–

आक्षिप्त एवालंकारः शब्दशक्त्या प्रकाशते ।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥

इति कारिकां विवृण्वता 'यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालंकारान्तरं प्रकाशते स ध्वनेर्विषयः इत्यभिहितम् ।

एवमुत्तरत्रापि–अर्थशक्तिमूलध्वनिमधिकृत्य प्रसंगात् यत्र शब्दशक्त्या अर्थे प्रकाशिते सति अर्थान्तरप्रतीतौ नाभिधाप्रतीक्षणं किंतु वाच्यार्थबलेनैव तस्य प्रतीतिः तत्र अर्थशक्तिमूलो ध्वनिः इत्युक्तत्वेन पारिशेष्यात् शब्दशक्तिमूलध्वनौ अर्थान्तरप्रतीतावभिधाप्रतीक्षणं सिद्धं भवति ।

यद्यप्रकृतेऽर्थेऽपि व्यञ्जना प्रसरेत् तदा अर्थशक्तिमूलध्वनिमात्रेऽभिधाप्रतीक्षणाभावकथनमव्यावर्तकम् । उभयत्र अभिधाप्रतीक्षणाभावस्य तुल्यत्वादिति ।

**तत्त्वालोकः**

किंच 'यत्र शब्दशक्त्ये'त्यादि ध्वनिकारोक्ति व्याख्यास्यता **लोचन कृता**–विषयविभाग इत्थं प्रदर्शितः—

१) उभयार्थप्रतिपादनशक्तशब्दप्रयोगे यत्र तावदेकतरविषय नियम कारणमभिधाया नास्ति–यथा–येन ध्वस्तमनोभवेनेति ।

२) यत्र वा प्रत्युत द्वितीयाभिधाव्यापारसद्भावादेकं प्रमाणमस्ति यथा–'तस्या विनाऽपि हारेण' इति ।

'चमहिय' इत्यादावपि तावत् सोऽर्थोऽभिधेय एवेति स्फुटमदः इति च, एवं रीत्या विषयविभागं प्रदर्शयतो लोचनकृतः–तस्या विनापि इत्यत्र अपिशब्दबललभ्याया विरोधिताया बलात् हारिणावित्यस्य हारविशिष्टौ इत्यर्थे ज्ञाते पश्चात् मनोहारिणावित्यस्य व्यञ्जनाविषयत्वं वक्तव्यं स्यात् । न च तथोक्तम् । विरोधिताया बलादेव मनोहारिणावित्यस्य लाभे विरोधितैव निवर्तेत, तथा सति विस्मयजनकत्वोक्तिबलात् मनोहारिणावित्यस्य लाभ इत्यपि वक्तुं युक्तत्वात् । अन्यथा तत्र द्वितीयार्थोऽभिधेय इति स्फुटमदः इत्युक्तिर्विघटिता भवेत् ।

३) एवं 'यत्र अभिधायाः एकत्र नियमनहेतुः प्रकरणादिर्विद्यते तत्रापि यदि पुनस्तादृक् शब्दो विद्यते येनासो नियामकस्सम्पद्येत । अत एव सा अभिधाशक्तिः बाधितापि सती प्रतिसूतैव तत्रापि न ध्वनेः विषयः' । इत्यपि लोचनकृतैवोक्तम् ॥

अमुमेवाभिप्रायमवलम्ब्य ग्रन्थकृतापि प्रकरणात् प्रकृतार्थप्रत्यायन पूर्वकं अप्रकृतार्थे प्रतिरुद्धेऽपि समभिव्याहाररूपशब्दान्तरसन्निधिबलात् अप्र-

## चित्रमीमांसा

एकस्मादेव गुरोः विद्यां शिक्षमाणानां केचित्प्रग-ल्भन्ते नान्ये इति विशेषः। बोधकस्य गुरोस्तेषु तेषु बोधनविशेषकृतो न भवति, किंतु तत्स्वभावकृत इत्यस्मि न्नर्थे प्रकृते अप्रकृतार्थस्य उपमानत्वकल्पनया अत्रैवमुपमा व्यज्यते, यथा चन्द्रे किरणानां प्रकरमविशेषेण सर्वपुष्पेषु विकिरिति काविच्चिद्विकसन्ति नान्यानीत्येष विशेषः तत्त त्पुष्पस्वभावकृत एव, न तु चन्द्रस्य किरणविशेषकृतः। एवं गुरौ सर्वशिष्येववविशेषेण वाङ्मयं विकिरति तेषु बोधा ऽबोधविशेषोऽपि तत्तत्स्वभावकृत एवेति।

अत्र श्लिष्टानांगो- सुमनः- कलानिधिशब्दानां वागादि पर्याय परिवृत्त्यसहिष्णुत्वाच्छब्दशक्तिमूलानुरणन रुपध्वनिः इति।

## तत्वालोकः

कृतार्थस्य प्रतीतिरिति शब्दान्तरसन्निधिः प्रकरणस्य प्रतिप्रसवरूप इतिप्रकृता ऽप्रकृतश्लेषस्थलेपि अप्रकृतार्थस्या अभिधयैव प्रतीतिरिति स्थापितम्।

अत एवात्र द्वितीयार्थस्य कथं प्रतीतिरिति शंकाऽपि न कृता। इत्थं सति प्रकरण शब्दान्तरसन्निधिमाहात्म्यात् प्रकृताप्रकृतयोरर्थयोरुपस्थितौ सत्यामुपमाध्वननप्रकारमुपपादयति—एकस्मादिति।

अत्र श्लिष्टानामित्यादि--यद्यप्यत्र द्वितीयार्थस्यापि अभिधयैव प्रतीतौ तयोरसंबद्धतावारणाय उपमा परिकल्प्यते इत्युक्तं, तथा सति प्रकृता-

### तत्त्वालोकः

प्रकृतार्थपर्यालोचनानन्तरं परिकल्प्यमानाया उपमाया अर्थशक्तिमूलत्वमेव वक्तुं युक्तम् ।

तथापि—व्यज्यमानाया उपमायाः प्रकृताप्रकृतोभयसाधारणशब्द सापेक्षतया प्रस्तुतमात्रपरपर्यायशब्दान्तरपरिवृत्त्यसहिष्णुतया विद्यमानाया अप्यर्थशक्तेः उपसर्जनत्वमभ्युपगम्य अर्थशक्तिमूलध्वनेः सकाशादस्य पृथग्भाव इति भावः ।

ननु—प्रकृताप्रकृतार्थयोः अभिधया प्रतीतौ सत्यां तयोरुपमाप्रतीति मन्तरा संबद्धार्थतैव न भवतीति व्यज्यमानायाः उपमायाः कथं ध्वनिविषय त्वम् ? वाच्यसिद्ध्यङ्गत्वरूपगुणीभूतव्यङ्ग्यत्वस्यैव युक्तत्वादिति चेन्न—

यत्र यादृशव्यङ्ग्यार्थावगतिमन्तरेण वाच्यार्थस्य यथाकथंचिदपि नोपपत्तिः तत्र वाच्यसिद्ध्यङ्गत्वम् । यत्र प्रकारान्तरेण वाच्यस्योपपत्तिः प्रतिपादयितुं शक्या तत्र न गुणीभूतव्यङ्ग्यत्वस्य प्रसक्तिः । प्रकृते तु एकतरार्थप्रतीतावपि न वाच्यार्थस्यानुपपत्तिरिति व्यङ्ग्यार्थस्य न नियमेन सापेक्षतेत्यदोषात् ।

यद्यपि—'किरति प्रकरं गवां प्रकामम्' इत्यत्र अर्थान्तरस्यापि अभिधयैव प्रतीतिः उपमायाः परं व्यङ्ग्यतेति । सत्यम्–तथापि विचार्यते गोसुमनःकलानिधिशब्देभ्यः किं रूढ्या, योगेन, योगरूढ्या वा अर्थान्तरस्य प्रतीतिः ?

न तावद्रूढ्या—अनेकार्थकेषु एकार्थप्रतिपादकत्वाभावात् 'अखण्ड शक्तिमात्रेणैकार्थप्रतिपादकत्वं हि रूढि'रिति हि प्रतिपादितम् । अत्र च गो

**तत्त्वालोकः**

सुमनश्शब्दाभ्यां अखण्डशक्त्या अर्थप्रतिपादकत्वे सत्यपि एकार्थप्रतिपादकत्वा भावात् ।

नापि योगशक्त्या, अनेकार्थकेषु अवयवशक्तिमात्रसापेक्षतया पदस्य एकार्थप्रतिपादकत्वाभावात्–'अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योग'इति प्रतिपादनात् ।

अत एव न योगरूढ्यापि अवयवसमुदायोभयशक्तिसापेक्षतया एकार्थ प्रतिपादकत्वाभावात्– 'अवयव–समुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढि'रिति च ग्रन्थकृतैव **वृत्तिवार्तिके** प्रतिपादितत्वात् इति चेत्—

**उच्यते**—एकार्थकेषु मणि–नूपुरादिषु केवलरूढेः, नाभिपद्म–रोमा वल्यादिपदेषु केवलयोगस्य, देवालय–सुरालयादिषु योगरूढेश्च प्रसरो निर्बाध एव । नानार्थकेषु एषु एकयापि विधया एकार्थप्रतिपादकत्वाभावादनुपपत्तिः आपाततः प्रतीयते । अथापि–प्रकरणादिषु एकेन एकतरार्थस्मृतौ उक्तानां रूढ्यादीनां प्रसरेण अनुपपत्त्यभावात्–यथा, किरतिप्रकरमित्यत्रैव गो–कला शब्दयोः 'द्युपरिवष्वंशु–वज्रांबु-भूवाक् दिक् दृक्षु गौर्नृषु' इति कोशादनेकार्थ प्रतीतावपि प्रकृतार्थबोधानुरोधेन वाग्रपस्यैकस्यैवार्थस्य अखण्डशक्त्या अवगति रितिरूढेः प्रसरात् । तथा शब्दान्तरसन्निधिवलादप्रकृतस्य किरणरूपार्थस्यापि रूढ्यैव बोधात् ।

**न च**—गवादीनामपि शब्दनां प्रकृतिप्रत्यययोगेन परिनिष्पन्नत्वात् यौगिकत्वमेवेति वाच्यम् । अर्थानुगमादर्शनेन औणादिकानां अव्युत्पन्नत्व पक्षाश्रयणादपि योगशक्त्या उक्तार्थालाभात् रूढिरेवाश्रयणीया । अत एव

तत्त्वालोकः

**व्यक्तिविवेककृतापि** गच्छत्यगच्छति च गवि गोशब्दः प्रयुज्यत इति जातेरेव प्रवृत्तिनिमित्तत्वमादृतम् । एवैव रीतिः कलाशब्देऽपि अवगन्तव्या ।

एवं योगरूढिस्थलेऽपि 'सुमनस्सु' इत्यादौ योगरूढ्यर्थयोः मध्ये प्रकरणबलात् प्रकृतार्थस्योपस्थितौ–अभिधानियामकान्तरेण अर्थान्तरस्य प्रतीतिरिति तत्रापि अवयवसमुदायोभयशक्तिसापेक्षतयैकार्थबोधस्य अन्वयानुगुण्ये सति संभवति उभयोः परिग्रहः ॥ अन्यथा तु अन्यतरस्य परित्याग एव । यथा–सुमनश्शब्दात् पुष्पबुधयोः प्रकरण–शब्दान्तरसन्निधिभ्यां उपस्थितिर्विद्यते । यद्यपि गुरुशिष्यभावमवलम्ब्योपयुक्तस्य सुमनःपदस्य योगरूढिभ्यामेकार्थबोधकत्वं विद्यते । अथापि चन्द्रकिरणप्रसरकुसुमविकास विषयमवलम्ब्य अप्रकृतार्थबोधे योगार्थस्य बाध एवेति रूढ्यर्थस्यैव परिग्रहात् सुमनश्शब्दः पुष्पमाह ।

**न च**—सुमनश्शब्दस्य योगरूढ्युपगमे 'योगाद्रूढिर्बलीयसी' इति न्यायः प्रसज्येत । तथा सति प्रकृतस्य योगरूढिलभ्यस्य अवयवार्थस्याऽप्रतीत्या बुधरूपार्थः न प्रतीयेत । अतश्च बुधरूपार्थे रूढिरेवाभ्युपगम्यतां मा भूद्योगरूढिरिति वाच्यम् ।

अबाधितयौगिकार्थप्रतिभासस्य सर्वसाक्षिकस्य अपलापानर्हत्वात् ।

**एवं तर्हि**—अवयवशक्तिमात्रेणैव बुधस्योपस्थितेः रूढ्यंशपरित्यागः क्रियताम् इति चेत् । अप्रकृतार्थे योगार्थस्य बाधप्रसक्त्या रूढ्यर्थस्यापि विवक्षितत्वात् । असति बाधके योगरूढस्थले योगशक्तिसापेक्षरूढ्यर्थस्य ग्रहणं युक्तमेव । अत एव 'सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्' इति अभिधानकोशस्मृतिपरंपरया विशिष्य सुमनश्शब्दस्य बुधे योगरूढिभ्यां पर्यायत्वेन ग्रहणमप्युपपद्यते ।

## तत्त्वालोकः

एतेन कोशस्य त्रिधाऽपि शक्तिग्राहकत्वं निरूढं भवति । अत एव च—इन्द्रपर्यायेषु शचीपतिशब्दस्य यौगिकत्वेऽप्युपपत्तिः अभियुक्तैः कल्प्यते ।

नन्वेवं तर्हि कोशस्य शक्तिग्राहकत्वमेव न लक्षणाग्राहकत्वं इति ध्वनितं भवति । तथा सति द्विरेफशब्दस्य षट्पदे पर्यायत्वेन प्रयोगो नोपपद्यते तस्य तत्र शक्तेरभावात् । द्विरेफपदं रेफद्वययुक्तंभ्रमरशब्दं प्रतिपादयति । भ्रमरशब्दश्च षट्पदमिति द्विरेफपदस्य षट्पदे लक्षितलक्षणेति नैयायिकाः वदन्ति । अतश्च लक्षणाग्राहकत्वमपीति न च शंक्यम् ।

द्विरेफशब्दाद्योगमात्रोपस्थितौ भ्रमरशब्दस्यावगतावपि रेफद्वययुक्त हरिश्चन्द्ररामचन्द्रादिप्रत्यायकत्वेन अतिप्रसक्त्या द्विरेफशब्देऽपि योगरूढि-रावश्यक्येवेति द्विरेफपदस्य योगरूढत्वं रूढत्वमेव वा अभ्युपगन्तुं युक्तमिति कोशस्य शक्तिग्राहकत्वमेव न लक्षणाग्राहकत्वमपि ।

**ननु**—योगरूढिस्थले (सुमनःपदे) योगार्थस्य प्रकरणानुगुणत्वेऽपि योगाद्रूढेर्बलीयस्तया, रूढ्यर्थाद्योगार्थस्य अपहार एवेति कथ बुधरूपेऽर्थेऽभिधा प्रसज्यते । 'रूढिर्योगमपहरति' इति न्यायादिति प्रकृतार्थ एव व्यञ्जना आवश्यकी स्यात् । सा च प्रकृतार्थबोधे न कस्यापि इष्टा इति चेत्—

तथा न – यत्र अनेकार्थकेषु कतिपयार्थनिर्णायकप्रकरणादीनामभावः तत्रैव-'योगाद्रूढिर्बलीयसीति' न्यायस्य प्रसरः न सर्वत्र योगरूढस्थले अन्यथा 'मण्डपं भोजय' इत्यत्र रूढ्या योगापाहरे रूढार्थस्य भोजनादिक्रियायां कर्मता संबन्धेन अन्वयायोग्यतया उक्तप्रयोगस्य अयुक्तता प्रसज्येत, अतश्च 'रूढिर्योग मपहरतीति' न्यायः न सार्वत्रिकः अपि तु प्रकरणाद्यभावविषयः ।

अत एव ग्रन्थकृतापि वृत्तिवार्तिके 'कह्लारकैरवमुखेष्वपि पंकजेषु'

तत्त्वालोकः

इत्यादौ योगरूढिस्थले पङ्कजशब्दस्य कुमुदकह्लारादिषु रूढ्यर्थानन्वयाद्योगार्थ माश्रित्य क्वचिद्रूढ्याः अपि योगशक्त्या बाधः प्रदर्शितः ।

**मीमांसकैरपि**–'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नुते दानं देवस्य पृच्यते' इत्यैन्द्र्यां ऋचि 'वचनात्त्वयथार्थमैन्द्री स्यात्' [जै सू. ३-२-३] **इत्यैन्द्रीन्यायेन** ऋग्गतस्येन्द्रशब्दस्य रूढिबाध पूर्वकं वृत्त्यन्तरेण गार्हपत्यपरतयान्वयः प्रदर्शितः इति योगाद्रूढेरपि बाधो युक्त एव । सति बाधके योगार्थस्य त्यागो योगरूढिस्थलेऽभ्युपगतः । यथा 'नाभ्युद्गताम्बुरुहकुड्मलपद्मशोभाम्' इत्यत्र अम्बुरुहपदस्य भगवन्नाभि कमलेऽवयवार्थानन्वयात् रूढिरेवेत्युक्तं वृत्तिवार्तिके । तद्वदत्रापि गोसुमनः-कलानिधिरूपशब्दसमभिव्याहारबलात् कलानिधिशब्दाभ्यां चन्द्ररूपार्थो-पस्थितौ तदन्वयानुगुणतया सुमनश्शब्दात् रूढ्या पुष्परूपार्थस्योपस्थितिः योगार्थस्य परित्यागश्च युज्यत एव—

**एतेन शब्दशक्तिमूलध्वनिनिरूपणावसरे रसगंगाधरकृता—**

योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते ।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा ॥

इति यत्सिद्धान्तितं तदपि मन्दम्—

तथाहि तदनुरोधेन कारिकार्थश्च–योगरूढस्य शब्दस्य समुदायावय शक्तिमांकर्येण अर्थप्रत्यायकशब्दनिष्ठे संबन्धविशेषरूपे योगे केवलावयवशक्तौ, रूढ्या केवलसमुदायशक्त्या, नियन्त्रिते अपहृते , योगस्पृशः अवयवशक्ति मात्रलभ्यस्य अर्थस्य धियं बोधं या सूते उत्पादयति सा व्यञ्जनैव व्यञ्जना व्यापार एवेति ।

**तत्त्वालोकः**

एतेनैतदुक्तं भवति ये ये योगरूढाः तैः योगार्थरूढ्यर्थयोः उप॰स्थितौ प्रथमं रूढ्यर्थस्यैव प्रतीतिः पश्चात् योगार्थस्य. बोधः व्यञ्जनयैव न व्यापारान्तरेणेति ।

तदिदं विमर्शकाणां न हृदयंगमम्—यतश्च पङ्कजादिपदस्य योग-रूढत्वेऽपि किं पङ्कजपदशक्यमिति प्रश्ने पद्ममित्यभियुक्तानां प्रतिवचनेन कोशकारैः पद्मपर्यायेषु पाठाच्च रूढ्यर्थस्य प्रथमं यद्यपि बोधो जायते पश्चात् किं स्थलकमलं आहोस्वित् जलकमलमिति पुनः प्रश्ने जलकमलमित्युत्तरिते पङ्कजनिकर्तृत्वांशस्य योगशक्त्या प्रतीतिरनुभूयते न च तदर्थं व्यञ्जनावश्यकी ।

द्विरेफपदे तु अवयवशक्त्या लभ्यस्य रेफद्वयवत्वस्य हरिश्चन्द्रादि पदेऽपि सत्वादतिप्रसक्त्या द्विरेफशब्दस्य भ्रमरशब्दे योगकल्पनायाः अपेक्षया भ्रमर एव रूढिस्वीकार उचित इति प्रकरणाद्यनुग्रहाभाववति 'रूढिर्योगमप हरतीति' न्यायः शोभते । अत एव—

'अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसंगा'

इत्यादौ द्विरेफमाला भृङ्गपङ्क्तिः इत्येव मल्लिनाथेन विवृतं । न तु लक्षित लक्षणयेत्यादिरीत्या ।

किंच सर्वत्र योगरूढिस्थले योगार्थस्य नियन्त्रणं रूढ्या न कर्तुं शक्यम् । तत् कस्य हेतोः ? इति विचारे—पङ्कजमानय इत्यादौ रूढितः स्थलकमलस्य, योगात् भेककुमुदादेः, योगरूढितो जलजस्य च ग्रहणप्रसक्तौ कस्य ग्रहणमिति शंकायां व्यवहारानुरोधेन अनतिव्याप्तजलजग्रहणसौकर्याय योगरूढेरेव बलवत्वम् । तेन रूढ्यर्थस्य ग्रहेऽपि योगार्थस्य प्रतीतिरवश्यं भवत्येवेति न तत्र व्यञ्जना औपयिकी ॥

तत्त्वालोकः

अबलानां श्रियं हृत्वा वारिवाहैस्सहानिशम् ।
तिष्ठन्ति चपला यत्र स कालः समुपस्थितः ॥

इति तदुक्तोदाहरणे वर्षावर्णनरूपप्रकरणबलात् अबलावारिवाहचपलाशब्देभ्यः रूढ्या नायिकामेघविद्युद्रूपार्थावगतौ समभिव्याहारादिमहिम्ना औचित्येन वा अवयवार्थप्रतीतिः, समभिव्याहारौचित्यादीनां अर्थान्तरस्मारकत्वस्याभ्युपगमेन बाधकाभावात् ।

एवं तर्हि रूढ्यर्थासंवलितार्थबोधकत्वं योगरूढिस्थलेऽसंगतं भवतीति चेत् सत्यम्—अथापि युद्धभोजनोभयोद्देशेन प्रयुक्ते सैन्धवमानयेति पदे योगरूढिभ्यां उभयार्थप्रतीतिवत् वृत्तिद्वयसमाहाराभ्युपगमेनैवोपपत्तौ सांकर्यमभ्युपगम्य योगरूढेर्वृत्त्यन्तरत्वकल्पने गौरवात् ।

यद्वा—योगरूढेर्वृत्त्यन्तरत्वाभ्युपगमेऽपि केवलयोगेन प्रतीत्यसंभवेऽपि अबलावारिवाहचपलाशब्देभ्यः निरूढलक्षणया अशक्तानां द्रव्यम् अपहृत्य जलवाहकैस्सह पुंश्चल्यो रमन्ते इत्यवगम्यत इति तदर्थं न व्यञ्जनावश्यकी । निरूढलक्षणा च अभिधासदृशी इत्यभ्युपगतमेव । तदुक्तं वार्तिके कुमारिलभट्टपादैः—

निरूढाः लक्षणाः काश्चित् सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव स्वशक्तितः ॥ इति ॥

ननु—'किरति प्रकरमि'त्यत्र निधौ कलानामिति प्रयोगमात्रेण ज्ञान—निधावित्यर्थलाभेऽपि चन्द्ररूपार्थस्य कथं प्रतीतिः इति चेत्

'स शिशून् किल पालयत्यभीरिति तन्नामनि मास्म विश्वसीः'

इत्यादौ यथा स शिशून् किल पालयतीति वाक्यादपि शिशुपालः

## तत्त्वालोकः

इत्यर्थस्य लाभः तद्वदत्रापि कलानां निधाविति वाक्याच्चन्द्ररूपार्थस्य लाभः । अत एव स शिशून् किलेत्यत्रापि कविना शिशुपालादिपदं विशेष्यवाचकं न प्रयुक्तम् । ग्रन्थकृताऽपि वरदराजस्तवे अवयवार्थशक्तिमूलप्रतीयमानार्थविवक्षायां समुदायार्थवाचिपदान्तरं न प्रयुक्तं यथा—

मन्ये निजस्खलनदोषमवर्जनीय-
मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः ।
आविश्य देव रसनानि महाकवीनां
देवी गिरामपि तव स्तवमातनोति ॥

इत्यत्र 'वागीश्वरी'पदात् अवयवार्थशक्त्या प्रतीयमानस्य 'विद्याविषये स्खालित्यापवादमितरवत्सरस्वती न सहते' इत्यर्थस्य वाच्यस्योपस्कारकताया विवक्षितत्वेऽपि, वाचामधिदेवताऽपि यत्र भगवतः स्तोत्रे न पर्याप्तसामर्थ्यं बिभर्ति तत्र कथमन्येऽधिकुर्युरिति अर्थापत्तिध्वननसत्त्वेऽपि पृथक्सरस्वतीवाचकपदाप्रयोगः, तद्वदत्रापि अन्यूनाधिकतया उपदिशत्यपि गुरौ शिष्येषु बोधाऽबोधविशेषः बोधनविशेषकृत इत्यमुमपवादं गुरुर्न सहत इत्यस्य वाच्यस्य उपस्कारकतया विवक्षितत्वेऽपि चन्द्रे किरणानां प्रकरं सर्वकुसुमेष्वविशेषेण विकिरत्यपि कानिचित् कुसुमानि विकसन्ति, कानिचिन्नेत्येष विशेषः तत्तत्पुष्पस्वभावकृत एव न तु चन्द्रस्य किरणप्रसरविशेषकृतस्तद्वत् गुरौ सर्वशिष्येषु अविशेषेण वाङ्मयं विकिरत्यपि तेषु बोधाबोधविशेषोऽपि तत्तद्बुद्धिशक्तिविशेषकृत एवेत्युपमाध्वननसत्त्वेऽपि पृथक्चन्द्रवाचकपदाऽप्रयोगः ॥

अपरं च-जगन्नाथेनाऽपि केवलयोगरूढपदप्रयोगेषु –

'पुष्पधन्वा विजयते जगत् त्वत्करुणावशात्'

**चित्रमीमांसा**

अर्थशक्तिमूलो वस्तुना उपमाध्वनिर्यथा—

वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥

**तत्त्वालोकः**

इत्यादावेकेनैव पदेन रूढ्यर्थोपस्थितिः योगार्थद्वारा निस्सारत्वावगमश्च भवति, तत्र कविकृतमन्मथरूढपदान्तरानुपादानपूर्वकपुष्पधन्वपदोपादानप्रतिसंधानेन तदीययोगार्थे कुर्वद्रूपताधानं बोध्यमित्युपपत्तिः कल्पिता तद्वदेव,

'अबलानां श्रियं हृत्वा वारिवाहैस्सहानिशम् ।
तिष्ठन्ति चपला यत्र'

इत्यत्रापि नारीमेघविद्युदादिरूढपदान्तरानुपादानपूर्वकं अबलावारिवाहादीनां योगरूढपदानां तदीययोगार्थस्यानुसन्धानार्थं कविना प्रयुक्तमिति तदर्थं न व्यञ्जनापेक्षेति दिक् ॥

इत्थं शब्दशक्तिमूलोपमाध्वनिं निरूप्य अर्थशक्तिमूलां तामुदाहरति-**अर्थशक्तीति** ।

हे वात ! वायो, त्वं तत्र वाहि, यतः—यत्र कान्ता-मत्प्राणवल्लभा, तां स्पृष्ट्वा—आमृश्य, मामपि स्पृश, तादृशस्पृष्टस्पर्शवति त्वयि मे मम गात्रसंस्पर्शः शरीरसंसर्गः, चन्द्रे दृष्टिसमागमः । एतेन सीतास्पृष्टत्वत्स्पर्शः सीतास्पर्शसदृशः । सीतामुखं चन्द्रसदृशं इति च अर्थशक्त्या ध्वन्यते ।

तेन च यस्मिन् समये सीतां स्पृष्टवतस्तव स्पर्शः चन्द्रदर्शनं च अनुभूयते तदा मदीयसंतापोपशान्तिः आह्लादश्च संपद्यत इति भावः ॥

**चित्रमीमांसा**

अत्रार्थशक्त्या चन्द्रे दृष्टिसमागम इत्यनेन चन्द्रे सीतामुखसादृश्यं व्यज्यते ।

अलंकारेणोपमाध्वनिर्यथा—

यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान् दारयन् ।

**तत्त्वालोकः**

एतेन तादात्विकवातसंसर्गः सीतासंसर्गसदृशः, सीतामुखं च चन्द्रसदृशम् इति व्यज्यते इत्युक्तं भवति । तदेतदाह—**अत्रेत्यादिना** । 'भूतलसंयोगो घटे' इतिवत् चन्द्रे इत्यत्र सप्तम्याः प्रतियोगित्वमर्थः । 'दृष्टिसमागमः' इत्यत्र दृष्ट्यनुयोगिकस्संबन्धः इत्यर्थः । तथा च 'चन्द्रप्रतियोगिक (सादृश्य) दृष्ट्यनुयोगिकस्समागमः' इत्यर्थः । एवं च उपमानस्योपादानेऽपि उपमा ध्वन्यते इति भावः ।

**अर्थशक्तिमूलध्वनित्वं** च—अभिधाव्यापारनैरपेक्ष्येण अर्थस्य अर्थान्तराभिव्यञ्जकत्वम् ॥ उक्तं च **ध्वनिकृता**—

अर्थशक्त्युद्भवस्त्वन्यः यत्रार्थः सम्प्रकाशते ।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्ति उक्तिं विना स्वतः ॥ इति ॥

अर्थशक्तेरलंकारः यत्राप्यन्यः प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥

अर्थशक्तिमूलविशेषालंकारेण उपमालंकारध्वनने उदाहरणं प्रदर्शयति— **अलंकारेणेति** । त्वम् जयापीडः, तदा युधि तात्कालिके

चित्रमीमांसा

तेषां दुस्सहकामदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभरभासुरे पुररिपावस्तं गतं कौतुकम् ॥

अत्र अन्यत्कार्यं प्रकुर्वतः अशक्यान्यवस्तुकरणात्मकः

तत्त्वालोकः

नियुद्धे, शत्रुभिः प्रयुक्तो यः ललाटपतितप्रासप्रहारः फालदेशनिपतितकुन्त प्रहारस्सन्, स्फीतस्य अत्यधिकस्य असृजः रुधिरस्य या स्रुतिः स्रवणं तेन, पाटलीकृतः रक्तवर्णतां नीतः यः पुरोभागः पुरःप्रदेशोऽपि, परान् शत्रून् दारयन् भिन्दन् यैर्जनैः दृष्टोऽसि अवलोकितोऽसि, तदा तस्मिन् समये तेषां जनानां, दुस्सहः सोढुमशक्यः योयं कामदेहदहनप्रोद्भूतनेत्रानलज्वालाली–मन्मथशरीरभस्मीकरणोद्भूतललाटनेत्रवह्निज्वालाराशिः तस्य योयंऽ भरः अतिशयः 'प्राग्भारातिशयो भरः' इति वैजयन्ती । तेन भासुरे उल्लासिनि-पुररिपौ त्रिपुरवैरिणि, कौतुकं तद्दर्शनकुतूहलम्, अस्तं गतं प्रणष्टम् ।

**यद्यपि**—अत्र ललाटदेशपतितप्रासप्रहारजन्यासृक्पाटलितमुखजया-पीडावलोकनसमये मुखमध्यावलोक्यमानाग्निवर्णासृग्दर्शनेन ज्वलदलिकविलोचन मदनान्तकस्मरणं जातमिति स्मरणालंकारो व्यज्यत इत्यापाततः प्रतीतिपथम-वतरति **तथापि**—कौस्तुकास्तमयवर्णनादाक्षिप्तस्य महेश्वरस्य साक्षात्कार एवाभूत् इत्यत्र तात्पर्यात् न स्मृतिविषयत्वं, अपि तु–यच्चकिंचिदारभमाण स्याऽसंभाव्यवस्त्वन्तरकरणरूपः तृतीयो विशेषालंकारप्रकारः । उक्तं च सर्वस्वकृता–'अनाधारमाधेयमेकमनेकगोचरं अशक्यवस्त्वन्तरकरणं विशेषः' इति । तदेतदाह–अत्रेत्यादिना । यत्र यादृशं कार्यं विवक्षितं तस्य परिनि ष्पत्तिमात्रमेव न, यावदसंभाव्यस्यापि वस्त्वन्तरस्य चिकीर्षितस्य वा करणं विशेषालंकारः । एतेन—

चित्रमीमांसा

विशेषालंकारः। उक्तरूपं त्वां पश्यतः यथोक्तविशेषण-विशिष्टपुरारिदर्शनमासीदिति निबन्धनात्। करणस्य क्रियासामान्यात्मनो दर्शनेऽपि सद्भावात्।

तत्त्वालोकः

फलान्तरस्य निष्पत्तिः चिकीर्षाविरहेऽपि या।
सः विशेषः चिकीर्षायां प्रसङ्गस्तु ततः पृथक्॥

इति प्राचीनोक्तस्य प्रसंगाख्यस्य अलंकारस्य, एकस्मिन् क्रियमाणे तज्जातीयस्य प्रसंगतः सिद्धिरनुषङ्गः इति अनुषंगाख्यालंकारस्य च विशेषालंकार एव अन्तर्भावोऽभिमत इति व्यज्यते॥

उक्तोदाहरणे विशेषालंकारसमन्वयं प्रदर्शयति—**उक्तरूपमिति**। प्रासप्रहारपरिदृश्यमानपाटलितललाटं त्वां पश्यतः क्रोधातिरेकोद्भूतललाटनेत्र विशिष्टत्रिपुरारिसाक्षात्कारोऽभूदिति घटनात् विशेषालंकारः इत्यर्थः। अत्र दर्शनमासीदिति उपपादनेन स्मृतेर्व्यङ्ग्यत्वमपि नास्तीति सूचितं भवति।

**ननु**—किंचिदारम्भमागस्य अशक्यवस्त्वन्तरकरणं हि विशेषालङ्कार शरीरम्। इह पुनः अशक्यवस्त्वन्तरदर्शनं प्रतीयते इति कथमत्र विशेषालंकार इत्याशंकायां समाधानमाह—**करणस्येति**। करणस्य कृञ्धात्वर्थस्य, क्रिया-सामान्यात्मनः सर्वक्रियाविशेषानुगतस्वरूपस्य, दर्शनेऽपि दृशधात्वर्थेऽपि सद्भावात् प्रयोगात् इत्यर्थः।

अयं भावः—किं करोषीति प्रश्नस्य पचामीत्युत्तरिते, पाकं करोमीति विवरणदर्शनात् कृ-भू अस्धात्वर्थकरणभवनादिक्रियाणां सकलधात्वर्थसामन्या

चित्रमीमांसा

यद्यप्ययमर्थो न वाच्यः तथापि कौतुकात्तमयवर्णनाद्व्यङ्ग्यः ॥

तेन तदा त्वं तथाभूतः पुररिपुरिवावस्थितोऽसीत्युपमा व्यज्यते । एवं उपमा दिगुदाहृता ॥

तत्त्वालोकः

रूपत्वेन अव्यभिचरितत्वाद्दर्शनेऽपि करणरूपत्वं नानुपपन्नमिति उक्तलक्षणस्य विशेषालंकारस्य नाप्राप्तिरिति । अत एव 'अधिश्रित्य पाचको भवती' त्यादौ न भवनक्रियापेक्षं पौर्वकाल्यं अधिश्रयणस्य, किंतु पाकाद्यपेक्षमिति व्यक्तिविवेककृदुक्तं संगच्छते ।

नन्वेवमपि-विशेषालंकार इत्युक्तं कथं संगच्छताम्, तस्य अवाच्यत्वात् । वाच्यतादशायां खल्वलंकारत्वमिति चेत् अत्राह-यद्यपि इति ॥

अयं भावः—वाच्यतायामेव यद्यप्यलंकारताव्यपदेशः, अथापि ब्राह्मणश्रमणन्यायेन आपणस्थक्रय्यमंजूषादिगतरत्नालंकारव्यपदेशवद्वा तद्व्यदेशो घटत इति विशेषालंकारत्वस्य न काप्यनुपपत्तिः । एवं च 'माघः शिशुपालवधं विदधत् कविमदवधं विदधे । रत्नाकरः स्वविजयं, हरविजयं वर्णयन् व्यवृणोत्' इत्यादिवत् अशक्यवस्त्वन्तरकरणात्मकविशेषालंकारत्वाभावेऽपि न दोष इत्युक्तं भवति ।

तथा चात्र व्यङ्ग्येन (अर्थशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्येन) विशेषालंकारेण 'तदा त्वं तथाभूतः पुररिपुरिव स्थितोऽसि' इत्युपमा व्यज्यत इत्याह-तेनेति । एवमुभयशक्तिमूलोपमाध्वनिरुन्नेय इति दिक्प्रदर्शनतया उदाहरणानि कानिचित्प्रदर्शितानीत्याह-एवमुपमेति । एतेन सदृशवस्त्वन्तरानु-

तत्त्वालोकः

भवेऽपि अशक्यवस्त्वन्तरकरणात्मा विशेषालंकारः इत्युपपादयताऽपि सर्वस्व-कृता सादृश्यस्य विशेषालंकारस्य च व्यङ्ग्यत्वाप्रतिपादनं न्यूनमिति प्रदर्शितं भवति। तथा जयापीडस्य राज्ञः त्रिपुररिपोश्च सादृश्ये व्यज्यमाने बिम्ब-प्रतिबिम्बभावापन्नयोः रिपुप्रेरितप्रासप्रहारजनितात्यधिकरुधिरप्रवाहपाटलित-ललाटदेशत्वं, दुर्मर्षणानङ्गदेहदाहप्रवृत्तकालानलार्चिःपटलभासुरत्वयोः साधा-रणधर्मत्वमिति ॥

**दिगर्थश्च**—अनुपात्तसंग्राहार्थं सूचनम्। तत्र उभयशक्तिमूलोपमा-ध्वनेरुदाहरणं यथा—

अस्याममेयगुण पुर्यपराजितायां
अश्वत्थवर्यजुषि दिव्यसरस्समीपे।
मध्ये हिरण्मयगृहं महिषीयुतं त्वां
दृष्ट्वा जनो न पुनरेति भवान्तरार्तिम् ॥ [वर. स्त. ८ श्लो]

अस्यार्थश्च—हे अमेयगुण—अगणनीयकल्याणगुण, अपराजितायां अपराभिः पुरीभिरजितायां सर्वपुर्यतिशायिन्यामिति यावत्। तदुक्तं—**वामनपुराणे**—

तेजस्विनां यद्वदिहार्क उक्तो, नारीषु रम्भाऽऽश्रमिणां गृहस्थः।
काञ्ची तथा श्रेष्ठतया पुरीणां, देशेषु सर्वेषु च मध्यदेशः॥ इति।

**सनत्कुमारसंहितायाम्**—

श्रीमत्काशीपुरीवासाद्वासः काञ्चीपुरे वरः।
पुराणामुत्तमा द्वारैः शुशुभे द्वारकोपमा॥

तत्त्वालोकः

प्रासादैर्गोपुरैः शुभ्रैः प्राकारैरपि सूचकैः ।
विष्णोः प्रियालयैस्तीर्थैः अयोध्येव पुरातनी ॥

योजनत्रयविस्तीर्णा वासुदेवप्रियालया ।
नागपर्यङ्कशय्यायां यत्र शेते हरिस्स्वयम् ॥

नाशयञ्जगतां पापं काष्ठां गतमपि प्रभुः । इति ।

अपरैः विमतैः अजितायामिति वा । अस्यां पुरि काञ्चीपुर्यां दिव्यसरःसमीपे–

पञ्चतीर्थानि सन्त्यत्र नागाद्यैर्नामभिश्शुभैः ।
अनन्ततीर्थं ब्राह्मं च हेमाम्भोजसरस्तथा ॥

अग्नितीर्थं कुशाख्यं च कीर्तितानि मनीषिभिः ।
एतेषामपि सर्वेषां श्रेष्ठं नागाह्वयं सरः ॥

इति पुराणप्रसिद्धमनन्तनामाङ्कितं सरः दिव्यसरः तस्य समीपे। कीदृशे ? अश्वत्थवर्यजुषि । अनन्ततीर्थप्राग्भागे श्रीमानश्वत्थवृक्षः प्रसिद्धः तदलंकृते । मध्ये हिरण्मयगृहे पुण्यकोटिविमानमध्ये इत्यर्थः । महिषीयुतम् वक्षस्स्थलसंस्थितया श्रिया पार्श्वद्वयवर्तिनीभ्यां श्रीभूमिभ्यां वा युतं त्वाम्, जनः यः कश्चिदपि दृष्ट्वा पुनः भवान्तरार्तिं जन्मान्तरक्लेशं नैति–न प्राप्नोति ।

अत्रापराजिताशब्दश्लेषेण, अश्वत्थाद्यर्थश्लेषेण च परमपदे विद्यमा–नानां भगवद्दर्शनं यथा अपुनरावृत्तिकारणं एवमिहापि भगवति प्रपन्नानां सतां

चित्रमीमांसा

अथोपमादोषाश्चिन्त्यन्ते—१ न्यूनत्वम् २ अधिकत्वम् ३ लिङ्गभेदः ४ वचनभेदः ५ असादृश्यम् ६ असंभवः इति अस्याः षड्दोषानाहुः ।

तत्त्वालोकः

भगवद्दर्शनमपुनरावृत्तिकारणमिति शब्दार्थशक्तिमूल उपमालंकारो ध्वन्यते'।

नन्वत्र—शब्दशक्तिमूलार्थस्य सांकर्योक्त्यैव पर्याप्तमिति कुत उभय-शक्तिमूलो ध्वनिरुपेयते इति शङ्क्यम् ।

प्रकृतार्थस्य अप्रकृतार्थेनौपम्यं प्रतीयमानं न केवलं शब्दशक्तिमूलार्था-श्रयं, नापि अर्थशक्तिमूलार्थाश्रयं, अपि तु उभयविधार्थाश्रयं तच्चैकमेवेति व्यङ्ग्यानैक्यात् नोभयशक्तिमूलध्वन्योस्संकरप्रसंगः । एवमन्येऽपि प्रभेदा उन्नेयाः इति दिगर्थः ॥

इत्थं सप्तभेदामुपमां निरूप्य–उपमायां चमत्कारमपकर्षन्तः पर्यवसाने रसापकर्षमपि ये जनयन्ति तेषां दोषत्वम्, दूषकताबीजं च क्वचित् न्यूनत्वम् क्वचिदाधिक्यम्, क्वचिल्लिङ्गानानुरूप्यम्, क्वचिद्वचनानानुरूप्यम्, क्वचित् असादृश्यम्, क्वचिदसंभवश्चेति एतेषां पृथग्दोषत्वं **वामनेन** अभिहितम् । अथ क्वचिदपवादः प्रदर्शित इति तद्द्वयमप्यनपेक्षितं काव्यदोषेषु एषामन्त-र्भावसंभवादित्यभिप्रायेण प्राचीनोक्तमनुवदति—**अथेत्यादिना** ।

तदुक्तं–**वामनेन काव्यालंकारे**—'हीनत्वाधिकत्वलिङ्गवचनभेदा-सादृश्यासंभवास्तद्दोषाः' [का. सू. ४-३-८] इति ।

## चित्रमीमांसा

तत्रोपमेयादुपमानस्य अपकृष्टत्वं न्यूनत्वम् । उत्कृष्टत्वमाधिक्यम् । द्वयमपि जात्या प्रमाणेन धर्मतो वेति प्रत्येकं त्रिविधम् । तत्र जातिप्रमाणगतन्यूनत्वाधिक्ये यथा—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥

## तत्त्वालोकः

तत्र न्यूनतास्वरूपमाह-**तत्रेति** । इयं च न्यूनता जात्या प्रमाणेन धर्मेण चेति त्रेधा । उत्कर्षस्वरूपमाह-**उत्कृष्टत्वमिति** । उपमाप्रयुक्ताधिक्यनिबन्धनापकर्षप्रयोजकमिति यावत् । एवं न्यूनत्वं आधिक्यं च त्रेधा संभवतीत्याह-**द्वयमपीति** । जात्या न्यूनता नाम ब्राह्मणत्वादिजात्या इत्यर्थः । प्रमाणेन परिमाणेन, धर्मतः साधारणधर्मत इत्यर्थः । तत्र जातिप्रमाणकृत-न्यूनत्वादि उदाहरति-**तत्रेति** । अत्र साहसकारित्वं साधारणधर्मं निमित्तीकृत्य जात्या अधिकानां त्रैवर्णिकानामुपमेयत्वम्, ततो न्यूनानां चण्डालानामुपमानत्वमिति तयोरुपमा परिकल्पितेति उपमेयजातित उपमानजातेर्न्यूनत्वमिति जातितो नोपमानाया उपमाया इदमुदाहरणम् ।

**ननु**—नित्यत्वे सत्यनेकव्यक्तिसमवेतस्य सामान्यस्य उत्कर्षापकर्षयोगः कथमुपपद्यत इति शंक्यम्— व्यक्तौ जन्माचारादिना उत्कर्षापकर्षसत्त्वे हीनव्यक्तिवृत्तित्वरूपस्यैव न्यूनत्वस्य जातौ विवक्षितत्वात् । **अत एव**—शास्त्रेषु प्रायेण जातिविषये बहुधा गतिर्विज्ञायते (१) सन्ततिविशेषप्रसूतिलक्षणजातिप्राधान्यवादः (२) दया–दाक्षिण्यविनयविद्यान्वितवृत्तिर्विशेषरूपाचारप्राधान्यवादः इत्यादि । आद्यस्तु कलिकोलाहलाकृष्टैः कतिपय-

तत्त्वालोकः

जनैरेव तत्र तत्र सांकर्यकरणे प्रवृत्तिरुपलभ्यते । अतश्च कालक्रमेण सन्ततिविशेषप्रसूतिलक्षणंजातिप्राधान्यमस्तमियादेव यदि प्रजाः अजागरूका भवेयुः । अयं च सन्ततिविशेषप्रसूतिलक्षणजातिप्राधान्यवादः मनु–सम्मतः । तदुक्तं **मनुना**—

> तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
> उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥ [१०.४२] इति ।

आचारलक्षणजातिप्राधान्यवादश्च **उज्ज्वलदत्तादिसम्मतः** । अत एव 'चण्डाल'शब्दव्युत्पत्तिनिमित्तं प्रदर्शयता **उज्ज्वलदत्तेन** – चण्डं विकटं अलं अलंकारो यस्य इत्युक्तम् । **शाकटायनश्च** पतिचण्डिभ्यां आलञ् [उणादि सू. ११४] इति व्युत्पत्तिं प्रदर्शयामास । चण्डयते कुप्यतीति 'चडिकोपे' इति धातोः आलञ् औणादिकः । एवं च आचारादि रूपगुणनिमित्तो व्यपदेशः । एष चाचारप्रधान्यजातिवादः न सन्ततिविशेष प्रसूतिलक्षणब्राह्मणत्वादिजातिनिराकरणेन शीलवृत्तादेरेव ब्राह्मणादिशीलप्रवृत्ति निमित्तत्वपरः । किन्तु हव्यकव्यभोक्तृत्वार्हतानिरासकाप्रशस्त्यप्रतिपादनपरः । अत एव **बोधायनमहर्षिः**

> विद्या तपश्च योनिश्चेत्येतत् ब्राह्मणकारणम् ।
> विद्यातपोभ्यां यो हीनः जातिब्राह्मण एव सः ॥

इति 'जातिब्राह्मण एवे'त्येवकारेण कर्मब्राह्मण्यं निराचकार न तु जन्मतो ब्राह्मण्यमपि । अतश्च चण्डालशब्दः वर्णसंकरजातिविशेषपर इति मन्वादिसंमतो जातिलक्षणप्रसूतिमूलो बोध्यं इति जन्मकृतोत्कर्षापकर्षौ व्यक्त्यधीनौ ।

एवं च जन्मनिमित्तिका जातिः यावच्छरीरपातं अविनाशिनी

## चित्रमीमांसा

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।

## तत्त्वालोकः

इत्युक्तम् । अत एव श्रीमन्निगमान्तगुरुभिः 'अतश्च स्वस्य जातिमनपहाय । तत्तज्जात्युचितप्रक्रियया भगवत्कैङ्कर्यस्य प्राप्तत्वमभिधाय,

तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम् ।

इत्युक्तरीत्या सत्वादिगुणतारतम्यमूलकं शारीरं ब्राह्मण्यादिकमन्यत । तादृश सत्वादितारतम्यनिबन्धनं मानसं सर्वजातिसाधारणं ब्राह्मण्यमन्यत् । शरीर गुणविशेषव्यवस्थिताः ब्राह्मणत्वादयः जातिविशेषाः औत्पत्तिकाः मरणान्ताः स्थिरा एव । मानससत्वादिगुणोन्मेषमूला ब्राह्मणत्वादयः सर्वजातीयानां सम्भावनार्हाः । तत्र प्रह्लादादिषु जन्मतस्सिद्धाः । अन्येषु सदाचार्य सम्बन्धविशेषादागन्तुकाः । तत्रापि शरीरजातिनिबन्धनाः केचन नियमाः असाधारणाः । मानसजातिनिबन्धनाः पुरुषार्थतदुपायप्रशंसादयः सर्वजाति साधारणाः । सर्वत्र शारीरो मानसो वा संभावितस्समुत्कर्षः गर्वहेतुश्चेत् अनर्थकरः । उभयत्र संभाव्यमानस्त्वपकर्षः स्वस्वरूपविज्ञानेन कार्पण्यमभि वर्धयन् अकिञ्चनाधिकारे उपायविशेषे प्रवर्तयतीति चेत् पुरुषार्थहेतुत्वेन श्लाघ्य एव । एवं जातिव्यवस्थायां जात्यनुगुणशीलव्यवस्थायां सत्यामपि सर्वेषां भगवद्भक्तत्वनिबन्धनाया उद्देश्यत्वप्रतिपत्तेर्न विरोधः' इति सम्यङ निरूपितम् ।

उपमेयापेक्षयोपमाने प्रमाणगतन्यूनतायाम् उदाहरणमाह—**वह्निस्फुलिङ्ग** इति। इह वह्निस्फुलिङ्गभान्वोः उपमायाम् उपमेयभूतभान्वपेक्षया उपमाने

चित्रमीमांसा

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् वेधाः विनिर्मित्सुरिव प्रजाः ॥

पातालमिव नाभिस्ते पर्वताविव च स्तनौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥

तत्वालोकः

वह्निकणे परिमाणन्यूनत्वं व्यक्तमेवेति उपमेयापेक्षया उपमाने न्यूनपरिमाणता-अजगजान्तरन्यायं स्मारयति ।

अथ उपमेयापेक्षया उपमाने जात्याधिक्यस्य **सरस्वतीकण्ठाभरणो-क्तम्** उदाहरणं प्रदर्शयति-**अयमिति** । अत्र वेधसः चक्रवाकस्य चोपमा परिकल्पिता । परं तु तिर्यग्जातेश्चक्रवाकस्य देवजातेरत्यधिकस्य ब्रह्मण उपमानभावः परिकल्प्यमानः चमत्कारापकर्षं जनयतीति भावः । इदं च पद्यं हीनत्विपर्ययस्योदाहरणमिति **भामहः** ।

एतेन काव्यालंकारसूत्रे जात्याधिकस्य

''विशन्तु विष्टयः शीघ्रं रुद्रा इव महौजसः ॥

इति यत् वामनेन उदाहृतं तन्मन्दम् । विष्टित्वस्य मनुष्यत्वादिवज्जातित्वा-प्रसिद्धेरिति ।

उपमेयापेक्षया उपमाने प्रमाणाधिक्यं दोष इति तमुदाहरति — **पातालमिति** । अत्र नाभिरूपोपमेयापेक्षया पातालरूपोपमाने, स्तनरूपोपमेयापेक्षया पर्वतरूपे उपमाने, वेणीरूपोपमेयापेक्षया कालिन्दीप्रवाहरूपोपमाने चाधिकप्रमाणवत्वं लोकसिद्धमिति हास्यास्पदमिति उपमेयापेक्षया उपमानेऽधिक परिमाणवत्वं क्वचिद्दोष इति भावः ।

चित्रमीमांसा

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोर्थः अत्यन्तमेव कद-र्थित इति अनुचितार्थतायामिमे न्यूनाधिक्ये पर्यवस्यतः ॥

धर्मतो न्यूनाधिक्ये तु हीनाधिकपदत्वरूपौ दोषौ ।

यथा —

तत्त्वालोकः

इत्थं प्राचीनालंकारिकानुरोधेन जाति–प्रमाण–कृतन्यूनत्वाधिक्ययोः पार्थक्येन दोषत्वे सत्यपि काव्यप्रकाशकारादि नव्यालंकारिकानुरोधेन उक्त भेदचतुष्टयस्य अनुचितार्थतायां पर्यवसानान् नानयोः पृथग्दोषत्वम् इत्याह— अत्रेत्यादिना । कदर्थितः तिरस्कृततां नीतः इत्यर्थः ।

न च उपश्लोक्यस्य निन्दाया अभिव्यज्यमानायां अनुचितार्थत्वम् अत्रोपश्लोक्ये निन्दा अभिव्यज्यत इति अत्र अनयोरन्तर्भाव इति वाच्यम् । अतिन्यूनस्य अत्यधिकस्य वा उपमानस्योपादानेन प्रकृते निन्दोपहासादिप्रत्यायकतया अस्त्येवानौचित्यमित्यनुचितार्थतास्त्येव ।

केचित्तु दोषान्तरलक्षणानाक्रान्तत्वे सत्यौचित्याभाव एवानौचित्यमिति अनुचितार्थत्वमित्याहुः । एवं चात्रानुचितार्थत्वमस्त्येवेत्युक्तं भवति । उक्तं च काव्यप्रकाशे दशमान्ते उपमायामुपमानस्य जातिप्रमाणगतं न्यूनत्वं अधिकता वा तादृशि अनुचितार्थत्वं दोष इति ।

इत्थं जातिप्रमाणाभ्यां न्यूनताधिक्ययोः अनुचितार्थत्वेऽन्तर्भावं प्रतिपाद्य धर्मतो न्यूनत्वाधिक्ये तु हीनाधकपदत्वरूपौ दोषौ इत्युपपादयति — धर्मत इति । मौञ्ज्या मुञ्जदर्भनिर्मितया मेखलया लांछितः चिन्हितः

## चित्रमीमांसा

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन्।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥

अत्राद्ये उपमानस्य मौञ्जीप्रतिबिम्बः तटिल्लक्षण धर्मो न निबद्ध इति न्यूनत्वम् ।

### तत्त्वालोकः

कृष्णाजिनपटं कृष्णमृगचर्मरूपं पटं वहन् वसानः स मुनिः नीलेन–नीलवर्णेन जीमूतभागेन मेघशकलेन आश्लिष्टः संयुक्तः अंशुमानिव व्यराजत् शुशुभे अत्र धर्मन्यूनतामुपपादयति–अत्रेति ।

अयं भावः—मुनि–सूर्ययोः उपमायां मौञ्जीलांछितस्य कृष्णाजिन धारिणः मुनेरुपमेयस्य केवलनीलजीमूनभागाश्लेषिणि अंशुमालिन्युपमाने (मौञ्जीप्रतिवस्तुनो विद्युतः अनुपादानात्) प्रतिबिम्बभूतधर्मानुपन्यासान्न्यूनता। सत्यां तु तस्यां मुनिसूर्ययोरुपमायां तद्विशेषणयोः कृष्णाजिननीलमेघयोः बिम्ब प्रतिबिम्बभाववतोः मौञ्जीतटितोः बिम्बप्रतिबिम्बभावः परिकल्पयितुं शक्यस्स्यात् । न चात्रैका तटित् निर्दिष्टेति मौञ्जीप्रतिबिम्बभूतस्य उपादानं न कृतमिति न्यूनपदत्वमेवेति ।

**न च**—अत्र जीमूतग्रहणेनैव विद्युतोऽपि [illegible]रितस्याक्षेप इति न्यूनपदत्वं परिहर्तुं शक्यमिति वाच्यम् । तटिनमन्तरेण नीलजीमूतसद्भावात् व्यभिचार इति न जीमूतमात्रेण तटित आक्षेपश्शक्यः । अत एव **प्रदीपकृता**–न चाक्षेपादिनाऽपि स्पष्टं प्रतीयते । अ[illegible]भावाद्यभावादिति न्यूनपदत्वमेवैतत् इत्युक्तम् ॥

चित्रमीमांसा

स पीतवासाः प्रगृहीतशार्ङ्गः
मनोज्ञभीमं वपुराप कृष्णः ।

तत्त्वालोकः

यच्च काव्यालंकारसूत्रकृता वामनेन 'अव्यभिचारे तु भवन्ती प्रतिपत्तिः केन वार्यते' इत्युक्त्वा 'धर्मयोरेकनिर्देशेऽन्यस्य संवित् साहचर्यात्' इति [वामन.का.सू ४-१ १०] सूत्रयित्वा—

निर्विष्टेऽपि बहिर्घने न विरमत्यन्तर्जरद्वेश्मनो
लूतातन्तुततिच्छिदः मधुपृषत्पिङ्गाः पयोबिन्दवः ।
चूडाबर्बरके निपत्य कणिकाभावेन जाताश्शिशोः
अङ्गास्फालनभग्ननिद्रगृहिणीचित्तव्यथादायिनः ॥

इति उदाजहार । 'अत्र मधुपृषतां वृत्तत्वपिङ्गत्वे सहचरिते । तत्र पिङ्गशब्देन पिङ्गत्वे प्रतिपन्ने वृत्तत्वप्रतीतिर्भवति' इति उपपादयामास, तन्नोपपद्यते ।

पिङ्गत्वसहचरितवृत्तत्ववत् माधुर्यादेरपि प्रतिपत्तिप्रसंगः साहचर्याविशेषात् । यद्येवं तदा—

'दुःखाभितप्तस्य जनस्य जाने
तुषारशीतः प्रतिभाति वह्निः ।'

इत्यत्र वह्नावपि शीतत्वसाहचर्यात्पाण्डुत्वस्यापि प्रतिपत्तिप्रसंगः । तस्माद्यस्यैव धर्मस्य निर्देशः तस्यैव प्रतिपत्तिः न्याय्या नान्यस्येति तु **महिमभट्टः** ।

धर्मत आधिक्येऽधिकपदत्वरूपो दोष इति मत्वा तद् उदाहरति—स पीतवासा इति । पीतं वासो वस्त्रं यस्य सः पीतवासाः पीताम्बरधारी,

## चित्रमीमांसा

शतह्रदेन्द्रायुधवान्निशायां
संसृज्यमानश्शशिनेव मेघः ॥

द्वितीये उपमेयस्य शङ्खादेरनिर्देशेन शशिनो ग्रहण मतिरिच्यते इत्याधिक्यम् ॥

## तत्त्वालोकः

इदं च विशेषणं मनोज्ञताप्रतिपत्त्यर्थं, प्रगृहीतं शार्ङ्गं येन सः प्रगृहीतशार्ङ्गः गृहीतधन्वा, इदं च विशेषणं भयजनकत्वप्रतिपत्त्यर्थम्, सः कृष्णः मनोज्ञं च तद्भीमं च मनोज्ञभीमं वपुराप-प्राप । क इव शतह्रदेन्द्रायुधवान् विद्युच्छक्र धनुर्भ्यां विशिष्टः निशायां रात्रौ शशिना संसृज्यमानो मेघ इव । अत्रापि विद्युद्विशेषणं मनोज्ञजनकत्वप्रतिपत्त्यर्थं । इन्द्रायुधविशेषणं मनोज्ञताप्रति पत्त्यर्थम् । अत्र उपमाने धर्मतः आधिक्यमुपपादयति–**द्वितीये इति** ।

अयं भावः-मेघकृष्णयोरुपमा । तत्र उपमेये पीतवासस्त्वं प्रगृहीत शार्ङ्गत्वं च विशेषणद्वयमुपात्तम् । उपमाने मेघे उपमेयविशेषणद्वयस्थानापन्नं शतह्रदेन्द्रायुधवत्वं चेति विशेषणद्वयमुपात्तम् ।

यत्पुनरुपमाने शशिसंसर्गरूपं तृतीयविशेषणमुपात्तम् । तदधिकं भवति । न ह्येतत्स्थानापन्नः कश्चिदर्थः उपमेये निर्दिष्टः । तस्मादुपमाने शशिसंसर्गो नोपादेयः । उपमेये कृष्णे शंखसंसर्गो यदि विवक्षितः तदा उपमानेऽपि मेघे शशिसंसर्गवद्वाच्यः । न चात्र तथा कृतः । अपि तु उपमाने शशिसंसर्ग उक्तः । उपमेये तत्स्थानापन्नशंखसंसर्गो गम्य इति (अयुक्तमिति) उपमानेऽधिकविशेषणोपादानप्रयोज्यनाधिक्यं समस्तीति ।

लिङ्गवचनभेदो यथा—

भाग्याभावात् करस्थोऽपि चिन्तारत्नमिव च्युतः ।
सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ॥ इ ।

तत्त्वालोकः

उक्तं च प्रकाशकृता—अत्रोपमेयस्य शंखादेरनिर्देशे शशिनो ग्रहणमतिरिच्यत इति अधिकपदत्वम् इति । भामहस्तु–अत्र शंखस्यानुपादानेऽप्यदोषतामाह—

शशिनो ग्रहणादेतदाधिक्यं किल न ह्ययम् ।
निर्दिष्ट उपमेयेऽथ वाच्यो वा जलजोऽत्र तु ।
न सर्वसारूप्यमिति विस्तरेणोदितो विधिः ।

इति । अयं च भामहाभिप्रायो न ग्रन्थकृदभिप्रायः ॥

इत्थं जाति–प्रमाणन्यूनताधिक्यमूलकोपमादोषयोः अनुचितार्थत्वरूपे काव्यदोषे धर्मन्यूनाधिक्यमूलकोपमादोषयोः न्यूनाधिकपदत्वरूपदोषयोरन्तर्भावमभिधाय लिङ्गवचनभेदयोः प्रक्रमभङ्गान्तर्भावं विवक्षुः लिंगवचनभेदावुदहरति–लिङ्गवचनेति ।

भाग्याभावात् दैवानुकूल्यराहित्यात्, करस्थोऽपि हस्तगतोऽपि चिन्तारत्नमिव चिन्तामणिरिव च्युतः भ्रष्ट इत्यर्थः । अत्र पूर्वार्धे च्युतः इति पुलिङ्गं नपुंसकेन चिन्तारत्नेन नान्वेति । यदि तु च्युतमिति नपुंसकतया विपरिणम्यते तदा उपमेये च्यवनरूपधर्मस्य समन्वयो नोपपद्यत इति उपमेये उपमाने वा अन्वेतुं शक्यो नोभयत्रेति लिङ्गभेदः प्रक्रमभङ्गरूपः । उत्तरार्धे

**चित्रमीमांसा**

**इमौ प्रक्रमभङ्गान्तर्भूतौ । कथं च्युतत्वादिरत्र साधारणधर्मो भवितुं नार्हति । उपमानोपमेययोर्मध्ये यत्र लिङ्गवचनसारूप्यं तत्रैवास्य समन्वयेनोभयान्वयाभावात् ।**

**तत्त्वालोकः**

हे देव ! कुलवधूरिव पतिव्रतेव, शुद्धाः शर्करादिमधुरद्रव्यसंयोगरहिताः, सक्तवः लाजादिकणा भक्षिताः । अत्र उपमेये अन्वीयमानस्य बहुवचनान्तस्य उपमानभूतवधूपदार्थे अन्वयाभावात् प्रक्रमभङ्गरूपः तदाह—**इमाविति**। प्रक्रमस्य प्रस्तावौचित्यस्य भङ्गः विच्छेदः यत्र सः **प्रक्रमभङ्गः** । तदुक्तं **अन्यत्र**—

'प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ ।
ह्लादः स्फुरन्ननास्वादी यत्र ग्लानत्वमश्नुते ॥
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः ।' इति ।

अस्य दूषकताबीजं च–यस्य यत्र यत्रान्वयेन भाव्यं तत्र सर्वत्रैकरूपेण सतायाः प्रतीतेः स्थगनमुपघातो वा ।

**ननु**

'गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः'

इत्यत्र लिङ्गभेदस्य

'तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः'

इत्यत्र वचनभेदस्य च यथा न दुष्टत्वमिति वक्ष्यते तद्वदेवात्रापीति कथमत्र प्रक्रमभङ्ग इत्याशंकते—**कथमिति** । समाधत्ते—**उपमानेति** ।

**चित्रमीमांसा**

तथा चोपात्तविशेषणविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा भवेत् ।

**तत्त्वालोकः**

एवं चात्र पूर्वार्द्धे करस्थपदार्थच्युतपदार्थस्य लिङ्गवचनसारूप्यमस्तीति तत्रैव समन्वयेन उपमानेऽन्वयाभावात । उत्तरार्धे 'शुद्धाः' इति पुत्रपुंसक सक्तुपदार्थसारूप्यं लिङ्गवचनयोरिति सक्तुपदार्थ एव समन्वयात् उपमाना-न्वयाभावात् इत्यर्थः । तथा च उपात्तधर्मविशिष्टस्यैव उपमानत्वम् उपमेयत्वं वा प्रतीयेत । अन्यतरस्मिन् प्रतीयमानं (धर्ममादाय) धर्मान्तरमादाय उपमा निर्वाह्या स्यात् । न च तथा प्रस्तुतम् । ततश्चोपमानोपमेययोः कस्य चित्सविशेषणत्वम् , अन्यस्य नेति **विशेषणप्रक्रमभङ्गो**ऽस्त्येवेति आह— **तथा चेत्यादिना** ।

**वस्तुतस्त्वत्र**—वचनभेदोदाहरणे–कुलवधूरित्यस्य बहुवचनान्तत्वेन विपरिणामे सति पुल्लिङ्गसक्तुपदार्थेन स्त्रीलिङ्गकुलवधूपदार्थेन चान्वयः संपद्यते। एवं 'शुद्धाः' इत्यस्यापि उभयत्रान्वयः उपपद्यते । कुलवधूपक्षे शुद्धत्वं अन्यविषयकानुरागादिशून्यत्वम् , सक्तुपक्षे शुद्धत्वं आस्वाद्यताप्रतिबन्धक वस्तुसंपर्कशून्यत्वमिति यद्यपि समाधातुं शक्यम् । एवमेव क्वचित् वाक्यभेदं परिकल्प्य अन्वयबोधनिर्वाहः क्रियते अथापि 'संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते' इति न्यायेन वाक्यभेदकल्पनामन्तरा अन्वयबोधानुकूल्यसंपादन युक्तमित्यभिप्रायेण दोषमध्ये परिगणनं कृतमिति बोध्यम् ।

इत्थं वामनोक्तेषु षट्सु दोषेषु चतुर्णां दोषविशेषयोरन्तर्भावमुपपाद्य धर्मस्य अनुगामित्वविवक्षायां कालपुरुषविध्यादीनामुपमेयोपमानयोरन्यतरत्रैव

चित्रमीमांसा

प्रतीयमानेन तु धर्मान्तरेण उपमा निर्वाह्या स्यात् । ततश्च उपमानोपमेययोः कस्यचित्सविशेषणत्वमन्यस्य नेत्येवं विशेषणप्रक्रमभङ्गरूपता ।

केचित्तु–कालपुरुष–लोडर्थादिभेदमपि दोषमाहुः ।

यथा— तस्यापनोदाय फलप्रवृत्ता-
वुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्ता-
त्समुद्रनेमिं पितुराज्ञयेव ॥

अत्र समुद्रनेमिमत्यजमिति अन्वेति न तु त्यक्ष्यामीति ।

तत्त्वालोकः

आनुकूल्यं नोभयत्रेति सोऽपि भेदः प्रक्रमभङ्ग एवान्तर्भवतीति हृदये निधाय केषांचिद्रुद्रटादीनां मतमनूद्योदाहरति । केचित्त्विति । कालः–भूत भविष्यद्वर्तमानाः । पुरुषाः–प्रथममध्यमोत्तमाः, लोडर्थः –विधिनिमन्त्रणा मन्त्रणाभीष्टसंप्रश्न प्रार्थनादिः ।

चारमुखात्सीताया अपवादं श्रुत्वा तत्परिहारोपायान्तरमनवगत्य सीता त्यागेनैव तं परिमार्ष्टुमिच्छू रामभद्रः आह—तस्येति । तस्य अपवादस्य, अपनोदाय परिमार्जनाय, फलप्रवृत्तौ अपत्यलाभे उपस्थितायाम्–सन्निहिताया मपि, निर्व्यपेक्षः निःस्पृहस्सन् वैदेहसुताम् 'जनको ह वैदेह आसांचक्र' इति श्रुत्यन्तजोघुष्यमाणपरिशुद्धतमजनकसुतामपि, पुरस्तात् पूर्वं वनगमना त्प्राक्, पितुराज्ञया दशरथवचनानुसारेण समुद्रनेमिमिव भूमिमिव, त्यक्ष्यामि हास्यामि इत्यर्थः ।

अत्र कालभेदस्य दोषत्वे हेतुमाह–अत्रेति । अत्र त्यक्ष्यामीति

चित्रमीमांसा

पुरुषभेदो यथा—

शरीरमात्रेण नरेन्द्र तिष्ठन्
आभासि तीर्थप्रतिपादितर्द्धिः ।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः ॥

नीवारे आभातीत्यन्वेति न त्वाभासीति ।

तत्त्वालोकः

प्रतिपाद्यभविष्यत्कालावच्छिन्नक्रियाविशेषस्य वैदेहसुतायामन्वय इव न समुद्रनेमिरूपेऽर्थे इति भविष्यत्कालघटितत्यागस्य भूतकालघटितत्यागकर्मीभूतसमुद्रनेमिरूपार्थानन्वयात् धर्मस्य नानुगामित्वमिति । त्यक्ष्यामीति प्रकृतभविष्यत्कालेनानिर्वाहात्क्रमभङ्गः इति भावः ।

एवं पुरुषभेदेऽपि धर्मे साधारण्यं हीयते तदुदाहरति-**शरीरमात्रेणेति** । हे नरेन्द्र नरश्रेष्ठ रघो । तीर्थप्रतिपादितर्द्धिः सत्पात्रवितीर्णैश्वर्यः

योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि ।
पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥

इतिहलायुधः । शरीरमात्रेण तिष्ठन् आरण्यकोपात्तफलप्रसूतिः अरण्ये भवाः आरण्यकाः मनुष्याः मुनिप्रमुखाः अरण्यान्मनुष्ये (पा. सू. ४-१ १२९) इति वुञ्प्रत्ययः। तैः उपात्ता फलमेव प्रसूतिर्यस्य सः स्तम्बेन काण्डेन अवशिष्टः, प्रकृत्यादित्वात् तृतीया, नीवार इव तृणधान्यमिव आभासि शोभसे।

अत्र प्रक्रमभङ्गमुपपादयति-**नीवार इति** । अयं भावः – अत्र रघोः नीवारस्य चोपमोपनिबद्धा । साधारणधर्मश्च भानम् तस्य सम्बोध्ये उपमेये रघौ

## चित्रमीमांसा

विध्यादिभेदो यथा (रघुवंशे)

आशास्यमन्यत्पुनरुक्तभूतं
श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव ॥

भवन्तमलभतेति अन्वेति न तु लभस्वेति ॥

### तत्त्वालोकः

आभासि इति मध्यमपुरुषोऽन्वेति, उपमाने नीवारे तु आभातीत्येव । अतश्च सम्बोध्योपमेयान्वय इव उपमाने अन्वयो न भवतीति प्रक्रान्तमध्यमपुरुषेण उपमाया अनिर्वाहात् प्रक्रमभङ्गो दोष इति ।

विध्यादिभेदमुदाहरति – विध्यादीति। रघुं प्रति वरतन्तुशिष्यस्य कौत्सस्य वाक्यम् । सर्वाणि श्रेयांसि समस्तपन्मङ्गलानि अधिजग्मुषः प्राप्तवतः ते तव अन्यत् पुत्रलाभातिरिक्तम् आशास्यम् आशीस्साध्यम् आशंसनीयं पुनरुक्तभूतम् पौनरुक्त्यदोषग्रस्तम् पुत्रव्यतिरिक्तांशस्य सर्वस्यापि सिद्धत्वात् पिष्टपेषणन्यायसाजात्यप्रसङ्ग इति यावत् । किंतु ईड्यं स्तुत्यं भवन्तं भवतः पितेव आत्मगुणानुरूपम् आत्मगुणसदृशम् पुत्रं लभस्व प्राप्नुहि । आशिषि-लिङ्लोटौ [पा. सू. ३-३-१८२] इत्याशिषि लोट् ।

अत्र प्रक्रमभङ्गमुपपादयति भवन्तमिति । अत्र भवतः पिता भवन्तं यथा अलभत तथा त्वम् त्वया तुल्यगुणं पुत्रं लभस्व इति, न तु भवतः पिता लभस्वेति । एवं चात्र आशास्यमानताविशिष्टपुत्रलाभस्य उपमेये युष्मदर्थेऽन्वयः ।

**तत्त्वालोकः**

तद्वत् आशास्यमानान्यरहितपुत्रलाभान्वययोग्यपितरि सिद्धत्वेन अनन्वयात् आशीःप्रक्रमभङ्गः इति भावः । **विध्यादीनामित्यादिशब्दात्** संग्राह्यस्य आशिषो भेदः उदाहृतः । विधिभेदस्य तु—

गंगेव प्रवहतु ते सदैव कीर्तिः ।

इत्यादि संग्राह्यम् । कालपुरुषविध्यादिभेदो दोष इति **काव्यप्रकाशकारादपि** प्राचीनेन **रुद्रटेनाभिहितम्**

सामान्यशब्दभेदस्सोयं यत्रापरत्र शक्येत ।
योजयितुं नाभग्नं तत्सामान्याभिधायि पदम् ।
तल्लिङ्गकालकारकविभक्तिवचनान्यभावसद्भावात् ।
उभयोस्समानयोरिति तस्यां भिद्येत किंचित्तु ॥

इति । तदेतदेव **प्रकाशकृता** अभिहितम्—कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीति असावपि भग्नप्रक्रमतयैव व्याप्तः इति ।

**यद्यपि** महाभाष्ये पस्पशाह्निके 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इति व्याकरणाध्ययनस्य मुख्यं प्रयोजनपञ्चकं प्रदर्श्य आनुषङ्गिकानि प्रयोजनानि प्रदर्शयता **पतञ्जलिमहर्षिणा**

उतोत्वस्मै तन्वं विसस्रे । जायेव पत्य उशती सुवासाः ।

इत्युत्तरार्धया ऋचा प्रत्यक्षतः शब्दस्वरूपस्य श्रोत्रेणोपलम्भेऽपि प्रकृतिप्रत्यय विभागतदर्थपरिज्ञानवतः वाक् स्वात्मानं विवृणुते इत्यादिना व्याकरणज्ञानस्य युक्ततां उपपादयिष्यता प्रथमतः तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग्विदे वाक् स्वमात्मानं विवृणुते इति व्याख्यात·

**चित्रमीमांसा**

**असादृश्यासंभवावुपमायां अनुचितार्थतायां पर्य-वस्यतः ।**

**तत्त्वालोकः**

त्वेन अत्रापि कालपुरुषविध्याद्यर्थव्यत्यासपरिकल्पने बाधकं नास्तीति वक्तुं शक्यम् । **अथापि** अस्य प्रकृतार्थप्रतीतिविघातस्यानुभवगोचरस्य सत्वाद्दोष-विषयत्वमपरिहरणीयमित्याशयः ।

एवं सहृदयहृदयविसंवादिधर्मनिमित्तक सादृश्यं यत्रोपनिबद्ध्यते तत्र असादृश्यस्य उपपत्तिशून्योपमानपरिकल्पनेन असंभवस्य च पृथग्दोषत्वमभिहितं प्राचीनैर्वामनादिभिः तदेतदनुभाष्य, तयोः परिगणितेषु काव्यदोषेष्वन्तर्भाव माह – **असादृश्येति** ।

असादृश्यासंभवौ **वामनेन** प्रदर्शितौ–अप्रतीतगुणसादृश्यमसादृश्यम् (का. सू. ४ २ १०) अनुपपत्तिरसंभवः (४ २ २०) इति ।

ननु असादृश्यस्य कथमनुचितार्थतायां पर्यवसानम् ? अनुचितार्थत्वं च कीदृशमिति चेदुच्यते–सादृश्यमात्रसारा ह्युपमा, सादृश्यं च साधारणधर्म-संबन्धः, स च धर्मे साधारण्यमूलः । तत्वं च क्वचिदनुगामितया क्वचिद्बिम्ब प्रतिबिम्बभावदिना वा भवितव्यम् येन केनाऽपि प्रकारेण धर्मे साधारण्यं सहृदयसंवादं न लभेत चेत्तदा असंबद्धार्थघटना कविना कृतेति प्रकृतोत्कर्षः न सिद्ध्यतीति उपश्लोक्यमानार्थोत्कर्षाभिप्रायेण प्रयुक्तापि तदप्रतिपादने औचित्यविरहः स्पष्ट एव । इदमेव असादृश्यं अनुचितार्थत्वं च । एव-मनुपपत्तिरूपोऽसंभवश्च ॥

## चित्रमीमांसा

असादृश्यं यथा-(वामनस्य काव्यालंकारसूत्रे)

'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम् ।'

काव्यस्य शशिना सादृश्यमप्रसिद्धम् । यद्यर्थानां रश्मीनां च सादृश्यं प्रसिद्धं स्यात् तदा तदीयबिम्बप्रति-बिम्बभावेन काव्यशशिनोः सादृश्यमप्रसिद्धमप्यानीयेत, न च तदप्यस्ति ॥

### तत्त्वालोकः

'असादृश्यासंभवयोः अनुचितार्थतायां अन्तर्भावं प्रतिपादयताऽपि प्रकाशकृता—वाक्यदोषनिरूपणावसरे 'उपश्लोक्यमानस्य तिरस्काराभिव्यञ्जकत्वंनु अचितार्थत्व'मिति प्रतिपादितम् तत्तु यद्यपि ।

'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्'

इत्यत्र न समन्वेति तिरस्काराप्रतीतेः । अथापि—पुरस्कारप्रतिपादनाय प्रवृत्तेन पुरस्कार्ये अपुरस्कृते सति तिरस्कार एव पर्यवसानमिति पुरस्कार्यस्य अपुरस्कारोऽपि तिरस्कार एवेति अभिप्रायेण तथा प्रतिपादितम् ।

यद्वा-दोषान्तरलक्षणानाक्रान्तत्वे सति यत्र कल्पितसादृश्ये औचित्यं नास्ति तत्र अनुचितार्थत्वम् । एवं च दोषान्तरानाक्रान्तत्वे सति औचि-त्याभाव एवानौचित्यमित्यत्र तात्पर्यान्न कोऽपि दोषः ।

असादृश्यमुदाहरति–असादृश्यं यथेति । असादृश्यमुपपादयति –काव्यस्येति ।

## तत्त्वालोकः

**न च**–'तया विवृद्धाननचन्द्रकान्त्या' इत्यत्र शरदपर्णयोः स्वतस्सादृश्यमप्रसिद्धमिति तत्राप्यसादृश्यं दोषोऽस्त्विति वाच्यम् 'विवृद्धानने'त्यादौ समासभेदाश्रयणेन उपात्तसाधारणधर्मयोरेव बिंबप्रतिबिम्बभावमूलकतया धर्मे साधारण्यं सम्पाद्य सादृश्यं निर्व्यूढम् तद्वदत्रापि यदि उपपादयितुं शक्येत तदा दोषोद्धारो भवेत् न चात्र तथेत्यभिप्रेत्याह–**यदीति** ।

अयमभिप्रायः—यस्य कस्यापि पदार्थस्य परिकल्प्यमानं सादृश्यं चमत्कारजनकगुणाधीनम् । यदि अर्थानां रश्मीनां च काव्यशशिविशेषणानां सादृश्यप्रयोजकधर्मद्वारा सादृश्यं प्रसिद्ध्यति, तदा काव्यस्य शशितुल्यत्वं आनीयेत । न चात्र रश्मीनां साधारणो धर्मः प्रसिद्धः । अतश्चात्र काव्यस्य शशितुल्यत्वे सिद्धेऽर्थानां रश्मितुल्यत्वम् अर्थरश्मीनां सादृश्ये सिद्धे काव्यस्य शशितुल्यत्वसिद्धिरित्यन्योन्याश्रयदोषः ॥

**न चैवं**— हेतुहेतुमद्भावापन्नैकविषयान्वितान्यविषयकपरंपरितोपमायाः—

दूरादयश्चक्रनिभस्य तन्वी
तमालतालीवनराजनीला ।
आभाति वेलालवणाम्बुराशे
र्द्धारा निबद्धेव कलङ्करेखा ॥

इत्यादौ वक्ष्यमाणायाः उच्छेदापत्तिः । तत्रापि अम्बुराशेरयश्चक्रेण या उपमा तस्याः वेलायाः कलङ्करेखया उपमायां हेतुत्वात् तथा वेलायां कलङ्करेखयोपमायां सिद्धायां अम्बुराशेः अयश्चक्रोपमसिद्धिरित्यन्योन्याश्रयणात् इति वाच्यम् ।

वैषम्यात् । उक्तपरम्परोपमायां हेतुहेतुमद्भावसत्वेऽपि अम्बुराशौ

यथा वा— (प्रतापरुद्रयशोभूषणे)

एष विन्ध्याचलस्सान्द्रकुञ्जोल्लसितनिर्झरः ।
भालेक्षणस्फुरद्वह्निशिखाटोप इवेश्वरः ॥ इति ।

तत्त्वालोकः

अयश्चक्रे च वर्तुलाकारवत्त्वेन, अन्येन वा प्रतीयमानेन धर्मान्तरेण उपमा निर्वाहसम्भवात् नान्योन्याश्रयदोषप्रसक्तिः । इह तु – यस्य कस्यापि धर्मस्याप्रतीत्या सादृश्यं न सिद्ध्यतीति अनौचित्यमस्त्येवेति ॥

यदि तु–'ग्रथ्नामि काव्यशशिन'मित्यत्र

'लोकोत्तरचमत्कारवर्णनानिपुणः कविः'

इत्युक्तरीत्या सहृदयहृदयाह्लादजनकमेव काव्यं नान्यदिति काव्यशशिनोः आह्लादकारित्वं प्रतीयमानं समानो धर्मः इति काव्यशशिगतार्थरश्मीनां विततत्वमेव साधारणो धर्म उपात्त एवेति कुत अनौचित्यमिति विभाव्यते तदात्र निवारितोऽयं दोषः । अथाप्यन्यत्र एष दोषः स्थित एवेति उदाहरणान्तरमाह—यथा वेति ।

उदाहरति- एष इति । सान्द्रेण निबिडेन कुञ्जेन वृक्षावृतान्तर–प्रदेशेन 'कुञ्जो वृक्षावृतान्तरे' इति वैजयन्ती । उल्लसितः शोभितः निर्झरः जलप्रवाहः यस्मिन् सः, एषः विन्ध्याचलः विन्ध्याख्यः पर्वतविशेषः । भालेक्षणे ललाटनेत्रे स्फुरन् यो वह्निः तस्य शिखायाः ज्वालायाः आटोपः संभ्रमो यस्मिन् सः ईश्वर इव भातीत्यध्याहारः ॥

चित्रमीमांसा

असंभवो यथा–(राजमित्रकाव्य)

निपेतुरास्यादिव तस्य दीप्ताः
शराः धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधाराः
दिनार्धभाजः परिवेषिणोऽर्कात् ॥

ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न संभवन्तीत्यसंभवः ॥

तत्त्वालोकः

अत्र कुञ्जोल्लसितनिर्झरस्य, विन्ध्याचलस्य, फालेक्षणस्फुरद्वह्नेरीश्वरस्य च मिथो न सादृश्यं विगुणत्वात् । अतश्चात्र अनौचित्यमपरिहार्यमिति यावत् । एतेन 'ग्रथ्नामीत्युदाहरणे वामनोक्त इतरेतराश्रयदोषः उद्धर्तुं शक्य इति भावः ॥

उपमानोपमेयभावः उपपन्नोपमाननिमित्तकः, यत्र उपमानमुपादीयमानं अनुपपन्नं चेत् तदा असम्भवाख्यमतिरिक्तं दोषमभिदधते प्राञ्चः । तत्र तु परं दोषत्वमिष्यते परंतु अतिरिक्तता नेष्टा तस्य अनुचितार्थतायामेव पर्यवसानादिति भामहोदाहृतं शाखावर्द्धनीयं पद्यमुदाहरति – असंभवो यथेति । धनुर्मण्डलमध्यभाजः मण्डलाकारकार्मुकमध्यगतस्य, तस्य राज्ञः आस्यादिवेत्युत्प्रेक्षा, दीप्ताः ज्वलन्तः शराः, दिनार्धभाजः अह्नो मध्यकालगतस्य, परिवेषिणः परिधिमतः, अर्कात् विवस्वतः सकाशात्, जाज्वल्यमानाः अत्यधिकं ज्वलन्त्यः, वारिधारा इव जलधारा इव, निपेतुः निष्पेतुरित्यर्थः ।

असंभवमुपपादयति—ज्वलन्त्योऽम्बुधारा इति । अत्र शराणां वारि

**तत्त्वालोकः**

थाराणां चोपमा निबद्धा । तत्र उपमानांशे मध्यन्दिनगतपरिवेषविशिष्टसूर्याद् जाज्वल्यमाना वारिधाराः न हि कदाचिन्निष्पतन्ति । अतश्च वारिधारासु ज्वलनम्, ज्वलनविशिष्टवारिधारायाः विवस्वतः पतनं वा न अनुभवानुसारि। तस्मात्तादृशार्थस्य निबद्धस्य असंभवादयं असंभव उच्यते। एवंविधासंभावितार्थस्योपमानतयोपादाने वस्तुतो धनुर्मण्डलमध्यनिस्सरज्ज्वलच्छरनिष्पतनस्याऽपि असंभवः ख्याप्येत उपमानानुरूप्यस्य उपमेये विवक्षितुं युक्तत्वात् एतेन प्रकृतेऽर्थेऽनौचित्यमेव स्यात् उपपादितश्चायमसंभवो **भामहेन**—

कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः ।
असंभवादयं युक्त्या तेनाऽसम्भव उच्यते ॥ इति ।

अयं चासंभवः—**काव्यप्रकाशकृता**—अनुचितार्थतायां पर्यवसितः —'अत्रापिज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति । इति ।

**नन्वेवं तर्हि**—

सुवृत्तमुक्ताफलजालचित्रितं
भवेदखण्डं यादि चन्द्रमण्डलम् ।
श्रमाम्बुबिन्दूत्करराजितं सखे
ततो मुखं तेन तवोपमीयते ॥

इत्युत्पाद्योपमेति व्यवहृतायां कविकल्पितोपमायां दुष्टोपमेति व्यवहारप्रसंगः । यतश्चात्र पूर्णचन्द्रमण्डलस्य लोकप्रसिद्धस्यैव मुक्ताफलजालचित्रितत्वविशिष्टवेषेण उपमानत्वं कविकल्पितमित्यत्रापि सुवृत्तमुक्ताफलजालचित्रितत्वं चन्द्रमण्डले न संभवतीत्यसम्भवोऽस्त्येवेति कथमेवमादौ उत्पाद्योपमेति व्यवहृता **भोजराजादिभिः** इति चेत् ।

### तत्त्वालोकः

सत्यम् अथापि—यद्यर्थघटिततया तादृशविशेषणविशिष्टोपमानत्व-विवक्षा कविसंमतेति उंन्नेतु शक्या। 'अत एव-रुद्रटेन काव्यालंकारे—

अनुपममेतद्वस्तु इत्युपमानं तद्विशेषणं चासत् ।
संभाव्य स यद्यर्थं क्रियते सोपमोत्प्रेक्षा ॥

इत्यभिहितमित्यदोषादिति चेत् । निपेतुरास्यादिवेत्यत्रापि—यदि विवस्वतः सकाशात् जाज्वल्यमानाः वारिधाराः पतेयुः तादृशाश्शराः इति निष्पतत्सु शरेषु तीव्रपातित्व,सानुबन्धपातित्वासंख्येयत्वानां प्रतिपत्त्यर्थं तथा कविना परिकल्पितमिति किमित्युपमा न स्यात्। यदिशब्दानुपादानेऽपि यद्यर्थान्वययोग्यतासत्त्वेऽध्याहारादिनापि तथा कर्तुं शक्यत्वात् नात्रासंभवःअनौचित्यावहो भवति। अत एव उक्तोदाहरणे असंभवस्याभावं संभाव्य उपमोत्प्रेक्षयोः अतिशयप्रतिपादनाय एवंविधार्थपरिकल्पनं न दोषायेत्यभिहितं **भामहेन**—

तत्रासंभवितार्थेन कः कुर्यादुपमां कृती ।
को नाम वन्हिनौपम्यं कुर्वीत शशलक्ष्मणः ॥

यस्यातिशयवानर्थः कथं सोऽसंभवो मतः ।
इष्टं चातिशयार्थत्वं उपमोत्प्रेक्षयोर्यथा ॥ इति ।

**एतेन**—

बालेन्दुवक्राण्यविकासभावात्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥

तत्त्वालोकः

इत्यादौ तादृशवनस्थलीनखक्षतस्यासंभवेऽपि कविना अतिशयप्रतिपादनाय तथा संभाव्यत इत्युत्प्रेक्षायां नासंभवो दोष इत्यपि प्रतिपादितं भवति ।

एव तर्हि असंभवस्य न कुत्रापि दोषतेति पर्यनुयोगे तु अस्त्यसंभवः उपमादूषकः अथापि नोक्तोदाहरणे । अपितु—

चकास्ति वदनस्यान्तः स्मितच्छायाविलासिनः ।
उन्निद्रस्यारविन्दस्य मध्ये मुग्धेव चन्द्रिका ॥

इत्यादौ विकासिनो वदनस्य अन्तः स्मितच्छायायाः संभवेऽपि उन्निद्रारविन्दे चन्द्रिकाया असंभव एव । चन्द्रोदये पद्मस्य नियमेन मुकुलीभावात् । **रुद्रटस्तु**-

उपमानं यत्र स्यादसंभवत्तद्विशेषणं नियमात् ।
संभूतमयथार्थं विज्ञेयोऽसंभवस्सः इति ॥

इति लक्षयित्वा—

सुतनुरियं विमलाम्बरलक्ष्योरुमृणालमूललालित्या ।
अजलप्रकृतिरदूरस्थितमित्रा गगननलिनीव ॥

इत्यत्र यथार्थं विना दुष्टतेति **नमिसाधुः** ।

एवं च यथार्थविवक्षायां असंभवस्य दोषता रुद्रटेन परिहृतेति बोध्यम् । ग्रन्थकृताऽपि पूर्वं न हि वस्तुसदर्थनिबन्धना उपमितिक्रियानिष्पत्तिरुपमेति लक्षणमुच्यते किंतु कविविवक्षानिबन्धना इति ॥

इत्थं वामनाभिमतान् षड्दोषान् प्रकाशकारादिसंमतदोषयोरन्तर्भाव्य रुद्रटादिरीत्या उपमानाप्रसिद्धिरपि कश्चिद्दोष इति तदभिधत्ते —

चित्रमीमांसा

केचिदुपमानाप्रसिद्धिं पृथग्दोषमाहुः । यथा—

वाष्पदिग्धेक्षणं वक्त्रं तरुण्याः परिदृश्यते ।
तुषारसिक्तच्छदनं तरङ्गिण्या इवोत्पलम् ॥

तत्त्वालोकः

केचिदिति । केचित् रुद्रट-विद्यानाथादयः इत्यर्थः । तदुक्तं काव्यालंकारसूत्रे रुद्रटेन—

उपमानतया लोके वाच्यस्य न तादृशं प्रसिद्धं यत् ।
क्रियते यत्र तदुत्कटसामान्यतयाऽप्रसिद्धिस्सा ॥

इति । उदाहृतं च—

पद्मासनसन्निहितो भाति ब्रह्मेव चक्रवाकोऽयम् ।
श्वपचश्यामं वन्दे हरिं इन्दुसितो बकोऽयमिति ॥

इदं च धर्मस्यानुगामितायामुदाहरणं, ब्रह्मकेशवचक्रवाकानां क्रमेण-पद्मासनत्वश्यामत्वसितत्वैः चक्रवाकश्वपचबकास्समाना अपि उपमानत्वेन न प्रसिद्धाः । बिम्बप्रतिबिंबभावमूलकतया धर्मे साधारण्यसंपादनेऽपि उपमानस्याप्रसिद्धिर्दोष एवेति द्वितीयं प्रकारमुदाहरति—यथेति । तरुण्याः नायिकायाः, बाष्पदिग्धेक्षणं अश्रुव्याप्तनयनवद्वक्त्रं मुखं तरङ्गिण्याः शैवलिन्याः तुषारसिक्तच्छदनम् तुषारार्द्रदलमुत्पलमिव परिदृश्यते ।

अत्र बाष्पदिग्धेक्षणस्य तुषारसिक्तच्छदनस्येत्यनयोः वस्तुतो भेदे प्रतीतेऽपि बिम्बप्रतिबिंबभावमूलतया धर्मे साधारण्यं सम्पादयितुमलम् । अथापि उत्पलमुखयोः उपमा न प्रसिद्धेत्युपमानभूतमुत्पलं मुखानुयोगिक

## चित्रमीमांसा

अत्र बाष्पदिग्धेक्षणं तुषारसिक्तच्छदं इत्यनयोः बिम्बप्रतिबिम्बभावेन सादृश्यसंभवेऽप्युत्पलस्य मुखं प्रति उपमानत्वाप्रसिद्धिरेव दोषः ।

अथैषां दोषाणां यथासम्भवमपवादाः प्रदर्श्यन्ते ।

कविसमयसंमतेषु जात्या प्रमाणेन च न्यूनत्वाधिक्ये न दोषौ ।

## तत्त्वालोकः

सादृश्यप्रतियोगितया न प्रसिद्धम्, अपि तु नेत्रयोरेव उपमानत्वेनेत्युपमानाऽप्रसिद्धिरेव दोषः । तदाह—अत्रेति । विद्यानाथेनापि उक्तम्-

'अप्रसिद्धोपमानं यत् अप्रसिद्धोपमं मतम् ॥ इति ।

इत्थं केषांचित् दोषाणां अन्यत्रान्तर्भावमुपपाद्य तेषामपि यथासंभवमपवादान् संक्षेपेण प्राचीनैः प्रतिपादितान् विस्तरतः प्रतिपादयितुकामः अवतारयति-अथेति। अथ-पूर्वोक्तदोषेषु केषाचित् उक्तदोषेष्वेवान्तर्भावस्य च निरूपणानन्तरम् एषां-अनुचितार्थतायामन्तर्भूतयोः हीनाधिकपदत्वरूपयोश्च दोषयोः यथासंभवमनुभवमहाकविप्रयोगादीनां उपलंभानुरोधेन अपवादाः-अदोषत्वानि प्रदर्श्यन्ते इति यावत् ।

तत्र क्वचित् जात्या प्रमाणेन च न्यूनत्वाधिक्ये दूषकतायां प्रयोजके न भवत इत्यत्र हेतुमाह-कविसम्मतेष्विति । यस्मिन्नर्थे कवेः जाति-प्रमाणान्यतरन्यूनताधिक्ये सम्मते भवतः तदा न दोषत्वमिति । तत्रोदाहरणं

### चित्रमीमांसा

यथा —

तवाननसमश्चन्द्रः चन्द्रतुल्यं त्वदाननम् ।
द्व्यणुकं मध्यसदृशं मध्यं द्व्यणुकसन्निभम् ॥

अत्र कविसमयप्रसिद्धेः न किंचिदनौचित्यम् । उपमेयोपमानगताधिकधर्मोपादानस्य एकैकधर्मकानेकोपमार्थत्वेन वा साधारणधर्मवत्तासम्पादनार्थत्वेन वा धर्मिस्वरू-

### तत्त्वालोकः

आह-यथेति । अत्र आननचन्द्रयोरुपमायां उपमाने जात्या न्यूनता-चन्द्राननयोरुपमायां चन्द्रस्याधिक्यं च न दोषः, तथा मध्यद्व्यणुकयोरुपमायां उपमाने द्व्यणुके परिमाणतो न्यूनता न दोषः। द्व्यणुकमध्ययोरुपमायां ये उपमाने परिमाणत आधिक्यं न दोषः ।

तदेतदुपपादयति-अत्रेति । तदुक्तं वाग्भटेन काव्यानुशासने-'तत्र कविसमये सतामपि भावानां केषांचिदनिबन्धः । क्वचिदसतामपि भावानां निबन्धः-यथा पुष्पफलयोश्चन्दनद्रुमे सतोरप्यनिबन्धः । दिवा नीलोत्पलादीनां विकाससद्भावेऽपि अनिबन्धः। द्वितीयस्य यथा-नदीषु नीलोत्पलादीनां, यशोहास्ययोः शौक्ल्यस्य, अयशःपापयोः कार्ष्ण्यस्य' इत्यादि । तद्वदत्रापि मुखचन्द्रयोः चन्द्रमुखयोः उपमायां जात्या न्यूनताधिक्ये कविसमयसिद्ध । तथा द्व्यणुकमध्ययोः मध्यद्व्यणुकयोश्चोपमायां प्रमाणतन्न्यूनत्वाधिक्ये न दोषौ इति भावः ।

धर्मतः [illegible]धिक्ययोः क्वचिददोषत्वमित्युपपादयितुं कारणान्य[illegible] ।

धविशेषलाभार्थत्वेन वा विधान्तरेण वा प्रस्तुतकार्यान्तरार्थत्वे धर्मतो न्यूनत्वाधिक्ये न दोषौ ॥

यथा —

क्षीरोदवेलेव सफेनपुञ्जा,
पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥

तत्त्वालोकः

अयं भावः—उपमाने यावन्ति विशेषणानि तदपेक्षया उपमेयेऽधिक-विशेषणोपादानम्, उपमेये यावन्ति विशेषणानि तदपेक्षया उपमाने अधिक विशेषणोपादानं च यदा एकस्मिन्नुपमेये अनेकोपमानसंबन्धफलकं धर्मे साधारण्यसंपादकं वा, धर्मिस्वरूपविशेषावगमकं वा प्रकारान्तरेण प्रकृतकार्यान्तरोपयोगि वा भवेत्तदा अदोषतैवेति ।

तत्राद्यमुदाहरति—यथेति । नवक्षौमनिवासिनी तथा नवं दर्पणमादधाना सा सफेनपुञ्जा क्षीरोदवेलेव, पर्याप्तचन्द्रा शरत्त्रियामेव भूयो बभौ इत्यन्वयः ।

नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयतीति नवक्षौमनिवासिनी । वस्तेराच्छादनार्थाण्णिनिः । तथा नवं दर्पणमभिनवं मुकुरमादधाना बिभ्रती, सा गौरी, सफेनपुञ्जा सडिण्डीरपङ्क्तिः । क्षीरोदवेलेव क्षीरमुदकं यस्य सः क्षीरोदः–क्षीरसमुद्रः 'उदकस्योदः संज्ञायाम्' [ पा.सू. ६–३–५७ सू. [

चित्रमीमांसा

इत्यत्रोपमेयगताधिकविशेषणोपादानस्यैकैकविशेषणकोपमा-नार्थत्वात् ॥

तत्त्वालोकः

इत्युदकशब्दस्योदादेशः । तस्य वेला तीरभूमिरिव । 'वेला काले च जलधेस्तीरे नीरविकारयोः' इति विश्वः । पर्याप्तः–पूर्णः चन्द्रो यस्यां सा पर्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा–शरद्रात्रिरिव, भूयः अतिशयेन, बभौ चकासे इत्यर्थः ।

अत्र गौर्यां वेलासादृश्यम्, शरद्रात्रिसादृश्यं च वर्ण्यते । आद्ये उपमानोपमेययोः विशेषणे फेनदुकूले तयोर्बिम्बप्रतिबिम्बभावः । द्वितीये चन्द्रदर्पणे उपमानोपमेयविशेषणे, अनयोश्च बिम्बप्रतिबिम्बभावः, तन्मूलकतया चोपमा निबद्धा ।

तदेवोपपादयति–**इत्यत्रेति** । इत्यत्र क्षीरोदवेलेत्युदाहरणे उपमेय-गतं यदधिकविशेषणोपादानं इत्युक्तौ वेलाप्रतियोगिकपार्वत्यनुयोगिकसादृश्ये दर्पणांशस्य, शरद्रात्रिप्रतियोगिकपार्वत्यनुयोगिकसादृश्ये क्षौमस्य पार्वतीरूपोपमेये आधिक्यं न दोषाय भवति । कुतः एकैकविशेषणकोपमानार्थत्वात् तत्तदुपमायां क्षौमदर्पणयोरुपयुक्तत्वात् इत्यर्थः ।

**अन्यथा**–दर्पणदुकूलयोर्मध्ये यदि उपमेये दर्पणमनुपात्तं स्यात् तदा पार्वत्याः शरद्रात्र्या सादृश्ये दर्पणरूपबिम्बाभावे उपमानरात्रिविशेषणं चन्द्रः कस्य प्रतिबिम्बः स्यादिति बिम्बप्रतिबिम्बभावाभावे साधारण्यं भज्येत । तथा–दुकूलस्योपमेयेऽनुपादाने पार्वत्याः वेलया सादृश्ये दुकूलरूपबिम्बाभावे उपमानवेलाविशेषणं फेनः कस्य प्रतिबिम्बस्स्यादिति धर्मे साधारण्यं भज्येत ।

**चित्रमीमासा**

क्षीरोदवेला च सफेनपुञ्जा
पर्याप्तचन्द्रा च शरत्त्रियामा ।
अनुव्यधात्क्षौमनिवासिनीं तां
अच्छप्रभं दर्पणमादानाम् ॥

इत्यस्यैव श्लोकस्य पाठे उपमानगतानेकधर्मोपादानमैकैक धर्मकोपमाद्वयार्थमित्युपमानस्य धर्मत आधिक्यं न दोषः ।

**तत्त्वालोकः**

अतश्च तत्तदुपमायां उक्तधर्मयोरेकैकस्य साधारण्यप्रयोजकबि म्बप्रतिबिम्बभा पयुक्ततया उपमेये धर्माधिक्यं न दोष इति भावः ।

उपमेयगताधिकधर्मोपादानस्यादोषतामुपपाद्य उपमानगताधिकधर्मोपादवो नस्य अदोषतामुपपादयितुं पूर्वोक्तस्थल एव किंचिद्व्यत्यासेन पाठे तदुदाह रणत्वं उपपद्यत इत्याह-**क्षीरोदेति** । सफेनपुञ्जा फेनोत्करसहिता, क्षीरोद वेला क्षीरसमुद्रतीरभूमिश्च, पर्याप्तचन्द्रा परिपूर्णचन्द्रा शरत्त्रियामा, शरद्रा- त्रिश्च क्षौमनिवासिनीम् , अच्छप्रभं दर्पणमादधानां तां पार्वतीम् , अनुव्य धात् अनुचकारेत्यर्थः ॥

अत्र वेलायां रात्रौ च गौरीसादृश्यं वर्ण्यते । आद्ये वेलागौर्यो- रुपमायां फेनदुकूले, अन्त्ये चन्द्रदर्पणयोर्बिम्बप्रतिबिम्बभावः । परंतु पाठ विपर्यासात् गौर्याः उपमानता, वेलाशरद्रात्र्योरूपमेयतेति विशेषः अथापि पूर्वोक्ताधिक्यं तत्तदुपमायां साधारण्योपयोगिबिम्बप्रतिबिम्बभावस्य प्रयोजक भवतीति उपमाने धर्माधिक्यं न दोष इति भावः । तदाह-**इत्यस्यैवेति** ।

इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिः तस्थौ सुप्तमीन इव ह्रदः ॥

अत्र विज्ञा तविशेषणं ध्यानस्तिमितलोचन इति साधारणधर्मवत्तासंपादनार्थमिति न्यूनत्वं न दोषः ।

ज्यानिनादमभिगृह्णती तयोः
प्रादुरास बहुलक्षपाच्छविः ।

तत्त्वालोकः

एवं क्वचित् उपमाप्रयोजकधर्मे साधारणधर्मवत्तासंपादनार्थत्वे न्यूनत्वस्य अदोषतायां उदाहरणमाह-इतीति । (उपमाने धर्मन्यूनताया अदोषत्वे इदमुदाहरणम्) । इति पूर्वोक्तरीत्या, राज्ञा दिलीपेन, विज्ञापितः श्रावितः, ऋषिः वसिष्ठः, ध्यानेन स्तिमिते लोचने यस्य सः ध्याननिश्चलाक्षस्सन्, क्षणमात्रं किंचित्कालं, सुप्तमीनः निद्रितमीनः, ह्रदः इव अगाधजल इव तस्थौ । अत्र ह्रदस्य ऋषेश्चोपमा परिकल्पिता । उपमेयोपमानविशेषणयोः स्तिमितनेत्रत्वसुप्तमीनत्वयोः बिम्बप्रतिबिम्बभावमूलतया साधारण्यम् । इत्थं सति मुनौ विज्ञापित इति विशेषणमुपात्तम् । न च तथाविधं विशेषणमुपमाने ह्रदे । अतश्च उपमेये तद्विशेषणदानमधिकतां प्रयोजयतीति चेन्न उपमेये ऋषौ ध्यानस्य सहेतुकत्वेन साकांक्षत्वात् विज्ञापनध्यानहेतुरुपात्तः । ह्रदपक्षे तु तादृशाकांक्षाविरहेण तदनुपादानेऽप्यदोषात् तदाह-अत्रेति । अन्यथा स्तिमितलोचनत्वमनुपपन्नं स्यादिति । एवं चोपमाने धर्मतः न्यूनता न दोषाय साधारणधर्मवत्ताप्रयोजकत्वादिति भावः ॥

अथ उपमाने धर्मत आधिक्येऽप्यदोषतामुदाहरति—ज्यानि-

## चित्रमीमांसा

ताटका चलकपालकुण्डला
कालिकेव निबिडा बलाकिनी ॥

अत्र निबिडेतिविशेषणं कालिकायां बहुलक्षपाच्छवि-रिति साधारणधर्मवत्तासंपादनार्थमित्याधिक्यं न दोषः ।

### तत्त्वालोकः

**नादेति ।** अथ रामलक्ष्मणाभ्यां धनुषि ज्यायामारोपितायाम् तयोः राजकुमारयोः, ज्यानिनादं ज्याघोषम्, अभिगृह्णती शृण्वती (योद्धुमायान्ती) बहुलक्षपाछविः कृष्णपक्षरात्रिरिव कृष्णवर्णा 'बहुलः कृष्णपक्षे च' इति **विश्वः ।** चले–कपाले एव कुण्डले यस्यास्तादृशी, ताटका सुन्दस्य भार्या ताटका नाम राक्षसी, निबिडा निरन्तरा, बलाकाख्यबकविशेषानुगता, बलाका शब्दस्य व्रीह्यादिषु 'शिखादिभ्यः इनिर्वाच्यः' (वार्ति३२०९) इति मत्वर्थीय इनिप्रत्ययः । कालिकेव मेघमालेव, प्रादुरास आविरासीत् । 'कालिका योगिनी भेदे कार्ष्ण्ये गौर्यां घनावलौ' इति विश्वप्रकाशः ।

अत्र कालिकाताटकयोरुपमा निबद्धा । तयोः क्रमेण बलाकाकपालकुण्डलयोर्विशेषणत्वम्, तयोर्बिम्बप्रतिबिम्बभावः, तेन साधारण्यम्, अथापि उपमानभूतकालिकायां निबिडत्वं अधिकमुपात्तम् । उपमेयभूतताटकायां तादृशं नोपात्तमित्यधिकविशेषणमुपमानं जातमिति आधिक्यं दोष इति न च वाच्यम् । बहुलक्षपाच्छवित्वस्य उपमानेऽपि संपादनार्थं निबिडत्वमुपपादकतया उपात्तम् । निबिडत्वे सति मेघमालायां कृष्णपक्षकार्ष्ण्यमुपपद्यते नान्यथेति तद्विशेषणदानं युक्तिमत् । तदेतदभिप्रेत्याह–**अत्र निबिडेति ।**

चित्रमीमांसा

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥

अत्रातिथिं नामेति विशेषणं धर्मिस्वरूपविशेषलाभार्थमिति आधिक्यं न दोषः ।

तत्त्वालोकः

अथ उपमेये उपमानापेक्षयाधिकविशेषणोपादानं धर्मिविशेषप्रतिपादनफलकं चेत्तदा न दोषः इत्युदाहरति—अतिथिमिति ।

कुमुद्वती—राज्ञी, काकुत्स्थात् कुशात् अतिथिं नाम पुत्रम्, अतिथिरिति नाम्ना प्रथितं पुत्रं, चेतना बुद्धिः पश्चिमात् यामिनीयामात् रात्रेरन्त्ययामप्रभावात् प्रसादमिव वैशद्यं स्वच्छतां यथा तथा प्राप लेभे । उक्तं च वामनेन काव्यालङ्कारसूत्रे रात्रियामस्तुरीयःकालः (का.सू. १-३-२०) इति । अनेन इदं व्यक्तं भवति । प्रथमादिषु त्रिषु प्रहरेषु आहारविहारनिद्रासु मनस आभिमुख्यम् । चतुर्थे तु प्रहरे मनसः प्रसन्नता संभवति । प्रसन्ने च चेतसि यथार्थदर्शनम् । उक्तं च माघे—

'गहनमपररात्रप्राप्तबुद्धिप्रसादाः
कवय इव महीपाश्चिन्तयन्त्यर्थजातम्' इति ।

अत्र पुत्रस्य प्रसादस्य चोपमा प्राधान्येन निबध्यते । तत्र तु परं उपमेये पुत्रेऽतिथिं नामेति विशेषणमुपात्तम् । तदपि कुमुद्वती किं नामानं पुत्रं सुषुवे इति धर्मिविशेषाकांक्षापरिहाराय, न तु व्यर्थतया । उपमाने तु कीदृशं प्रसादमिति धर्मिविशेषाकाङ्क्षानुदयात् तादृशविशेषणाकांक्षा नोदेतीति उपमेये अधिकधर्मोपादानं न दोषाय भवति । तदेतदाह- अत्रेति ।

**चित्रमीमांसा**

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥

अत्र दिव्यमिति विशेषणं धर्मिविशेषलाभार्थमित्यधिकत्वं न दोषः । एवं प्रकृतकथासंघटनाचमत्कारादिकार्यान्तरोपयोगित्वेपि द्रष्टव्यम् ॥

**तत्त्वालोकः**

एवमुपमानांशे धर्मिस्वरूपलाभार्थत्वे अधिकविशेषणदानं न दोषावह मित्युदाहरति—**रसान्तराणीति** । एकरसं द्वितीयरसरहितं मधुरैकरसं, जले मधुर एवेत्यनुभवात् । दिव्यं दिवि भवं आकाशात्पतितं पयः जलं मेघोदकमेवेत्यर्थः । देशे देशे प्रदेशभेदेन उपाधिभेदेनेति यावत् । ऊषरादिदेशेऽन्यान् रसान् रसान्तराणि विभिन्नलवणादिरसवत्तामित्यर्थः अश्नुते प्राप्नोति एवं अविक्रियः निर्विकारः, स्वरूपविकारशून्यः एवंरूपः त्वम् गुणेषु सत्वादिषु, अवस्थाः स्रष्टृत्वादिरूपदशाः अश्नुषे प्राप्नोषि इत्यर्थः ।

अत्र दिव्यपयसः भगवतश्चोपमा निबध्यते । परंतु उपमानांशे दिव्यत्वं विशेषणं यथा दत्तं तथा उपमेये विशेषणं न दत्तमित्युपमाने अधिकविशेषणोपादानं दोषः इति न शंक्यम् , वर्षोदकेतरव्यावर्तकदिव्यत्वविशेषणस्य धर्मिविशेषस्वरूपप्रतिपादनोपयोगित्वेन आधिक्यस्य अदोषत्वादित्याह —**अत्रदिव्यमिति** ।

एवं यत्र प्रकृतकथासंघटनचमत्कारादिकार्यान्तरोपयोगित्वेऽपि न्यूनत्वाधिक्ये न दोषौ इत्याह–**एवमिति** ।

चित्रमीमांसा

एवं च—प्रस्तुतकार्यान्तरोपयोगरहितानां बिम्ब प्रतिबिम्बभावेन साधारणधर्मैकप्रयोजनतया संभाव्य-मानानाम् उपमेयोपमानविशेषणानां प्रतिविशेषणानिर्देश एव न्यूनत्वमधिकत्वं च दोषः।

तत्त्वालोकः

यथा 'ज्यानिनादमभिगृह्णतीतयोः प्रादुरास' इत्यत्र ज्यानिनादाभिग्रहणं उपमेयायां ताटकायामुपात्तं तच्च स्वयमेव जिघांसन्ती प्रादुर्भूय प्रथममभिद्रुतवतीं रामेण हतेति, स्त्रीवधानौचित्यपरिहारद्वाराचमत्कारप्रदर्शनायेति उपमेये आधिक्यं न दोषः। किंच उपमानभूतकालिकायामपि गर्जितशालिन्यां अतिशयोक्त्या उक्तविशेषणानुवृत्ते उपमाने न्यूनविशेषणत्वमपि नास्तीत्युत्तरत्र वक्ष्यते ग्रन्थकृतैव। एवमन्यत्रापि बोध्यम्। इत्थं न्यूनत्वाधिक्ययोः अदोषत्वहेतून् प्रतिपाद्य इतोऽन्यत्र तयोर्दोषत्वमस्त्येवेति निरूपयति—**एवं चेति**। अयंभावः—'ज्यानिनादमभिगृह्णती'त्यत्र ताटकायामुपमेयायां ज्यानिनादश्रवणसमनन्तरकालिकाभियोगविशेषणोपादानं

'अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते।
प्राणद्रव्यापहारे च प्रवृत्तस्याततायिता॥'

इति **कात्यायनोक्तरीत्या** अनपकृतपूर्वस्य रामस्य प्राणापहारे प्रथमं प्रवृत्तायां आततायिन्यास्ताटकायाः रामेण हनने कृतेऽपि स्त्रीहत्यानौचित्यपरिहारार्थमिति कार्यान्तरोपयोगः प्रकृतकथासंघटनाकृतचमत्कारप्रयोजकत्वं च वर्तते इत्य-दोषतैव तद्विशेषणोपादानस्य। यत्र तु 'स मुनिर्लाञ्छितो मौञ्ज्या' इत्यत्र मुनौ मौञ्जीरूपविशेषणस्योपादानं न कार्यान्तरोपयोगार्थम्, अथापि उपमाने

तत्त्वालोकः

तत्प्रतिबिम्बभूतं तद्द्रूपं वस्तु नोपनिबद्धमिति प्रविविशेषणानिर्देशान्न्यूनत्वं दोष एव ।

यद्यपि — काव्यालंकारकृता–भामहेन– द्वितीयपरिच्छेदे—

स मारुताकम्पितपीतवासाः
बिभ्रत्सलीलं शशिभासमब्जम् ।
यदुप्रवीरः प्रगृहीतशार्ङ्गः
सेन्द्रायुधो मेघ इवाबभासे ॥

इत्यत्र उपमेयः यदुप्रवीरः, तत्र पीताम्बरम्, शङ्खः, शार्ङ्गमिति त्रितयमुपात्तं विशेषणम्, उपमानं मेघः तत्र मेघे शक्रधनुर्मात्रं विशेषणमुपात्तम् । न पीताम्बरशङ्खस्थानीयं किञ्चिदुपात्तमिति न्यूनतामुपपाद्य सा न्यूनता—

सर्वेण सर्वसारूप्यं नास्ति भावस्य कस्यचित् ।
यथोपपत्ति कृतिभिरुपमासु प्रयुज्यते ॥

इति अनुभवं प्रदर्श्य परिहृता । अथापि प्रस्तुतकार्यान्तरोपयोगराहित्ये सति बिम्बप्रतिबिम्बभावमूलकतया साधारण्यमात्रप्रयोजकत्वेन अत्र वासश्शङ्खस्थानापन्नयोरनुपादानं दोष एवेति ।

यद्वा —भगवति उपमेये आभिरूप्यप्रदर्शनाय वासश्शङ्खाद्युपादानं कृतम् । उपमानकोटिप्रविष्टेऽपीन्द्रायुधे पीतत्वादिप्रतिभासोऽस्त्येवेति उपमाने प्रतिविशेषणानुपादानं न दोषः ।

**न च** समभिव्याहृतेन शब्देन तदुपादानमावश्यकमिति वाच्यम् । इन्द्रायुधसाहचर्यात्तद्वृत्तिनियतधर्मस्यापि व्यञ्जनया प्रकारान्तरेण वा बोध-

## चित्रमीमांसा

कार्यान्तरार्थानामपि अनुगामितया, विशेषणनिर्देशेन वा साधारणीकरणे तु अधिको गुणः ॥

यथा 'ज्यानिनादमभिगृह्णती' इति श्लोके ज्यानिनादमभिगृह्णतीत्युपमेयविशेषणम् , ताटका स्वयमेव रामजिघांसया प्रादुर्भूय प्रथममभिद्रुतवती रामेण हतेति स्त्रीवधानौचित्यपरिहारार्थत्वेऽपि उपमानसाधारणम् ।

## तत्त्वालोकः

संभवादित्युच्यते, तदा 'स मुनिर्लाञ्छितो मौञ्ज्या' इत्याद्युदाहरणमिति भाव्यम् ।

इत्थं क्वचित् न्यूनत्वाधिक्ययोरदोषत्वमुपपाद्य क्वचिदाधिक्यस्य गुणत्वमपीत्याह—कार्यान्तरेति । अनौचित्यादिपरिहाररूपकार्यान्तरोद्देशेन अधिकविशेषणदानेऽपि तस्यैव अनुगामित्वेन विशेषणनिर्देशेन वा उपमानोपमेयोभयानुगतिकरणं संपद्यते तत्र आधिक्यमपि गुण एव। तेन अदोषत्वमात्रव्यवच्छेदः । उक्तं च **प्रकाशकृता सप्तमोल्लासे**

'वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित् । क्वचिन्नोभौ'

इति । विवृतं च वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः, क्वचिन्न दोषः न गुणः इति ।

उदाहरति—**यथेति** । अयं भावः—ज्यानिनादमिति पद्ये यद्यपि ज्यानिनादाभिग्रहणोपादानं अनौचित्यपरिहारार्थं कृतम् ; अथापि ज्यानिनाद

## चित्रमीमांसा

कालिकायामिपि गर्जितशालिन्यां अतिशयोक्त्या तद्विशेषणानुवृत्तेः ।

तथा 'नृपं वमावर्तमनोज्ञनाभिः' इत्यत्र 'अन्य वधूर्भवित्री' इत्यस्य व्यतिक्रमणार्थ त्वेपि सागरगामिनीति तत्प्रतिविशेषणनिर्देशः कृत ।

## तत्त्वालोकः

शब्देन घनगर्जितमपि विवक्षितमिति तस्य ताटकायां यथा अन्वयः तथा कालिकायामपीति अनुगामित्वमपि संपादितं कविना इत्याधिक्यं गुणोऽपीति ।

ननु ज्यनिनादमिति श्रूयते कथं घनगर्जितसंग्रहः इत्याशंकायामाह— **कालिकायामपीति** ।

'पश्य नीलोत्पलद्वन्द्वात्' इत्यत्र नयनयोर्यथा निलोत्पलशब्देन निगरणम् तद्वदत्रापि गर्जितस्य निनादशब्देन निगरणं कृतमिति अतिशयोक्त्या ज्यानि-नादमभिगृह्णतीत्यस्य अनुगामित्वमिति भावः ।

विशेषणनिर्देशद्वारा धर्मे साधारण्यमपि संपादितं क्वचिदिति उदाहरण द्वारा प्रदर्शयति—**तथेति** । 'नृपं त' मित्यत्र इन्दुमत्या सुषेणनृपतिं व्यतिक्रम्य अन्यत्र गमनं कुतः कृतमिति सन्देहे हेतुप्रतिपादनार्थं अन्यवधूर्भवत्री इति उपात्तम् । तेन च या अन्यस्य जाया भवित्री सा कथमेनं नृपं वृणुयात् । अत एव व्यत्यगात् इति भावि अन्यवधूत्वं व्यतिक्रमणहेतुः । अथापि अस्यैव स्रोतोवहारूपोपमानांशेऽपि साधारणीकरणाय 'सागरगामिनी' इति 'अन्यवधूर्भवित्री' इत्यस्य प्रतिविशेषणस्य निर्देशः । तेन च सागर-गामिनी नदी यथा मार्गे समागतं पर्वतं परित्यज्य स्वाभिगमनार्हं सागरं

**चित्रमीमांसा**

यत्र लिङ्गवचनभेदेऽपि सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, स तत्र न दोषः; उभयानुगातिक्षमत्वात्। यथा —

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥

**तत्त्वालोकः**

गच्छति तद्वदियमपि मध्येमार्गमुपलब्धं सुषेणनृपं परित्यज्य स्वानुरूपं पतिमुपययौ इति बिम्बप्रतिबिम्बभावमूलकतया साधारण्यं कविना सम्पादितमिति कार्यान्तरार्थत्वाभाववतोऽपि सागरगामित्वस्य प्रतिविशेषणस्य निर्देशः कृतः इति आधिक्यं गुण एवेति भावः॥

इत्थं न्यूनाधिक्यविषयेऽपवादान् प्रदर्श्य लिङ्गवचनभेदविषयेऽपि अपवादमाह- **यत्र लिङ्गेति**। यत्र यादृशलक्ष्ये लिङ्गवचनभेदेऽपि उपमानोपमेय-वाचकपदयोः भिन्नलिङ्गतायां भिन्नवचनतायां सत्यामपि सामान्याभिधायि-पदम् साधारणधर्मप्रतिपादकं पदं स्वरूपभेदम् आनुपूर्वीभेदम् नापद्यते न प्राप्नोति तत्र तादृशविभिन्नलिङ्गवचनकोपमानोपमेयवाचकपदसमभिव्याहृतो-पमास्थले सः लिङ्गभेदो वचनभेदश्च न दोषः। उभयानुगतिक्षमत्वात् आनुपूर्वीभेदमपरिकल्प्य उपमाने उपमेये च सम्बद्धुं शक्यत्वात् इत्यर्थः। उक्तं च **काव्यप्रकाशे** यत्र तु नानात्वेऽपि लिङ्गवचनभेदसामान्याभिधायिपदं स्वरूपभेदं नापद्यते न तत्र दूषणावतारः उभयथापि अस्य अनुगमक्षमस्वभावत्वात् इति।

उदाहरति-**यथेति**। अत्र नृपगुणानां यादोरत्नानाञ्च विभिन्नलिङ्गत्वे-

## तत्त्वालोकः

ऽपि उपमाने उपमेये च साक्षादन्वयिनोः अधृष्यत्वाभिगम्यत्वरूपयोः सामान्ययोः स्वरूपभेदाभावेन अन्वयात् भिन्नलिङ्गता न दोष इति भावः ॥

अत्रेदं चिन्त्यते—योऽयं लिङ्गवचनदोषः प्रतिपादितः स किमुपमानोपमेयवाचकयोर्भिन्नलिंगवचनविषयकः उत साधारणधर्मवाचकपदगतभिन्न लिंगवचनविषयः ? इति ।

आद्यरीत्याश्रयणे 'भीमकान्तैरि'त्युदाहरणे- दिलीपार्णवपदयोःलिङ्गवचनसारूप्यादस्य दोषस्य प्रसक्तिरेव नास्तीत्यपवादप्रदर्शनमनुचितं स्यात्, ।

द्वितीयरीत्याश्रयणे तु – 'भास्याभावात्करस्थोऽपि' इत्यत्र उपमानो· मेययोर्मध्ये यत्र लिङ्गवचनसारूपं तत्रैवास्य समन्वयात् अत्र उपमानोपमेय योस्समानलिङ्गवचनकत्वे साधारणधर्मान्वयसौकर्यमित्यभि प्रायाविष्करणमयुक्तं स्यात् इति चेत्,

उच्यते- उपमानोपमेययोर्भिन्नलिङ्गवचनत्वमात्रेण दुष्टत्वमिति न सर्वत्र वक्तुं शक्यम् 'स्त्रीव गच्छति षण्डोऽयम्', 'प्राणा इव प्रियोऽयं मे' इत्यादौ विभिन्नलिङ्गविभिन्नवचनयोरप्युपमादर्शनात् । सत्यम् ।

अथापि–प्रकाशकाराभिप्रायेणोक्तम् तथा । स्वमतं नूत्तरत्र वक्ष्यते । प्राचीनमतानुसारेण उपमानोपमेययोर्लिङ्गवचनभेदे सत्यपि सामान्यपदस्य आनुपूर्वीभेदमन्तरा अन्वयसंभवेऽदोषत्वमिति ।

यद्येवमुच्यते—तदा

'गुणैरनर्घ्यैः प्रथितः रत्नैरिव महार्णवः'

**तत्त्वालोकः**

इत्यत्र प्रधानोपमानोपमेययोः लिङ्गवचनभेदो नास्त्येवेति प्रकाशकृता अपवादोदाहरणमसंगतं भवति, यदि तु यथेवादिशब्दाः यत्पराः तत्रैव उपमानताप्रतीतिः इति **काव्यप्रकाशानुरोधेन**–प्रकृते राज्ञि अप्रकृते अर्णवे च साधारणधर्मतयोपात्तयोः गुणरत्नयोरुपमेत्युच्यते तदा लिङ्गभेदस्य संभवः तथा सति तु तदन्वयिनः अन यैरित्यस्य रूपभेदाऽभावात् उभयत्रान्वययोग्यतास्तीत्यदोषत्वमुपपादनीयम् ।

अथापि–'भीमकान्तैः' इत्यत्र नृपगुणानां यादोरत्नानां च नोपमा प्रधानीभूता किन्तु दिलीपस्य अर्णवस्य च या उपमा सैव । अत एव रघुवंश सञ्जीविन्यां **मल्लिनाथेन**—भीमकान्तैः नृपगुणैः सः दिलीपः यादोरत्नैः अर्णव इवेति इवशब्दस्य भिन्नक्रमतयान्वयः स्वीकृतः ।

अत एव **ग्रन्थकृताऽपि**–अनुगामित्वबिंबप्रतिबिंबभावयोर्मिश्रणेन धर्मे साधारण्यं संपादयता अधृष्यत्वं अभिगम्यत्वं च नृपगुणानां यादोरत्नानां च बिंबप्रतिबिंबभावमपेक्ष्य लब्धात्मकं साधारणो धर्मः इहिंग्भितम् । तेन नृपगुणानां यादोरत्नानां न प्राधान्येनोपमा विवक्षितेति प्रतिपादितं भवति । अन्यथा पूर्वोक्तगुणानां यादोरत्नानां च बिम्बप्रतिबिम्बभावोपपादनमयुक्तं स्यात् । यत उपमानोपमेयधर्मयोः खलु बिंबप्रतिबिंबभावः न पुनरुपमानोपमेययोरेव ।

इत्थं सति–अत्र नृपगुणानां यादोरत्नानामुपमाप्रधानीभूतेत्युक्तिः प्रकरणानुगुणा न भवति । न ह्यत्र नृपगुणानां यादोरत्नानां चोपमाप्रतिपादनं मुख्यं तथ ासति अधृष्यत्वाभिगम्यत्वोक्तिर्वृथा स्यात् । अतश्च दिलीपार्णवयोः उपमायां प्रधानत्वेन विवक्षितायां सत्यां तादृशोपमाप्रयोजकयो–रधृष्यत्वाभिगम्यत्वयोरनुगामित्वं नृपगुणानां यादोरत्नानां च बिंबप्रतिबिंब–

## चित्रमीमांसा

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥

## तत्त्वालोकः

भावमूलकतया साधारण्यप्रयुक्तमित्येव वक्तव्यत्वात् । तथा चात्र प्रधानोपमानोपमेयवाचकयोर्न लिङ्गभेदसम्भवः । अपि तु तद्विशेषणवाचकयोः नृपगुणयादोरत्नशब्दयोश्च भिन्नलिङ्गत्वम्, अथापि तद्विशेष्ययोरेव अधृष्यत्वाभिगम्यत्वयोः उपमानोपमेयविशेषणयोः रूपभेदाभावान्न लिङ्गभेदो दोष इति यथासम्भवं उपमानोपमेययोः तद्विशेषणयोर्वा भिन्नलिङ्गत्वे सति यत्रान्वयानुपपत्तिः तत्रैव दोषत्वं नान्यत्रेत्युक्तं भवति ।

वचनभेदस्य अदोषत्वे उदाहरणमाह—**तद्वेष इति** । तस्याः नायिकायाः, वेषभूषणाम्बरादिधारणपरिपाटी, तदीयाः तत्संबन्धिनः, विभ्रमा इव विलासा इव—**विभ्रमः**—दयितागमनकालिकहर्षादिजनितभूषणादिविपर्यासः ॥ उक्तं च **दर्पणकृता**—

'त्वरया हर्षरागादेः दयितागमनादिषु ।
अस्थाने विभ्रमादीनां विन्यासो विभ्रमो मतः ॥ इति ।

'विभ्रमस्त्वरया काले भूषास्थानविपर्ययः'

इत्यन्येन च । परां शोभां दधते स्म । कीदृशो वेषः? अन्याभिः स्त्रीभिः असदृशः अद्वितीयः मधुरताभृतः माधुर्यपरिपूर्णः इति **वेषपक्षे** । असदृशः सदृशरहिताः, मधुरतां बिभ्रतीति मधुरताभृतः आह्लादजनकाः, विभ्रमाः इति **विभ्रमपक्षे** ।

### चित्रमीमांसा

**सामान्याभिधायिपदस्य स्वरूपभेदापत्तावपि लिङ्गवचनभेदो महाकविप्रयोगेषु दृश्यते ।**

### तत्त्वालोकः

अत्र वेषविभ्रमयोरुपमा निबद्धा । तयोरेकस्यैकवचनान्तत्वं अपरस्य बहुवचनान्तत्वम् । अथापि वचनभेदो न दोषाय भवति । यतोऽत्र उपमेये वेषेऽन्वयिनः असदृशशब्दस्य कञ्प्रत्ययान्तत्वमुपगम्य अदन्तैकवचनान्तत्वम्, उपमाने विभ्रमे न्वयदशायां क्विन्नन्तत्वमुपगम्य हलन्तसदृक्शब्दबहुवचनान्त=त्वम् अत एव-**अमरकारोऽपि**-'समानः सदृशः सदृक्' इति अदन्तं हलन्तं च सदृशार्थकं पपाठ । एवं मधुरताभृत इत्यस्य वेषेऽन्वयेऽदन्तैकवचनान्तत्वं, विभ्रमेऽन्वये हलन्तबहुवचनान्तत्वम् । इत्येवंरीत्या अन्वयः आनुपूर्व्यव्यत्यासमपरिकल्प्यापि कर्तुं शक्य इति नात्र वचनदोषः ।

एवं दधते 'दध धारणे' इति भौवादिकस्यैकवचनान्तम् । डुधाञ् धारणपोषणयोः इति जौहोत्यादिकस्य बहुवचनान्तमित्यस्योभयान्वयोऽबाधित इति न वचनदोषस्यावकाशः इति **काव्यप्रकाशकारस्य** अभिप्रायः ॥

सम्प्रति **काव्यप्रकाशकारमतस्य** महाकविप्रयोगाननुगुणतया **दण्डिनो मतमेव गरीयः** इति मनसि निधायाह-**सामान्येति** । सामान्याभिधायिपदस्य साधारणधर्मप्रतिपादकपदस्य, स्वरूपभेदापत्तावपि लिङ्गवचनभेदेनानुपूर्वीभेदप्राप्तावपि महाकविप्रयोगेषु कालिदासादिग्रथितेषु लिङ्गवचनभेदः दृश्यते इत्यर्थः । एतेन इदमुक्तं भवति-लिङ्गवचनादिभेदानां न सर्वत्र प्रातिस्विकरूपेण दोषत्वं किंतु यत्र सहृदयानामुद्वेगः तत्रैवेति ।

चित्रमीमांसा

द्वेष्योऽपि सम्मतः शिष्टः तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोप्यासीदङ्गुलीवोरगक्षता ॥

तत्त्वालोकः

किंचात्र 'स्वरूपभेदापत्तावपि' इति वदन् ग्रन्थकारः–क्वचित् सामान्याभिधायिपदस्य लिङ्गविपरिणामेन आनुपूर्वीभेदं परिकल्प्य उभयत्रान्वये बाधकं न किमप्यस्तीति अभिप्रैति । अत एव कालिदासेनाऽपि–विक्रमोर्वशीये—

अदस्सुरेन्द्रस्य कृतापराधान्
प्रक्षिप्य दैवाल्लवणाम्बुराशौ ।
वायव्यमस्त्रं शरधिं पुनस्ते
महोरगः श्वभ्रमिव प्रविष्टम् ॥

इति पद्ये महोरगः यथा किञ्चित्कालं बहिरागत्य पुनः स्वबिलं प्रविष्टः तथा तवेदं वायव्यमस्त्रं दैत्यान् संहृत्य पुनः स्वतूणीरं प्रविष्टम् इत्यर्थः । अत्र अस्त्रशब्दस्य नपुंसकतया उरगशब्दस्य पुंलिङ्गतया, साधारणधर्मवाचकस्य नपुंसकतयैव निर्देशः कृतः । अथापि लिङ्गभेदेनान्वये बाधकं नास्ति । परंतु आवृत्तिः कार्या इत्येव कवेराशयः ।

यद्वा—उपमेयान्वितत्वेन , उपमानान्वितत्वेन वोपात्तस्य धर्मस्य शाब्दया रीत्या उपमानोपमेययोरन्वयेऽसत्यपि वस्तुत उभयान्वयविवक्षायां मानसः वैयञ्जनिको वान्वयबोधो जायत इति समाधातुं शक्यम् ।

तत्र पुंनपुंसकयोरुपमानोपमेयभावे सामान्यशब्दस्य लिङ्गभेदेन स्वरूपभेदापत्तावपि अदोषत्वमुपपादयितुमुदाहरणं प्रदर्शयति–द्वेष्योऽपि ।

तत्त्वालोकः

द्वेष्योऽपि शत्रुरपि, शिष्टः वेदोक्ततत्वज्ञानेन वेदविहितकर्मानुष्ठाता, आर्तस्य रुग्णस्य, औषधं यथा तथा, तस्य संमतः अनुमतः आसीत् । प्रियोऽपि इष्टोऽपि, दुष्टः वेदमार्गविदूषकः, उरगक्षता सर्पदष्टा अङ्गुलीव त्याज्यः अननुमत आसीत् । एवंच, तस्य शिष्ट एव बन्धुः । दुष्ट एव शत्रुरित्यर्थः । अत्र शिष्टदुष्टयोः परिग्रहपरित्यागप्रतीत्यर्थम् उपमानद्वय मुपात्तम् । तयोराद्यं नपुंसके, द्वितीयं स्त्रियामिति लिङ्गभेदः, तयोः साधारणधर्मौ सम्मतत्वत्याज्यत्वे तयोरुपमेयान्वयः स्वरूपेण । उपमानान्वयस्तु नपुंसकस्त्रीलिङ्गविपर्यासमूलतया । मानसरीत्या वैयञ्जनिकथा रीत्या इति भावः ॥

एतेन—पाणिपद्मयोः, अधरबिम्बफलयोः, लिङ्गभेदेऽपि उपमाभ्युपगमात् पुंनपुंसकयोः लिङ्गभेद इष्यते । अथापि स्त्रीपुंसयोरयं विधिः नाभिमतः । उक्तं च—

ननूपमीयते पाणिः कमलेन विकासिना ।
अधरो विद्रुमच्छेदभासा बिम्बफलेन च ॥

उच्यते काममस्तीदं, किन्तु स्त्रीपुंसयोरयम् ।
विधिर्नाभिमतः'

इति **भामहेन** यदुक्तं तन्नातीव रमणीयम् । द्वेष्योऽपीत्युदाहरणे दुष्टांगुल्योः पुंस्त्रियोः महाकविनैवोपमाया उपनिबद्धत्वात् । अत एव—**काव्यालंकारसूत्रकृता वामनेन**—'दृष्टः पुंनपुंसकयोः प्रायेण' इत्युक्त्वापि स्त्रीपुंसयोरुपमायां उदाहरणं प्रदर्शितम् 'छायेव स तस्याः पुरुष इव स्त्री' इति । **दण्डिनापि**-'विद्या धनमिवार्जिता' इति लिङ्गभेदस्योदाहरणं दत्तम् ।

चित्रमीमांसा

प्रवृद्धौ हीयते चन्द्रः समुद्रोऽपि तथाविधः ।
स तु तत्समवृद्धिश्च नचाभूत्ताविव क्षयी ॥

इत्यादौ। कालदिभेदे तु भूयांस्युदाहरणानि ।

तत्त्वालोकः

सामान्याभिधायिपदस्य स्वरूपभेदापत्तावपि वचनभेदो न दुष्यति महाकवीनामभिमतत्वादित्युदाहरति— प्रवृद्धो हीयत इति ।

चन्द्रः इन्दुः, प्रवृद्धौ अभिवृद्धौ सत्याम् हीयते न्यूनकलो भवति, समुद्रोऽपि अर्णवोऽपि तथाविधः, चन्द्रवदेव प्रवृद्धौ हीयते । स तु कुमुद्वतीसूनुः अतिथिस्तु तत्समवृद्धिश्च–ताभ्यां चन्द्रसमुद्राभ्यां समा वृद्धिर्यस्य सः अभूत् । किन्तु ताविव चन्द्रसमुद्राविव क्षयी क्षययुक्तः नाभूत् इत्यर्थः क्षयी इति पदस्य चन्द्रसमुद्रयोः अन्वयवेलायां क्षयिणाविति वचनभेदेनान्वयस्य कर्तव्यतया स्वरूपभेद आवश्यकः अथापि न वचनदोषस्य प्रसक्तिरस्ति । अन्यथा महाकविः कालिदासः तथा न प्रयुञ्जीतेति ।

एवं कालादिभेदे उदाहरणानां भूयसोपलंभान्नोदाहृतानीति मनसिनिधायाह— कालादीति ।

कालभेदस्य यथा–'युधिष्ठिर इवायं सत्यं वदति' इत्यत्र युधिष्ठिरे अवादीत् इति कालभेदेनान्वेति । आदिपदात् पुरुषभेदस्य ग्रहणं तद्यथा —

'विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव ।'

चित्रमीमांसा

एतादृशीषु लोकसिद्धत्वात् लिङ्गादिभेदो न दोषः इति वामनः ॥

एवं गुणदोषव्यवस्थायां सहृदयहृदयमेव प्रमाणम् ।

तत्वालोकः

अत्र लतायां विभ्राजते इति पुरुषभेदेनान्वेति । विधिभेदो यथा–

'गंगेव प्रवहतु ते सदैव कीर्तिः ।'

इति । अत्र गंगायां सिद्धत्वाद्विधेरनन्वयात् प्रवहतीति रूपभेदेनान्वयः । स्वोक्तार्थे प्राचीनसम्मतिं प्रदर्शयन् वामनाभिप्रायमाह–एतादृशीष्विति । लौकिक्यां समासाभिहितायां उपमाप्रपञ्चे च' इत्युक्तनितिभावः ॥

उक्तरीत्या लिङ्गभेदादेः गुणदोषव्यवस्थायां मतभेदसंभवात् कथं निर्णयः इति सन्देहे आह–एवमिति । अत एव निन्दायां तात्पर्यं उयत्र नास्ति यथा—

'चण्डालैरिव युष्माभिः साहसं परमं कृतम्'

इत्यादौ साहसकरित्वमात्रे तात्पर्यं तत्र तु परं जात्या न्यूनत्वं दोषः । यत्र तु परं निन्दायामेव तात्पर्यं—

'चण्डालश्च दरिद्रश्च द्वावेव सदृशौ मम ।
चण्डालस्तु न गृह्णाति दरिद्रो न प्रयच्छति ॥'

इत्यादौ उपमानस्य जात्या हीनत्वं न दोषः । अनिष्टस्य उपश्लोक्य–

चित्रमीमांसा

उक्तं च दण्डिना —

नलिङ्गवचने भिन्ने न हीनाधिकते अपि ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥

स्त्रीव गच्छति षण्डोऽयं, वक्त्येषां स्त्रीपुमानिव ।
प्रणा इव प्रियोऽयं मे, विद्या धनमिवार्जिता ॥

तत्त्वालोकः

तिरस्कारस्य प्रतीतिः दूषकताबीजम् । तस्येष्टत्वे तु बीजाभावान्न दोषत्वम् । उक्तार्थे आचार्यदण्डिना उक्तं प्रमाणयति । **उक्तं च दण्डिनेति** ।

यत्र धीमतां सभ्यानां उद्वेगः प्रतीतिविघातः न भवति तादृशे, भिन्नपृथग्भूते लिङ्गवचने, तथा हीनपदत्वम्, अधिकपदत्वं वा उपमादूषणाय नालं न प्रभवन्तीत्यर्थः । इदं च परमप्राचीन **भामहानूक्तमेधाविरुद्र-प्रभृतिभिः** अभिहितानां,

हीनताऽसंभवो लिङ्गवचोभेदो विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ॥

त एत उपमादोषास्सप्त मेधाविनोदिताः ।
इत्युक्तानाम् अपवादप्रदर्शनार्थम् ॥

एतेनैतदुक्तं भवति (१) यत्र अपकृष्टोपमानघटनाः (२) उपमेयानुत्कर्षः (३) उपमेये निकृष्टत्वं (४) साम्यस्य सम्यगप्रतीतिरित्येवमादयो दोषाः प्रादुष्युः तत्रैव दोषत्वं नान्यत्रेति ।

### चित्रमीमांसा

भवानिव महीपाल देवराजो विराजते ।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥

### तत्त्वालोकः

लिङ्गवचनभेदस्य अदूषकत्वप्रदर्शनाय दण्डिनः उदाहरणवाक्यमनुवदति—**स्त्रीवेति** । अयं षण्डः स्त्रीव गच्छति । एषा स्त्री पुमानिव वक्ति इत्युभयत्रापि क्रिययोः उभयत्रान्वयात्साधारणधर्मत्वमिति उपमानोपमेययोर्लिङ्गभेदो न दोषाय । एवं 'अयं जनः मे प्राणा इव प्रियः' तथा 'विद्या धनमिवार्जिता' इत्येतयोरुपमानयोर्वचनभेदेऽपि लिङ्गभेदेऽपि न दोषसम्भवः । यतोऽत्र एकवचनान्तेऽप्युपमेये नित्यबहुवचनान्तस्योपमानस्य नैकवचनान्तत्वसंभवः यथा–'प्राणा इव प्रियोऽयं' इत्यादौ । एवं यत्र पुल्लिङ्गेऽप्युपमेये नित्यस्त्रीलिङ्गस्योपमानस्य न पुंल्लिङ्गताया असंभवः यथा 'विद्या धनमिवार्जिता' इत्यादाविति नियतलिङ्गवचनकोदाहृतिषु लिङ्गवचनभेदस्य न दोषत्वमित्यभिप्रायात् ॥

हीनत्वाधिकत्वयोः अदोषत्वे तदुक्तमुदाहरणमाह – **भवानिवेति** । हे महीपाल ! देवराजः भवानिव विराजते । अत्र उपमानस्य राज्ञः मनुष्यजातित्वेन उपमेयदेवराजापेक्षया न्यूनजातित्वं स्वतस्सिद्धमपि—

'अष्टानां लोकपालानां वपुर्धारयते नृपः'

इति सूक्त्या नात्यन्तं वैरस्यावहमिति । एवम् उत्तरार्धे–नृपः तेजसा अंशुमतः सूर्यस्य कक्षां सादृश्यं आरोढुमलं समर्थः । अत्र नृपस्योपमानम्

इत्येवमादि सौभाग्यं न जहात्येव जातुचित् ।
अस्त्येव क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥

हंसीव धवलश्चन्द्रः, सरांसीवामलं नभः ।
भर्तृभक्तो भटः श्वेव, खद्योतो भाति भानुवत् ॥

ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ॥

इति कविसमयप्रसिद्धौ सत्यामसादृश्यं न दोषः ।

## तत्त्वालोकः

अंशुमान् देवेभ्योऽधिकोऽपि उपमेये निकर्षाप्रतीत्या दोषाभावादित्युपसंहरति इत्येवमादाविति ।

पूर्वोक्तप्रयोगसदृशेषु वस्तुषु उत्कर्षो न परिहीयते कदाचिद् इत्यर्थः । क्वचिद्धीयत एवेत्याह—**अस्त्येवेति** । प्रतीतिव्याहतेरिति शेषः । उदाहरति—**हंसीवेति** ।

अत्र आद्ये लिङ्गभेदस्य, द्वितीये वचनभेदस्य, तृतीये न्यूनतायाः, चतुर्थे आधिक्यस्य वैरस्यावहत्वाद्दोषत्वं न्याय्यमिति ईदृश्य उपमाः कविना परित्याज्याः इति भावः ॥

प्राक् असादृश्यं दोष इति प्रतिपादितः । तस्यापि क्वचिदपवादं प्रदर्शयति–**कविसमयेति** । चमत्कारप्रधानं हि काव्यम् । काव्येचोपमा सादृश्यमात्रसारा । सादृश्यपरिकल्पनं च उपश्लोक्यमानोत्कर्षप्रतीत्यर्थम् । तदप्रतीतौ दोषता । तत्प्रतीतावदोषता प्रतिपाद्या । उत्कर्षप्रतीतिश्च सहृदय

चिमौत्रमांसा

## यथा–चन्द्रधवला कीर्तिः ॥

### तत्त्वालोकः

संवादिनी भवेत् । कविसमयस्तावत् न केवलं संकेतः, किन्तु सहृदयहृदय संवादसिद्धः । सहृदयेत्यत्र समानार्थे किल 'स'भावः एकाभिप्रायत्वं हि सहृदयत्वम् । अतश्च कस्यचित् सादृश्याप्रतीतावपि सहृदयदृष्ट्या सादृश्य कल्पनं द्रष्टव्यम् । अत्रोदाहरणमाह — चन्द्रधवलेति ।

कर्पूरद्रुमगर्भधूलिधवलं यत्केतकानां त्विषः
श्वेतिम्ना परिभूय चन्द्रमहसा सार्धं परिस्पर्धते ।
तत्पाकोज्ज्वलनालिकेरसलिलच्छायावदातं यशः
प्रालेयाचलचूलिकासु भवतो गायन्ति सिद्धाङ्गनाः ॥

इत्यादौ यशसि कर्पूरादिवद्धावल्यं वर्ण्यते । एतादृशेषु परिकल्प्यमानं लोकानुभवगोचरमपि सादृश्यं प्रकृतोत्कर्षकमेवेति असादृश्यं गुण एव कवि समयसिद्धत्वात् ।

**अपरे तु**—इदमसादृश्यं उपमानानामाधिक्यात्परिहरन्ति । 'कर्पूर हारहरहाससितं यशस्ते' इत्युदाहरन्ति च । तदेतत् **वामनो** यद्यपि नानु मन्यत इव–उपमान एकस्मिन् प्रयुक्ते उपमानान्तरप्रयोगः न कंचिदर्थविशेषं पुष्णातीत्युक्तत्वात् । अत एव -उपमानाधिक्यात् तदपोह इत्येके (वा.का ४-२-२८) इत्यनूद्य न अपुष्टार्थत्वादिति (वा.का.४-२-२९) निराचकार । तथापि–उपमानाधिक्यमात्रं परिपोषं न जनयति इति न वक्तुं युक्तं–यतः–

'प्रभा महत्या शिखयेव दीपः
त्रिमार्गयेव त्रिदिवस्य मार्गः ।

### चित्रमीमांसा

उपमेयगतासंभावितत्वविवक्षायां उपमानस्यासंभवो न दोषाय । यथा —

चन्द्रबिम्बादिव विषं चन्दनादिव चानलः ।
परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥ इत्यादौ ।

### तत्त्वालोकः

संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥'

इत्यत्र महाकविना एकस्याः पार्वत्याः वाचाम् ज्वाला–मन्दाकिनी उपमानतयोपन्यासः कृतः । अतश्च इक्षुक्षीरगुडादिन्यायेन गुणांशे वैलक्षण्यावगमे उपमानानामधिक्यं न दोषः । अत एव कवयः कर्पूरद्रुमगर्भेत्याद्यनेकोपमानघटनां कुर्वन्ति ।

उपमानस्यासंभवो न नित्यदोषत्वेन व्याप्तः । अपितु उपमेयगतस्य यस्यकस्यचित् धर्मस्य असंभवविवक्षा न भवति तदा असंभावितोपमानघटना दोषाय । यत्र तु उपमेये कस्यचिद्धर्मस्यासंभावितत्वविवक्षा तदा असंभावितद्धर्मकोपमानघटना न दुष्यति । तदेतदाह–उपमेयेति ।

उदाहरति—**चन्द्रबिम्बादिव विषमिति** । प्राग्व्याख्यातमिदम् । अत्र यद्यपि विषानलयोस्स्वतस्सिद्धत्वमस्ति अथापि तद्विशेषणयोः चन्द्रप्रभवत्व–चन्दनप्रभवत्वयोः विषानलवृत्तित्वं न संभवति । अथापि उपमानस्यासंभवो न दोषः यतः उपमेयायां वाचि परुषत्वस्यासंभवो विवक्षित इति तदानुगुण्येन असंभवित्वधर्मकमुपमानमुपात्तमिति अदोषात् । अत एव

विषानलयोर्वाचश्चोपमा निबध्यते । तत्र साधारणधर्मश्च असंभावितत्वमित्युपपादितमेव ।

रुद्रटस्तु—

'सामान्यशब्दभेदः, वैषम्यमसंभवोऽप्रसिद्धिश्च ।
इत्येते चत्वारो दोषाः नासम्यगुपमायाः' ।

इति । परिगणय्य —

'उपमानं यत्र स्यादसंभवत्तद्विशेषणं नियमात् ।
संभूतमयद्यर्थं विज्ञेयोऽसंभवस्सः' ।

इत्यभिधाय उदाजहार —

सुतनुरियं विमलाम्बरलक्ष्योरुमृणालमूललालित्या ।
अजलप्रकृतिरदस्थितमित्रा गगननलिनीव ॥

इति । प्रत्युदाहरणं (अदोषत्वे उदाहरणं ) **नमिसाधुनोक्तम्**—

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्य
ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥

इति । **भामहस्तु—**

निपेतुरास्यादिव तस्य दीप्ताः
शरा धनुर्मण्डलमध्यभाजः ।

श्लिष्टसाधारणधर्मायां अन्यत्रापि सहृदयहृदया-

**तत्त्वालोकः**

जाज्वल्यमाना इव वारिधाराः
दिनार्धभाजः परिवेषिणोऽर्कात् ॥

इत्यत्रासंभवमधिकृत्य—

कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः ।
असंभवादयं युक्त्या तेनाऽसंभव उच्यते ॥

इति पूर्वपक्षिणां मतमनूद्य—

तत्रासंभविनोऽर्थस्य कः कुर्यादुपमां कृती ।
को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥
यस्यातिशयवानर्थः कथं सोऽसंभवो मतः ।
इष्टं चातिशयार्थत्वं उपमोत्प्रेक्षयोर्यथा ॥

इति असंभवस्य दोषतां निराचकार । यतश्च 'निपेतुरास्यादिवे'ति शाखावर्धनपद्ये विवस्वतस्सकाशात् जाज्वल्यमानाः वारिधाराः यादृश्यः पतेयुः तादृशाः शरा इति तीव्रपातित्वसानुबन्धपातित्वाऽमितत्वप्रतिपादनद्वारा अतिशयप्रतिपादनार्थत्वमित्युक्तत्वात् उपमेये धर्मस्य असंभावितत्वविवक्षायां असंभावितधर्मकोपमानोपादानं युक्तमिति **ग्रन्थकाराभिप्रायः** । यद्यर्थाविवक्षायां दोषत्वं तद्विवक्षायामदोषत्वमिति **रुद्रटविवेचनं** च भामहग्रन्थाननुगुण-

### चित्रमीमांसा

ह्लादिन्यां कल्पितोपमानायामप्रसिद्धत्वं न दोषः ॥

'कविमतिरिव बहुलोहा
सुघटितचक्रा प्रभातवेलेव ।
हरमूर्तिरिव हसन्ती
भाति धूमाऽनलोपेता ॥'

### तत्त्वालोकः

मित्यवगन्तव्यम् ॥ अत एव असादृश्यासंभवौ दण्डिना न परिगणितौ ।

अथ रुद्रटाभिमतायाः अप्रसिद्धेः क्वचिददोषत्वमित्याचष्टे–श्लिष्टेति । श्लेषमूलकतया यत्रोपमाने साधारणधर्मान्वयः, तत्र उपमानस्याप्रसिद्धावपि अदोषत्वमेव, एवमन्यत्रापि कल्पितोपमानायामुपमानस्याप्रसिद्धिर्न दोषायेत्यर्थः । आद्यमुदाहरति–**कविमतिरिति** ।

हसन्ती अङ्गारधानी, भाति प्रकाशते, केव स्थिता कीदृशी चेत्यत्राह कविमतिरिवेति । बहुला प्रायिकी ऊहा यस्यां सा बहुलोहा ऊहप्राया कविमतिरिव, कविबुद्धिरिव, तथा बहवो लोहाः यस्यां सा बहुलोहा विविध लोहमयी नानाविधलोहघटिता । एवं सुष्टु घटितौ समागतौ चक्रौ चक्रवाकौ । स्त्रीपुंसोरेकशेषः, यस्यां सा प्रभातवेलेव प्रातस्समय इव, तथा स समीचीनतया घटितश्चक्रः यस्यां सा । तथा विधुना–चन्द्रेण उमया, पार्वत्या अनलेन अग्निना चोपेता, शिरसिन्दुना–शरीरार्धे उमया, मुखे अग्निना

**चित्रमीमांसा**

'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धिनारङ्गकम्' ।

इत्यादौ ।

**तत्त्वालोकः**

चोपेता हरमूर्तिरिव तथा विधूमेन विगतधूमेन अनलेन उपेता, अस्य हसन्ती भातीत्यनेनान्वयः ॥

अत्र कविमति–प्रभातवेला–हरमूर्तीनां अनेकेषां उपमानत्वम् । हसन्त्याः उपमेयत्वम्, हसन्त्या कविमत्यादिभिः उपमा न लोकानुभवसिद्धा ।

**नन्वत्र**—उपमानस्य अप्रसिद्धिः उत उपमानभावस्य ? नाद्यः कविमत्यादीनां प्रसिद्धिरस्त्येव । किंतु कविमत्यादीनां हसन्तीनिरूपितोपमानतामात्रम् अप्रसिद्धम् । अथापि श्लेषमर्यादया बहुलोहत्वाद्यन्वयमुखेन चमत्कारकारित्वात् नोपमानतया अप्रसिद्धिः दोषः । उक्तं च **अन्यत्र**—

श्लेषमर्यादया यत्र पदं साधर्म्यवाचकम् ।
उभयान्वयि यत्रापि नास्य दोषस्य संस्थितिः ॥ इति ।

**वामनेन**'गुणबाहुल्यतश्च कल्पिता' इत्युक्त्वा-उदाहृतं श्लोकखण्डमाह **सद्य इति** । अत्र हूणचिबुकस्य प्रसिद्धिरस्ति, नारङ्गकस्यापि प्रसिद्धिरस्ति । अथापि न तयोः उपमा प्रसिद्धेति नाङ्गकस्योपमानं कविना परिकल्पितम् । एवं चोपमैव परिकल्पितेत्यत्रैव पर्यवसानं बोध्यम् ॥

चित्रमीमांसा

एवमन्येऽपि दोषापवादप्रकाराः विद्वद्भिश्चिन्तनीयाः ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभ
श्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतौ
चित्रमीमांसायां उपमालङ्कारप्रकरणम्

---

तत्त्वालोकः

एवमन्येऽपि दोषापवादप्रकाराः विद्वद्भिश्चिन्तनीया इत्याह—एवमन्येपीति। समासाभिहितायां उपमायां लिङ्गभेदो न दोषाय। यथा—

अनुभवन्नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजनः ॥

याइत्यदौ भुजलतापदे लिङ्गभेदो न दोषः। एवमन्यत्रापि। लौकिक्यां यथा—

'पश्यामि लोचने तस्याः पुष्पं पुष्पलिहो यथा।'

इह पुष्पलोचनयोः उपमानोपमेययोः भिन्नवचनकत्वम्। एवं निन्दायामेव तात्पर्ये उपमानस्य जात्या न्यूनत्वं न दोषः-यथा-चण्डालश्च दरिद्रश्चेति पूर्वमभिहितम्। तथा—उपमानोपमेययोर्मध्ये उपमानवाचकपदस्यैव कीचकादिपदवत् धर्मवद्धर्मिबोधकत्वे सति, उपमेये तद्धर्मप्रतिपादने उपमेये धर्माधिका न दोषः। यथा —

**तत्त्वालोकः**

अभिहन्ति हन्त कथमेष माधवं
सुकुमारकायमनवग्रहस्स्मरः ।
अचिरेण वैकृतविवर्तदारुणः
कलभं कठोर इव कूटपाकलः ॥

अत्र उपमानवाचिना कलभपदेनैव करिशावकस्याभिधानात् तत्सहचरितस्य सुकुमारकायत्वस्य स्वयमेव प्रतीत्या उपमेयमात्रे सुकुमारकायमित्युपादानेऽप्याधिक्यं न दोषाय । यद्युपमानेऽप्युपदानं स्यात् तदा वैयर्थ्यं स्यादिति न तदुपात्तम् । एवमेव उपमेयापेक्षया उपमानस्य न्यूनपरिमाणताप्रत्यायनतात्पर्ये उपमाने न्यूनपरिमाणत्वं न दोषः । यथा —

दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम ।
चूर्णति चन्द्रः क्रमुकति कनकगिरिः ॥

अत्र पर्णादीनामुपमानानां गगनाद्यपेक्षया न्यूनपरिमाणत्वेऽपि नरसिंहमुखपरिमाणे तात्पर्यात् ॥ एवमन्येपि उपमाप्रभेदा रूपकप्रकरणे द्रष्टव्याः ॥

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा(कुन्गेहल्य)-
भिजनेन सोमयाजियाण्डान् जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसंभवेन श्रीमन्महीशूरपुरीमध्यविद्योतमानश्रीमन्महा
राजसंस्कृतमहापाठशालायां सरस्वतीप्रासादाख्यायाम्
अलङ्कारशास्त्रप्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
**सो. रामस्वामि ऐय्यंगार्यशर्मणा**
विरचिते चित्रमीमांसाव्याख्याने तत्त्वालोकाख्ये
उपमालङ्कारप्रकरणं समाप्तम्

---

तत्त्वालोकः

## उपमेयोपमाविभागः



# उ प मे यो प मा

## चित्रमीमांसा

अथोपमेयोपमा निरूप्यते ।

## तत्त्वालोकः

इत्थं प्राचामुपमालक्षणस्यातिव्याप्त्यादिदुष्टत्वात् स्वयं तल्लक्षणं परिष्कृत्य प्रतीपविशेषे उपमेयोपमायां च उपमितिक्रियानिष्पत्तिरस्ति न त्वनन्वय इत्यभिमानेन अनन्वयनिरूपणात्प्राक् प्राचीनाभिमते उपमेयोपमालक्षणे दोषमभिधातुं तल्लक्षणमवतारयति–अथेत्यादिना । उपमेयोपमा इत्यत्र द्वेधा व्युत्पत्तिः उपमेयेनोपमा,, उपमेयस्योपमा इति च । आद्ये उपमेयोपमापदघटकस्य उपमा इत्यस्य सादृश्यपरिकल्पनमित्यर्थः । उपमेयेनेति तृतीयायाः प्रतियोगित्वमर्थः उपमानस्येति शेषः । तथा च उपमेयप्रतियोगिकं उपमाननिष्ठं सादृश्यमित्युक्तं भवति, न च एतावन्मात्रं प्रतीपेऽपि इति कथमन्वर्थत्वमिति चेत् न पर्यायेणेत्यनेनैव वारणात् एवं च प्रतीपे एकस्मिन्नेव वाक्ये उपमेयप्रतियोगिकं सादृश्यमुपमाने परिकल्प्यते अत्र तु एकस्मिन् वाक्ये उपमानप्रतियोगिकं सादृश्यम्, अपरस्मिंश्च वाक्ये पूर्वोपमायां यदुपमानं तस्यैवोपमेयत्वम्, एवं च वाक्यभेदेन उपमेयप्रतियोगिकमपि सादृश्यं वर्ण्यत इति विशेषात् ।

## चित्रमीमांसा

उपमानोपमेयत्वं द्वयोः पर्यायतो यदि ।
उपमेयोपमा सा स्यात् द्विधैषा परिकीर्तिता ॥

यदि द्वयोर्यद्वर्ण्यते सोपमेयोपमा इत्युच्यते तदा तुल्ययोगितायामतिव्याप्तिः ।

## तत्त्वालोकः

सत्यम्, अथापि–वाक्यभेदे सत्यपि एकस्मिन् वाक्ये उपमा स्यात् 'मुखं पद्ममि'वेति । अपरस्मिन् वाक्ये प्रतीपभेदः पद्मं मुखमिवेतिवत् । इत्थ च अलंकारद्वयरूपतापद्येत इति चेत् ।

**अत्र केचित्**—यत्रोभयोर्वाक्ययोः विध्यर्थवादयोरिव सन्निहितयोः आकांक्षावशात् एकवाक्यता तत्रोपमेयोपमा, यत्र तु व्यवहितयोः वाक्ययोः विध्योरिव मिथो निराकांक्षत्वं तत्र उपमा–प्रतीपयोस्संसृष्टिः इति ।

**अपरे तु**—'द्वयोरुपमानोपमेयभावविनिमये सत्युपमेयोपमा' इति । उपमेयस्य उपमेति द्वितीये षष्ठ्यर्थः प्रतियोगित्वम् । उपमानानुयोगिका उपमेयप्रतियोगिका उपमेत्यत्रापि शाब्दोऽर्थः । व्युत्पत्तिमात्रं भिद्यते । अर्थेन न किमपि वैलक्षण्यम् इत्याहुः ।

द्वयोः पदार्थयोः पर्यायतः अयौगपद्येन, उपमानोपमेयत्वम् उपमानोपमेयभावः यदि वर्ण्यते तदा उपमेयोपमा स्यादित्यर्थः । **द्विधेति** । धर्मे अनुगामित्वेन, वस्तुप्रतिवस्तुभावमूलकतया चेति द्विप्रकारेणेत्यर्थः । अस्मिंल्लक्षणे **पर्यायेणेति** विशेषणस्य कृत्यमाचक्षाणः पर्यायत इति विशेषणं परिहाय अवशिष्टं लक्षणमभिधायातिव्याप्तिमुद्भावयति–**यदीति** ।

## चित्रमीमांसा

तत्र--

जनस्य तस्मिन समये विगाढे
बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ
स चोदयस्थो नृपतिश्शशी च ॥

इति द्वयोः नृपशशिनोः युगपदेकधर्मान्वयवर्णनात्।
अतः पर्यायेणेत्युक्तम् ॥

### तत्त्वालोकः

प्रत्युदाहरति -तत्रेत्यादिना ।

तस्मिन् समये ग्रीष्मकाले, विगाढे कठिने सति, जनस्य लोकस्य द्वौ सविशेषकान्तौ सातिशयं यथा स्यात्तथा मनोहरौ बभूवतुः । कीदृशौ द्वौ ? तापापनोदक्षमपादसेवौ, तापापनोदे तापप्रणाशने, क्षमा योग्या, पादयोः चरणयोः अथ च पादानां किरणानां च सेवा ययोः तौ, उदयस्थः अभ्युदयमाप्नुवानः नृपतिः कुशो नाम राजा, अथ च उदये उदयपर्वते तिष्ठति इति उदयस्थः उदयपर्वतमारोहन् शशी च इत्यर्थः ।

अत्र तुल्ययोगिताप्रवृत्तिप्रकारमाह— **इतीति** । उक्तोदाहरणे नृपशशिनोरुभयोरपि प्रकृतत्वेन, प्रकृतानामेव, अप्रकृतानामेव वा एकधर्मान्वये तुल्ययोगिताया अभ्युपगमात् द्वयोः सविशेषकान्तत्वरूपधर्मस्यान्वयवर्णनादतिव्याप्तिः । अतः पर्यायेणेत्युक्तम् । तदाह–**अत इति** । तदुपादाने तु उक्तोदाहरणे द्वयोरेकधर्माभिसंबन्धेऽपि अयौगपद्येन तदन्वयवर्णनाभावान्नातिव्याप्तिः ।

तत्त्वालोकः

**यदि तु**— पर्यायेणेति उपादीयते तदा युगपत्प्रवृत्तायां—

'वीतोपमानीतिवचो मृषैव
परस्परं यत्तुलनां भजन्ते'

इत्युपमेयोपमायामव्याप्तिर्दुष्परिहरा । अत एव – **उद्भटरुद्रटाभ्याम् अन्योन्योपरस्परपदघटितं लक्षणम्** । यथा—

अन्योन्यमेव यत्र स्यादुपमानोपमेयता ।
उपमेयोपमामाहुः तां पक्षान्तरहानिगाम् ॥

इति उद्भटेन । **रुद्रटेन च**—

वस्त्वन्तरमस्त्यनयोर्न सममिति परस्परस्य यत्र भवेत् ।
उभयोरुपमानत्वं सक्रममुभयोपमा साऽन्या' इति व्यवहृतम् ॥

एतेन रुद्रटोद्भटयोः तृतीयसदृशव्यवच्छेदफलकेतरेतरौपम्यं उपमेयोपमेतिउ भयोपमेति वा तल्लक्षणमभिमतमिति बोध्यम् ॥

**किञ्च**-उक्तलक्षणे द्वयोरितिपदं यदि द्विसंख्याकयोरित्यर्थपरं तदा—

कान्ताननस्य कमलस्य सुधाकरस्य
पूर्वं परस्परमभूदुपमानभावः ।
सद्यो जरातुहिनराहुपराहतानां
अन्यः परस्परमसावरसः प्रसूतः ॥

इत्यत्र कान्तानने कमल-सुधाकरणां आह्लादकत्वेन साधारणधर्मसंबन्धेन अन्योन्यमुपमा त्रयाणां प्रतीयते । इयं चोपमेयोपमा, उत्तरार्धगतपराहतत्व निमित्तकोपमेयोपमायां अङ्गभूतेति त्रयाणामुपमेयोपमात्वे अव्याप्त्यापत्तिः ।

तथापि—

तस्य द्विपानां मदवारिसेतकात्
खुराभिघाताच्च तुरंगमाणां ।
रेणुः प्रपेदे पथि पङ्कभावं,
पङ्कोऽपि रेणुत्वमियाय भूयः ॥

इत्यत्रातिव्याप्तिः ॥

तत्त्वालोकः

अतः द्वयोरितिपदं उमानोपमेययोरित्यर्थकम् । अत एव सिद्धान्ते ग्रन्थकृता द्वयोरिति नोपादीयते ॥

ननु तुल्ययोगितायां अतिव्याप्तिवारणाय पर्यायेणेत्युपादीयते तदा द्वयोः पर्यायेण वर्ण्यमानोऽर्थः उपमेयोपमा इत्येवालं किमुपमानोपमेयत्वमिति विशेष्यदलोपादानमिति शङ्कायां तदुपादानं अतिव्याप्तिपरिहारकमिति प्रत्युदाहरति–तथापीत्यादिना । तथापि पर्यायेणेत्युक्तावपि इत्यर्थः । अस्य इत्यत्राति व्याप्तिरित्यनेनान्वयः । 'तस्य द्विपानामिति' पर्यायविशेषेऽतिव्याप्तिरिति भावः । तस्येति । तस्य कुशावतीं परित्यज्य अयोध्यां प्रति प्रस्थितस्य कुशस्य, पथि मार्गे, द्विपानां गजानां, मदवारिसेकात् मदोदकसेकाद् हेतोः रेणुः रजः, पङ्कभावं कर्दमताम् , इयाय प्राप । 'पङ्कोऽस्त्री कर्दमैनसोः' इति वैजयन्ती । तथा तुरङ्गमाणां वाजिनां, खुराभिघातात् शफसंघट्टनात् पङ्कोऽपि रेणुत्वमियाय प्राप इत्यर्थः ।

अत्र प्रथमं यत्र रेणोः पङ्कभावो वर्णितः, तस्यैव पङ्कस्य रेणुभावोऽपि

चित्रमीमांसा

तत्र रेणुपङ्क्योः पर्यायेण पङ्करेणुभाववर्णनात् ।
अत उपमानोपमेयत्वमित्युक्तम् ।

द्वयोर्यदुपमानोपमेयत्वं वर्ण्यते सोपमेयोपमेत्युक्तेऽपि —

'व्युष्टं प्रयाणं च वियोगवेदना
विदूननारीकमभूत्समं तदा'

तत्त्वालोकः

'अधुना पुलिनं तत्र यत्र स्रोतः पुराऽजनि'

इतिवत् पर्यायालंकारभेदो वाच्यः । महासंपन्नतासूचनादुदात्तालंकारश्च व्यङ्ग्यः । तथा सत्यपि अत्र रेणुपङ्क्योः पङ्करेणुभावस्य पर्यायेण वर्णनादति व्याप्तिः । तदेतदाह–तत्रेति ।

वाक्यभेदेन पङ्करेणुभाववर्णनेऽपि नोपमानोपमेयभावो वर्णितः इत्य-दोषात् ।

एवं तर्हि–पर्यायेणेति परित्यज्यतां 'द्वयोर्वर्ण्यमानमुपमानत्वमुपमेयत्वं च उपमेयोपमा' इत्युच्यतामिति चेदुभयविश्रान्तसादृश्योपमायामतिव्याप्तिरित्या शयम् आविष्करोति–द्वयोर्यदिति । व्युष्टमिति । संपूर्णश्लोकस्तु—

शुक्लैस्सतारैः मुकुलीकृतैः स्थुलैः
कुमुद्वतीनां कुमुदाकरै रिव ।
व्युष्टं प्रयाणं च वियोगवेदना–
विदूननारीकमभूत्समं तदा ॥

इति युधिष्ठिरानुष्ठास्यमानराजसूये पाण्डवान् अनुगृहीतुं शिशुपालं तत्रैव

## चित्रमीमांसा

इत्युभयविश्रान्तसादृश्यायामुपमायामतिव्याप्तिः । न च तत्र उभयोरपि सादृश्याश्रयत्वरूपस्य उपमेयत्वस्यैव प्रति-

## तत्त्वालोकः

निग्रहीतुं च द्वारकातः इन्द्रप्रस्थं प्रस्थितस्य भगवतो वसुदेवनन्दनस्य प्राभातिकप्रस्थानवर्णनमिदम् ।

सेनानां कृष्णानुगतवाहिनीनां, कृते, शुक्लैः, सतारैः सरज्जुभिः, मुकुलीकृतैः वहनसौकर्याय संकोचितैः, संवेष्टितैर्वा, स्थुलैः पटमण्डपैः, 'दूष्यं स्थुलं पटकुटी गुणलयनी केणिकातुल्याः' इति 'दूष्याद्यं वस्त्रवेश्मनि' इति वैजयन्त्यमरकारौ । कुमुदाकरैरिवोपलक्षितम् । तथा शुक्लैः श्वेतैः सतारैः सकर्णिकैः मुकुलीकृतैः रात्रिविकासित्वान्मुकुलतां प्राप्तैः स्थुलैरिव कुमुदाकरैः वस्त्रवेश्मवत् दीर्घैः विस्तृतैश्च कुमुदप्रायप्रदेशैः कुमुदैश्चोपलक्षितं कुमुद्वतीनां च कृते नदीविशेषणां च कृते व्युष्टं प्रभातं, प्रयाणं च सेनानामिति शेषः । वियोगवेदनया-विरहवेदनया विदूनाः परितप्ताः नार्यः यस्मिंस्तथोक्तं तदा तस्मिन् समये सम उक्तरीत्याऽन्योन्यसदृशमभूत् ।

अत्र व्युष्टप्रयाणयोरुभयत्राऽपि साम्यं वर्ण्यते इत्युभयविश्रान्तसादृश्योपमायामतिव्याप्तिः स्यात् अतः पर्यायेणेत्युपादेयम् ।

तथा च तत्र यौगपद्येन द्वयोरुपमा निबध्यते न पुनः पर्यायेणेति न दोषः ।

उक्तोदाहरणे प्रकारान्तरेणातिव्याप्तिं परिहर्तुं शक्यमिति शङ्कते-**न चेति ।** तत्र व्युष्टं प्रयाणं चेत्युभयविश्रान्तसादृश्योपमोदाहरणे, उभयोरपि

## चित्रमीमांसा

पादनमस्ति, न सादृश्यप्रतियोगित्वस्य उपमानत्वस्य अतो नातिव्याप्तिरिति वाच्यम् ॥

मुखतः प्रतिपादनाभावेऽपि तयोः परस्परमुपमानत्वस्यार्थात्प्रतीतेः ।

## तत्त्वालोकः

व्युष्टप्रयाणयोर्द्वयोरपि सादृश्याश्रयत्वरूपस्य उपमेयत्वस्यैव यत्र सादृश्यं प्रतिपाद्यते स सादृश्याश्रयः तत्त्वमेवोपमेयत्वं तन्मात्रस्य प्रतिपादनमस्ति । न तु येन सादृश्यं उपपाद्यते तद्रूपस्य सादृश्यप्रतियोगित्वरूपस्योपमानस्य, अतः अस्मात्कारणात्, नातिव्याप्तिः इति ।

अयं भावः—यत्र 'चन्द्रेण तुल्यं समं वा मुखमिति, मुखेन तुल्यस्समो वा चन्द्रः इति मुखं चन्द्रश्च परस्परं तुल्यौ' इति प्रयोगान्यतमसत्त्वे सादृश्यप्रतियोगिनो भानं न चात्र वाक्यभेदः न वा परस्परान्योन्यादिशब्दसमभिव्याहार इति उभयत्रापि सादृश्यानुयोगिनोरेव प्रतीतिः न प्रतियोगिनोरिति अतिव्याप्तेः प्रसर एव नास्तीति पूर्वपक्षाभिप्रायः ।

तन्निराचष्टे—मुखतः इति । अयं भावः—इवादिशब्दसमभिव्याहृतोदाहरण इव वाच्यवृत्त्या सादृश्यप्रतियोगित्वरूपोपमानत्वस्य प्रतिपादनराहित्येऽपि अर्थतः उपमानत्वं प्रतीयत एव ।

**किञ्च**—चन्द्रो मुखं च समं इत्यादिप्रयोगतः, मुखं चन्द्रसदृशं न वा, चन्द्रो मुख सदृशो न वा, इति उभयविधसन्देहस्यापि निवृत्तेरनुभवसिद्धत्वेन तज्जातीयेऽस्मिन्नप्युदाहरणे (व्युष्टं प्रयाणं च समं) समपदार्थस्य च

## चित्रमीमांसा

न ह्युपमानोपमेयत्वं यत्र वाच्यमिति लक्षणे विवक्षितम् ।

## तत्त्वालोकः

शब्दवाच्येतरेतरयोगबलात् व्युष्टप्रयाणयोर्युगपदन्वयावगमात् व्युष्टप्रतियोगिकसादृश्यानुयोगि प्रयाणम्, प्रयाणप्रतियोगिकसादृश्यानुयोगि व्युष्टमिति बोधो-जायते । परं तु समपदार्थैकदेशस्य सादृश्यस्य चशब्दबलेनोभयत्रान्वयेऽपि समशब्दस्य उभयत्र साधारणधर्मान्वयबोधकत्वविरहः स्पष्टः । अथापि अर्थतः तदन्वयबोधे बाधकाभावात् इति ।

एवं चोभयत्र प्रतियोगित्वबोधः युगपदनेकार्थान्वयित्वरूपसमुच्चयार्थकचशब्दबलात् न तु समशब्दबलात्तदन्वयबोध इत्यवगन्तव्यम् ।

यद्यत्र—द्वयोरुपमानत्वम् उपमेयत्वं च वाच्यवृत्त्या उपादीयते तदा उपमेयोपमेति विवक्षितं तदा नातिव्याप्तेः प्रसरः स्यात् । न तथात्र लक्षणे निवेशः कृतः अतश्चोभयविश्रान्तसादृश्योपमायां अतिव्याप्तिः दुर्वारेति फलति तदेतदाह-न हीति । यदि तु लक्षणे तथाविवक्षा नावश्यकी यत उपमाद्यलंकाराणां वाच्यार्थनिष्ठत्वमेवेति प्रकरणादेव तल्लाभोऽस्तीत्युच्यते तदा इदमुपमेयोपमालक्षणं व्यङ्ग्योपमेयोपमासाधारणं न भवतीति ।

'कर्णाक्षिदन्तच्छदबाहुपाणि-
पादादिनः स्वाखिलतुल्यजेतुः ।
उद्वेगभाक्क्षद्वय ताभिधानादि-
दिहैववैधाः व्यधित द्वितीयम् ॥

चित्रमीमांसा

व्यङ्ग्योपमयोपमासङ्ग्रहाभावप्रसंगात् । अतः पर्यायेणेत्युक्तम् ॥

एवमपि–'भणितिरिव मतिर्मतिरिव चेष्टा' इत्यादि रशनोपमायां मतिचेष्टयोः पर्यायभेदेनोपमानत्वस्योपमेय–

तत्त्वालोकः

इत्यत्र दमयन्त्याःकर्णाद्यवयवानां अद्वितीयत्वाभिमानपरिहाराय तत्सजातीयावयवान्तरविधानोक्त्या तत्तदवयवद्वयस्य अन्योन्यप्रतियोगिकमेव साम्यमिति तृतीयसदृशव्यवच्छेदेऽपि तात्पर्यमस्तीति उक्तोदाहरणेऽव्याप्तिस्स्यादित्याह–**व्यङ्ग्योपमेयेति** । एवं च प्राचीनाः प्रायेण वाच्यव्यङ्ग्योभयालंकारसाधारण्येन लक्षणकरणप्रणयिनः । अत एव पर्यायेणेति लक्षणे निवेशितमिति यावत् । तेन युगपत्प्रवृत्तायां उभयविश्रान्तसादृश्योपमायां नातिव्याप्तिः । नापि व्यङ्ग्योपमेयोपमायामव्याप्तिश्च प्रसज्यत इति भावः ।

एवमुक्तस्थलेऽतिव्याप्तिरासेऽपि—**रशनोपमायाम्** अतिव्याप्तिपरिहाराय अन्योन्यार्थघटितं लक्षणमावश्यकमित्याह–**एवमपीति** । एवमपि-उपमानोपमेययोः पर्यायेण वर्ण्यमानं सादृश्यमुपमेयोपमेति लक्षणसिद्धावपि **भणतिरिवेति**—

अनवरतकनकवितरणजललव
भृतकरतरङ्गितार्थिततेः ।
भणितिरि वमतिः मतिरिवंचेष्टा
चेष्टेव कीर्तिरतिविमला ॥

### चित्रमीमांसा

त्वस्य च सत्त्वेन अतिव्याप्तिपरिहाराय एकस्मिन् पर्याये यं प्रत्युपमानत्वं तं प्रत्येव पर्यायान्तरे उपमेयत्वं विवक्षणीयम् ।

द्विविधैषेत्युक्तम् । द्वैविध्यं च धर्मस्य साधारण्य वस्तुप्रतिवस्तुभावाभ्याम् ।

### तत्त्वालोकः

इत्यादि पूर्वपूर्वोपमेयस्य उत्तरोत्तरमुपमानत्वरूपायां रशनोपमायां मतिचेष्टयोः, मतौ चेष्टायां च पर्यायभेदेन भणितिरिव मतिरिति वाक्ये मतौ उपमेयत्वस्य मतिरिव चेष्टा इत्युत्तरवाक्ये मतावुपमानत्वस्य, मतिरिव चेष्टेति वाक्ये चेष्टायामुपमेयत्वस्य, चेष्टेव कीर्तिरितिवाक्ये चेष्टायामुपमानत्वस्य च सत्त्वेन मतिचेष्टयोरुभयत्रापि उपमानत्वमुपमेयत्वं चायातमेवेति उक्तलक्षणातिव्याप्तिः दवस्थैव ।

अतः उपमानोपमेययोः परस्परं पर्यायेण वर्ण्यमानं सादृश्यमुपमेयोपम इति परिष्करणीयमित्यर्थः तदेतदाह–**एकस्मिन् इति** । एवंरीत्या लक्षण परिष्कारे तु–भणितिरिवेत्यत्र न मतिचेष्टयोः परस्परमुपमानत्वं उपमेयत्वं च वर्ण्यते, अपितु मतौ भणितिनिरूपितोपमेयत्वं चेष्टानिरूपितमुपमानत्वं चेत्य दोषात् इति भावः ।

सूले द्विविधैषेत्युक्तम् । तदेतद्विवृणुते–**द्विविधैषेति** । यद्यपि वस्तुप्रतिवस्तुभावादीनां धर्मे साधारण्यसंपादकत्वेन उक्तरीत्या विभागोऽनुचितः । अथापि साधारण्यपदस्य अनुगामित्वार्थकतया अदोषादिति व्याख्यातुराशयः । तथा च इयमुपमेयोपमा धर्मस्यानुगामितया वस्तुप्रति

चित्रमीमांसा

सुगन्धिनयनानन्दि मदिरामदपाटलम् ।
अम्भोजमिव ते वक्त्रं त्वद्वक्त्रमिव पङ्कजम् ॥ इति

सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥

तत्त्वालोकः

वस्तुभावेन च संभवति यतः अनुगामित्वं वस्तुप्रतिवस्तुभावश्च धर्मैक्य एव संभवति परंतु वस्तुप्रतिवस्तुभावे धर्मप्रतिपादकपदभेदमात्रम् ।

अत एव-अलङ्कारसर्वस्वकारेणापि— इयं च धर्मस्य साधारण्ये वस्तुप्रतिवस्तुनिर्देशे च द्वेधा इत्युक्तम् । अत एव च **विमर्शिन्यां**-एतच्च धर्मस्य निर्देशानिर्देशरूपपक्षद्वयागूरकत्वेनोक्तम् । तत्र निर्देशपक्षे साधारण्यमस्ति तथाप्यत्र सकृन्निर्देशेनैवानुगतत्वात् तदुपलंभः स्फुट इति भावः ।

तत्र धर्मस्य सकृन्निर्देशे सति साधारणधर्मवतीं तां उदाहरति **सुगन्धीति** । शोभनः गन्धोऽस्मिन्नस्तीति सुगन्धि सौगन्ध्येनावियुक्तमित्यर्थः । गन्धस्येदुत्पूति सु सुरभिभ्यः [पा.सू. ५·४·१३५] गन्धस्येत्वे तदेकान्तग्रहणम् ति सूत्रवार्तिकाभ्यां नैयत्ये समासान्त इकारः । मदिरामदेन सुरापानजनितहर्षेण पाटलम् अरुणम् , ते वक्त्रं मुखम् अंभोजमिव—कमलमिव अंभोजमपि सुगन्धि, नयनानन्दि मदिरामदोदितारुणवत् अरुणम् , अतश्चात्र सौगन्ध्यनयनानन्दजननारुण्यैः अंभोजमुखयोः मुखाम्भोजयोश्च अनुगामिधर्मैः पर्यायेणोपमाप्रतिपादनात् अनुगामिधर्मिणी उपमेयोपमा ॥

वस्तु-प्रतिवस्तुभावमूलकसाधारणधर्मवतीमुपमेयोपमामुदाहरति—**सच्छायेति** । सच्छायानि कान्तियुतानि, अम्भोजानि वदनानीव यासां ताः

चित्रमीमांसा

इति क्रमेणोदाहरणे ॥

अत्रेदं चिन्त्यते– लक्षणस्य–'त्वद्वल्गुना युगपदुन्मिषितेन तावत्' इति प्रागुदाहृतायां युगपदुपमेयोपमायां अव्याप्तिः ।

तत्त्वालोकः

सच्छायाम्भोजवदना वाप्यः सच्छायानि वदनान्यम्बुजानीव वदनाम्बुजानि यासां ताः अङ्गना इव आभान्ति प्रकाशन्ते । तथा अङ्गनाः स्त्रियः वाप्य इव आभान्ति इत्यन्वयार्थः ।

अत्र अंभोजवदनाः इत्यत्र वदनानीवाम्भोजानीति समासः । तथा वदनाम्बुजाः इत्यत्र अम्बुजानीव वदनानीति समासः । ततश्च वाप्यङ्गनयोः अङ्गनावाप्योश्च उपमायां सच्छायत्वमेक एव धर्मः द्विरुपात्तः इति वस्तुप्रति वस्तुभावः इति भावः ।

पूर्वोक्तं लक्षण अव्याप्त्यादिग्रस्तमिति प्रतिपादयन् प्रस्तौति–अत्रेदमिति । चिन्तनं च अव्याप्त्यादिकं भवति न वेति समालोचनमेव । तत्र तावदव्याप्ति माह-लक्षणस्येति । लक्षणस्य पर्यायावगम्यमानं परस्परमौपम्यं वर्ण्यमान मुपमेयोपमा इति फलितस्य—

तद्वल्गुना युगपदुन्मिषितेन तावत्<br>
सद्यः परस्परतुलामधिरोहतां द्वे ।<br>
प्रस्पन्दमानपरुषेतरतारमन्तः<br>
चक्षुस्तव प्रचलितभ्रमरं च पद्मम् ॥

## चित्रमीमांसा

न चेयमुपमेयोपमा न भवति किन्तु उभयविश्रान्तं सादृश्योपमामात्रमिति शङ्कनीयम् । परस्परतुलामित्यनेन द्वयोरपि प्रतियोगित्वस्यापि प्रतिपाद्यमानतया उपमेयोपमे-त्यवयवार्थस्याविशिष्टत्वात् ।

## तत्त्वालोकः

इति प्रक् विद्यानाथोक्तोपमालक्षणघटकस्य एकदेति विशेषणस्य अव्यापकत्वो पपादनावसरे उदाहृता युगपदुपमेयोपमायां—वाक्यभेदमन्तरा प्रवृत्तायाम व्याप्तिः—वाक्यभेदेन परस्परं उपमाया अप्रतिपादनात् उक्तलक्षणस्याऽप्रसक्ति रित्यर्थः । तथा च पर्यायपदार्थस्य लक्षणघटकत्वे अव्याप्तिः लक्षणदोष इति भावः ॥

उक्तोदाहरणे—'धर्मोऽर्थ इव पूर्णश्रीः अर्थो धर्म इव त्वयि' इत्यादिवत् परस्परप्रतियोगित्वस्य वाच्यतया अनुपादानान्नोपमेयोपमा । अपितु 'सरसिज-मिदमाननं च तस्याःसम'मितिवदुभयविश्रान्तसादृश्योपमैवेत्याशंक्य निरा-चष्टे—**न चेति** । तत्र हेतुमाह—**परस्परेति** ।

अयं भावः—यद्यत्र महाकवेः पङ्कजनेत्रयोः सादृश्यमात्रं विवक्षोपारूढं स्यात्तदा युगपत्तुलामधिरोहतां द्वे इत्येतावतैव पर्याप्तं स्यात् । यथा सरसिज-मिदमाननं च तस्यास्सममितिवत् । न चात्र तथा निर्दिष्टं कविना किंतु परस्परतुलामित्यपि निर्दिष्टं तेन च अन्योन्यप्रतियोगित्वमपि वाच्यतयैव भासत इति उपमेयोपमा निराबाधा ।

न चात्र सदृशस्य तृतीयस्येति वक्ष्यमाणोपमेयोपमालक्षणघटकतृतीय सदृशव्यवच्छेदाप्रतीत्या पर्यन्तेऽपि नोपमेयोपमोदाहरणत्वं सिद्ध्यतीति एवं

चित्रमीमांसा

**अर्थादपि सिध्यतः परस्परप्रतियोगित्वस्य मुखतः प्रतिपादनेन तृतीयसदृशव्यवच्छेदरूपफललाभाच्च ॥**

तत्वालोकः

मादावेतत्परित्यज्यतामित्याशंकनीयम्, पर्यन्तेऽप्यत्र उपमेयोपमाप्रधानकारण तृतीयसदृशव्यवच्छेदस्य प्रतीतेरित्याह-**अर्थादपीति** ।

'सरसिजमिदमाननं चे'त्यादिवत् उभयत्र सादृश्याश्रयत्वरूपोपमेयत्वप्रतिपादनेऽपि चकारप्रयोगबलात् परस्परप्रतियोगित्वस्य व्यक्तिर्यथा तद्वदत्रापि प्रतीतिसिद्धौ सत्यामपि परस्परशब्दमेवोपयुज्य उभयत्र उपमानताप्रतिपादनात् तृतीयसदृशव्यवच्छेदः कवेरपि विवक्षितः इत्युन्नीयते । अन्यथा 'धर्मोऽर्थ इव पूर्णश्रीः' इत्यत्रापि उभयत्रोपमाविश्रान्तिरेवेत्यपि वक्तुं शक्यत्वादिति भावः ।

**एतेन**—'सरसिजमिदमाननमिति, तद्वल्गुना इत्यस्याश्चैकशीलतय आद्ये उपमा द्वितीये उपमेयोपमेति विभागे बीजाभावात्तद्वदस्यापि लक्ष्यत्वात् इति **कौस्तुभकारोक्तचित्रमीमांसाखण्डनं** अविचार्य कृतमिति बोध्यम् । आद्ये उपमेत्युक्तौ अनुयोगित्वांशस्य वाच्यत्वं प्रतियोगित्वांशस्य आर्थत्वं द्वितीये प्रतियोग्यनुयोगित्वयोरुभयोरपि वाच्यत्वमिति विभागनिमित्तस्य स्पष्टं प्रतिपादनात् ।

**साहित्यदर्पणोक्तो**पमेयोपमालक्षणस्यापि इदमुदाहरणं भवत्येव यत-स्तत्र प्रतियोगित्वांशस्योभयत्रापि वाच्यत्वं विवक्षितं ।

## चित्रमीमांसा

किंच–'रजोभिः स्यन्दनोद्धूतैः' इति प्रागुदाहृतायां परस्परोपमायामतिव्याप्तिः । न च तत्राप्युपमेयोपमा । तृतीयसदृशव्यवच्छेदाप्रतीतेः ।

## तत्त्वालोकः

इत्थमुक्तलक्षणमव्यापकमिति प्रतिपाद्य अतिव्यापकमपीत्याह–**किंचेति** ।

'रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः ।
भुवस्तलमिव व्योम कुर्वन्व्योमेव भूतलम् ॥'

इति एकदेतिविशेषणदानस्याव्यापकत्वोपपादनावसरे उदाहृतायामतिव्याप्तिः ।

अयं भावः–गगनभूतलयोः परस्परं साम्यं प्रत्येतव्यं चेत्तदा एको धर्मः निर्दिष्टो भवेत् । यथा–चन्द्र इव मुखम् इति प्रयुक्ते मुखे चन्द्रसाम्ये वर्णिते चन्द्रेऽपि मुखसाम्यमर्थतः सिध्यति साधारणधर्मस्योभयानुगतत्वात् । अत्र तु रजोव्याप्तत्वेन धर्मेण गगने भूतलसाम्यं मेघतुल्यगजव्याप्तत्वेन भूतले गगन साम्यं इति उपमाद्वये धर्मस्य भिन्नत्वात् । गगने रजोव्याप्तत्वेन धर्मेण भूतलसाम्ये प्रदर्शिते भूतले मेघतुल्यगजैः गगनसाम्यं नार्थतः सिद्धं भवति । अतः भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलमिति वाक्यभेदेन परस्परसाम्य मात्रं प्रतिपादितमिति पर्यायेणोपमा वर्तत इत्यतिव्याप्तिरिति ।

नन्वेवं तर्हि उपमेयोपमैवाऽस्त्विति वाच्यम् । तथा सति तृतीय सदृशव्यवच्छेदः फलितो भवेत् । न चात्र तथेत्याह–**न चेति** ।

यत्र यत्र परस्परोपमा तत्र उपमेयोपमेति न व्याप्तिः वक्तुं शक्या—

'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः'

## चित्रमीमांसा

द्विविधैषा प्रकीर्तितेति विभागस्यासामञ्जस्यप्रसंगाच्च ।

## तत्त्वालोकः

इत्युदाहरणे एकैकस्य सवित्रादेः सादृश्यप्रतियोगित्वमनुयोगित्वं च शब्दत एव भासत इत्यन्योन्योपमा अपरिहार्या । न चैतावन्मात्रेण उपमेयोपमेति शक्यते वक्तुम् । तृतीयसदृशव्यवच्छेदो ह्युपमेयोपमाजीवितमिति आलंकारिकसमयः । अत एव च-**रुद्रटेन**--

वस्त्वन्तरमनयोर्न समस्ति परस्परस्य यत्र भवेत् ।
उभयोरुपमानत्वं सक्रमम्**उभयोपमा** साऽन्येति ॥

तथा **काव्यप्रकाशकृता दशमे** – 'उपमानोपमेययोः इतरोपमान व्यवच्छेदपरा उपमेयेनोपमा इत्युपमेयोपमा' इत्युक्तम् । तत एव 'सविता विधवति' इति पद्यं प्रकाशकृता उपमायामेवोदाहृतम्, अस्यां पुनर्न । अत एव च **सर्वस्वव्याख्यात्रा जयरथेन विमर्शिन्याम्**– उक्तपद्ये–'न ह्य विधुसवित्रादीनामुपमानान्तरतिरस्करण विवक्षितम् किन्तु सुखदुःखवशीकृत मनसामेतं विपरीतं भवति इति' इत्युक्तम् । **तथा नव्येन पण्डितराजेन** च रत्नाकरमतनिराकरणपूर्वकं परस्परोपमायाः स्थिरीकरणात् ।

'रजोभिः स्यन्दनोद्धूतैः' इत्युदाहरणे **विमर्शिनीकारादिभिः** उपमेयोपमेत्युच्यते भवद्भिश्च नेत्युच्ते । अनयोः कस्य परिग्राह्यत्वं कस्य परित्याज्यत्वं इति विनिगमकाभावादिति चेत् । तृतीयसदृशव्यवच्छेदाप्रतीतेरिति ह्युक्तं विनिगमकम् । सत्यमुक्तम् । तत्तु प्रतिज्ञामात्रम् । न हेतुः । इत्याशंकायाम् उपमेयोपमानिरासकयुक्तिमूलमुपादत्ते — **द्विविधैषेति** ।

**चित्रमीमांसा**

**न ह्यत्र धर्मस्य साधारण्यं वस्तुप्रतिवस्तुभावो वाऽस्ति । गगनस्य भूतलेन सादृश्ये रजोव्याप्तत्वं साधारणधर्मः । भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिम्बप्रति-बिम्बभावः इत्यत्यन्तविलक्षणत्वात् ।**

**तत्त्वालोकः**

प्रकृतलक्षणकृता साधारण्यवस्तुप्रतिवस्तुभावाभ्यामुपमेयोपमाप्रतिपादिता । न तृतीयाऽपि विधा । तेन च एतद्युक्तं भवति—धर्मवृत्तिसामान्योपस्थापकपदैक्ये सति पदभेदे सत्यपि धर्मैक्ये प्रतिपादिते अनयोरस्मिन् विषये तृतीयः सब्रह्मचारी नास्तीति फलति । न चैनद्धर्मभेद इति । अन्यथा द्विविधेति विभागः असमञ्जसः स्यात् इति भावः ।

न चात्रैकविधस्यापि संभव इति प्रतिपादयति—**न ह्यत्रेति** । गगन भूतलयोः; भूतलगगनयोश्चोपमायां अन्वीयमाने धर्मे न साधारण्यं [एकरूपता] विलक्षणत्वात् । सतिब लक्ष्ण्ये वस्तुप्रतिवस्तुभावस्य सुतरामभावात् विभिन्न शब्दबोध्यधर्मैक्य एव तत्प्रवृतेः । तदेतदाह—**गगनस्येति** । स्यन्दनोद्धूतैः रजोभिः व्योम भुवस्तलमिव कुर्वन् इत्यन्वयात् । घनसन्निभैश्च गजैः भूतलं व्योमेव कुर्वन् इत्यन्वयादिति भावः ।

**एवं** च व्योमतभूलयोः उपमायां रजोव्याप्तत्वं साधारणो धर्मः । भूतलव्योम्नोरुपमायां, मेघतुल्यगजानां साधारणधर्मत्वमिति रजोव्याप्तत्वमेघ तुल्यगजानां न ह्येकरूपता आह्लादिकत्वादिवत् । अतश्च न अनयोः तृतीयं सदृशं वस्तु विद्यत इति फलति ।

चित्रमीमांसा

अत एवात्र तृतीयसब्रह्मचारिव्यवच्छेदरूपं फलमपि न सिध्यति। एकधर्माश्रयेण परस्परसाम्ये वर्ण्यमाने ह्यनयोरस्मिन् विषये तृतीयः सब्रह्मचारी नास्तीति फलति। कस्याचित् केनचित्सादृश्ये वर्णिते तस्याप्यन्येन सादृश्यमर्थ सिद्धमपि मुखतो वर्ण्यमानं तृतीयसदृशव्यवच्छेदार्थं भवतीति हि तत्फलकत्वे बीजम्।

न चैतद्धर्मसाधारण्य इव धर्मभेदेऽपि लभ्यते। रजो

तत्त्वालोकः

तदेतदाह — अत एवेति। अत एव–द्वयोरुपमयोः साधारण धर्मस्यात्यन्तविलक्षणत्वादेवेत्यर्थः। तृतीयसदृशव्यवच्छेदः कुतोऽत्र न सिद्ध्यतीत्यत्र हेतुमाह–एकधर्मेति। यथा–'धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि' इत्यादौ पूर्णश्रीत्वरूपैकधर्मावलम्बनेन अन्योन्यं साम्ये वर्ण्यमाने अयं सन्देहस्संजायते चन्द्र इव मुखमित्युक्ते मुखे चन्द्रसाम्यं वर्णितमपि चन्द्रेऽपि मुखसाम्यम् अर्थतः सिद्धं भवति साधारणधर्मस्योभयानुगामित्वात्। तद्वदत्राऽपि 'धर्मोऽर्थ इव पूर्णश्रीः' इत्येतावतापि अर्थे धर्मसाम्यमर्थतः सिध्यत्येव। तथा सत्यपि अर्थो धर्म इवेति पुनरुपादानं किमर्थमिति। ततश्च विरुद्धधर्मसंसर्गाद्वाक्यस्याप्रामाण्यप्रसंगे 'विरोधे गुणवादस्स्यात्' इति न्यायात् तृतीयसदृशव्यावृत्तिः फलति इति नाप्रामाण्यप्रसक्तिरिति अभिप्रेत्य तृतीयसदृशव्यच्छेदप्रतीतिप्रकारमाह– कस्यचिदिति।

उक्तार्थव्यतिरेके तु तृतीयसदृशव्यवच्छेदो न सिद्ध्यतीत्याह–नचैतदिति। अभावः–'रजोभिः' इत्यत्र रजोव्याप्तत्वरूपसाधारणधर्मेण गगने भूतल

चित्रमीमांसा

**भिर्गगनस्य भूतलसादृश्यवर्णनेन भूतलस्य मेघाकारैर्गजैः गगनसादृश्यस्य अर्थतः सिध्यभावात् ॥**

### तत्त्वालोकः

साम्ये वर्णिते भूतले मेघतुल्यगजव्याप्तत्वरूपसाधारणधर्मकगगनसाम्यं नार्थत स्सिद्धं भवति। कुतः? रजोव्याप्तत्वमेघतुल्यगजव्याप्तत्वयोरुपमाद्वये विलक्षणत्वात्। अतश्च भूतलव्योम्नोरुपमायामसिद्धमेव गगनसाम्यं भूतले वर्ण्यत इति गगनभूतलयोः परस्परमेव साम्यं प्रतीयते। अत एव द्वितीयोपमा-प्रतिपादकवाक्यस्य वैयर्थ्यं न प्रसज्यते। अत एव च तस्य नार्थवाद वाक्यवत् तृतीयसदृशव्यवच्छेदफलकत्वमपीति ॥

वस्तुतस्तु --रजोभिः स्यन्दनोद्धूतैः इत्यत्र **विमर्शिनीकाराद्यभिमता** उपमेयोपमैव वक्तुं युक्ता। तथाहि--पूर्वदिग्विजयार्थं प्रस्थितस्य रघोः प्रतापाधिक्यप्रकाशनाय महता वेगेन प्रस्थितस्यापि स्यन्दनस्य प्रतिरोद्धारो न केऽपि अभूवन्। यतः स्तावदस्य बलं इति प्रतीयते। स्यन्दनोद्धूतरजोभिः व्याप्तिर्या जाता तया द्रष्टॄणां व्योम भूतलमिवाबभासे। तथा वर्णतः क्रियातः परिमाणतश्च मेघतुल्यगजसम्बन्धाद् भूतलं व्योमेव बभासेव-इत्यत्र कवेस्तात्पर्यम्। तथाच दिग्विजयार्थं प्रयाणसमये व्योम-भूतले रजो गजः भूतल-व्योमनी इव कुर्वन् रघुर्ययौ इति वर्णनेन स्यन्दनवेगातिशयः महाप्रमाणमातङ्गाधिक्यं चावगम्यते। तेन च रघोः अप्रतिहता दिग्विजय यात्रा च व्यज्यत इति तदानीं रजो-गजव्याप्ते व्योमभूतले एव परस्परं सदृशे अवगते नान्य इति सदृशान्तरव्यवच्छेदो रघोः उत्कर्षाधिक्यमेव प्रत्याययति।

तत्त्वालोकः

**यद्यपि**—भूतलप्रतियोगिकव्योमानुयोगिकोपमायां रजसामेवोभयानुगतत्वात्साधारणधर्मत्वं योमभूतलयोः रजसां दृष्टत्वात् । व्योमप्रतियोगिकभूतलानुयोगिकोपमायां तु गजेषु घनसादृश्यमपेक्षितम् । व्योम्नि गजानां भूतले मेघानां चादर्शनात् गजानां मेघानां च बिम्बप्रतिबिम्बभावमूलकतया साधारणधर्मत्वमिति वक्तुं शक्यम् ।

**तथापि**—प्रकरणानुगुण्येन रघौ समाधिकबलत्वप्रतीतिप्रयोजकोपमेयोपमानुगुणस्य रजसां मेघतुल्यगजानां च बिम्बप्रतिबिम्बभावस्य विवक्षया साधारण्यसंपादने बाधकाभावात् ।

उपमेयोपमात्वे प्रयोजकं च पूर्वोपमायां यस्य साधारणधर्मत्वं तस्यैव द्वितीयोपमायां साधारणधर्मत्वम् । प्रकृते च रजोगजानां अभेदसादृश्यादिना उभयत्रोपमायां साधारणधर्मत्वाभ्युपगमे बाधकाभावात् । अन्यथा—

'युधि निसर्गनिरर्गलमार्गणः
प्रविगलन्निरवग्रहवर्षणः ।
वसुमतीतिलक त्वमिवाम्बुदोऽ-
म्बुद इव त्वमुदेषि महींमुदे ॥

इत्यादौ वृष्टिबाणानां निरन्तरपातित्वशीघ्रपातित्वसादृश्यमूलकतया बिम्बप्रतिबिम्बभावमभ्युपगम्य साधारणधर्मत्वमिति राज्ञोऽम्बुदस्सदृशः, अम्बुदस्य राजा सदृशः न चान्य इति तृतीयसदृशव्यवच्छेदः कविविवक्षितो न प्रतीयात् ॥

अतश्च बिम्बप्रतिबिम्बभावमूलकतया साधारण्येन उपमेयोपमानिराकरणं ग्रन्थकृतः पण्डितराजस्य च आग्रहमात्रमेव ।

### तत्त्वालोकः

**किंच**—'सच्छायाम्भोजवदनाः' इत्यत्र वस्तुप्रतिवस्तुभावमूलतया साधारण्येन उपमेयोपमामुपपादयतः **सर्वस्वकारस्य-तदनुयायिनो ग्रन्थकृतश्च मतं** नातीव श्रद्धेयम्-यतोत्र अङ्गनावाप्योः वाप्यङ्गनयोः श्चोपमेयोपमायां सच्छायत्वरूपैकधर्मनिमित्तकसादृश्यमूलतया अम्भोजवदनयोः वदनाम्बुजयोश्च बिम्बप्रतिबिम्बभावेन उभयोपमायां साधारणधर्मत्वस्य वक्तुं युक्तत्वात्। अन्यथा-'धर्मोऽर्थ इव पूर्णश्रीः' इत्यादाविव सच्छायावाप्योऽङ्गना इव। भान्ति अङ्गना वाप्य इवेत्येतावन्मात्रमेवोपात्तं भवेत्। न च तथात्र प्रदर्शितं कविना।

**यद्वा**— 'रजोभिः स्यन्दनोद्धूतैः' इत्यत्र

'रजोभिः स्यन्दनोद्धूतैः घननीकाशदन्तिभिः'

इति दन्तिमात्रान्वयानुकूलतया अकवयन्—

'रजोभिः स्यन्दनोद्धूतैः गजैश्च घनसन्निभैः'

इति कवयति स्म। तेन च ज्ञायते घनसन्निभैः इत्यस्य रजस्सु गजेषु च अन्वयो भवत्विति कवेराशय इति-उपपद्यते स्यन्दनोद्धूतत्वेन बहुलेषु रजस्सु मेघतुल्यत्वं वर्णतः प्रमाणतश्च। एवं गजेष्वपि मेघतुल्यत्वं वर्णतः प्रमाण तश्चेति। तथाच स्यन्दनोद्धूतैः घनसन्निभैः रजोभिः घनसन्निभः गजैश्च क्रमेण व्योम भूतलमिव कुर्वन्, भूतलं व्योमेव कुर्वन् ययावित्यन्वये मेघसादृश्यावच्छिन्नानां रजसां मेघसादृश्यावच्छिन्नानां गजानां च बिम्बप्रति बिम्बभावस्वीकारे उपमाद्वयेऽपि धर्मैक्यमबाधितमेव। अत एव-**सर्वस्व सञ्जीविन्यां जयरथेन**-शाब्दे वाक्यभेदे उपमेयोपमायाः इदमेवोदाहरणं दत्तम्। समुचितं च।

तत्त्वालोकः

**एतेन**—'यच्च विमर्शिनीकारेणोक्तमित्युपक्रम्य द्वयोरुपमयोः एकधर्मकत्वाभावात्' इति तदभिमता उपमेयोपमा यन्निराकृता **रसगङ्गाधरकृता** सा अनुचितैव । द्वयोरेकधर्मत्वस्यापि सुसंपादत्वात् ।

**एतेनेदं फलति**—सर्वस्कार-दीक्षित-पण्डितराजादीनां मतेऽनुगामित्व-वस्तुप्रतिवस्तुभावान्यतररीत्या धर्मैक्ये उपमेयोपमेति, अन्यत्र तु परस्परोपमैवेति । अथापि पण्डितराजेनैव

'अविरतचिन्तो लोके वृक इव पिशुनः पिशुन इव वृकः'

इति श्लेषमूलकतया समानधर्मतामुपगच्छता बिम्बप्रतिबिम्बभावमूलतया समानधर्मत्वनिराकरणं सुतरां न शोभते । एवं ग्रन्थकृताऽपि 'तत्रापि यथासंभवं पूर्वोक्ता भेदाः उन्नेयाः' इति वक्ष्यमाणतया तद्रीत्यापि बिम्बप्रतिबिम्बभावमूलकोपमेयोपमानिराकरणं न शोभत इत्यलम् । एवं च 'रजोभि'रित्युपमेयोपमाया उदाहरणमेवेति नातिव्याप्तिः ।

**यदि तु**—परस्परोपमायामतिव्याप्तिः उद्भाव्या तदा इदं प्रत्युदाहरणं सर्वसम्मतम्—

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥'

इति अत्र च विधुसवित्रोः सुखदुःखवशीकृतमनसां विषये सुखसमये दुःखदत्वं दुःखसमये सुखदत्वमिति वैपरीत्यमात्रप्रतीत्या अन्योन्यसादृश्यमेव न तृतीयसदृशव्यवच्छेद इति अतिव्याप्तिरुक्तलक्षणस्य प्रसज्यते । अतश्चास्य उपमेयोपमानुदाहरणत्वं **काव्यप्रकाशविमर्शिनीरसगङ्गाधरकारादीनां** सम्मतमेव । उपमाद्वये एकधर्मनिमित्तकत्वाभावात् ।

## चित्रमीमांसा

अपि च—

पिता समाराधनतत्परेण
　　पुत्रेण पुत्री स यथैव तेन ।
पुत्रस्तथैवाधिकवत्सलेन
　　स तेन पित्रा पितृमान् बभूव ॥

### तत्त्वालोकः

अथ व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकोपमायामतिव्याप्तिमुद्भावयितुं उदाहरणमुपादत्ते–**अपि चेत्यादिना** । पिता सः क्षेमधन्वा समाराधनतत्परेण शुश्रूषापरेण, तेन पुत्रेण देवानीकेन यथैव पुत्रीबभूव प्रशस्तपुत्रयुतोऽभवत्, प्रशस्तपुत्रसंबन्धविवक्षायाम् पुत्रशब्दत् 'अत इनिठनौ' [पा.सू. ७-२-२२५] इति इनि प्रत्ययः । तदुक्तं —

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संबन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः ॥

इति, तथैव सः देवानीकः अधिकवत्सलेन स्वभावतः परदोषतिरस्कारकारि संबन्धविशेषवता इत्यर्थः । उक्तं च वात्सल्यस्वरूपं गीताभाष्य **तात्पर्यचन्द्रिकायां** 'स्वाभाविकः परदोषतिरस्कारकारी संबन्धविशेष' इति । व्युत्पत्तिश्च–वत्सशब्दात् स्नेहवानित्यर्थविवक्षायां 'वत्सांसाभ्यां कामबले' [पा.सू. ५-२-९८] इत्यर्थे आद्यजन्तकामशब्दार्थे लच् प्रत्ययः । वत्सलः कामवान् इत्यर्थ । कामश्च स्नेहः, अत एव 'वत्सलः इति स्नेहवानुच्यत' इति **वृत्तिपदमञ्जरीकारौ** ।

**यद्यपि** –वत्सशब्दः वयोविशेषवति रूढस्तथापि वृत्तिविषये वत्स

## चित्रमीमांसा

इति व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकोपमायामतिव्याप्तिः ॥

## तत्त्वालोकः

शब्दः स्नेहवति वर्तते । तेन तादृशेनेत्यर्थः, पित्रा पितृमान् प्रशस्तपितृकः बभूव । लोके पितृत्वपुत्रत्वयोः फलमनयोरेवासीदिति तदर्थः ॥

**व्यस्तधर्मीति** । व्यत्यस्तयोः विपर्यस्तयोः धर्मिणोः योऽयं बिम्ब प्रतिबिम्बभावः तद्वत्युपमायामिति सामान्यतोऽर्थः । अयं भावः उपमा तावच्च तुरवयवा–तत्रोपमानमुपमेयं साधारणोधर्मः सादृश्यश्चेति । तस्यामपि यत्र बिम्बप्रतिबिम्बभावमूलकतया धर्मे साधारण्यं संपाद्यते तत्र ययोर्बिम्बप्रतिबिम्ब भावस्तयोः सादृश्यप्रतीतिः आवश्यकी, तां विना बिम्बप्रतिबिम्बभाव एव न संभवति । इत्थं च बिम्बप्रतिबिम्बभावमूलकसाधारणधर्मकोपमास्थले एका उपमा प्रधानीभूता अपरा वाच्यसिद्ध्यङ्गरूपगुणीभूतव्यङ्ग्या अप्रधानोपमा । प्रधानोपमायां ययोरूपमानोपमेयत्वं तयोरेव विपर्यासेन धर्मकोटिप्रवेशे यथा कथञ्चित्साधर्म्यप्रतीतौ बिम्बप्रतिबिम्बभावः । तन्मूलकतया च प्रधानोपमायां साधारणधर्मत्वमिति तस्यामुपमायां व्यत्यस्तधर्मिबिम्बकोपमात्वं, तस्यां वाच्य व्यङ्ग्योभयोपमापरिग्रहे वाच्यकक्ष्यायां प्रधानोपमाया उपमानोपमेययोः, व्यङ्ग्यकक्ष्यायां विपर्यस्तयोस्तयोरेवोपमेति पर्यायेण उपमानत्वमुपमेयत्वं चैक–पदार्थवृत्ति भवतीत्यतिव्याप्तिरित्यर्थः ।

अत्र कयोः प्राधान्येनोपमा ? विपर्यस्तयोर्ययोः धमर्ममाश्रित्य बिम्ब प्रतिबिम्बभावः आश्रीयते स साधारणधर्मः कः ? यमाश्रित्य तयोरुपमा स्यात् । यया चोपमया पर्यायेणोपमां निरुध्य उक्तलक्षणातिव्याप्तिः उन्नीयत इत्याशंका

चित्रमीमांसा

अत्र हि पुत्रः पिता चेत्युभावुपमेयोपमानभूतौ धर्मिणौ।

तयोस्तावेव व्यत्यासेन पितृमत्वं पुत्रित्वमिति साधारणधर्मकोटिप्रविष्टतयोपात्तौ। तयोश्च बिम्बप्रतिबिम्बरूप साधारण्यापादको धर्मो मतुविनिप्रत्ययोपात्तं प्राशस्त्यम्।

तत्त्वालोकः

नामुत्तरमाह–अत्र हीत्यादिना। एतेन– पितुः पुत्रस्य च या उपमा सैव प्रधानीभूता इत्युक्तं भवति।

प्रधानोपमायामुपमानोपमेययोर्व्यत्यासेनाप्युपमायां निमित्तं किमिति आशंकायामाह–तयोरिति।

पितुरिव पुत्रः इत्युक्ते कथमित्याकांक्षा जायते। तदा पितरि प्रशस्त पुत्रवत्वं, पुत्रे प्रशस्तपितृमत्वं च। अनयोश्चैकरूपत्वाभावात् असाधारण्ये प्राप्ते पितापुत्रयोः बिम्बप्रतिबिम्बभावेन साधारण्यं संपाद्यम्। कामं संपाद्यतां पितापुत्रयोः बिम्बप्रतिबिम्बतया तत्वम्। तत्रापि साधारणधर्मः अपेक्षित इत्यत्र तमाह–तयोश्चेति।

पितापुत्रयोः उपमायां व्यत्यासेन पितापुत्रयोः यः बिम्बप्रतिबिम्बभावः तत्र साधारणीभूतधर्मः पुत्री–पितृमान् इति पुत्रपितृशब्दाभ्यां यौ 'अत इनिठनौ' (पा.सू.५-२-११५) 'तदस्यास्त्यस्मिन्निति मतुप्' (पा.सू.५-२-९४) इत्याभ्यां क्रमेण विहितौ इनि–मतुप्प्रत्ययौ

'भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने।

## चित्रमीमांसा

प्रशंसायां ह्यत्र तौ प्रत्ययौ, पित्रा पितृमान् इति संबन्धमात्रस्यावक्तव्यत्वात्। एवं च पुत्रस्य पितुश्च प्रशस्त-पितृमत्वम्, प्रशस्तपुत्रवत्वं च बिम्बप्रतिबिम्ब करम्बितेन वस्तुप्रतिवस्तुभावेन साधारणधर्म इति लभ्यते।

## तत्त्वालोकः

सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

इति विषयनियामकानुरोधेन प्रशंसार्थकौ। तत्प्रतिपाद्यं प्राशस्त्यं वस्तुप्रति वस्तुभावेन निर्दिष्टम्। तथा च मतुविनिप्रत्ययोपात्तप्राशस्त्यरूपसाधारण धर्मप्रयोज्यः पितापुत्रयोः बिम्बप्रतिबिम्बभावः। बिम्बप्रतिबिम्बभावापन्नयोः पितापुत्रयोः पितृ-पुत्रयोरुपमायां साधारणधर्मत्वं तेन च प्रधानोपमा निरु ह्यते इति भावः। न चात्र धर्मे साधारण्यं वस्तुप्रतिवस्तुभावो वा एकेन शब्देन धर्मनिर्देशाऽभावान्न साधारण्यम्, मतुबिनिप्रत्ययोपात्तं च संबन्धमात्रमिति न तस्यैकरूपतेति न वस्तुप्रतिवस्तुभाव इति नातिव्याप्तिप्रसक्तिरिति वाच्यम्।

पितापुत्रयोः पुत्रवात्सल्य-पितृभक्तिभ्यामुत्कर्षप्रतिपादनायैव प्रवृत्तेऽस्मिन् वाक्ये मतुप्-इनि प्रत्ययाभ्यां प्रशंसाया एवाभिधेयत्वं वक्तुं युक्तं न तु संबन्धमात्रमित्याह-**प्रशंसायामिति**।

तथा च पुत्रपित्रोरुपमायां पुत्रस्य-पितुश्च प्रशस्तपितृमत्वम् प्रशस्त पुत्रवत्वं च बिम्बप्रतिबिम्बभावकरम्बितेन वस्तुप्रतिवस्तुभावेन साधारणधर्मत्वमित्याह-**एवं चेति**।

चित्रमीमांसा

**तयोश्च पितापुत्रयोः प्राशस्त्यप्रतिपादके अधिकवत्सलेन समाराधनतत्परेणेति च विशेषणे ।**

**ततश्च धर्म्युपमायां यः पिता पुत्रस्योपमानं स एव तस्य तदुपपादके बिम्बप्रतिबिम्बनिर्देशे उपमेय इति लक्षणस्य वर्तनं तावत्स्पष्टम् ।**

तत्त्वालोकः

तर्हि पुत्रे समाराधनतत्परेणेति, पितरि अधिकवत्सलेन इति विशेषणं किमर्थमुपात्तमित्यत्राह–तयोश्चेति ।

एतेनात्र मतुबिनिप्रत्ययौ प्रशंसार्थकावेवेति सोपपत्ति प्रदर्शितं भवति । एतावता धर्म्युपमायां यस्योपमानत्वं तस्यैव तदुपपादकोपमायामुपमेयत्वमिति पर्यायेण उपमासिद्धयतीति लक्षणस्यात्रापि व्यापनं दुष्परिहर-मिति भावेनाह ततश्चेति ।

ततश्च पिता पुत्रयोः उपमायां प्राशस्त्यप्रतिपादकधर्मघटितप्राशस्त्य विशिष्टयोः पुत्रवत्व पितृमत्वयोः साधारणधर्मत्वे सिद्धे च, धर्म्युपमायाम् पितापुत्रयोरूपमायाम् , पुत्रस्योपमानं यः पिता (क्षेमधन्वा) स एव पितैव तदुपपादके साधारणधर्मे उपमेयः इति वाच्यकक्ष्यायाम् उपमानस्य, व्यङ्ग्य कक्ष्यायां उपमेयत्वं संभवतीति उक्तोपमेयोपमालक्षणस्य वर्तनं समन्वयः स्पष्टम् स्फुट इत्यर्थः ।

एवं तर्हि उपमेयोपमैवाभ्युपगम्यतां इति चेत् उपमेयोपमाजीवितस्य तृतीयसदृशव्यवच्छेदस्यैवालाभे सा कथं शक्यतेऽभ्युपगन्तुमिति तां निराकरेति

### चित्रमीमांसा

न चेयमुपमेयोपमा। पुत्रपित्रोर्धर्मिणोरुपमायां प्रशस्तपितृमत्वं प्रशस्तपुत्रवत्वं च वस्तुप्रतिवस्तुभावेन विम्ब प्रतिबिम्बकरम्बितेन साधारणोधर्मः।

पितापुत्रयोस्तु धर्मकोटिनिविष्टयोः वात्सल्य भक्त्य तिशयकृतं प्राशस्त्यं अनुगतसाधारणधर्म इति पूर्वोदाहरण सारूप्यात् समुच्चयोपमया पुत्रोऽपि पितृभक्त्या प्रशस्तः पितापि पुत्रवात्सल्येन प्रशस्त इत्यर्थलाभेऽपि तृतीय सब्रह्म चारिव्यवच्छेदालाभाच्च।

### तत्त्वालोकः

**न चेति।** बिंबप्रतिबिंबनिर्देशघटकयोः पितापुत्रयोरुपमायां 'रजोभिः' इत्युदाहरण इव वात्सल्यभक्त्यतिशयकृतं प्राशस्त्यमनुगतसाधारणधर्म इति धर्मेऽत्यन्तवैलक्षण्यमस्तीति प्रदर्शयितुमाह — **पितापुत्रयोरिति।** अत्र 'आनङ्ऋतो द्वन्द्वे' [पा.सू. ६.३.२५] इत्यानङ्।

धर्मकोटिनिविष्टयोः प्रधानोपमाप्रयोजकसाधारणधर्मकोटिप्रविष्टयोः इत्यर्थः। प्रशस्तपितृमत्व–प्रशस्तपुत्रवत्वरूपसाधारणधर्मघटकयोरितियावत्, पितापुत्रयोस्तु–प्रधानोपमायां साधारणधर्मकोटिप्रविष्टतया उपमेयोपमानभूतौ यौ तयोः पितापुत्रयोरित्यर्थः। पिता पुत्रवतीतियावत्। वात्सल्यभक्त्यतिशयकृतं प्राशस्त्यं–वात्सल्यनिबन्धनं प्राशस्त्यं पितरि, भक्त्यतिशयनिबन्धनं प्राशस्त्यं पुत्रे इति प्राशस्त्यमुभयानुगतो धर्मः, इति अतो हेतोः पूर्वोक्तोदा–हरणसारूप्यात्–'रजोंभिः' इत्युदाहरण साजात्यादित्यभिमानः। पूर्वोदा-हरणे एतदुदाहरणसाजात्याभावस्य प्रागेव प्रतिपादनात्। समुच्चयोंमया

## चित्रमीमांसा

न चात्र इवशब्दद्वयादियुक्तपर्यायद्वयाभावात् पर्यायविशेषणेनैव अतिव्याप्तिनिरासः स्यादिति वाच्यम्। वाच्यकक्ष्यायां पुत्रपित्रोरुपमा, व्यङ्ग्यकक्ष्यायां पिता पुत्रयोः इति पर्यायद्वयसत्त्वात्।

## तत्त्वालोकः

साधारणधर्मादिद्वयसमाहारनिबन्धनोपमया इत्यर्थः। समुच्चयोपमा च दण्डिना लक्षिता—

'समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव।
ह्लादनाख्ये न चान्वेति कर्मणेन्दुमितीदृशी॥ इति॥

पितापुत्रोभयगतप्राशस्त्यप्रतीतावपि उपमेयोपमाप्रयोजकतृतीयसदृशव्यवच्छेदस्यालाभात्। अस्य न चेयमुपमेयोपमेत्यनेनान्वयः।

उक्तोदाहरणे प्रकारान्तरेणातिव्याप्तिवारणं संभवतीति आशंकां निराचष्टे—**न चेति।**

'धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि'

इतिवत् इव शब्दद्वयघटितवाक्यद्वयाभावात् 'पर्यायतः' इति विशेषणोपादानादेव अतिव्याप्तिवारणं भविष्यतीति न च वाच्यमित्यर्थः। कुतः अत्रापि पर्यायद्वयसत्वात् इति तदाह—**वाच्यकक्ष्येति।**

न च यद्यप्यत्र–पर्यायद्वयं विद्यते, अथापि एकस्मिन् पर्याये उपमा वाच्या, अपरस्मिन् पर्याये व्यङ्ग्या सा इति नातिव्याप्तिरिति वाच्यम्।

### चित्रमीमांसा

न हि पर्यायद्वयस्यापि वाच्यत्वमत्र विवक्षितम् । येन इवशब्दद्वययुक्तपर्यायाभावात् अतिव्याप्तिर्निरस्यते ।

तथा सति हि व्यङ्ग्योपमेयोपमासाधारण्यं न स्यादित्युक्तम् । न चात्र धर्मिणोरेवोपमा धर्मयोस्तु उपमानोपमेयसाधारण्यार्थमभेद एव प्रतीयते नोपमेति वाच्यम् ।

### तत्त्वालोकः

पर्यायद्वयेऽप्युपमाया वाच्यत्वे उपमेयोपमेति लक्षणस्याकरणाद्वाच्यव्यङ्ग्योभयविधामपि उपमामादाय उक्तलक्षणस्यातिव्याप्तेरपरिहार्यत्वादित्याह–**न हीति** ।

यदि तु –पर्यायद्वयेऽप्युपमायाः वाच्यत्वे उपमेयोपमेति लक्षणं क्रियते तदा —

'कर्णाक्षिदन्तच्छदबाहुपाणि-
पादादिनः स्वाखिलतुल्यजेतुः ।
उद्वेगभागद्वयताभिमानात्
इहैव वेधाः व्यधित द्वितीयम् ॥

इत्यादि पद्ये व्यङ्ग्योपमेयोपमासाधारण्यं व्यङ्ग्यस्य न स्यात् इत्यभिप्रायः प्रागेव अभिहित इत्याह–**तथा सतीति** । तथा सति पर्यायद्वयवाच्यसादृश्यकत्वमिति लक्षणे सति, व्यङ्ग्योपमेयोपमासाधारण्यम्–व्यङ्ग्योपमेयोपमासंग्राहकत्वं न स्यात् , लक्षणस्येति शेषः ।

अथ प्रकारान्तरेणातिव्याप्तिनिरासमाशंकते – **न चेति** । अत्र

चित्रमीमांसा

'नलिन्या इव तन्वङ्ग्याः तस्याः पद्ममिवाननम् ।
मया मधुकरेणेव पायंपायमतृप्यत ॥'

इत्यादौ बिम्बप्रतिबिम्बभावापन्नयोः तन्वीनलिनीन्यादिकयोः उपमाया अपि दर्शनेन धर्मयोः सादृश्येन साधारणीकरणस्याप्युपमाप्रयोजकत्वात् । तस्मात्तत्रातिव्याप्तिशंका दुर्वारा ।

तत्त्वालोकः

'पितासमाराधनतत्परेण' इत्यत्र, धर्मिणोरेव पितापुत्रयोरेव, उपमा प्रतीयते, धर्मयोस्तु प्रशस्तपुत्रवत्व–प्रशस्तपितृमत्वयोः प्रधानोपमायां धर्मे साधारण्य संपादनार्थमभेदमात्रं प्रतीयते, नह्यभेदे उपमा इति वाच्यपर्याये उपमा, व्यङ्ग्यपर्यायेऽभेदमात्रमिति उक्तलक्षणस्य न अतिव्याप्तिरिति पर्यायद्वयेऽपि वाच्यत्वमुपमायां न विवक्षणीयमिति व्यङ्ग्योपमासाधारण्यस्य न काप्यनुपपत्तिरिति शंकाशयः । समाधत्ते–नलिन्या इति ।

अत्र नलिनीसदृश्याः तन्वङ्ग्याः पद्ममिव स्थितं तस्या आननं मधुकरेण इव मया पायंपायं पीत्वापीत्वा. आभीक्ष्ण्यविशिष्टार्थे वर्तमानात् पाधातोः 'आभीक्ष्ण्ये णमुल् च' (पा० सू० ३-४-२२) इति सूत्रात् णमुल् । तस्य च णमुलन्तस्य 'आभीक्ष्ण्ये द्वे भवतः' इति वार्तिकात् द्विर्वचनमितिबोध्यम् । अतृप्यत–तृप्तिरलभ्यत इत्यर्थः । नायिकामुखस्य नलिनीपद्मस्य चोपमा निबध्यते । तत्र नलिनीतन्वादिकयोः साधारणधर्मत्वम् तच्च बिम्बप्रतिबिम्ब भावमूलक सादृश्येन, नत्वभेदेन नलिन्या इव तन्वङ्ग्याः इत्यत्रइवशब्दस्य

चित्रमीमांसा

अतोऽनुपपन्नमेवेदं लक्ष्यते ।

अत्र ब्रूमः—

अन्योन्येनोपमा बोध्या व्यक्त्या वृत्त्यन्तरेण वा ।
एकधर्माश्रया या स्यात्सोपमेयोपमा मता ॥

तत्त्वालोकः

स्फुटमभिधानात् । सादृश्येनैव साधारणीकरणे अभेदपर्यन्तानुधावनस्य अनावश्यकत्वादिति भावः । अत्र अनेकेवशब्दप्रयोगः सर्वाङ्गसाम्यं बोधयति ।

**यद्यपि-ग्रन्थकृतैव** उपमासिद्धान्ते बिम्बप्रतिबिम्बभावस्वरूपनिरूप-णावसरे 'वस्तुतो भिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतया अध्यवसितयोः द्विरुपादानं बिम्बप्रतिबिम्बभावः' इत्युक्तत्वात् सादृश्यमूलकोऽभेदः आवश्यकः इत्युक्तोपमोदाहरणे नातिव्याप्तिप्रसक्तिः **अथापि** अभेदः किंमूलः इति विचार-णायां सादृश्यमूल इति उपमाप्रतीतिरकामेनाप्युपेयैवेति अतिव्याप्तिर्दुर्वारैवेति ग्रन्थकृतस्तात्पर्यम् ।

इत्थमतिव्याप्तेर्दुर्वारतामभिधाय प्राचीनानां लक्षणमनुपपन्नमेवेति निग मयति—**अत इति** ।

अथ उपमेयोपमासिद्धान्तः

उमेयोपमां निर्दुष्टां लक्षयति – **अत्र ब्रूम इत्यादिना** । एक धर्माश्रया, व्यक्त्या वृत्त्यन्तरेण वा बोध्या या अन्योन्योपमा सा उपमेयो पमा स्यात् इति योजना ।

इति । अन्योन्येनेति विशेषणान्न रशनोपमायामतिव्याप्तिः ॥

व्यक्त्या वृत्त्यन्तरेणं वा बोध्येति विशेषणाच्च नोभय विश्रान्तसादृश्योपमायामतिव्याप्तिः ।

तत्वालोकः

एकधर्माश्रया—एकधर्मप्रयोज्या, व्यक्त्या—व्यञ्जनया, वृत्त्यन्तरेण वा शक्त्या वा बोध्या अवगम्या, या अन्योन्येन परस्परम् उपमा सादृश्यं सा उपमेयोपमा इत्यर्थः । तथा च एकधर्मप्रयोज्यव्यञ्जनाशक्त्यन्तरवेद्यान्योन्यप्रतियोगिकत्वविशिष्टोपमात्वम् उपमेयोपमा इति लक्षणं फलितं भवति । समन्वयश्च 'खमिव जलं जलमिव खम्' इत्यत्र प्रतीयमानस्वच्छतादिरूपैकधर्माश्रया शक्तिबोध्या खजलान्योन्यप्रतियोगिका उपमाऽत्रावगम्यत इति ॥

उक्तलक्षणघटकदलानां प्रयोजनं प्रतिपादयिष्यन् अन्योन्यपदम् अतिव्याप्तिवारकमित्याह — अन्योन्येनेति ।

रशनोपमालक्षणं च—

'अर्थानामौपम्ये यत्र बहूनां भवेद्यथापूर्वम् ।
उपमानमुत्तरेषां सेयं रशनोपमेत्यन्या ॥

इति । उदाहरणं तु पूर्वमेव 'भणितिरिवमतिर्मतिरिव चेष्टा' इतिप्रदर्शितमेव । उक्तोदाहरणे – मतिचेष्टयोः औपम्यप्रतीतावपि न सा परस्परप्रतियोगिका, अपितु भिन्नभिन्नप्रतियोगिकेति नातिव्याप्तिरिति भावः ।

अन्योन्यप्रतियोगिकत्वविशिष्टोपमायां व्यक्ति–वृत्त्यन्तरमात्रबोध्यत्व विशेषणस्य प्रयोजनमाह— व्यक्त्येति ।

चित्रमीमांसा

परस्परप्रतिक्षेपकविकल्पार्थेन वाकारेण हि या परस्परप्रतियोगिकत्वविशिष्टोपमा तद्विषयवृत्त्यन्तरनिरपेक्ष व्यक्तिबोध्या तद्विषय व्यक्तिनिरपेक्षवृत्त्यन्तरबोध्या वा भवति सोपमेयोपमेति पर्यवस्यति ॥

तत्त्वालोकः

सरसिजमिदमाननं च तस्याः
समिति चेतसि संमदं विधत्ते ।

इत्यत्र सरसिजाननयोः सादृश्यं परस्परमवगम्यते अथापि न व्यक्तिशक्त्यन्यतरं सहकारेण, अपि तु सादृश्यांशस्य शक्तिवेद्यत्वम्, अन्योन्यप्रतियोगित्वांशस्य व्यञ्जनावेद्यत्वमिति व्यञ्जनाशक्तिभ्याम् अन्योन्यप्रतियोगित्वविशिष्टसादृश्य प्रतीत्या उक्तान्यतरवृत्तिवेद्यत्वविरहान्नातिव्याप्तिरिति भावः ।

ननु अत्र पूर्वोक्तान्यतरवृत्तिमात्रवेद्यत्वं परस्परप्रतियोगिकत्वविशिष्ट सादृश्येभवति चेत् तदा उपमेयोपमेत्युच्यते, सत्यं लक्षणे अन्यतरत्वांशस्य कथमवगमः येनोभयविश्रान्तसदृश्योपमायाम् अतिव्याप्तिः निवार्येत्याह— **परस्परेति** ।

परस्परस्य अन्योन्यस्य प्रतिक्षेपकेण व्यावर्तकेन विकल्पार्थेन वाकारेण वाशब्देन हिः प्रसिद्धौ हेतौ च । यतो वा' इतिशब्दः—

'इह नमय शिरः कलीङ्गवद्वा
समरमुखे करहाटवद्धनुर्वा'

## चित्रमीमांसा

ततश्च उभयविश्रान्तसादृश्योपमायामन्योन्यप्रतियोगित्वांशे व्यक्तिः सादृश्यरूपोपमांशे वृत्त्यन्तरमिति तयोः करम्बितत्वात् नातिव्याप्तिशंका ॥

## तत्त्वालोकः

इत्यत्र शिरोनमन – धनुर्नमनयोः एकदा एकस्मिन्नसंभवात् धनुर्नमनप्रतिक्षेपकस्य शिरोनमनस्य, शिरोनमनप्रतिक्षेपकस्य धनुर्नमनस्य वा विधिं प्रतिपादयति तद्वदत्रापि शक्त्या वृत्त्यन्तरेणवेति विकल्पार्थकवाशब्दप्रयोगादन्यतरांशस्य लाभः। तादृशान्यतरार्थकवाशब्दबलात् या परस्परप्रतियोगित्वविशिष्टोपमा, तद्विषये उपमाविषये, अपेक्षितं यद्वृत्त्यन्तरम् व्यञ्जनातिरिक्ता शक्तिः तन्निरपेक्षा या व्यक्तिः व्यञ्जनाख्या तद्बोध्या तदवगम्या, भवति सोपमेयोपमेत्येको वाक्यार्थः। अस्मिश्चकल्पे व्यङ्ग्योपमेयोपमायांनाव्याप्तिः—तत्र परस्परप्रतियोगित्वांशस्य सादृश्यांशस्य च व्यञ्जनावगम्यतया प्रकृतव्यञ्जनाव्यतिरिक्तवृत्त्यन्तरसापेक्षता नास्तीति उपमाविषयवृत्त्यन्तरनिरपेक्षव्यक्तिबोध्यत्वमेवास्ति। तथा वाच्योपमेयोपमायाम् उपमाविषये व्यञ्जनानिरपेक्षं यद्वृत्त्यन्तरं शक्तिः तद्बोध्यत्वमेवास्तीति परस्परप्रतियोगित्वांशस्य च शक्तिमात्रेणावगम्यतया नाव्याप्तिः। अतश्चेत्थं लक्षणं फलितं भवति—

'अन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यविषयवृत्त्यन्तरनिरपेक्षव्यक्तिबोध्यत्व, अन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यविषयव्यक्तिनिरपेक्ष वृत्त्यन्तरबोध्यत्वान्यतरवत्त्वम् उपमेयोपमालक्षणम्' इति। तेनोभयविश्रान्तसादृश्योपमायां नातिव्याप्तिः तत्र अन्योन्यप्रतियोगित्वांशे व्यक्तिः सादृश्यरूपोपमांशे शक्तिरिति द्वयोरपेक्षा नान्यतरस्य इत्याह—ततश्चेति।

चित्रमीमांसा

सामान्यलक्षणसिध्यर्थं व्यक्ति-वृत्त्यन्तरयोरन्यान्यत्वेन क्रोडीकृतयोर्ग्रहणम् ।

एवं हि 'तया गृहीतं नु मृगाङ्गनाभ्यः' इत्यत्र

तत्त्वालोकः

ततश्च एकवृत्तिवेद्यान्योन्यप्रतियोगित्वविशिष्टोपमात्वमुपमेयोपमात्वमिति विवक्षणेन, उभयेति ।

'सरसिजमिदमाननं च तस्याः
समिति चेतसि संमदं विधत्ते ।'

इत्यत्र परस्परप्रतियोगित्वांशस्य व्यञ्जनावेद्यत्वम्, उपमांशस्य तु शक्तिवेद्यत्वमितिपरस्परप्रतियोगिकत्वविशिष्टोपमाया एकव्यापारबोध्यत्वाभावात् नातिव्याप्तिरित्यर्थः ।

उक्तरीत्या लक्षणपरिष्करणस्य किं प्रयोजनम् ; अन्यतरत्वघटितत्वेन गुरुभूतत्वादिति चेत् व्यङ्ग्यवाच्योभयविधोपमेयोपमासंग्रहकत्वेन फलमुखगौरवस्यादोषत्वादिति मनसि निधायाह – सामान्येति ।

सामान्यलक्षणसिद्ध्यर्थं वाच्यव्यङ्ग्योभयविधोपमेयोपमासंग्राहकलक्षणसिद्धिं अभिप्रेत्येत्यर्थः । अन्यान्यत्वेन अन्यतरत्वेनेत्यर्थः । क्रोडीकृतयोः एकत्रीकृतयोः ग्रहणम् उपादानम् ।

उक्तरीत्याश्रयणेन व्यङ्ग्योपमेयोपमायामनलंकारभूतायां नाव्याप्तिः । नापि वाच्योपमेयोपमायामलंकारभूतायामव्याप्तिरित्याह – एवं हीति ।

## चित्रमीमांसा

वृत्त्यन्तरानपेक्षव्यक्तिबोध्यायामनलंकारभूतायां, व्यक्ति निरपेक्षवृत्त्यन्तरबोध्यायाम् अलंकारभूतायां चोपमेयोपमायां लक्षणमनुगतं भवति॥

### तत्त्वालोकः

'प्रवातनीलोत्पलनिर्विशेष-
मधीरविप्रेक्षितमायताक्ष्या ।
तया गृहीतं नु मृगाङ्गनाभ्यः
ततो गृहीतं नु मृगाङ्गनाभिः ॥

इति संपूर्णं पद्यम् ।

प्रवाते प्रभूतवातयुते प्रदेशे यन्नीलोत्पलम् इन्दीवरं ततो निर्विशेषम् भेदरहितं इतस्ततश्चलन्नीलोत्पलसदृशमित्यर्थः। अधीरविप्रेक्षितम् चकित, विलोकितं भावे क्तः। आयताक्ष्या विशालनेत्रया तया पार्वत्या मृगाङ्गनाभ्यः हरिणदयिताभ्यो गृहीतं नु अभ्यस्तं नु, अथवा, मृगाङ्ग नाभिः हरिणीभिः ततः पार्वत्याः सकाशात् तत् अधीरविप्रेक्षितं गृहीतं नु ! अभ्यस्तं नु इत्यर्थः । 'प्रश्ने विकल्पे नु स्विच्च' इति **वैजयन्ती** ।

अत्र विवक्षितस्य अन्योन्यं चकितविलोकनग्रहणस्योत्प्रेक्षणात् **उत्प्रेक्षेति केचित्** । उत्प्रेक्षानुप्राणितस्सन्देहालंकार इत्यन्ये । उत्प्रेक्षासन्देह योस्सङ्करः इत्यपरे । वाच्यात्र निदर्शना। तस्या उपकारकत्वेन उपमेयोपमा गम्यते । तामन्तरेणाऽसंभवद्वस्तुसम्बन्धत्वेन वाच्यस्याविश्रान्तेः इतीतरे ।

तत्त्वालोकः

अत्र तावत् उत्प्रेक्षायाः प्रसक्तिर्नास्ति। तस्यामेकतरकोटौ निश्चयस्य प्रायिकत्वमभिमतम्। अत्र तु तयैव ताभ्यां गृहीतति तामिभिरेव ततोः गृहीतमिति वा अप्रतीतेः। अतश्च न निश्चितप्रायतेत्युत्प्रेक्षा न भवति।

अत एव उत्प्रेक्षानुप्राणितस्सन्देहोऽपि न वक्तुं शक्यः। तत एव सङ्करोक्तिरपि न युज्यते।

नापि निदर्शना। यत्र वाच्यवृत्त्या यत्तच्छब्दाभ्यामैक्यारोपे सति तादृशमैक्यमसंभवात् तयोःसाम्ये पर्यवस्यति तत्रैव तस्याः वाक्यार्थनिदर्शनायाः प्रवृत्तेः। अत्र यत्तद्भ्यामैक्यारोपाभावात् नुशब्दस्य सन्देहप्रत्यायकत्वाच्च।

न वा पदार्थनिदर्शना – नुशब्दोपादानात् संदेहस्यैव प्रतीत्या अन्यधर्मस्य अन्यत्र सम्बध्यमानत्वेनानिश्चयात् निदर्शनाजीवितस्य ऐक्यारोपस्यैवाभावात्। इत्थं सति व्यङ्ग्योपमेयोपमया वाच्यनिदर्शनोपस्क्रियत इति विमर्शिनीकारोक्तिः कथ गरीयसी स्यात्।?

परन्तु सन्देहोऽत्र वाच्योऽलङ्कारः। तदनुप्राणितोपमेयोपमा अनलंकारभूता (व्यज्यमाना)। अत्र च तया गृहीतमिति, ततों गृहीतमिति वा न निश्चितमिति तयोः परस्परं साम्यमन्यसादृश्यनिषेधश्च फलतीत्येव वक्तुं युक्तमिति मनसि निधाय प्रकृतलक्षणस्य व्यङ्ग्योपमासाधारण्यमित्युपपादितमिति भावः॥

व्यक्तिनिरपेक्षेति। 'सुगन्धि नयनानन्दि' इति प्रागुदाहृते व्यञ्जनां विनैव शक्त्या अन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यस्य प्रतिपादनात्

## चित्रमीमांसा

यद्यपि व्यङ्ग्यायामप्युपमेयोपमायां शब्दस्य सहकारित्वेन तद्गतशक्तेः अपेक्षितत्वात्, 'खमिव जलं जलमिव खम्' इत्यादौ वाच्यायामपि गम्यसाधारणधर्मायां तस्यां धर्मांशे व्यक्तेः अपेक्षणात् परस्परनैरपेक्ष्यमसंभवि ॥

### तत्त्वालोकः

यक्तिनिरपेक्षवृत्यन्तरत्रोध्यत्वं तादृशोपमायामस्तीति लक्षणसमन्वयान्न पूर्वोक्त दोषावकाश इति भावः ॥

अथ व्यङ्ग्यवाच्योभयविधोपमेयोपमायां लक्षणस्यासंभवमेव आशंकते—यद्यपीति ।

अत्रेयमाशङ्का —

'तया गृहीतं नु मृगाङ्गनाभ्यः'

इत्यादौ उपमेयोपमांशस्य शब्दप्रयोगमन्तरा न व्यज्यमानेति तादृशोपमेयोपमाभिव्यक्तौ प्रयुक्तस्य शब्दस्य

'अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता'

इत्युक्तरीत्या तद्गतशक्तेरपि अपेक्षाऽस्त्येवेति व्यङ्ग्योपमेयोपमायां व्यक्तेः न वृत्यन्तरनैरपेक्ष्यमिति लक्षणास्याव्याप्तिरेवेति प्रथमाशङ्का ॥

खमिव जलमिति ।

अत्र उक्तविधोपमाप्रतीतौ व्यक्तिनैरपेक्ष्येऽपि साधारणधर्मांशे व्यक्त्यपेक्षाऽस्त्येव । न क्वापि साधारणधर्मोपलब्धिमन्तरा उपमा वक्तुं शक्या ।

### चित्रमीमांसा

तथापि अन्योन्यप्रतियोगिकत्वविशिष्टसादृश्यवृत्त्यन्तरनिरपेक्षत्वं व्यक्तेः, तद्विषयव्यक्तिनिरपेक्षत्वं वृत्त्यन्तरस्य चास्त्येव। इदमेव च व्यक्तिपदानपेक्षया अलंकाररूपायाः विशेषलक्षणमपि। तत्र व्यक्तिपदपरित्यागे वृत्त्यन्तरमात्रबोध्येत्येतद्विशेषणं पर्यवस्यति।

### तत्त्वालोकः

साधारणधर्म एव ह्युपमाजीवितमिति परस्परनैरपेक्ष्यं न संभवतीति वाच्योपमेयोपमायां गम्यसाधारणधर्मायामव्याप्तिरेव इति द्वितीयाशंका। उक्ताशंकाद्वयमपि समाधत्ते – **तथापीति**। तथापि तादृशसादृश्यपरिकल्पनाय शक्ति व्यक्त्योः अपेक्षायां सत्यामपीत्यर्थः।

अयं भावः — अत्र लक्षणेऽन्योन्यप्रतियोगित्वसादृश्ययोरेव व्यक्ति शक्त्यन्यतरवेद्यत्वं विवक्षितं न पुनः धर्मस्यापि। तेन तादृशसादृश्यस्य लाभे शब्दशक्तेः, साधारणधर्मलाभे व्यक्तेश्चापेक्षायां सत्यामप्यदोषात् इति।

इत्थं व्यङ्ग्यवाच्योभयसाधारणमुपमेयोपमालक्षणं परिष्कृत्य वाच्यमात्रपर्यवसितं विशेषलक्षणं किंरूपमित्याकांक्षायामाह–**इदमेवेति**। तथा च 'एकधर्मप्रयोज्यव्यक्तिभिन्नैकवृत्तिमात्रबोध्यपरस्परप्रतियोगिकसादृश्यम् उपमेयोपमेति वाच्योपमेयोपमालक्षणम् फलति।

**नन्वेवमपि**—'खमिव जलं जलमिव खम्' इत्यत्राव्याप्तिः। तत्र सादृश्यस्य **वृत्तिवेद्यत्वेऽपि 'वृत्तिवेद्यानां पदार्थानां संसर्गो वृत्त्यवेद्यः'**।

चित्रमीमांसा

ततश्चोभयविश्रान्तसादृश्योपमाव्यावृत्तिः । न च तस्याम् एकस्यैवोपमानत्वं न तु द्वयोरिति अन्योन्यपदेनैव व्यावृत्ताविदं व्यर्थमिति वाच्यम् ,

तत्त्वालोकः

इति नियमानुरोधेन खजलयोः सादृश्यान्वये प्रतियोगितायाः संसर्गत्वेन वृत्तिवेद्यत्वाभावात् परस्परप्रतियोगित्वांशस्य वृत्त्यवेद्यत्वात् ।

इति **चेन्न**–मात्रचा वृत्त्यन्तरव्यवच्छेदस्यैव विवक्षितत्वेन खजलयोः सादृश्यान्वये प्रतियोगित्वस्य संसर्गमर्यादया भानेऽपि संसर्गस्य वृत्तित्वाभावात् तद्बोध्यत्वाभावसत्त्वेन विरोधाभावान्नाव्याप्तिः ।

एतेन **रसगंगाधरे–चित्रमीमांसाखण्डने** च—'अन्योन्यप्रतियोगिकत्वविशिष्टा उपमा एकवृत्तिमात्रवेद्येत्यप्ययुक्तमेवेत्यादिना यद्दूषितं' तदपि गजनिमीलिकैव ॥

वृत्त्यन्तरव्यावृत्तिफलकैकवृत्तिमात्रवेद्येति विशेषणस्य प्रयोजनमाह–**ततश्चेति** । पुनरपि एकवृत्तिमात्रवेद्यत्वविशेषणमन्तरेणाप्युभयविश्रान्तसादृश्योपमायामतिव्याप्तिः परिहर्तुं शक्या यतोऽत्र रशनोपमायामतिव्याप्तिवारणायोपात्तेन अन्योन्येति विशेषणेनैवात्रापि अतिव्याप्तिवारणात् ।

'भणितिरिव मतिर्मतिरिव चेष्टा'

इत्यत्र भिन्नभिन्नप्रतियोगिकमौपम्यं प्रतीयते 'सरसिजमिदम् इत्यत्रापि एकस्यैवोपमानत्वं न तु द्वयोरिति अन्योन्यसादृश्यप्रतीतिराहित्यस्य उभयत्रापि तुल्यत्वात् इत्याशंकते–**न चेति** । ततश्चोक्तविशेषणमन्यथासिद्धिमिति शङ्काशयः ।

### चित्रमीमांसा

प्राकरणिकाप्राकरणिकयोः सादृश्यवर्णनेऽप्राकरणिकस्यैव उपमानत्वलाभेऽपि, उभयोरपि प्राकारणिकत्वे विनिगमनाविरहेण परस्परोपमानत्वप्रतीतेः ।

एकधर्माश्रयत्वविशेषणात् 'रजोभिः स्यन्दनोत्कीर्णैः'

### तत्त्वालोकः

समाधत्ते—**प्राकरणिकेति** । अयं भावः—प्रायः उपमायामेकं प्रकृतम् अन्यदप्रकृतं भवति । न चैतवता अप्रकृतमेवोपमानं न प्रकृतमिति, अप्रकृतमुपमानमेव नोपमेयमित्युक्तौ विनिगमकं नास्ति यतः—

'संकुचन्ति सरोजानि स्वैरिणीवदनानि च ।'

इति केवलप्रकृतगोचरतुल्ययोगितायामेकतरस्याऽप्रकृतत्वे प्रकृतमात्रगोचरत्वविलोपः, तथा केवलाप्रकृतगोचरतुल्ययोगितायामपि एकतरस्यप्रकृतत्वे अप्रकृतमात्रगोचर तुल्ययोगिताया एव विलोपप्रसंगः । तस्या अपि सादृश्यमूलकवात् । सादृश्यस्य चोपमानोपमेयोभयाश्रयत्वात् । अतश्च प्रकृतस्योपमेत्वमेव अप्रकृतस्य उपमानत्वमेवेति न नियमः, 'तद्वल्गुना युगपदुन्मिषितेन' इत्यस्य पद्यस्य प्रभातवर्णनप्रस्तावघटकत्वेन पद्माविकासमुखविकासयोः मुखपद्मयोरुभयोरपि प्रकृतत्वमेवेति तावन्मात्रेण नोपमेयतामात्रं परं तु उपमानत्वमपीति सर्वसम्मतमिति अप्राकरणिकस्यैव उपमानत्वमिति नियमस्य कर्तुमशक्यतया 'सरसिजम्' इत्यत्रापि सरसिजाननयोः परस्परमुपमानत्वप्रतीतेः अतिव्याप्तेरवारणात् अन्योन्येनेति विशेषणेनैव न चारितर्थ्यमिति एकवृत्तिमात्रवेद्यत्वविशेषणं नान्यथासिद्धं भवतीति ॥

एकधर्माश्रयत्वविशेषणप्रयोजनं प्रतिपादयति——**एकधर्मेति** 'जोभिः' इत्यत्र गगनस्य भूतलेन सादृश्ये रजोव्याप्तत्वं साधारणो धर्मः ।

चित्रमीमांसा

**इति परस्परोपमायां नातिव्याप्तिः ।**

**उक्तविशेषणबलादेव 'पितासमाराधनतत्परेण' इत्युपमायामपि नातिव्याप्तिः उभयत्राऽपि उपमेययोः भिन्न धर्माश्रयत्वात् ॥**

**तत्त्वालोकः**

भूतलस्य गगनेन सादृश्ये गजानां मेघानां च बिंबप्रतिबिंबभावः इति धर्मयोरेकरूपत्वं नास्तीत्यतिव्याप्तिः नाति ।

वस्तुतस्त्वत्र—घनसन्निभैरित्यस्य रजोगजैरन्वये एकधर्माश्रयत्वमपि भवतीत्युपमेयोपमैव युक्तेति पूर्वमेव प्रतिपादितम् । अतश्च

'सविता विधवति विधुरपि सवितरति'

इत्यत्र पूर्ववाक्ये सुखप्रदत्वं धर्मः, द्वितीयवाक्ये दुःखप्रदत्वं धर्मः इत्येक धर्माश्रयत्वाभावान्नातिव्याप्तिः इति तु विभाव्यम् ॥

एकधर्माश्रयत्वविशेषणबलादेव 'पितासमाराधनतत्परेणेति' व्यत्यस्त धर्मिबिम्बप्रतिबिम्बकसमुच्चयोपमायामपि नातिव्याप्तिरित्याह – **उक्तविशेषणेति।** उक्तविशेषणबलादेव परस्परोपमायां एकधर्माश्रयत्वविशेषणबलादेव इत्युपमा यामपि व्यत्यस्तधर्मिबिम्बप्रतिबिम्बकसमुच्चयोपमायामपीत्यर्थः ।

तत्र हेतुमाह-**उभयत्रापि इति ।** उभयत्रापि–रजोभिः, पितासमाराधनेत्युदाहरणद्वयेऽपि उपमेययोः गगनभूतलयोः पितापुत्रयोश्च भिन्नधर्माश्रयत्वात् पूर्वत्र अनुगामिबिम्बप्रतिबिम्बभावापन्नयोः अपरत्र प्रशस्तपितृमत्वप्रशस्त पुत्रवत्वयोः । प्राशस्त्यं च भिन्नधर्मत्वेन, तदाश्रयेण चोपमायाः प्रवृत्तेरदोषात् ।

## चित्रमीमांसा

**एकधर्माश्रयेत्यस्य चायमर्थः-कस्यचिदन्येनोपमायां यो धर्मः साधारणः, वस्तुप्रतिवस्तुभावापन्नो वा स एवा न्यस्य तेनोपमायाम् अपीति। न त्वनुगामिधर्माश्रयेत्यर्थः। बिम्बप्रतिबिम्बगर्भवस्तुप्रतिवस्तुनिर्देशे तदभावात् इति दिक् ॥**

## तत्त्वालोकः

अथ एकधर्माश्रयेत्यस्य किमनुगामिधर्माश्रयेत्यर्थः। अथ साधारणी कृतैकधर्माश्रयेत्यर्थ इति सन्देहं परिहरति-**एकधर्मेति**।

अयं भावः-'खमिव जलम्' इत्यत्र जलस्य खेनोपमायां यो धर्मः सच्छतादिः साधारणः, स एव स्वच्छतादिः 'जलमिव खम्' इति खस्य जलेन उपमायामपि साधारणः इति उभयोरप्युपमयोरेकधर्माश्रयत्वम्। एवं 'स्वच्छायाम्भोजवदना' इत्यत्र वाप्याः अङ्गनाभिरुपमायां यो धर्मः सच्छायत्वं स एव अङ्गनानां वापीभिस्सहोपमायाम्, परन्तु धर्मिभेदेन द्विरुपात्तः इति वस्तुप्रतिवस्तुभावापन्नो धर्म इति वस्तुप्रतिवस्तुभावेनैकीकृतः इत्येतादृशधर्म एव एकधर्मपदेन ग्राह्य इति। यद्यनुगामिधर्म एवैकधर्मपदेन गृहीतः स्यात् तदा विशेषणतया विशेष्यतया वस्तुप्रतिवस्तुभावापन्नैकधर्मकोपमेयोपमासंग्रहो न स्यादित्याह-**न त्विति**। **बिम्बेति**। बिम्प्रतिबिम्बभावघटितवस्तुप्रतिवस्तु भावेन यत्र धर्मे साधारण्यं संपाद्यते न तत्रानुगामित्वम्। अनुगामी धर्मश्च वस्तुप्रतिवस्तुभावापन्नतो भिन्नः एव। 'यत्र साधारणधर्मप्रतिपादकपदैक्यं तत्र अनुगामित्वम्, यत्र साधारणधर्मप्रतिपादकपदभेदः तत्र वस्तुप्रतिवस्तु भावः' इति उपमाप्रकरण एव प्रतिपादितम्। अन्यथा अनुगामितावस्तु प्रतिवस्तुभावापन्नयोः पूर्णोपमायां क्वचित् साधारणधर्मस्यानुगामितया निर्देशः।

## चित्रमीमांसा

इदं तु उपमेयोपमात्वप्रयोजकं लक्षणम्। अनु-गताऽनतिप्रसक्तलक्षणं तु—

सदृशस्य तृतीयस्य व्यवच्छेदाय यद्भवेत्।
अन्योन्येनोपमेयत्वं सोपमेयोपमा मता॥

इति द्रष्टव्यम्॥

## तत्त्वालोकः

क्वचिद्वस्तुप्रतिवस्तुभावेन इति पूर्णोपमाविभागावसरे प्रतिपादितमसंगतं स्यादिति अनुगामितया वस्तुप्रतिवस्तुभावेन वा धर्मस्य साधारण्ये उपमेयोपमा इष्यते। किञ्च द्विविधैषा प्रकीर्तितेति विभागासामाञ्जस्यप्रसङ्गश्चेतिभावः।

पूर्वोक्तलक्षणं वाच्यव्यङ्ग्योपमेयोपमासाधारणम्, इदं तु वाच्योपेमेयोपमाया लक्षणम् इत्याह—इदं त्विति। इदं तु—एकधर्मप्रयोज्यव्यक्तिवृत्त्यन्तरान्यतरावगम्यमानपरस्परप्रतियोगित्वविशिष्टं सादृश्यम् इत्युपमेयोपमालक्षणंतु, उपमेयोपमात्वप्रयोजकं न तु उपमेयोपमालंकारताप्रयोजकम्, इदं च लक्षणं—

सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥

इत्यत्र अव्याप्तं भवति। तथा हि—अत्र वाप्यङ्गनयोरुपमायां वदनसदृशाम्बुजवत्त्वं धर्मः। अङ्गनावाप्योरुपमायामम्भोजसदृशवदनवत्त्वं धर्मः इत्येकधर्माश्रयत्वाभावात्। तथा—यत्र षष्ठ्यन्तात् सदृशादिशब्दोपादानं तत्र सादृश्यप्रतियोगितामात्रस्य प्रतीत्या अन्योन्यप्रतियोगित्वविशिष्ट सादृश्यस्य वृत्त्यन्तरेण बोधनं तत्रातिव्याप्तमपि भवतीति **उद्भट-रुद्रटादिसंमता** नुगतानतिप्रसक्तामुपमेयोपमां लक्षयति—**अनुगतेत्यादिना**।

**तत्त्वालोकः**

तथा च—तृतीयसदृशव्यवच्छेदफलकान्योन्यप्रतियोगिकं वर्ण्यमानं सादृश्यम् उपमेयोपमेति फलति। तेन–सच्छायेत्यत्र नाव्याप्तिः तृतीय सदृशव्यवच्छेदस्य कविविवक्षितत्वात्। एकधर्माश्रयत्वं नास्तीति कथमुपमेयोपमेति न च वाच्यम्। सच्छायाम्भोजवदनाः इत्येतावता विशेषणेनैव पर्यवसानमकृत्वा पुनः सच्छायवदनाम्बुजा इति विशेषोपादानं कविना कृतमनर्थकं स्यात्। **ग्रन्थकृता**–प्राचीनलक्षणसमन्वयावसरे 'सच्छाये'त्युदाहरणदानं तु विशेषणतया विशेष्यतया वा एकधर्माश्रयत्वमपि संभवतीत्यभिप्रायेण। न तु एकधर्माश्रयत्वमेवेत्यभिप्रायेण। अन्यथा उत्तरत्र यथा संभवं पूर्वोक्ताः भेदा उन्नेयाः इत्युच्यमानमसमीचीनं स्यात्॥

एवं—यत्र षष्ठ्यन्तात् सदृशादिपदोपादानं तत्र अन्योन्यप्रतियोगित्व विशिष्टसादृश्यस्य वृत्त्यन्तरवेद्यत्वे सत्यपि तृतीयसदृशव्यवच्छेदे तात्पर्याभावात् नातिव्याप्तिः। अत एव—

'अन्योन्यमेव यत्र स्यादुपमानोपमेयता।
उपमेयोपमामाहुः तां पक्षान्तरहानिगाम्॥'

इति **उद्भटोक्तम्**।

वस्त्वन्तरमस्त्यनयोर्न सममिति परस्परस्य यत्र भवेत्।
उभयोः उपमानत्वं सक्रममुभयोपमा सान्या॥

इति **रुद्रटोक्तं** च संगतं भवति।

अत एव च-**ग्रन्थकृतः स्यालकेन राजचूडामणिदीक्षितेन काव्य दर्पणे**—

चित्रमिमासा

अत्रान्योन्येति विशेषणम् 'अहमेव गुरुः सुदारुणा नाम्' इति प्रतीपविशेषव्यावृत्त्यर्थम् ॥

तत्त्वालोकः

तृतीयतुल्यव्यावृत्तिफलान्योन्योपमा तु या ।
द्वयोर्व्यक्तिं विना गम्या सोपमेयोपमा मता ॥

इति लक्षितम् । इत्थं च पूर्वं यत् विशेषलक्षणमभिहितं तत्प्राचीनलक्षण परिष्करणमात्राभिप्रायेणेति बोध्यम् ॥

एवं च — **चित्रमीमांसाखण्डनकृदभिहितं** दूषणमाग्रहमूलमेव। सिद्धान्तलक्षणेऽन्योन्येनेति विशेषणं प्रतीपविशेषव्यावृत्त्यर्थमित्याह—**अत्रेति । अहमेवेति ।**

'अहमेव गुरुः सुदारुणाना-
मिति हालाहल मा स्म तात दृप्य ।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥

इतीद पद्यं प्रागेव व्याख्यातम् । इदं च प्रतीपविशेषस्योदाहरणम् । अत्र च हालाहलस्य अतिदारुणस्य क्वचिदप्युपमानभावमसहमानस्य अद्वितीयत्वे स्थिते दुर्जनवचसः एकस्यैव तत्सदृशस्य सद्भावकथनेन हालाहलदुर्जनवचसोः सदृशं वस्त्वन्तरं न वर्तत इत्युक्तं भवतीति तृतीयसदृशव्यवच्छेदः फलतीत्यतिव्याप्तिस्स्यात् । अन्योन्यपदोपादाने तु नातिव्याप्तिः दुर्जनवचस्सु हालाहलनिरूपितानुयोगिकत्वप्रतीतावपि तन्निरूपितप्रतियोगित्वं न हालाहले प्रतीयत इत्यदोषादिति भावः ॥

## चित्रमीमांसा

अथोदाहरणानि । तत्र धर्मस्य साधारण्ये यथा —

खमिवजलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्ताराः ताराकाराणि कुमुदानि ॥

इयं प्रतीयमानसाधारणधर्मा ।

## तत्त्वालोकः

इयं च—प्राचीनैरेकावलीकारादिभिः च द्विधैव विभक्ता सा च न युक्ता अन्यासामपि तत्प्रभेदानां सम्भवादिति उदाहरणमुखेन तत्संभवं प्रदर्शयति–अथेति । तत्र व्यङ्ग्यधर्मा, वाच्यधर्मा चेति सा द्विधा । तत्र व्यङ्ग्यसाधारणधर्मामुदाहरति — तत्रेत्यादिना ।

जलम् खमिव आकाश इव कालुष्यापगमेन निर्मलत्वात् । तथा खमपि जलमिवातिनिर्मलत्वात् । हंसश्चन्द्र इव धवलत्वात् शैत्याच्च तथा चन्द्रोऽपि हंस इव धवलः शीतश्च । ताराः आश्विन्याद्याः कुमुदाकाराः रात्रिविकासित्वात् हृद्यत्वाच्च कुमुदसदृशाः, तथा कुमुदानि उत्पलानि ताराकाराणि तारासदृशानि पूर्वोक्तधर्मादेवेत्यर्थः ।

अत्र खजलयोः परस्परोपमायां नैर्मल्यस्य, चन्द्रहंसयोः परस्परमुपमायां शैत्यधावल्ययोः, ताराकुमुदानां परस्परमुपमायां रात्रिविकासित्वहृद्यत्वादीनां प्रतीयमानत्वात् प्रतीयमानसाधारणैकधर्मप्रयोज्योपमेयोपमा ।

इदमुपलक्षणं —वाक्यभेदेन उपमेयोपमायाः, परम्परितोपमेयोपमायाश्चेदमुदाहरणमिति ।

**तत्त्वालोकः**

**अत्रायं विशेषः**— उपमेयोपमात्वप्रयोजकलक्षणे सर्वस्वकारानुरोधेन एकधर्माश्रयत्वमुपादायापि पश्चात् अनुगताननतिप्रसक्तस्वाभिमतलक्षणे तदनु पादानं बिंबप्रतिबिंबभावादिनापि साधारण्यं सम्पाद्यत इति वदतो **विमर्शिनीकृतः** सरणिराश्रिता ग्रन्थकृतेति प्रतिभाति। अत एवात्र वाच्यसाधारण धर्मा यथेत्येतावन्मात्रोपादानम्।

तथा चात्र वदनसदृशाम्बुजाऽम्बुजसदृशवदनयोर्बिम्बप्रतिबिंबभावेन साधारणधर्मता। साधारणधर्मस्योपादनाद्वाच्यसाधारणधर्मेयम् उपमेयोपमा। सच्छायेत्युदाहरणे बिंबप्रतिबिंबभावः **विमर्शिनीकृता** स्पष्टं प्रतिपादितः। **तद्यथा**—'तत्र ह्यम्भोजवदनयोर्बिम्बप्रतिबिंबभावः' इति।

**ननु**—विमर्शिनीकृता– वस्तुप्रतिवस्तुनिर्देशश्चेत्याद्युक्त्वा 'अम्भोज वदनयोर्बिम्बप्रतिबिंबभावः' इत्युक्तः अतश्च वस्तुप्रतिवस्तुभावश्च बिंबप्रतिबिंब भावगर्भित इति प्रतिपादनार्थमेवेति पूर्वोक्तं कथं युज्यत इति न शङ्क्यम्।

विमर्शिनीकारेणैव 'तद्वल्गुनेति पद्ये' भेदत्रयस्याप्येतदुदाहरणम् इत्युक्तत्वेन बिंबप्रतिबिंबभावेन साधारण्येऽपि उपमेयोपमा न हीयत इति स्फुटं प्रतीतेः। अत एव **कौस्तुभकृता**—शुद्धबिंबप्रतिबिंबभावे सत्यपि उपमेयोपमा निराबाधेति—

युधि निसर्गनिरर्गलमार्गगः
प्रविगलन्निरवग्रहवर्षणः।
वसुमतीतिलक त्वमिवाम्बुदोऽ-
म्बुद इव त्वमुदेषि महीमुदे॥

इत्युदाहरणमुपन्यस्तं साम्प्रतम्॥

चित्रमीमांसा

तद्विशेष्यत्वे यथा—

वक्त्रं पद्ममिवैतस्या नेत्रं भृङ्गमनोहरम् ।
पद्मं वक्त्रमिवाभाति मृगलोचनभूषितम् ॥

तत्त्वालोकः

'कस्यचिदन्येनोपमायाम्' इत्याद्युक्तिस्तु सर्वस्वकाराद्यभिप्रायेण । अन्यथा परमसिद्धान्तलक्षणे एकधर्माश्रयत्वपरित्यगो ग्रन्थकृतोऽनुचितस्स्यात् । अत्रापि वस्तुप्रतिवस्तुभावो यथेत्यभिधान तु—वस्तुप्रतिवस्तुभावघटितस्यापि बिंबप्रतिबिंबभावस्य साधारण्यप्रयोजकत्वसूचनार्थमिति कल्पयितुं युक्तत्वादिति दर्पणकार-खण्डनकृदादीनामुक्तयो न क्षोदक्षमाः ॥

उक्तोदाहरणे वाप्यञ्जनयोः वाक्यभेदेन उपमेयोपमायां वदनाम्बुजयोः बिम्बप्रतिबिम्बभावः । तत्र सच्छायत्वं विशेषणतया भासते । क्वचित् वस्तुप्रतिवस्तुभावयोग्ययोः विशेष्यत्वमपीत्युदाहरणमुखेन तत्प्रदर्शयति-तद्विशेष्यत्वे इति । यत्र एतस्याः नायिकायाः वक्त्रं भृङ्गसंसर्गान्मनोहरं चित्ताकर्षकं पद्ममिवाभाति, पद्मं च मृग्याः हरिण्याः लोचनाभ्यामिव लोचनाभ्या भूषितं—अलङ्कृतं वक्त्रमिव आभाति । अत्र वक्त्रपद्मयोः उपमायां भृङ्गमनोहरत्वं धर्म इति वक्तव्यम् । तच्च न घटते भृङ्गमनोहरत्वस्य पद्ममात्रनिष्ठत्वात् । पद्मवक्त्रयोरुपमायां मृगलोचनभूषितत्वं धर्म इति वक्तव्यम् तच्चापि न घटते तस्य वक्त्रमात्रवृत्तित्वात् । अतश्च भृङ्गलोचनयोः बिम्बप्रतिबिम्बभावेन साधारण्यम् । मनोहरत्वभूषितत्वयोरैकरूप्य एव पर्यवसानमिति वस्तुप्रतिवस्तुभावः । इत्थं चात्र वस्तुप्रतिवस्तुभावापन्नयोः मनोहरत्वभूषितत्वयोः साक्षादेव वक्त्रपद्मान्वयित्वेन वस्तुप्रतिवस्तुभावापन्नधर्ममूलिका उपमेयोपमा स्वरसेति बोध्यम् ॥

चित्रमिमांसा

युगपदुपमेयोपमोदाहरणं तु— 'तद्वल्गुना युगपदुन्मिषितेन' इत्यादि ॥

तत्त्वालोकः

**नैतावता**— शुद्धो वस्तुप्रतिवस्तुभावः क्वापि नास्तीत्यभिप्रायाविष्करणम् , शुद्धबिंबप्रतिबिंबभावापन्नसाधारणधर्मकोपमेयोपमा नास्तीति महता प्रयासेन तत्र प्रकाशनं **ग्रन्थकृतः** पण्डितराजस्य च क्रमेणैकैकस्मिन् विषये आग्रहमात्रमूलमेवेति प्राक् सोदाहरणं प्रदर्शितमेव ।

सर्वैरपि प्राचीनैः **भामह-दण्डि-वामन-रुद्रट-मम्मट-रुय्यक-विद्यानाथ-जयदेव-विश्वनाथ प्रभृतिभिः** पर्यायेणैवोदाहरणानि प्रदर्शितानि न पुनर्युगपदुपमेयोपमायाइति तामुदाहृतां स्मारयति— **युगपदिति** ।

**यदि तु**— उक्तोदाहरणे शाब्दे एकवाक्यत्वे स्फुटेऽपि चक्षुःपद्मयोः पद्मचक्षुषोश्च 'चक्षुः पद्मं मिव पद्म चक्षुरिव' इत्यार्थो वाक्यभेदोऽस्त्येवेत्युच्यते तदा-उदाहरणान्तरं मृग्यम् ।

अत एव—**कैरपि प्राचीनैः एकवाक्यतया उपमेयोपमा न** लक्षिता ।

**विमर्शिनीकारेण तु**—स्पष्टमुक्तं स च वाक्यभेदः शाब्दः आर्थश्च । तत्र शाब्दो यथा – 'रजोभिः' आर्थो यथा –

'भवत्पादाश्रयादेव गङ्गा भक्तिश्च शाश्वती ।
इतरेतरसादृश्यसुभगामेति वन्द्यताम् ॥'

तत्त्वालीकः

इत्युदाहृत्य 'अत्र स्फुटेऽपि शाब्दे एकवाक्यत्वे' 'गङ्गा भक्तिवत्, भक्तिश्च गङ्गावद्भन्वेति' अस्त्येवार्थो वाक्यभेदः। अस्या उपमानान्तरतिरस्कार एव फलम्। अत एव उपमेयेनोपमा इत्यस्याः अन्वर्थाभिधानम्। यत्र पुनः उपमानान्तरतिरस्करो न प्रतीयते तत्र नायमलङ्कारः। यथा –

'सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥

इत्यत्र विधुसवित्रादीनामुपमानान्तरतिरस्कारः न विवक्षोपारूढः किन्तुसुख दुःखाक्रान्तमनसामेवं विपरितं भाति इतिचोपपादितम् ॥

एवंरीत्याऽभ्युपगमे तु – भामहाद्यनुरोधः, विद्यानाथलक्षणघटकस्य एकदेत्यस्य अतिव्यापकत्वरूपदोषनिस्तारश्च भवेत् ॥

वस्तुतस्तु—

अङ्गानि श्रृङ्गारगृहाणि भूप
कुमारिकायास्सुकुमारतायाम्।
वीतोपमानीति वचो मृषैव
परस्परं यत्तुलनां भजन्ते ॥

इत्यादिपद्ये एकवाक्यतया उपमेयोपमाया दृष्टत्वात् ग्रन्थकृदभिहितभेदकथन मुचितमेवेति भाव्यम् ॥

एतेन – कौस्तुभकृता – यत् वाक्यभेद एव उपमेयोपमायाः शाब्दी आर्थी इति भेदमात्रप्रदर्शनं तन्न्यूनमिति व्यक्तं भवति ॥

**चित्रमीमांसा**

**तत्रापि यथासम्भवं पूर्वोक्ता भेदाः उन्नेयाः ॥**

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभ
श्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतौ
चित्रमीमांसायां उपमेयोपमालङ्कारप्रकरणम्

---

**तत्त्वालोकः**

इत्थं धर्मस्यानुगामित्वेन वस्तुप्रतिवस्तुभावेन च साधारण्यं वदतो सर्वस्वकारादीनामनुरोधेनोदाहरणानि प्रदर्श्य श्लेषादिमूलकतयापि धर्मे साधारण्यं सम्पाद्य तन्मूलाः उपमेयोपमाप्रभेदाः तथा लुप्तोपमेयोपमाप्रभेदाश्च यथापूर्व प्रायशः संभवन्तीति ते उन्नेया इत्युपमेयोपमामुपसंहरति– **तत्रापीति** ।

तत्रापि–उपमेयोपमायामपि, यथासंभवम् – अनुभवानुसारिलक्ष्यानुरोधेन, पूर्वोक्ता भेदाः बिंबप्रतिबिंबभाव – श्लेष –उपचार – समास भेदाश्रयणादिना धर्मे साधारण्यं संपाद्य उपमेयोपमायाः भेदाः, तथा–लुप्ता प्रभेदाः, व्यङ्ग्योपमेयोपमेत्येवमाद्याः उन्नेयाः – गवेषणीयाः इत्यर्थः । तत्र बिंबप्रतिबिंबभावघटितवस्तुप्रतिवस्तुभावेन साधारण्ये – सच्छायेति, वक्त्रं पद्मसिवेति च, धर्मस्यानुगामितायां व्यक्तधर्मा 'खमिव जलं' इति, सुगन्धि नयनानन्दीति व्यक्तधर्माया उदाहरणानि प्रदर्शितानि । शुद्ध बिंबप्रतिबिंबभावस्य 'युधि निसर्गे'नि पद्यं पूर्वमेव उदाहृतं व्याख्यातञ्च ।

तत्त्वालोकः

श्लेषेण यथा—

विचरद्ग्राहसमूहः चन्द्रमयूखाङ्कुरोल्लसितः ।
आकाश इव समुद्रः समुद्र इव सोऽयमाकाशः ॥

अत्र जलचरसमूह–नक्षत्रसमूहयोः विचरग्रद्ग्राहसमूहः इति श्लेषमूलका भेदाध्यवसायेन समुद्राकाशोभयसाधारण्येन तयोः उपमेयोपमा ।

उपचारेण यथा—

अचला इव विद्वासः विद्वांस इवाचला गुरवः ।
शास्त्राणि तोयनिधिवत् तोयनिधिः शास्त्रवद्बहुगभीरः ॥

अत्रपर्वतसमुद्रोभयवृत्ति गुरुत्व–गभीरत्वयोः विद्वच्छास्त्रेषूपचारेणप्रयोगः । उपचारमूलतया साधारण्यं तेन च विदुषामचलानां शास्त्रतोयनिधीनाञ्चेपमेयोपमा ।

समासभेदाश्रयणेन यथा—

उल्लसितकुसुमहस्ता, रमणीयस्तबकवक्षोजा ।
वल्लिरिव वामनयना विभाति वल्ली च वामनयनेव ॥

कुसुमानीव हस्तौ, हस्ताविव कुसुमानीति, स्तबकाविव वक्षोजौ वक्षोजाविव स्तबकौ इति समासभेदं परिकल्प्य, वल्लिवामनयनयोः उपमेयोपमा निरूप्यते ।

एवं बिम्बप्रतिबिम्बभावाकरम्बितवस्तुप्रतिवस्तुभावमूलतयापि साधारण्येन उपमेयोपमा–अलङ्कारमणिहारे प्रदर्शिता—

**तत्त्वालोकः**

कमलालयाकपोलौ विमलौ
सुस्निग्धवज्रमुकुरसखौ ।
सुस्निग्धवज्रमुकुरौ
सुविमलकमलालयाकपोलनिभौ ॥

इति । अत्र लक्ष्मीकपोलमणिदर्पणयोः केवलवस्तुप्रतिवस्तुभावापन्नवैमल्य सुस्निग्धत्वाभ्यामुपमेयोपमा ॥

एवं व्यङ्ग्या उपमेयोपमा—'तया गृहीतं नु मृगाङ्गनाभ्यः' इति मूले प्रागेव उदाहृतम् । एवं लुप्तप्रभेदाः उह्याः ॥

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा(नुग्गेहल्य)-
भिजनेन सोमयाजियाण्डान् जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसंभवेन श्रीमन्महीशूरपुरीमध्यविद्योतमानश्रीमन्महा
राजसंस्कृतमहापाठशालायां सरस्वतीप्रासादाख्यायाम्
अलङ्कारशास्त्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
**सो. रामस्वामि ऐय्यंगार्यशर्मणा**
विरचिते चित्रमीमांसाव्याख्याने तत्त्वालोकाख्ये
उपमेयोपमालङ्कारप्रकरणं समाप्तम्

---

तत्त्वालोकः

# अनन्वयप्रकरणम्

अनन्वयालङ्कारविभागः



चित्रमीमांसा

# अनन्वयप्रकरणम्

अथानन्वयः—

एकस्यैवोपमानोपमेयत्वेऽनन्वयो मतः ॥

तत्त्वालोकः

न यस्य सदृशं वस्तु दृश्यते ज्ञानदृष्टिभिः ।
अनन्वयमहं स्तौमि गोविन्दं गोविदां पतिम् ॥

उपमान्तःपातिनीमपि तृतीयसदृशव्यवच्छेदफलकत्वेन विलक्षणाम् उपमेयोपम निरूप्य द्वितीयसदृशव्यवच्छेदफलकमनन्वयं सिद्धान्तयितुं **विद्यानाथाभिमत** मनन्वयं लक्षयति–**अथानन्वयेति** । **एकस्येति** । एकस्येति षष्ठ्याः वृत्तित्वमर्थः, उपमानं च उपमेयञ्च उपमानोपमेये तयोर्भावः उपमानोपमेयत्वम् द्वन्द्वात्परं श्रूयमाणस्य प्रत्येकमभिसंबन्ध' इति न्यायेन त्वशब्दस्य उभयत्रान्वयः तथाच उपमानत्वम् उपमेयत्वतम् इत्यन्वय उक्तो भवति । उपमानत्वं च सादृश्यप्रतियोगित्वं, उपमेयत्वं सादृश्यानुयोगित्वम् इत्यर्थः । अनन्वय शब्दः –न विद्यतेउपमेयस्य उपमानान्तरेण अन्वयः संबन्धोऽत्रेत्यन्वर्थः ।

तथा च–एकपदार्थमात्रनिष्ठसादृश्यप्रतियोगित्वानुयोगित्वोभयमनन्वयः । इत्युक्तं भवति ॥

अत्र एवकारोपादानस्य प्रयोजनं प्रदर्शयति–एवकारेति । **उपमेयोपमायामिति** । 'खमिव जलं जलमिव खम्' इत्यत्र खजलयो एवैकस्य

चित्रमीमांसा

एवकारबलादेकस्यामेवोपमितिक्रियायामिति गम्यते। तेन उपमेयोपमायां रशनोपमायां च नातिव्याप्तिः। उदाहरणम् —

'गगनं गगनाकारं सागरः सागरोपमः'। अय प्रतीयमानधर्मः।

निर्दिष्टधर्मो यथा-

न केवलं भाति नितान्तकान्तिः
नितम्बिनी सैव नितम्बिनीव।

तत्त्वालोकः

उपमानत्वमुपमेयत्वं च यद्यपि विद्यते, अथापि एकस्यामेव उपमितिक्रियया खजलयोरेकैकस्यैवोपमानत्वमुपमेयत्वं वा न तु उभयमिति नातिव्याप्तिरित्यर्थः।

एवं 'भणितिरिव मतिर्मतिरिव चेष्टा' इत्यत्रापि नैकोपमितिक्रियायामेकस्यैवोपमानत्वोपमेयत्वोभयम् इति नातिव्याप्तिः।

अयं च द्विविधः, प्रतीयमानधर्मो, निर्दिष्टधर्मश्चेति। तत्राद्यमुदाहरति–**गगनमिति**। अत्र गगनत्वरूपैकधर्मावच्छिन्नमेव सादृश्यप्रतियोगि, अनुयोगिचेति तद्व्यतिरिक्तोपमानराहित्यं प्रतीयते। विस्तीर्णतादारुणतादिः उभयत्र साधारणो धर्मः, स च न वाच्यः किंतु प्रतीयमानः॥

निर्दिष्टधर्ममनन्वयं द्वितीयमुदाहरति- **निर्दिष्टेत्यादि**। नितान्त, कान्तिः अतिशयितकान्तिः, सा नितम्बिन्येव केवलं नितंबिनीव भातीति न

चित्रमीमांसा

यावद्विलासायुधलास्यवासाः
ते तद्विलासा इव तद्विलासाः ॥

ननु—

पितुर्नियोगाद्वनवासमेवं
निस्तीर्य रामः प्रतिपन्नराज्यः ।
धर्मार्थकामेषु समां प्रपेदे
यथा तथैवावरजेषु वृत्तिम् ॥

तत्त्वालोकः

अपितु भात्येवेति यावत् । तेऽनुभवैकगोचराः यावन्तो विलासाः आयुधानि यस्य स कामः तस्य लास्यवासाः नृत्यस्थानानि, तद्विलासाः तस्याः विलासा तद्विलासा इव भान्ति इत्यर्थः ।

'तात्कालिको विशेषो यस्स विलास इतीरितः'

इति विलासलक्षणाम् । अत्र 'नितम्बिनीव नितम्बिनी, तद्विलासा इव तद्विलासाः' इति एकस्यैवोपमानोपमेयभावः ।

उक्तलक्षणे सदृशान्तरव्यवच्छेदफलकत्वाविवक्षणात् समुच्चयोपमायामतिव्याप्तिः इत्याह–नन्वित्यादिना । पितुरिति रामः, पितुः दशरथस्यनियोगात् शासनात्, एवम् उक्तरीत्या, वनवासं निस्तीर्य परिसमाप्य, पश्चात् प्रतिपन्नराज्यः प्राप्तराज्यस्सन्, धर्मार्थकामेषु यथा, तथैव अवरजेषु अनुजेष्वपि समां वृत्तिं अवैषम्येण व्यवहारं, प्रपेदे कृतवान्, इत्यर्थः ।

चित्रमीमांसा

**इत्यत्रैकस्यैव रघुपतेरुपमानत्वमुपमेयत्वं च। न च तत्रा नन्वयः।**

तत्त्वालोकः

अत्रातिव्याप्तिमुपपादयति-**इत्यत्रेत्यदीना**। एवं चात्र-यथा धर्मार्थ कामेष्ववैषम्येण व्यवहृतवान् रामः अवरजेष्वपि तथैव व्यवहृतवान् धर्मादिषु वृत्याश्रयस्य रामस्य अवरजेषु वृत्याश्रयो रामः सम इति एकस्यैवोपमानत्व मुपमेयत्वं च प्रतीयत इत्यतिव्याप्तिर्लक्षणस्येति भावः।

यद्यत्रैकस्यैवोपमानोपमेयता प्रतीयते तदा अनन्वय एवात्र अभ्युप गम्यतां का हानिः इत्यत्राह-**न चेति**। सशादृन्तरव्यवच्छेदे यत्र तात्पर्यं तत्रैवानन्वय इष्यते। अत एव—

**भामहोऽपि—**

यत्र तेनैव तस्य स्यात् उपमानोपमेयता।
असादृश्यविवक्षातः वदन्ति तमनन्वयम्॥

इत्याह। [भा.का. ३-४५]

**वामनश्च**-'एकस्योपमेयत्वोपमानत्वेऽनन्वयः' इति लक्षयित्वा 'अन्य सादृश्यमेतेन प्रतिपादितम्' इत्युपपाद्य सदृशान्तरव्यवच्छेदः अनन्वयजीवित मित्यभिव्यनक्ति॥ [वा.का. ४-३-१४]

**उद्भटोऽपि**—भामहोक्तमेव लक्षणमक्षरशः अनूदितवान्।
**रुद्रटश्च—**

तत्त्वालोकः

'सा स्यादनन्वयाख्या यत्रैकं वस्तु अनन्यसदृशमिति ।
स्वस्य स्वयमेव भवेदुपमानं चोपमेयं च' इति ॥

**काव्यप्रकाशकारश्च**—

'उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
अनन्वयः । . . . . ' इत्याह ।

**काव्यप्रकाशवृत्तौ तु**-'उपमानान्तरसंबन्धाभावोऽनन्वयः' इत्युक्तं तेनापि सदृशान्तरव्यवच्छेदोऽनन्वयजीवितमिति ज्ञायते । **एवमेकावली-कारश्च**—

अनुगतिरूपमङ्गानामेकस्मिन्नेव ज्ञायते वाक्ये ।
यद्येकस्य तदानीमन्वर्थोऽनन्वयः कथितः ॥

इत्युक्त्वा एकस्य तूपमानोपमेयत्वविरुद्धधर्मसंबन्धः सदृशान्तरनिषेधध्वननाय इत्याह ।

**विद्यानाथोऽपि**-सदृशान्तरव्यवच्छेदार्थमेवैकस्योपमानोपमेयत्वघटनेति अभिप्रेयाय । अथाऽपि दूषणोद्भावनं सदृशान्तरव्यवच्छेदांशस्य लक्षणघटकत्व मन्तरा नातिव्याप्तिनिरासः इत्यभिप्रायेण-इदं च दूषणं **भामह-रुद्रटोद्भटानां** लक्षणं विना अन्येषां लक्षणेषु दृढं लग्नमेव ।

अत एव एकस्यैवोपमानत्वमुपमेयत्वं च यत्र यत्र, तत्र तत्र सदृशान्तर व्यवच्छेद इति वक्तुं न शक्यं तद्विवक्षाराहित्यस्यापि दृष्टेः इत्यभिप्रायेण 'पितुर्नियोगादि'त्यत्र सदृशान्तरव्यवच्छेदो न तात्पर्यविषयः । अथापि

### चित्रमीमांसा

**समुच्चयोपमया तस्य धर्मार्थकामेषु अनुजेषु च समवृत्तिमात्र प्रतिपाद्यतया सदृशान्तरव्यवच्छेदे तात्पर्याभावात् ।**

### तत्त्वालोकः

एकस्यैवोपमानोपमेयत्वं विवक्षयन इत्युपपादयति–**समुच्चयेति** । समुच्चयोपमया धर्मे यथा अवैषम्येण व्यवहारं कृतवान् तथैव अर्थेऽपि, धर्मार्थयोः विषये यथा अवैषम्येण व्यवहारं कृतवान् तथा कामविषयेऽपि । एवं धर्मार्थकाम विषय एव नावैषम्येण व्यवहारः अपितु अनुजेष्वपि अवैषम्येण व्यवहार इति उपमानां समुच्चयेन

'धर्मार्थकामाः सममेव सेव्याः
यो ह्येकसक्तः स जनो जघन्यः'

इत्येतावन्मात्रेण नाऽजघन्य आसीत् किन्तु अनुजेष्वपि अवैषयेम्ण व्यवहरन् सर्वात्मना उत्तमतां प्रपेदे इत्येतावन्मात्रे तात्पर्यात् । सदृशान्तरसत्त्वेऽपि रघुपतेर्वैशिष्ट्यं हीयते उक्तवृत्तेस्सर्वजनसाधारणत्वात् । अतश्च नात्र सदृशान्तरव्यवच्छेदे तात्पर्यम् ॥

ननु पूर्वमेवकारबलात् 'एकस्यामेवोपमितिक्रियायाम्' इत्युक्तत्वेन एक वाक्यता लभ्यते । 'पितुर्नियोगात्' इत्यत्र तु प्रकारार्थकथाल्प्रत्यय वशात् यथा चन्द्रस्तथामुखम् इतिवत् धर्मार्थकामेषु यादृशवृत्तिमान् रामः तादृशवृत्तिमान् अनुजेष्वपि इति बोधानुरोधेन यत्तच्छब्दाभ्यां वाक्यभेदाव-गमाच्च नातिव्याप्तिरिति **चेन्न,** सर्वत्र एकवाक्यतैवास्तीत्यपि न वक्तुं-शक्यम् , अन्यथा 'गङ्गा हृद्या यथा गङ्गा' इत्यादावनन्वयो न स्यात् ।

## चित्रमीमांसा

तथा —

तस्यापनोदाय फलप्रवृत्तौ
उपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्
समुद्रनेमिं पितुराज्ञयेव ॥

इत्यत्राप्यस्ति स्वस्यैवोपमानत्वमुपमेयत्वं च ।

### तत्वालोकः

किञ्च— यत्रैकवाक्यतयैकस्यैवोपमानोपमेयत्वं प्रतीयते यत्र च सदृशान्तरव्यवच्छेदप्रसक्तिरपि नास्ति तत्र अतिव्याप्तिरित्युदाहरति-**त्यक्ष्यामीति**।

तस्य—रक्षोगृहोषितसीतापरिग्रहजनितापवादस्य, अपनोदनाय अपनुत्तये, फलप्रवृत्तौ अपत्योत्पत्तौ उपस्थितायामपि सन्निहितायामपि, निर्व्यपेक्षः निस्स्पृहस्सन् वैदेहसुतां वैदेहीम्, पुरस्तात्-पूर्वम्, पितुराज्ञया समुद्रनेमिम् समुद्रो नेमिरिव नेमिः यस्यास्तामिव भूमिमिव, समुद्रस्य भूमिं परितो वर्तमानत्वात् भूमेश्च वर्तुलत्वात् तत्प्रान्तवर्तमानत्वाच्च चक्रप्रान्तवत्प्रतिभासते समुद्र इति तस्य नेमिसदृशत्वम् । त्यक्ष्यामि हास्यामि इत्यर्थः । 'स्त्री नेमिः ना प्रधिश्चक्रप्रान्ते' इति **वैजयन्ती** ।

अत्र 'यथाहं पुरा क्षितिमत्यजम् एवमिदानीं सीतां त्यक्ष्यामि' इत्येकस्मिन्नेव वाक्ये रघुपतेरेकस्यैवोपमानत्वमुपमेयत्वं च प्रतीयते । तदाह –**इत्यत्रेति** ।

## चित्रमीमांसा

तत्रापि नानन्वयः। पितृनियोगात् क्षितित्याग इव अपवादात् सीतात्यागे सदृशान्तरप्रसक्त्यभावेन तद्व्यवच्छेदस्य फलत्वायोगाच्च।

एवम् —

उपाददे तस्य सहस्ररश्मिः
त्वष्ट्रा नवं निर्मितमातपत्रम्।
स तद्दुकूलादविदूरमौलिः
बभौ पतद्गङ्ग इवोत्तमाङ्गे॥

इत्यादावप्येकस्यैवोपमानोपमेयभावः स्पष्टः॥

## तत्त्वालोकः

तर्हि अस्त्वनन्वयः इति शंकां सहेतुकं निराकरोति –तत्रापीति। अयं भावः सदृशान्तरप्रसक्तौ हि तद्व्यावृत्तये यत्नोऽपेक्षितः। प्रकृते च क्षितित्यागे सीतापरित्यागे च सदृशः कोऽप्यन्यो न प्रसक्त इति तद्व्यवच्छेदासम्भवात् तत्फलकानन्वयस्य वक्तुम् अशक्यत्वात्। सदृशान्तरव्यवच्छेदो ह्यनन्वयजीवितमिति सिद्धान्तसिद्धम्।

एवं यत्र सदृशान्तरप्रसक्तिरस्ति तत्राप्यभिन्नधर्मिकोपमास्थलेऽतिव्याप्तिरित्युदाहरति—एवमित्यादिना।

तस्य – पार्वतीपरिणयार्थं हिमवन्तं प्रति प्रस्थितस्य शिवस्य सहस्ररश्मिः सूर्यः, त्वष्ट्रा–विश्वकर्मणा, निर्मितं नवं नूतनम् आतपत्रम् छत्रम् उपाददे

चित्रमीमांसा

**न चैतेषु क्वचिद्धर्मादिषु वृत्तेः अवरजेषु वृत्तेश्च उपमानोपमेयभावः ।**

**अन्यत्र क्षितित्यागस्य, सीतात्यागस्य च, अपरत्र गङ्गापतनस्य दुकूलसन्निधानस्य च । न तु क्वचिदप्येकस्यैव, धर्मिणः उपमानोपमेयभावः । विशिष्टान्वयिनोऽपि विशेष्य बाधे विशेषणसंक्रमौचित्यादिति वाच्यम् ।**

तत्त्वालोकः

अधारयत् उत्प्रेक्षते तद्दुकूलात् आतपत्रप्रान्तलंबिनो दुकूलात् अविदूरमौलि सन्निहितमौलिः स शिवः उत्तमाङ्गे शिरसि पतन्ती गङ्गा यस्य स इव ईश्व इव बभौ इत्यर्थः ।

अत्र दुकूलविशिष्ट ईश्वरः उपमेयम् गंगाविशिष्ठ ईश्वर उपमानमिति विशेषणभेदेऽपि विशेष्यैक्यस्यापरिहरणीयत्वात् उक्तलक्षणस्यातिव्याप्तिः।

**ननु**—'न ह्यभेदे सादृश्यमि'ति न्यायेन स्वस्य स्वेन सादृश्यायोगा द्विशिष्टान्वयिनोऽपि विशेषणमात्रसंक्रमौ चेत्यात् यथा—'दध्ना जुहोती'त्यादौ विशिष्टान्वयिनोऽपि विधेः विशेषणीभूतदध्यादिसंक्रमः तद्वदत्रापि पितुर्नि-योगादित्यत्र विशेषणस्य धर्मादिषु वृत्तेः अवरजेषु वृत्तेः, तस्यापनोदाय इत्यत्र क्षितित्यागस्य सीतात्यागस्य च, उपाददे तस्येत्यत्र गङ्गापतनस्य दुकूलसंनि-धानस्य च उपमानोपमेयभावोऽस्तु मास्तु च क्वचिदपि एकस्यैव धर्मिणः उपमानोपमेयभावः । इत्थं सति उक्तलक्ष्येषु एकस्यैवोपमानोपमेयभावः इति नातिव्याप्तिप्रसक्तिरिति आशङ्कते—**न चैतेष्विति** ।

**चित्रमीमांसा**

यथा धर्मार्थकामेषु समांवृत्तिं प्रपेदे तथाऽव-रजेषु इत्यादिप्रकारेण एकस्यवोपमानोपमेयभावे निषिद्धेऽपि तस्य विशेषणसङ्क्रान्तिकल्पने—

'पाण्ड्योऽयमंसार्पितलम्बहारः'

इत्यादावपि हारनिर्झरादीनामेवोपमानोपमेयभावः स्यादिति बिम्बप्रतिबिम्बोदाहरणमात्रविपलोप्रसङ्गात् ॥

**तत्त्वालोकः**

यद्युक्तरीत्या 'सविशेषणे हीति' न्यायमाश्रित्य उक्तोदाहरणेषु अतिव्याप्तिपरिहारः क्रियेत तदा आलंकारिकसम्मतबिम्बप्रतिबिम्बभावापन्नधर्मकोदाहरणसामान्यस्यैव विलोपप्रसङ्गादिति बाधकोपन्यासमुखेन 'सविशेषणे हि' इति न्यायस्य नात्रातीवप्रयोजकत्वमिति उक्तोदाहरणेष्वतिव्याप्तिरस्त्येवेति मनसि निधाय पूर्वोक्तशंकां समाधत्ते–यथेति ।

अयं भावः—अत्र धर्मिणामेकत्वाद्यथा सादृश्यान्वयायोगाद्विशेषण संक्रान्तिः कल्प्यत इत्युच्यते तद्वत्–'पाण्ड्योऽयम्' इत्युदाहरणेपि , पाण्ड्यादिराजयोः उपमायां निबद्धायामपि हारनिर्झरादीनामैक्याभावेन साधारण्यं नास्तीति विशेष्ययोः उपमाया बाधात् , तद्विशेषणयोः हारनिर्झरयोः, तरङ्गाकारवत्त्वेन बालातपहरिचन्दनयोः आरुण्येन धर्मे साधारण्यं संपद्यत इति हारनिर्झरादीनामेवोपमानोपमेयभावः स्यात् । तेन च बिम्बप्रतिबिम्बभावानपेक्षणान् तन्मूलिकोपमा विलुप्येतैव । अतश्च 'सविशेषणे' इति न्यायाभ्युपगमो न युक्त इति ।

**किंच**–विजातीयविशेषणैकधर्मिकोपमास्थले सविशेषणेहीति न्यायानु

### चिमौत्रमांसा

'रामरावणयोर्युद्धम्' इत्यादावभेदेऽप्युपमानोपमेय भावमभ्युपगच्छतां आलंकारिकाणां विशेष्यबाधस्यापरिहर णीयत्वाच्च ॥

तस्मादत्र 'सविशेषणे हि' इति न्यायोपन्यासः वाक्यमीमांसकानां शोभते नालंकारमीमांसकानाम् ॥

### तत्त्वालोकः

स ।पि कथंचिद्विशेषणसंक्रमात् उपमा परिकल्पयितुं शक्या । अभिन्न विशेषणकैकधर्मिकानन्वयस्थले तु विशेष्यबाधो दुष्परिहर एवेति तत्र वा कथं सादृश्यान्वयः अभ्युपगन्तुं शक्य इत्याह–**रामरावणयोरिति** ।

अयं भावः—'रामरावणयोर्युद्धम्' इत्यत्र विशेष्यस्य युद्धस्य एकत्वेन बाधात् तद्विशेषणयोः रामरावणयोस्सादृश्यं परिकल्प्यतां 'सविशेषणे हि' इति न्यायात् इत्यपि न वक्तुं शक्यम् , युद्धविशेषणयोः रामरावणयो-रप्यभिन्नत्वादुभयत्रापि बाधस्समान एव । अथापि युद्धेऽद्वितीयताप्रतीतिः खल्वत्र विवक्षिता कवेः । अत एव च तस्मिन् अभेदेऽपि उपमाऽभ्युपगता आलंकारिकैः । यदि सविशेषणे हीति न्यायः आलंकारिकाणां सम्मत स्स्यात् तदा उक्तोदाहरणप्रदर्शनमसंगतं स्यात् । अतश्च आलङ्कारिक मीमांसकैः सविशेषणे हि इति न्यायोऽभ्युपगन्तुं न शक्यत इत्युपसंहरति **तस्मादिति** ।

अयं च न्यायः रामायणे–श्रीमद्वाल्मीकिमहर्षिणापि

'सीतां सन्तर्जयन्तीस्ताः राक्षसीरशृणोत्कपिः'

चित्रमीमांसा

**वाक्यमीमांसका हि अभेदे उपमानोपमयभावनिर्देश एव नास्तीति मन्यमानाः 'रामरावणयोर्युद्धम्' इत्यादावद्य-**

तत्त्वालोकः

इतिवचनात् सूचित इव भाति । अत्र च न हि राक्षसीनां श्रवणगोचरत्वं विवक्षितम्, किन्तु तत्कृततर्जनकालिकक्रूरशब्दस्येति नालंकारमीमांसकाना मित्युक्तिः नातीव शोभते इति बोध्यम् ॥

अभेदेऽप्युपमानोपमेयभावम् आलंकारिका अभ्युपगच्छन्ति इत्ययमंशः **ग्रन्थकृतैव-शिवार्कमणिदीपिकायां**-दहराधिकरणे परमेश्वरस्य दहराकाश-रूपत्वनिराकरणपरपूर्वपक्षश्रीकण्ठभाष्यव्याख्यावसरे-'यावान्वा' इत्यादिवाक्यं भूताकाशसाम्यप्रतिपादनेन दहराकाशस्य व्यापकपरं न भवति, किन्तु, दहाराकाशेनैव दहराकाशस्य साम्यप्रतिपादनेन अतिसौक्ष्म्यपरम् । अयमि-त्यस्य प्रकृतदहराकाशपरामर्शित्वे संभवति अप्रकृतबाह्याकाशपरामर्शित्वकल्पना-नौचित्यात् । तेनैव तस्योपमानोपमेयभावो नान्वेति इति चेत् सत्यम् ।

अनन्वय्यपि तन्निबध्यते अनुपमत्वद्योतनाय यथा-स्वे महिम्नीत्यत्र अनन्वय्यपि स्वस्य स्वेन आधाराधेयभावो नाधारत्वज्ञापनाय निबध्यते ।

अत एव 'रामरावणयोर्युद्धं रामरावणयोरिव' इत्यादावनुपमत्वद्योतनाय भेदे निबध्यमाने उपमानोपमेयभावो नान्वेति इत्यन्वर्थनामायमनन्वया-अलंकार इत्याहुरालंकारिकाः इति [**शिवार्क.अ १-पा-३-सू १३**] ।

रामरावणयोर्युद्धम इत्यत्र अभेदे सत्यपि कथं सादृश्यं निर्वहति वाक्यमीमांसकाः इत्याशंकायां तदनुसारेणाह-**वाक्यमीमांसकाः** इति ।

चित्रमीमांसा

**तनस्य पूर्वेद्युस्तनं युद्धमुपमानम् । एतत्कल्पगणनस्य कल्पान्तरगगनमुपमानम् इत्यादि कल्पयन्ति ॥**

**तत्त्वालोकः**

वाक्यमीमांसका:—कर्मकाण्डज्ञानकाण्डगतन्यायसमन्वयचतुराः तयोः कर्मकाण्डन्यायसमन्वयचतुराः **पूर्वमीमांसायां तद्व्यपदेशाधिकरणे**—

श्येनेनाभिचरन् यजेत इत्यत्र श्येनपदार्थस्य पक्षिरूपत्वे 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेन' इति वाक्येनोक्तः उपमानोपमेयभावः एकस्मिन् पक्षिणि न युज्यते । अतश्च श्येनपदे गौणीं वृत्तिमङ्गीकृत्य श्येनपदस्य कर्मनामधेयत्वं युक्तम् आश्रयितुम् । तथा सति श्येने पक्षिणि उपमाने यो गुणः निपत्यादानरूपः स उपमेये कर्मण्यपीति अभ्युपगतः । अत एव **भाट्टदीपिकायां-खण्डदेवेन**—

'यथा वै श्येन' इत्यर्थवादवाक्यमुपादाय-सिद्धान्ते नायमनन्वयालङ्कारः । तथात्वे सर्वेषामर्थवादपदानामुपमानान्तराभावलक्षकत्वापत्तेः । तद्वरं भूयोऽनुग्रहस्यैव न्याय्यत्वात् उपक्रमस्थ एवैकस्मिन् पदे रूपकविधया लुप्तोपमानविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयत्वं द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थस्सन् विनैव लक्षणां पूर्णोपमानविधया विधेययागस्तुत्यर्थः न विरुध्यते इत्युक्तम्

(भा.दी.२-४-५-५)

ज्ञानकाण्डन्यायसमन्वयचतुरैः **उत्तरमीमांसायां दहराधिकरण शाङ्करभाष्यभामतीकल्पतरुकारैरित्थमभिहितम्**-तेषु ब्रह्मसूत्रशाङ्करभाष्ये **शङ्कराचार्यैः**—

## तत्त्वालोकः

दहर उत्तरेभ्यः [ब्र.सू. १-३-१४]

इत्यधिकरणे—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाशः' इति श्रुतौ ब्रह्मपुरं शरीरं जीवस्य ब्रह्माभिन्नतया तन्निवासरूपत्वात्। दहरं परिच्छिन्नम् अल्पमिति यावत्। पुण्डरीकं तत्सन्निवेशं हृदयमित्यर्थः। तत्संबन्धितया तदन्तर्गत आकाश उक्तः। स किं भूताकाशः? उत परं ब्रह्म इति सन्दिह्य भूताकाशस्य विवक्षितत्वे-'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इति श्रूयमाण उपमानोपमेयभावः न संभवतीति शंकायां पूर्वपक्षिणा अवच्छिन्नानवच्छिन्नभेदेन बाह्याकाशहृदयावच्छिन्नाकाशयोः भेदमारोप्य उपमानोपमेयभावः समर्थितः।

सिद्धान्तेऽपि भेदारोपेण तदुपादानमगतिकगतिरिति नात्र तदङ्गीकरणं युक्तमिति अभिहितम्। तथा च भाष्यम् 'अगतिका हीयं गतिर्यत्काल्पनिकभेदाश्रयणम्' इति।

**वाचस्पतिमिश्रैरपि—शाङ्करभाष्यभामत्याम्—**

अगतिका हीयमिति व्याख्यासमये—

तेन तस्योपमेयत्वं रामरावणयुद्धवत्।
अगत्यां भेदमारोप्य, गतौ सत्यां न युज्यते॥ इति।

**भामतीव्याख्यायां कल्पतरौ—अमलानन्दसरस्वतीभिः—**

ह्यस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते—

गगनं गगनाकारं सागरः सागरोपमः।

चित्रमीमांसा

तस्मादालंकारिकमते एतेष्वेकस्यैवोपमानोपमेयभाव इति लक्षणमतिव्याप्तमिति चेत्–

अत्र ब्रूमः--

स्वस्य स्वेनोपमा या स्यादनुगाम्येकधर्मिका ।
अन्वर्थनामधेयोऽयमनन्वय इतीरितः ॥

तत्त्वालोकः

रामरावणयोर्युद्धं रामरावणयोरिव ॥

इत्यत्र इति । [कल्प, १-३-५-१४] ।

वस्तुतस्तु–गगनं गगनाकारम् 'इत्यत्र गगनादेः कल्पादिभेदेन भेद-विवक्षा अस्ति चेत् तदा तद्घट इव तद्घट इतिवत् उपमैव स्यात् । परन्तु अत्र उपमानोपमेयतावच्छेदकधर्मस्य अनिर्देशात् उपमानोपमेयतावच्छेदकस्य गगनत्वादेः धर्मस्यैक्यमस्त्येवेत्यभेदे निबध्यमानं सादृश्यमनन्वितत्वात् अनुपमत्वफलकं सत् अनन्वयालंकारस्य विषयः ।

यत्र तु उपमानोपमेयतावच्छेदकधर्मभेदः तत्र न अनन्वयशं काव–सरः । यथा–

'यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः' इत्यत्र आकाश–त्वेनैक्ये सत्यपि बाह्यकाशत्वहार्दाकाशत्वरूपोपमानोपमेयतावच्छेदकधर्मभेद–सत्त्वेनानन्वयालंकारस्य असंभवात् ।

तत्त्वालोकः

एवं च वाक्यमीमांसकमते--' गगनं गगनाकारम् ' इत्यादौ भेदारोपे उपमैव । भेदविवक्षायामुपमायाः अस्माभिरपि निराकर्तुमशक्यत्वत् । यदा तु उपमानान्तरव्यावृत्तौ तात्पर्यं तदा न भेदविवक्षा तथा सति सादृश्य पर्यवसानाभावात् अनुपमत्वे पर्यवसितं भवतीति ग्रन्थकृदाशयः । एतेन उक्तलक्षणस्य–पितुर्नियोगात् त्यक्षामि वैदेहसुताम् उपाददे तस्येत्याद्येकधर्मिकोपमोदाहृतिष्वतिव्याप्तिः दुर्वारेति पूर्वपक्षं निगमयति तस्मादिति ।

एवं प्राप्तेऽनन्वयसिद्धान्तलक्षणमाह–अत्र ब्रूम इत्यादिना ॥

'अनुगाम्येकधर्मिका स्वस्य स्वेनोपमा या स्यात् अयं अन्वर्थ नामधेयोऽनन्वय इति ईरित ' इत्यन्वयः ॥

अनुगामी – तत्तद्धर्मतापर्याप्त्यधिकरणवृत्त्येकसामान्योपस्थापकपदोप--स्थाप्यः एको धर्मः यस्यां सा अनुगाम्येकधर्मिका बिम्बप्रतिबिम्बभावाद्यकरम्बितधर्मप्रयोज्येत्यर्थः ।

स्वस्य उपमेयस्य स्वेन उपमेयादिभिन्नेन या उपमा सादृश्यं स्यात् संभावनामात्रगोचरं भवति न तु दृश्यं परिनिष्पद्यतेऽयम् अनन्वितैकप्रतियोग्यनुयोगिकसादृश्यरूपो र्थः अन्वर्थनामधेयः न विद्यते स्वस्य अनुयोगिनोऽन्वयः प्रतियोगित्वेन सम्बन्धोऽत्रेति योगार्थानुसारिनामधेयोऽयमनन्वय इति ईरितः कथितः इत्यर्थः । तथा च अनुगाम्येकधर्मप्रयोज्यैकप्रतियोग्यनुयोगिकं सादृश्यमनन्वय इति । अथ लक्षणघटकदलानामतिव्याप्त्यादिवारकतया

चित्रमीमांसा

स्वस्य स्वेनेति विशेषणात् उपमेयोपमायां रशनोपमायांच नातिव्याप्तिः अनुगाम्येकधर्मिकेति विशेषणात् उदाहृतोपमाविशेषेषु नातिव्याप्तिः ।

तत्त्वालोकः

सार्थक्य मिति तदनुसारेण स्वस्य स्वेनेति विशेषणम् उपमेयोपमायां रशनोपमायां च अतिव्याप्तिवारकतया सार्थकमित्याह **स्वस्येति** ।

यद्यत्र अनुगतैकधर्मप्रयोज्यं वर्ण्यमानं सादृश्यमनन्वयः इत्युच्येत तदा 'खमिव जलं जलमिव खम्' इत्यादावपि नैर्मल्यादेर्धर्मस्य प्रतीयमानस्य सादृश्यप्रयोजकत्वात् उक्तलक्षणातिव्याप्तिस्स्यात् । अतः स्वस्य स्वेनेति उपमायां विशेषणम् । तदुपादाने तु स्वस्य अन्येनैव तत्रोपमा निबद्धा नतु स्वस्य स्वेनेति न दोषः । तथा—

'भणितिरिव मतिः मतिरिव चेष्टे'ति

रशनोपमायामपि प्रथमोपमायां यस्योपमेयत्वं तस्यैव अन्योपमायामुपमानत्वमिति एकस्मिन्नेवोपमानत्वमुपमेयत्वं च भवति, अथापि रशनायां परस्परमाभरणानां शृङ्खलकटकवत्सम्बन्धो यथा तद्वदेवात्रापि इति न स्वस्य स्वेनोपमेत्यदोष इति भावः ।

अनुगाम्येकधर्मिकेति उपमायां यद्विशेषणमुपात्तं तदपि अभिन्नधर्मिकोपमविशेषेष्वतिव्याप्तिवारकतया सार्थकमिति प्रदर्शयति अनुगामीति

अयं भावः—यद्यपि एकप्रतियोग्यनुयोगिकं सादृश्यम् अनन्वयः इति लक्षणे कृते, गगनं गगनाकारमित्यादौ नाव्याप्तिः तथापि पितुर्नियोगात्, तस्या-

### चित्रमीमांसा

यद्यपि—तेष्वपि समां वृत्तिं प्रपेदे इत्याद्यंशेऽनुगामिधर्मप्रवेशः तथापि-एकेन भवति धर्मार्थकामावरजादिविम्बप्रतिविम्बभावकर-म्बितत्वात् । अत एव एकग्रहणमप्यर्थवत् ।

अन्वर्थनामधेय इति तु न लक्षणान्तर्गतम् । किंतु स्वेन स्वस्योपमाप्यनुगाम्येकधर्मा चेदेवानन्वयो नान्यथा इत्यत्रोपपत्तिमात्रपरम् ।

### तत्त्वालोकः

पनोदाय फलप्रवृत्तौ, उपाददे तस्य सहस्ररश्मिः इत्येकधर्मिकोपमाविशेषेषु रघुपतेः ईश्वरस्य चैकैकमुपमानत्वमुपमेयत्वं च विद्यत एवेत्यतिव्याप्तिः । अतः अनुगाम्येकधर्मिकेति उपमायां विशेषणमुपात्तम् । तदुपदाने तु नातिव्याप्तिः । 'पितुर्नियोगात्' इत्यत्र धर्मार्थकामेषु अवरजेषु समवृत्तित्वस्यच, तथा तस्यापनोदायेत्यत्र क्षितित्याग-सीतात्यागयोः 'उपाददे तस्य' इत्यत्र सन्निहितदुकूलत्व-निपतद्भृङ्गत्वयोश्च भिन्नत्वेन अनुगामित्वाभावादिति ।

ननु अनुगामिधर्मप्रयोज्येत्येव विशेषणमस्तु, मास्तु धर्मे एकत्वविशेषणमित्यशंकायामाह—यद्यपीति ।

अयं भावः-पूर्वोदाहृतिषु क्रमेण प्रपेदे, त्यक्ष्यामि, बभौ इत्यंशे यद्यप्यनुगामित्वमस्ति तथापि—आद्ये धर्मार्थकामानामवराजानां च बिम्बप्रतिबिम्बभावकरम्बितत्वम् द्वितीये सीता-क्षितिरूपबिम्बप्रतिबिम्ब भाव-करम्बितत्वम्, तृतीये सन्निहितस्वरूपवस्तुप्रतिवस्तुभावकरम्बितबिम्बप्रतिबिम्बभावकरम्बितत्वमिति क्वापि शुद्धानुगामिधर्मस्यैकस्याप्रतीत्या नातिव्याप्त्यवकाशः । एनेन एकेति विशेषणं सार्थकमिति ।

ननु- ,अन्वर्थनामधेयः इत्यपि लक्षणे दृश्यते तस्य किं प्रयोजन-मित्यकांक्षाया—माह अन्वर्थनामधेय इति ।

## चित्रमीमांसा

धर्मैक्ये हि स्वस्य स्वेनोपमा नान्वेतीत्यनन्वय इत्यन्वर्थं नाम भवति। अनन्वय्यर्थनिबन्धनवशाच्च अनुपमत्वद्योतनफलपर्यन्तं धावेत्। धर्मभेदे तु एकधर्मावच्छिन्नेन स्वेनैव धर्मान्तरावच्छिन्नस्य स्वस्य उपमान्वेतीति न तत्र अन्वर्थं नाम। न वा अनन्वय्यर्थनिबन्धनाधीनानुपमत्व फललाभः॥

## तत्त्वालोकः

अन्वर्थम्—अर्थानुसृतं नामधेयम् यस्य सः अन्वर्थनामधेयः। तत्वं च अनुयोगित्वेन अन्वययोग्यता उपमेये प्रतियोगित्वेन अन्वययोग्यता उपमाने' न त्वेकस्मिन् एव स्वस्मिन् स्वसादृश्यप्रतियोगित्वानुयोगित्वोभयम् सादृश्यस्य भेदघटितत्वेन वस्तुद्वयवर्तित्वात् एवं सति अनन्वितरीत्यापि तत्कल्पनादनन्वय इति नाम अन्वर्थमिति।

धर्मभेदे तु एकधर्मावच्छिन्नस्य स्वस्य अपरधर्मावच्छिन्नेन अपि स्वेनोपमा अन्वेत्येवेति न तत्र पितुर्नियोगादित्यादौ अनन्वितार्थत्वनिबन्धनमन्वर्थत्वं न वा तत्फलीभूतानुपमत्वप्रतीतिरित्याह—धर्मैक्ये हीति।

धर्मिभेदाभावेऽपि धर्मभेदे ग्रन्थकृतोऽनन्वयो नेष्टः। धर्मैक्ये धर्मिणश्चैक्ये सति उपमा नान्वेतीति वचनं युक्तमयुक्त वेति विचार्यते।

तथाहि—

'ग्रसमानमिवौजांसि सदस्यैर्गौरवेरितम्।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान्॥'

## तत्त्वालोकः

इत्यत्र द्विषत्कर्तृकनामाभिनन्दनमनुगामी एको धर्मः धर्मी च एक एव । पुंसि पुंसादृश्यं व्यज्यते । एकं पुमांसमुद्दिश्य पुंस्त्वं विधीयते इत्युद्देश्य विधेयभावेनावस्थानेनारोपाभावात् रूपकाप्रसक्त्या सादृश्यस्य च प्रतीत्या अनन्व यस्य कथमपि वक्तुमशक्यतया स्वस्य स्वेन सादृश्यं नान्वेतीति व्युत्पत्ति प्रदर्शनमयुक्तम् । किन्तु—न विद्यते स्वभिन्नस्य सादृश्यप्रतियोगित्वेनान्वयो यत्रेति व्युत्पत्तिः । अस्मिन्नर्थे 'नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपश्च [वार्ति–१३६१] इति वार्तिकाद्बहुव्रीहौ कृते विद्यमानपदस्य लोपः अन्वयश्च किं निरूप्य इत्याकांक्षायां स्वभिन्नस्योपमानत्वेनेत्यभिहितम् । तेन च अनन्वयपदस्य योगशक्त्या अन्वर्थत्वमपि भवति । तथा सति असमान मिवेत्यत्र धर्मधर्मिणोरेकैकत्वेऽपि नोपमानिष्पत्तिप्रतिरोधः ।

**किंच**—'चन्द्र इव चन्द्रः' इत्यस्मात् चन्द्रवृत्तिधर्मवान् चन्द्रः इति बोधस्यानुभवसिद्धत्वेन तादृशबोधस्य अपलपितुम् अशक्यत्वात् स्वस्मिन् स्वसादृश्यं नान्वेतीति वचनं न युज्यते । किन्तु स्वस्य स्वस्मिन् सादृश्य पर्यवसानं नास्तीत्येतावन्मात्रे तात्पर्यमिति वदता **कौस्तुभकृता**—'स्वस्य स्वेन सादृश्यं नान्वेतीतीयं दीक्षिताभिमता व्युत्पत्तिः दूरीकृतैव । अत एव च उपमाप्रारम्भ एव **कौस्तुभकृता** 'अनन्वयादावपि सादृश्यप्रतीतिपर्यवसानं स्पष्टमेव' इत्युक्तम् । न च पूर्वोक्तकौस्तुभोक्तिव्याघातः पूर्वोक्तस्य कैयटा-भिप्रायावेदकत्वात् । अत एव च–अनन्वयप्रकरणे कौस्तुभकृता 'एवं चोपमानानि सामान्यवचनैः' इति सूत्रे यत् **महाभाष्ये**- दृश्यते–

यद्युपमानोपमेययोरैक्यं तदा गौरिव गौः इत्यत्रापि उपमानोपमेयभावः प्राप्नोतीति तदप्युक्ताभिप्रायकमेवेति व्याख्यातम् । एतेन स्वस्य स्वेनोपमैव नास्तीति वादोऽसमीचीनः ॥

**तत्त्वालोकः**

**अत एव च**—यत्र तेनैवेत्युद्भटकारिकां विवृण्वता **प्रतीहारेन्दु राजेन**-असादृश्यविवक्षात इति प्रतीकमुपादाय नात्रोपमानोपमेयभावे तात्पर्यं किन्तु उपमेयोपमावत् उपमानान्तरव्यावृत्तौ इत्यभिहितम् ॥

एतेन स्वस्मिन् स्वसादृश्यस्यासम्भवो निराकृतः। असंभवस्याभावात्। किन्तु तथा विवक्षैवात्र शरणम्। अत एव च 'असादृश्य विवक्षातः' इति प्राचीनैः **भामहादिभिः** विवक्षापर्यन्तानुधावनं कृतम् ॥

**एवम्**—**एकावल्यां विद्याधरेणाऽपि**-एकस्य तु उपमानोपमेयत्वादिविरुद्धधर्मसंबन्धः सदृशान्तरनिषेधध्वननाय। अत एवास्य अन्यसंबन्ध वन्ध्यत्वादन्वर्थत्वम् इत्युक्तं न पुनः स्वेन संबन्धवन्ध्यत्वादिति ॥

**तथा- काव्यप्रदीपकारेणापि**-उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव निबध्यते सोऽनन्वयः। तदेतदुक्तम्–उपमान्तर संबन्धाभावोऽनन्वय इति बहुव्रीहिसमासात्। इत्युक्त्वा,

यद्वा—संज्ञायोगनिर्वचनं तत्। अनन्वयः संबन्धाभावः। स चार्थादुपमानान्तरेण उपमेयभिन्नेनेति उक्तम्। तेनापि पूर्वोक्ता व्युत्पत्तिरेवाश्रितेति व्यक्तं भवति न तु ग्रन्थकृदभिमतेति।

**एतेन**—**काव्यदर्पणकृता**–यद्ग्रन्थकृदनुसारेण अनन्वयपदव्युत्पत्ति प्रदर्शनं तदपि मन्दम्।

**नन्विदं लक्षणम्** अतिव्याप्तम्-'ग्रसमानमिवौजांसि' इत्युदाहरणे 'द्वारं द्वारमटन् भिक्षुः' इत्यत्र च–क्रमेण बिम्बप्रतिबिम्बभावाद्यकरम्बितानुगमिधर्मकैकोपमानोपमेयकत्वस्य दृष्टत्वात्। तत्र चाद्ये उपमानान्तरव्यावृत्तौ

## चित्रमीमांसा

इदमनन्वयत्वप्रयोजकं लक्षणम् । लक्षणमात्रं तु-
'यत्र तेनैव तस्य स्यादुपमानोपमेयता'
इति भामहोक्तमनुसन्धेयम् ॥

'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यतिशयोक्ति विशेषेऽनुपमत्वद्योतनफलसाम्यकल्पनावति अतिव्याप्ति निरासाय तत्र तेनैवतस्येति विशेषणम् ।

### तत्त्वालोकः

न तात्पर्यं किन्तु अनुपमत्वे । द्वितीये-यथा पूर्वस्मिन् जन्मनि दत्वा त्वम् अस्मिन् जन्मनि आढ्यो जातः तथा अस्मिन् जन्मन्यपि दत्वा जन्मान्तरेऽप्याढ्यो भवेत्यत्रैव तात्पर्येण सदृशान्तरव्यवच्छेदे तापर्याभावेनालक्ष्यत्वादित्या शंकायामाह—**इदमनन्वय इति** ।

तथा च अनुपमत्वप्रतीतिफलकैकोपमानोपमेयकं सादृश्यम् अनन्वय इति फलति । तेन च प्रागुक्तोदाहरणेषु सदृशान्तरव्यवच्छेदस्याविवक्षया नातिव्याप्तिः ॥

**न चात्र**-अनुपमत्वप्रतीतिफलकत्वमात्रमनन्वय इत्युच्यतां किमेकोपमानोपमेयकत्वविशेषणेन, पूर्वोक्तेषु उपमाविशेषेषु सादृशान्तरव्यवच्छेदस्य फलत्वाभावेनातिव्याप्तेरभावादिति वाच्यम्,

तथा सति अनुपमत्वप्रतीतिफलकातिशयोक्तिविशेषे साम्यकल्पनावति अतिव्याप्तिः प्रसज्येत । तद्वारणाय एकोपमानोपमेयकत्वार्थकं तेनैव तस्येति विशेषणमुपात्तं भामहेनेत्याह-**उभौ यदीति** ।

तत्त्वालोकः

अयं भावः—

उभौ यदि व्योम्नि पृथक्प्रवाहौ
आकाशगंगापयसः पतेताम् ।
तेनोपमीयेत तमालनीलम्
आमुक्तमुक्तालतमस्य वक्षः ॥

इत्यत्र संभाव्यधर्मतदुत्कर्षकल्पनातिशयोक्तिरिति [वाम.का.सू ४-३-१०] लक्षितामतिशयोक्तिमुपपादयितुं प्रवृत्तः **गोपेन्द्रतिप्पभूपालः** 'अत्र यदि] तथाविधं व्योम संभाव्येत तदैव आमुक्तमुक्ताफलस्य वक्षसः उपमानं भवेत् न पुनरन्यत्किञ्चिदिति अतिशयस्य उक्तेः संभाव्यधर्मकल्पनावती अतिशयोक्ति, रित्याह । **रुद्रटस्तु**—

अनुपममेतद्वस्त्वित्युपमानं तद्विशेषणं चासत् ।
संभाव्य स यदर्थं या क्रियते सोपमोत्पाद्या ॥

इति उत्पाद्योपमामाह ।

**काव्यप्रकाशकारस्तु**–यद्यर्थशब्दप्रयोगादसंभावितार्थान्तरकल्पनारूपा मतिशयोक्तिमभिप्रैति ।

**सर्वस्वकारस्तु**—'संबन्धेऽसंबन्धः' इत्यतिशयोक्तिं लक्षयन् संसर्गमात्र विधिनिषेधात्मिकामतिशयोक्तिं मनुते । एषु **काव्यप्रकाशका** रमतमाद्रियमाणो ग्रन्थकारः अतिशयोक्तिविशेषमेवोपेयाय । अत्र च–यदि तथाभूतौ प्रवाहौ स्यातां तर्हि उपमीयेत न च तौ संभवतः । तस्मात् केनाप्युपमीयत इत्यनु. पमापरपर्यायोऽयमिति । **सर्वस्वकारा**नुरोधेन तु व्योम्नः तादृशप्रवाहयोश्चा संबन्धेऽपि संबन्धः संभावितः इत्यसंबन्धे संबन्धः इत्युक्तातिशयोक्तिः ।

तत्त्वालोकः

इदमुपलक्षणम्—

'वदान्यो नान्योऽस्ति त्रिजगति समो रुद्रनृपतेः ।'

इति **विद्यानाथो**दाहृतोपमानलुप्तायाम् उपमाननिषेधेन सदृशान्तरव्यवच्छेद प्रतीतिद्वारानुपमत्वप्रतीत्या अतिव्याप्तिप्रसंगस्य, तेनैव तस्योपमानोपमेयता स्यात् इत्युपादाने तु—आद्ये उपमानान्तरसंभावनामात्रेण अनुपमत्वद्योतनं फलति न पुनः सादृश्यं प्रतीयते । द्वितीये अन्यनिषेधेन सदृशान्तरव्यवच्छेदप्रतीति द्वारा अनुपमता प्रतीयते न पुनस्तस्य सादृश्यम् इत्यतिव्याप्तेरभावादिति ॥

**अत्रायं विशेषश्चिन्त्यते**—ग्रन्थकृता उपमाप्रकरणे नाप्यनन्वयेऽति व्याप्तिः तत्रापि स्वेन स्वस्य सादृश्यस्य सदृशान्तरव्यवच्छेदे रुद्ररोदन-वपो-त्खननाद्यर्थवादे असदर्थस्य निन्दास्तुत्योरिव द्वारमात्रतया वर्ण्यमानत्वेन उपमितिक्रियाया अनिष्पत्तेः । अन्यथा स्वस्य स्वेनोपमितिक्रियानिष्पत्तौ सदृशान्तरव्यवच्छेदेऽप्यनुपमत्वं फलं न स्यात् इत्युक्तम् ।

तथात्रापि—धर्मैक्ये हि स्वस्य स्वेनोपमा नान्वेतीत्यनन्वय इत्यन्वर्थं नाम भवति अनन्वय्यर्थनिबन्धनवशाच्चानुपमत्वद्योतनफलपर्यन्तं धावेत् इत्युक्तम् ।

तथा अन्वर्थनामधेयपदस्योपपादकत्वं प्रदर्शयता ग्रन्थकृतैव—स्वेन स्वस्य उपमाप्यनुगाम्येकधर्मा चेदेवानन्वयः नान्यथेत्यप्युक्तम् ।

तत्राद्योक्तरीत्या—

गन्धेन सिन्धुरधुरन्धरवक्त्रमैत्रीं
ऐरावणप्रभृतोऽपि न शिक्षितास्ते ।

तत्त्वालोकः

स त्वं कचत् त्रिनयनाचलरत्नभित्ति-
स्वीयप्रतिच्छविषु यूथपतित्वमेषि ॥

सिन्धुरः गजः 'इभो मतङ्गजो हस्ती . . . सिन्धुरः कपि' इति **वैजयन्ती** । तेषां धुरन्धुर अग्रगण्य गणपते ते तव बक्त्रमैत्रीं मुख सख्यं गन्धेनापि लेशतोऽपि ऐरावणप्रभृतयः चतुर्दंष्ट्र गजादयोऽपि न शिक्षिताः नाभ्यस्यन् । यद्वा गन्धहस्तिनो गन्धं समाघ्राय यथान्ये गजाः मैत्रीं न कुर्वन्ति अपितु पलायन्ते तद्वत् त्वदीयेन गन्धेन निमित्तेन एरावणप्रभृतयोऽपिः भिया मैत्रीं न शिक्षिताः स त्वम्-तादृशस्त्वम्, कचत् चकासत् यः त्रिनयनाचलः कैलासः तस्मिन् याः रत्नखचिता भित्तयः तासु याः स्वीयाः प्रतिच्छवयः प्रतिबिम्बाः तेषु यूथपतित्वं दिग्गजत्वम् एषि समाप्नोषि इत्यर्थः । अत्र चक्रमैत्रीति पाठे एकसार्थवर्तित्वमित्यर्थः । तत्वमिति पाठे तस्मात् कारणात् । त्वमिति पदान्तरम् ।

अत्र गणाधिपस्य सदृशोऽन्यो न विद्यत इति प्रतीत्यर्थं कैलासरत्नभित्तिप्रतिफलितैः स्वकीयैरेव प्रतिबिम्बैः सादृश्यं प्रतिपाद्यते । अत्र उपमिति क्रिया निष्पद्यते वा न वा ? निष्पद्यते चेदनन्वयस्य व्यङ्ग्यता न स्यात् । न चेत् स्वस्य स्वप्रतिबिम्बेषु यूथपतित्वोपपादनं व्यर्थं स्यात् । न चात्र अनन्वयस्य व्यङ्ग्यतेति वाच्यम् । धर्मैक्ये हि स्वेन स्वस्य उपमा चेदनन्वयः इति व्यङ्ग्यसाधारणानन्वयलक्षणस्य स्वेनैव लक्षितत्वात् ।

किंच बिम्बप्रतिबिम्बयोरभेदेन अनुगाम्येकधर्मकैकोपमानोपमेयकत्व लक्षणस्य स्वरसतः समन्वयात् व्यङ्ग्यस्यानन्वयस्य निराकरणमशक्यम् । अत एव

'भवतः प्रतिबिम्बेन केवलं तुलितो भवान्'

तत्त्वालोकः

इत्यत्र अनन्वयो नव्यैरप्यभ्युपगतः । अतश्च अनन्वयः इत्यत्र स्वस्य स्वेनोपमा नान्वेतीति व्युपत्तिमङ्गीकृत्य वर्ण्यमानाया उपमितिक्रियाया असत्वं परिकल्प्य द्वारताप्रतिपादने न ग्रन्थकारस्यापि नैर्भर्यम् । अत एव–'लक्षणं तु' इत्यारब्धम् । तदनुरोधेन तु–अनुपमत्वप्रतीतिफलकैकोपमानोपमेयकं सादृश्य मनन्वय इत्येव लक्षणम् तथा सति उपमितिक्रियानिष्पत्तावपि नास्ति बाधकम् । अनुपमत्वस्य विवक्षोपारूढत्वात् । अनुपमत्वविवक्षायामनन्वयः । तद्विव क्षायामुपमैवेति लाघवम् । तेन च वर्ण्यमानसादृश्यस्य नासद्रूपत्वकल्पना-प्रसक्तिः ।

अत एव ग्रन्थकृतैव—नयमयूखमालिकायां देवताधिकरणे अर्थवादवाक्यानां प्रकृतार्थस्तावकत्वेनासदर्थत्वमाशंक्य असद्भिरर्थवादैः विवेकिनां प्ररोचनाऽसम्भवेन प्ररोचनार्थं द्वारभूतार्थसत्तापेक्षणात् 'इत्यर्थवादानां सद्रूपत्वमेव उपपादितम् । तथैव शबरस्वामिभाषितेन स्वोक्तमुपष्टम्भितं च अत एव शाबरभाष्ये–प्रजापतिवपोत्खननादिवाक्यानामपि लाक्षणिकार्थपरिग्रहेण द्वारभूतस्याप्यर्थस्य सद्रूपता दर्शिता' इत्यन्तेन ग्रन्थभागेन । (नय-९५ पु. १-३-२५ सू.)। एतेन उपमासिद्धान्ते 'अत्रापि द्विवारं' स्वस्यः स्वेनोपमा नान्वेतीत्यादिप्रतिपादनं मतान्तराभिप्रायेणेत्यवगन्तव्यम । अत्र वक्तव्योऽधिकांशः प्रागेव उक्तः ॥

तेन च 'गन्धेन सिन्धुरधुरन्धर' इत्यत्र अनन्वयस्य व्यङ्ग्यत्वे न किमपि बाधकम् । अत एव–विमर्शिन्यां जयरथेन–'गन्धेन सिन्धुरेति पद्ये स्वीयप्रतिबिम्बैरेव सादृश्यप्रतीतेः वाच्यमनन्वयं प्रतिपादितवतो रत्नाकरकारस्य मतं निरस्य अनन्वयस्य व्यज्यमानताऽभ्युपगता । एवं गन्धेन

तत्त्वालोकः

सिन्धुर - . इत्यत्राप्यनन्वयो वाच्यः। स्वीयप्रतिबिम्बैरेव सादृश्यप्रतीतेः तद्गन्धाभावात्। यदि नाम चैतत्प्रतीयेत तदप्यस्य प्रतीयमानत्वं स्यान्न वाच्यत्वमिति।

अत्र विमर्शिनीकारस्योक्तिं निराकर्तुं प्रवृत्तो **जगन्नाथः** ग्रन्थकृदभिहताम नन्वयपदव्युत्पत्तिं सिद्धान्तीकृत्य ग्रन्थकृतैवोत्तरत्र वक्ष्यमाणं लक्षणं त्वित्यादि ग्रन्थभागम् अनाकलय्य 'गन्धेन सिन्धुरे'ति पद्ये नास्त्यन्वयोऽस्य इति योगार्थविरहेण तदेकदेशसादृश्यस्यानन्वयपदार्थत्वासंभवात् इत्युपपादयामास- तदपि न क्षोदक्षमम्। उक्तविधव्युत्पत्त्यभ्युपगमे बाधकस्य पूर्वमेवोन्नयनात्।

**किंच जगन्नाथः स्वयमेव** अपि च अनन्वये 'गगनं गगनाकारम्' इत्यादावुपमेयस्यैव उपमानत्वेन उपन्यासात् उपमेयातिरिक्तोपमानविरहप्रतीति द्वारा निरुपमत्वं सिद्ध्यति इत्युक्तवान्। तद्रीत्यापि गन्धेन सिन्धुरेति पद्ये गणाधिपस्य तत्प्रतिबिम्बेनैवोपमा निबध्यते व्यङ्ग्यतया। बिम्बप्रतिबिम्ब- योरभेदाभ्युपगमेन उपमेयस्यैवोपमानत्वेनोपन्यासः कुतो भवतीति गणाधिप व्यतिरिक्तोपमानविरहप्रतीतिद्वारा गणाधिपगतं निरुपमत्वं व्यज्यत एवेति अनन्वयव्यङ्ग्यत्वे बाधकाभावात्। द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयी- भूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः इति खलु **रसगंगाधराभिहितम् अनन्वयलक्षणम्**। इत्थं सति विमर्शिनीकारोक्तानन्वयव्यङ्ग्यत्वनिराकरणं रसगंगाधरोक्तं चिन्त्यमेव।

**अस्ति कश्चिदत्र सन्देहः**—रसगंगाधरे–रत्नाकरोक्तानन्वयनिरा करणानन्तरम् एवं पाठः परिदृश्यते–यदपि चालंकारसर्वस्वकृता– अनन्वय ध्वनित्वमत्र भविष्यति, अन्यथा अलंकारध्वनेर्विषयापहारः स्यात् इत्युक्तम् -

श्दपि तुच्छम्–अस्य ह्युपमाननिषेधफलकमभिन्नोपमानोपमेयकं सादृश्यं स्वरूपम् इत्युक्तमिति ।

अयं च ग्रन्थभागः अद्यतनमुद्रितेऽलङ्कारसर्वस्वे नदृश्यते, दृश्यते तु परं विमर्शिन्याम्–तत्रत्योऽयं पाठः.एतावति प्रपञ्चे . - . । इत्यादौ चा नन्वयस्योदाहरणत्वं न वाच्यम् । अत्रान्यार्धेनान्यार्धस्योपमीयमानत्वेनोपमायाः अभिधीयमानत्वात् । अस्य हि उपमानान्तरनिषेधपर्यवसाय्यभिधीयमान मेकस्यैवोपमानोपमेयत्वं स्वरूपम् । न च तदत्र शब्देनाभिधीयते, अपि तु व्यज्यत इति प्रतीयमानतैव युक्तेति न वाच्यत्वमस्येति वाच्यम् । एवं सति हि अलंकारध्वनेर्विषयापहारः स्यात् इति ॥

यदि तु अलंकारसर्वस्वव्याख्यात्रा इत्यस्य स्थाने अलंकारसर्वस्वकृतेति पाठः प्रामादिकः स्यात्तदा, अनूदितग्रन्थपूर्वापरवृत्तिरसगंगाधरावलोकने सति उक्तखण्डनस्य रत्नाकरोदाहृतद्वितीयविधानन्वयोदाहरणसम्बन्धित्वेना समीचीनता परिकल्पयितुं शक्या–वामार्द्धमुपमेयं दक्षिणार्धमुपमानमिति धर्मिभेदादुपमैव सिध्यति । नानन्वयः, एकस्यैवोपमानोपमेयभावापरि कल्पनात् । अखण्डायाः नायिकायाः निरुपमत्वप्रत्ययस्तु नानन्वयफलं भवितुमर्हति । नायिकायाः प्रकृतोपमेयत्वाभावात् । प्रत्युत नायिकायाः वामार्धस्यैवोपमेयत्वात् । उपमेयगतनिरुपमत्वप्रतीतेरेव अनन्वयफलत्वम् इष्टम् । अतश्चात्र सर्वस्वव्याख्यात्रा विमर्शिनीकारेण अनन्वयध्वनित्वम भिहितं न चारु इति जगन्नाथकृतं खण्डनं योयुज्जते ।

अथापि– 'गन्धेन सिन्धुरेति' पद्येऽपि अनन्वयध्वनित्वं जगन्नाथस्य अनभिमतमिव ज्ञायते । अत एव च —न च स तदेकदेशः तत्प्रति·

### तत्त्वालोकः

बिम्बश्चेत्येतदन्यतमप्रतियोगिकसादृश्यमनन्वय इति क्वातिव्याप्तिरव्याप्तिर्वा इति वाच्यम्। नास्त्यन्वयो यस्येति योगार्थविरहेण तदेकदेशसादृश्यस्यानन्वयपदार्थत्वासंभवात् इति दिक्।

ननु— ग्रन्थकृता—असमालंकारः उदाहरणालंकारश्च न निरूपितः नापि निराकृतः। अलंकाररत्नाकरकृता तु—असमालंकारो निरूपितः। तल्लक्षणं च—सर्वथैवोपमाननिषेधोऽसमः' इति—यथा

वदान्यो नान्योऽस्ति त्रिजगति समो रुद्रनृपतेः
गुणश्रेणीश्लाघापिहितहरिदीशानयशसः॥
समन्तादुद्भूतैर्द्विरदमदगन्धैः सुरभयः
क्रियन्ते यद्विद्वज्जनमणिगृहप्राङ्गणभुवः॥

अत्र अस्तीतिविभक्तिप्रतिरूपकेणाव्ययेन सहोच्चरितः नञ् त्रैकालिक सत्तां निषेधति इति कालत्रयसंबन्धिन उपमानस्य निषेधात् असमालङ्कारः।

अलङ्काररत्नाकरकृता—

ढुंढुंकृत्वा मरिष्यसि कण्टककलितानि केतकीवनानि।
मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि॥

इत्युदाहृतम्। तन्मन्दम्-यतोऽत्र मालतीकुसुमसदृशं कुसुमं वर्ततां नाम क्वापि वथा तु न लभ्यते इत्येतावन्मात्रप्रतीत्या आत्यन्तिकनिषेधाभावेन असमालंकारत्वस्य वक्तुम् अयुक्तत्वेन उपमानलुप्तात्वस्यैव वक्तुं युक्तत्वात्।

## तत्वालोकः

**रत्नाकरकृता**—उपमानलुप्तात्वनिराकरणं तु– 'इवादिपदानां युदुत्तरं प्रयोगः तस्यैवोपमानताधीः' इति नियमानुरोधेनेत्यभिमानेन। तन्मूलं च 'मालतीकुसुमसदृशम्' इत्यत्र च सदृशपदस्य मातीकुसुमपदोत्तरं श्रवणात् तस्यैवोपमानत्वमित्युपपादयितुं शक्यत्वादिति।

**वस्तुतस्तु**—'इवादिशब्दाः यत्पराः तेषामेवोपमानत्वम्' इति नियमश्च इव वत् यथादि श्रौत्युपमास्थले क्वचिदेव न सर्वत्र अन्यथा--

'सरसिजमिदमाननं च तस्याः समम्'
'तद्भ्रुगुना युगपदुन्मिषितेन तावत् सद्यः परस्परतुलाम्'

इत्यादावुभयोः प्रतियोगित्वानुयोगित्वे परस्परेण वृत्या व्यञ्जनया च न प्रतीयेताम्। अतश्चात्र 'समसदृशादिशब्दयोगे' यत्पराः इति न्यायस्य नोपयोगः। **अत एव प्रकाशकृतापि**–'तेन तुल्यं मुखम्' इत्यादावुपमेय एव, 'तत्तुल्यमस्य' इत्यादौ चोपमान एव 'इदं तच्च तुल्यम्' इत्यादावुभयत्रापि तुल्यताया विश्रान्तिः' इत्यभिहितं संगच्छते।

**ग्रन्थकृताऽपि**—उभयविश्रान्तसादृश्योपमायाम् अन्योन्यप्रतियोगिकत्वांशे व्यक्ति युगपदुपमेयोपमायां शक्त्या अन्योन्यप्रतियोगित्वस्य प्रतीतेरभ्युपगतैव, तदुक्तम्–ततश्चोभयविश्रान्तसादृश्योपमायामन्योन्यप्रतियोगित्वांशे व्यक्तिः। परस्परतुलामित्यनेन द्वयोरपि प्रतियोगित्वस्यापि प्रतिपाद्यमानतयेति।

**नन्वेवंतर्हि**—

त्वमिव कोऽपि परापकृतौ कृती
न ददृशे न च मन्मथ शुश्रुवे।

तत्त्वालोकः

स्वमदनादहनाज्ज्वलनात्मना
ज्वलयितुं परिरभ्य जगत्सु यः ॥

इत्यत्र किमुपमानलोपः ? अथोपमेयलोपः ? अनयोः को विशेषः ? यदि मन्मथवृत्तिसादृश्यप्रतियोगी अन्यः दर्शनश्रवणविषयः इति किं बोधोऽभ्युपेयते तदा मन्मथादपि अधिकः कोऽपि न दृष्टः नापि श्रुत इति तदुपमानभूतस्या न्यस्य दर्शनश्रवणाभाववर्णनेन उपमानस्यासंभवो निराकृतो भवति अथापि उपमानतावच्छेदकधर्मपुरस्कारेण अनुपादानादुपमानलुप्ता भवति ।

तथा सति—युष्मदर्थस्य कामस्य अनुयोगितासंबन्धेन इवार्थसादृश्ये इवार्थसादृश्यस्य च प्रतियोगितासंबन्धेन कोऽपि इति किम्पदार्थभूतान्यपदार्थेऽ न्वयः इत्येवं रीत्या वाच्यः उक्तरीतिस्तु प्रयोगदृष्टया न साधुर्भवति ।

यतश्च—चन्द्र इव मुखम्, गौरिव गवयः, काकतालीयम्, शैलेयम् दधि, कुशाग्रीया बुद्धिः, इत्याद्युपमेयसामानाधिकरण्यानुरोधेन इवार्थसादृश्य निष्ठविशेष्यतानिरूपितप्रकारतायां प्रतियोगितायाः एव संसर्गत्वम्, सादृश्यनिष्ठ विशेषणतानिरूपितविशेषणतायां चानुयोगिताया एव संसर्गत्व मिति सर्वानुभवविरोधः प्रसज्यते ।

उक्तरीत्यां च—प्रकृते सादृश्यनिष्ठविशेष्यतानिरूपितकामनिष्ठविशेष-णतायां वृत्तित्वस्य संसर्गतया भानम्, सादृश्यनिष्ठविशेषणतानिरूपितान्य निष्ठविशेष्यतायां च प्रतियोगितायाः संसर्गमर्यादया भानं चाभ्युपगतं भवति तदा च 'इवादिपदानामुपमानपदोत्तरं प्रयोगः' इत्यर्थकेवादिपदानां यदुत्तरं प्रयोगः तस्यैवोपमानत्वबुद्धिः इति नियमस्यव्याघातः प्रसज्यते । सादृश्य प्रतियोगिनः उपमानत्वं, तदनुयोगिनः उपमेयत्वमित्यनुभवबाधश्च ॥

**तत्त्वालोकः**

किञ्च—गोविडालः, धान्यगवः, तृणसिंहः इत्यादावपि, गौः विडाल इव, धान्यं गौरिव, तृणं सिंह इव इत्येवंरीत्या उपमानवाचिपदोत्तर-मिवशब्दो विग्रहवाक्ये प्रयुज्यते । एवमुष्ट्रक्रोशी, ध्वांक्षरावी इत्यादावपि उष्ट्रइवक्रोशतीत्येवम् उपमानवाचिपदोत्तरमेव इवशब्दं प्रयुज्य विग्रहप्रदर्श-नाच्च उक्तनियमद्वयानुरोध एवोचितः । न तु तद्भङ्गः ।

इत्थं सति पारिशेष्यात् उपमेयलोप एव वाच्यः तदा तु युष्मदर्थ कामप्रतियोगिकसादृश्याश्रयवानन्यो दर्शनश्रवणविषयत्वाभाववान् इति बोधो भवति–तथा सति युष्मदर्थस्य कामस्य प्रतियोगितासंम्बन्धेन इवार्थसादृश्ये, तस्य च आश्रयतासंबन्धेन कोऽपीत्यन्यपदार्थेऽन्वय इति न पूर्वोक्तनियम द्वयबाधः ॥

नन्वेवं तर्हि—लुप्ताप्रभेदेषु केवला उपमेयलुप्ता किंनोदाहृतेति चेत् एवमादौ (त्वमिव कोपीत्यादौ) कामिजनहृदयहिंसोत्पादनेऽनुपमस्य कामस्य कंचन दर्शनश्रवणगोचरमुपमेयं सम्भाव्य तत्सादृश्यनिरासपूर्वात्प्रतीप-विशेषात्क्रूरतमत्वप्रत्ययः इति प्रतीपविशेषत्वमेव वक्तु युक्तमिति ग्रन्थकृदा शयात् ।

अत एव कल्पितं हि —स्वप्रतियोगिकसादृश्याश्रयनिषेधस्यापि उत्कर्ष पर्यवसायित्वम् । उपमानत्वेन प्रसिद्धे वस्तुनि उपमेयप्रतियोगिकसादृश्य निषेधः प्रतीपे क्रियत इत्युट्टङ्कितमन्यैः ।

एतेनात—त्वमिव कोऽपीत्याद्युदाहरणेषु अनन्वयशङ्का असमालंकार शङ्का वा न कार्या अनन्वये उपमेयस्यैव उपमानत्वकल्पनादुपमानात्यन्ताभावः प्रतीयते । असमालंकारे च सर्वथैवोपमाननिषेधः क्रियते । उक्तरीत्या च

च अत्र दर्शनश्रवणविषयत्वमात्रं निषिध्यते । स्वरूपसत्ता तु संभाव्यत एव । अतश्च नानन्वयः उपमेयनिषेधाच्च नासमालङ्कारः अपितु प्रतीपविशेषःस्यादिति विद्वांस एव विदाङ्कुर्वन्तु ॥

**प्रकृतमनुसरामः** -- असमालंकारोऽस्ति न वेति । सर्वथैवोपमा निषेधो ह्यसमालङ्कारः । तस्य च प्रयोजनमनुपमत्वम् । अनन्वयश्च सदृशान्तरव्यवच्छेदद्वारा अनुपमत्वफलकमेकोपमानोपमेयकत्वम् । उभयत्रापि उपमेयोत्कर्षप्रयोजकमनुपमत्वं समानमेव व्यज्यते । परन्तु अनन्वये स्वस्य स्वेन सादृश्यम्, असमे—उपमाननिषेध इति यद्यपि शरीरं भिद्यते । तथा अनन्वये सदृशान्तरव्यवच्छेदो व्यङ्ग्यः । असमालंकारे स वाच्यः । किंच यत्र यत्र असमालंकारः तत्र स्वस्य स्वेन सादृश्यं ध्वन्यते इत्यपि न वक्तुं शक्यम् तस्य असमालंकारेऽचमत्कारित्वात् । प्रत्युत वाच्यस्य सदृशान्तर व्यवच्छेदफलकस्य निषेधस्यैव चमत्कारित्वम् । अनन्वये तु व्यङ्ग्योपस्कृत वाच्यस्यैव चमत्कारित्वम् ।

उभयोरप्यलंकारयोः वाच्यतादशायामेव विजातीयचमत्कारप्रयोजकत्वेन पार्थक्यस्यैव वक्तुं युक्तत्वात । अत एव ध्वनिकृता—'अनुरागवती सन्ध्या' इत्यादौ सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैव प्राधान्यविवक्षा । यथा च दीपकादौ उपमाया व्यज्यमानत्वेऽपि प्राधान्येनाविवक्षितत्वात् न तद्व्यपदेशः इत्युक्तम् [ध्व.२.उ. ३७-३८पु]। उभयत्रापि अनुपमत्वस्य व्यज्यमानस्य वाच्योपस्कारकत्वमेव । इत्थं सत्यपि तदनिरूपणं न्यूनतैव । अथापि 'अप्रतिषिद्धमनुमतं भवती'ति न्यायेन ग्रन्थकृतोऽप्यसमालंकार इष्टः स्यादेव । रसगंगाधरकृता तु—इतरालंकार वैलक्षण्यप्रदर्शनपूर्वकम् असमालंकारस्समर्थित एवेत्यधिकं तत्रैव द्रष्टव्यम् ॥

अयमनन्वयो व्यङ्ग्योऽप्यस्ति –
अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत्प्रीतिः तवैवागमनात्पुनः ॥

## तत्त्वालोकः

**एतेन—कौस्तुभकृदुक्तासमालंकारनिराकरणं** चिन्त्यमेव । असमालंकारोदाहरणेषु अनन्वयध्वनित्वस्य कल्पयितुमशक्यत्वात् । अचमत्कारित्वाच्च । ध्वन्यमानं चानुपमत्वं नानन्वयशरीरनिविष्टमिति **कौस्तुभकृतैवोक्तत्वात्** । तदीयमिदमनन्वयलक्षणम्–यद्धर्मावच्छिन्नप्रतियोगिताकं सादृश्यं तद्धर्मावच्छिन्नतदनुयोगिताकत्वम् इति [अलं कौ १६८ पुट] । इत्थम् असमालंकारोऽतिरिक्त इति प्रतिपाद्य अनन्वयध्वनिना गतार्थता यदलंकार कौस्तुभकृता निरूपिता सापि न युज्यत इत्युपपादयितुमनन्वयध्वनिं व्याख्याय उदाहरणालंकारविषयः शोध्यते ।

अनन्वयं वाच्यं सोदाहरणं सदलङ्कृत्यं च निरूप्य संप्रति ग्रन्थकारः अनन्वयध्वनिरप्यस्ति तद्व्यावृत्त्यर्थं वाच्यानन्वयलक्षणेऽव्यङ्ग्यत्वविशेषणं देयमिति विवक्ष्यमाणः तमुदाहरति–**अयमित्यादिना** ।

**महाभारते उद्योगपर्वणि—**

या मे प्रीतिः पुष्कराक्ष त्वदागमनसंभवा ।
सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम् ॥

इति स्थितस्य पद्यस्य प्रतिरूपकमिदं पद्यं **भामहेन** नवीकृतम् ।

तत्त्वालोकः

अस्यायमर्थः—

हे गोविन्द ! गोवर्धनोद्धरणद्वारा इन्द्रवृष्टिप्रपीडितानां व्रजौकसां च संरक्षणानन्तरं स्वयमागतेन देवदेवेन गोविन्द इति संज्ञात ? उक्तं च **महाभारते–सभापर्वणि**—

देवदेवः क्षितिं गत्वा कृष्णं दृष्ट्वा मुदान्वितः ।
'गोविन्द' इति तं ह्युक्त्वा त्वभ्यषिञ्चत्पुरन्दरः ॥ इति

तेन आर्तत्राणबद्धादरत्वम् आविष्कृतम् । अद्य अस्मिन्नहनि त्वयि गृहमागते मम, या प्रीतिः प्रमोदः, जाता समुत्पन्ना, एषा प्रीतिः कालेन बहुकाल व्यवहितेन तवैव भवतः एव, पुनरागमनात् भवेत् न त्वन्यागमनेनेत्यर्थः ॥

अत्र प्रेयोऽलङ्कारः इति **भामहः**–तद्यथा––
'प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा'

इत्युक्त्वा 'अद्य या ममेति' इदमेव पद्यमुदाजहार । तल्लक्षणं तु यद्यपि भामहेन नाभिहितम् । अथापि एनमनुकुर्वता **दण्डिना**—

'प्रेयः प्रियतराख्यानम्' इति लक्षितम् [का.या. २-२७५]। प्रियतराख्यानं च स्वीयभक्तिभावाभिव्यक्त्या प्रीत्यतिशयाख्यापनम् । अनेनैव स्मिन् उदाहरणे समन्वयः प्रदर्शितः ।

अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात्पुनः ॥
इत्याह युक्तं विदुरः नान्यतस्तादृशी धृतिः ।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततोहरिः ॥

तत्त्वालोकः

इत्यत्र अन्यस्मादेवंविधः प्रमोदो नैव भविष्यति यद्भवान् आगमनेन मामनुगृह्णाति तन्मे लोके सर्वेभ्योऽपि प्रीतिहेतुभ्यः प्रियतरमिति विदुरनिष्ठः श्रीकृष्णविषयकः रतिभावः सहृदयानां चमत्कृतिमाधत्ते इति **प्रेयोऽलङ्कार इति**। अत एव च-प्रेयः इति प्रियशब्दात्प्रकर्षातिशयविवक्षायां द्विवचनविभज्योपपदे तरबीयसुनौ [पा. सू. ५ ३-५७] इतीयसुन् प्रत्यये प्रियशब्दस्य 'प्रियस्थिर' (पा. सू- ६-४-१५७) इति प्रादेशे परिनिष्पन्नः अतश्च प्रेयोऽलङ्कारः इत्यन्वर्थं नामेति प्राञ्चः।

सञ्चारिणः प्रधानानि, देवादिविषया रतिः।
उद्बुद्धमात्रः स्थायी च 'भाव' इत्यभिधीयते ॥

इति दर्पणानुरोधेनात्र देवताविषयकः रतिभावः प्रतीयत इति भावध्वनित्वम् इति न च वक्तुं शक्यम्। महनीयविषये प्रीतिरेव भक्तिः। सा चात्र यद्यपि भगवदवलम्बिता, रोमाञ्चाश्रुपातादिभिरनुभाविता हर्षादिभिः परिपोषिता भवति अथापि रतेर्न व्यङ्ग्यत्वमपितु वाच्यत्वमेवेति।

**नापि**—ध्वनिकारादिरीत्या प्रेयोऽलंकारता यतो **ध्वनिकृता**—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।
काव्ये तस्मिन्नलंकारो रसादिरिति मे मतिः ॥

[ध्व.उ २. श्लो ४] इति।

**साहित्यदर्पणकृता च**—

रसभावौ तदाभासौ भावस्य प्रशमस्तथा।
गुणीभूतत्वमायांति यदालंकृतयस्तदा ॥

चित्रमीमांसा

अत्र गृहागतं श्रीकृष्णं प्रति विदुरवाक्ये इयं त्वदागमनप्रभवाप्रीतिः बहुकालव्यवहितेन पुनरपि त्वदागमनेनैव भवेत् न अन्यनेत्युक्तिभङ्ग्यात्वदागमनप्रभवप्रीतेः सैव सदृशी न त्वितरप्रभवेति व्यज्यते ॥

तत्त्वालोकः

इत्युक्तम् [सा.द.प १०-९५]।तद्रीत्यापि रतेः नापराङ्गत्वमिति कथं प्रेयस्त्वम्? भावस्य भावाङ्गत्वे, रसाङ्गत्वे च प्रेयोऽलंकार इति नव्यानाम भिमतः। अतश्च नात्र प्रेयोऽलंकारः, अपितु अनन्वयध्वनिरित्यभिप्रायेणाह **अत्रेति**।

अत्र 'अद्य या ममे'त्युदाहरणे इत्यर्थः। उक्तिभङ्ग्या वचःपरिटद्या, भवदागमनप्रीतेः सदृश्याः इतरप्रभवायाः प्रीतेरभावात् कालान्तरत्वदागमनजन्यप्रीतिरेव तत्सदृशीत्यभिव्यक्त्या भगवदागमनजन्यैतत्कालिकप्रीतिव्यक्तेः कालान्तरीणत्वदागमनजनिष्यमाणप्रीतिव्यक्त्यन्तरं सदृशमिति भगवदागमनजन्यत्वरूपैकधर्मावच्छिन्नैकधर्मिकोपमाप्रतीत्या अनन्वयध्वनित्वमित्याशयः।

**यत्तूक्तं चित्रमीमांसाखण्डने**—यच्च-अयमनन्वयो व्यङ्ग्योऽप्यस्ति अद्य या मम गोविन्देत्यत्र त्वदागमनप्रभवप्रीतेः सैव सदृशी न त्वितरप्रभवा इति व्यज्यते इत्यभिहितम् तन्न—

१) अमुष्याः त्वदागमनप्रभवायाः प्रीतेः वारान्तरत्वदागमनप्रभवा प्रीतिः सदृशीति प्रत्ययस्य सर्वजनसिद्धतया श्रीकृष्णागमनजन्यप्रीतिसामान्या

**तत्त्वालोकः**

वयवयोः द्वयोः प्रीतिव्यक्त्योः सादृश्यस्याबाधितत्वाद्योगार्थाभावेन अनन्वय एव नायं भवितुमर्हति ।

२) ‘स्वस्मिन् स्वसादृश्यान्वयाभावादनन्वयः’ इत्युपमाप्रकरणे स्वयमेवाभिधानात् ।

३) उपमेयस्य प्रीतिव्यक्तिविशेषस्य सदृशान्तरव्यवच्छेदे बाधात् तादृशप्रीतिसामान्यस्यावयविनो निरुपमतया प्रतीयमानस्य अनुपमेयत्वेन फल वैयधिकरण्यप्रसङ्गाच्च ।

४) न चात्र, श्रीकृष्णागमनजन्यप्रीतिसामान्यावयविनः स्वेन सादृश्यं मध्ये प्रतीयते इति शपथः कर्तुमुचितः सहृदयत्वभङ्गप्रसङ्गात् , प्रयोजन विरहाच्च ।

५) श्रीकृष्णागमनजन्यप्रीतिसामान्यस्य निरुपमत्वसिद्धिरेव प्रयोजनम् इति चेत् न एतत्कालावच्छिन्नकालान्तरावच्छिन्नतादृशप्रीतिव्यक्त्योरवयवयोः उपमानोपमेयभावेनैवावयविनि तत्सिद्धेः । यथा—

एतावति प्रपञ्चे सुन्दरमहिलासहस्रभरितेऽपि ।
अनुहरति सुभग तस्याः वामार्धं दक्षिणार्धस्य ॥

इत्यादाववयवयोः वामार्धदक्षिणार्धयोः सादृश्येनावयविनः कान्तारूपस्यानुपमत्वं प्रतीयते । एवमिहापि ।

नहि तत्रापि निरुपमत्वप्रतीत्या अवयविनः स्वेन सदृश्यप्रत्ययः अन्तरा कल्प्यत इति वाच्यम् । निरुपमत्वे प्रतीतेऽनन्वयनैयत्यविरहात् । अन्यथ

## तत्त्वालोकः

अन्यथा 'गगनपुष्पमिवास्य वचस्सखे' इत्यादिकल्पितोपमायामपि निरुपमत्व प्रत्ययेन अनन्वयत्वकल्पनापत्तेरिति न किञ्चिदेतत् । इति ।

तच्चिन्त्यम्–तथाहि–१) अनुगतैकधर्मनिमित्तकमेकार्थनिष्ठं यदुपमानत्वोपमेयत्वोभयं तत्वमनन्वयलक्षणमिति सामान्यतः प्रतिपादितम् । तथा 'रामरावणयोर्युद्धम्' इत्यत्र अद्यतनस्य पूर्वेद्युस्तनं युद्धमुपमानमिति वदतां मीमांसकवेदान्तिनां मतं न शोभते इत्युक्तत्वेन अत्रापि कालरूपावच्छेदकमभेदमादाय खण्डनकृता अनन्वयध्वनित्वनिरकारणमेव न सुष्ठु । असति धर्मभेदे, कालभेदे सत्यपि, प्रीतिव्यक्त्योः एकत्वमेवेष्टं ग्रन्थकृतः। अस्ति च अत्रापि कृष्णागमनजन्यत्वं प्रीतिव्यक्त्योः । अतश्च न तयोः प्रीति व्यक्त्योर्भेदः अपित्वनुस्यूतिस्तत्संस्कारस्योद्बोधकवशात्, न पुनः अद्यतनपूर्वेद्युस्तन युद्धवत् भेदकल्पनं न तावच्चमत्कारकारि । अतश्चात्र एकधर्मप्रयोज्यैकधर्मैकप्रतियोग्यनुयोगिकसादृश्यं विद्यत एवेति कुतोऽनन्वयस्यबाधः । अत एव ग्रन्थकृता—धर्मभेदे तु–एकधर्मावच्छिन्नेन स्वेनैव धर्मान्तरावच्छिन्नस्या स्वस्योपमा अन्वेति इति न तत्रान्वर्थं नाम । नवा अनन्वयार्थनिबन्धनाधीनानुपमत्वलाभ इति ह्युक्तम् अन्यथा—उपाददे तस्येत्यत्राऽपि अनन्वयत्वं स्यात् । तथासति ग्रन्थकृता तन्निवारणप्रयासोऽनुपयुक्तः स्यात् ।

किंच—खण्डनकारोक्तरीत्या द्वयोः प्रीतिव्यक्त्योः अनयवत्वमभ्युगम्य तयोः सादृश्यमबाधितमिति यदुच्यते तदा—'गंगा ह्या यथा गङ्गा' इत्यादि तदुक्तोदाहरणेष्वपि पूर्वेद्युः प्रवृत्तायाः अद्यप्रवृत्तायाश्च प्रवाहरूपत्वेन ह्यस्तनस्य प्रवाहस्य अद्याभावान् अद्यतनगंगा प्रवाहस्य ह्यस्तनो गंगाप्रवाह रुपमानमिति प्रवाहसामान्यावयवयोः सादृश्यमप्यबाधितमेवेति योगार्थो

तत्त्वालोकः

भावेन अनन्वयत्वाभावापत्तेः। तथासति 'गगनं गगनाकारम्' इत्यादि प्राचीनोदाहरणजातमनन्वयविषयं न स्यात्।

अतश्च अनुगतैकधर्मनिमित्तकैकोपमानोपमेयकं सादृश्यं यत्र प्रतीयते तत्रानन्वयः इत्येव त्वयाभ्युपेयम् इति **प्रथमदूषणं निरस्तम्**।

**खण्डनकृता यत् द्वितीयं दूषणमभिहितम्**—
स्वस्मिन् स्वसादृश्येत्यादि तदपि चिन्त्यमेव – यतश्च अनन्वयसिद्धान्ते ग्रन्थकृता लक्ष्मणमात्रं तु इत्यारभ्य भामहाभिमतं लक्ष्मणमेवोपन्यस्तम्– **भामहादीनां** च–अनन्वय इत्यत्र स्वस्य स्वेन सादृश्यं नान्वेतीति व्युत्पत्तिः नाभिमता –किन्तु–न विद्यते अन्वयो यत्रेति व्युत्पत्तिरेव– तथासति– न विद्यते तद्भिन्नस्य सादृश्यप्रतियोगित्वेनान्वयो यत्रेति अर्थलाभात् उपमेय भिन्नेन सादृश्यस्य प्रतियोगिना अन्वयाभाव एव अनन्वयशब्दार्थः इत्येवमुपगमे त्वयापि–

लङ्कापुरादतितरां कुपितः फणीव
निर्गत्य यातुपृतनापतिभिः परीतः।
क्रुद्धं रणे सपदि दाशरथिं दशास्यः
संरब्धदाशरथिदर्शमहो ददर्श॥

इत्यत्र 'दाशरथिदर्शम्' इत्यत्र उपमाने कर्मणि च [पा सू ३.४.४५] इति णमुल् उपमानवाचकान्न स्यादेव, सादृश्यपरिनिष्पत्तौ खलु उपमानो-पमेयता। अतश्च देशकालादिकृत भेदविवक्षायामपि न सादृश्यापरिनिष्पत्तिः परन्तु धर्मेऽनुगामित्वं नियमेनापेक्ष्यते।

तत्त्वालोकः

**अपरं च**–भामहाद्यनुरोधेऽनुपमत्वविवक्षायामनन्वयः। अन्यथा–'चन्द्र इव चन्द्र' इत्यादौ एतत्कालीनश्चन्द्रः तत्कालीनचन्द्रसदृश इति बोधाङ्गीकारे भेदमारोप्योपमेष्यत एव। अतएव च **भामहेन**–असादृश्य विवक्षातः इत्यभिहितम्। अभ्युपगतं च ग्रन्थकृता। स्वस्य स्वेनेति प्रदर्शनं मतान्तराभिप्रायेणेति अद्य या ममेत्यत्र अनन्वयध्वनित्वस्य न कोऽपि प्रतिबन्धः इतिद्वितीयमपि दूषणमलग्नकम्।

**यच्च तृतीयं दूषणम्** – उपमेयस्यप्रीतिव्यक्तिविशेषस्य इत्यादि-नोक्तं तदपि न युक्तम्–धर्मभेदमात्रेण यत्र धर्मिण एकस्यैव उपमानो पमेयता निबध्यते तत्रैव अनन्वयत्वाभाव इष्टः। अत्र तु प्रीतिव्यक्तिषु प्रातिस्विकरूपेण भेदे सत्यपि कालभेदातिरिक्तधर्मभेदाद्यप्रतीत्या कृष्णागम नजन्यत्वेन रूपेणैकैव प्रीतिव्यक्तिरित्येकस्यैवोपमानोपमेयभावो निबद्ध इति अस्य कृष्णागमनभिन्नागमनजन्यप्रीतिव्यावर्तनद्वारा कृष्णागमनजन्यप्रीतौ अनुपम त्वस्य प्रतीत्या अवयविन अतिरिक्तस्य कल्पना अनावश्यकीति बाधस्य फलवै यधिकरण्यस्य चाप्रसक्तेः।

**यदपि चतुर्थं दूषणम्** तदपि न युक्तिमत्। कृष्णागमन जन्य प्रीतौ सामान्यविशेषभावस्य अवयवावयविभावस्य वा कविविव क्षाऽविषयत्वात्। यतश्चात्र कृष्णागमनजन्यप्रीतिविशेषयोरेवात्र विवक्षा न सामान्यस्य इत्थं च कृष्णागमनजन्यप्रीतिविशेषस्य कालान्तरप्रभवकृष्णा गमनजन्यप्रीतिविशेष एव सदृश इति सामान्यविशेषभावाभावात् कृष्णागमन प्रीतिसामान्यावयविन एवाभावे कस्य केन सादृश्यं प्रत्येतव्यं भवेत् येन सहृदयत्वभङ्गः प्रसज्येत।

## तत्त्वालोकः

**यदपि पञ्चमं दूषणम्** 'एतावति प्रपञ्चे' इत्यस्मिन् यथा वामार्ध दक्षिणार्धरूपावयवविशिष्टा नायिका तस्याम् अनुपमात्वं प्रतीयमानमपि नानन्वयफलं भवितुमर्हति। तस्याः प्रकृतोपमेयत्वाभावात्। किन्तु वामार्धस्योपमेयत्वं दक्षिणार्धस्योपमानत्वमित्यवयवयोरेवोपमा अभिधीयते तेन च नायिकायामनुपमत्वं फलति। यत्र उपमेयगतनिरुपमत्वप्रतीतिः तस्यैवानन्वय फलत्वं कल्प्यते। अतश्च वामार्धदक्षिणार्धयोरवयवत्वं नायिकायाः अवयवित्वमित्यवयवावयविभावस्तत्रास्तु। अत्रे धर्मिणि वामत्वं दक्षिणत्वं च विभिन्न धर्म इति **एतद्ग्रन्थकारानुरोधेन** अनन्वयप्रसक्तिरेव नास्ति। 'अद्य या ममेत्यत्र', 'एतावति' इत्यादिवद्भिन्नधर्मयोरवयवयोः तद्वतोर्वा अप्रसिध्देरभावेन अनुपमत्वस्य अवयविनि अन्यथासिद्धत्वोपपादनमपि विषममेव।

न हि क्वापि ग्रन्थकृता अनुपमत्वप्रतीतिस्थले सर्वत्र अनन्वय इत्यभिहितम्। प्रत्युत—यत्र सदृशान्तरव्यवच्छेदद्वारा उपमेयगतनिरुपमत्वफलकैक धर्मप्रयोज्यैकोपमानोपमेयकं सादृश्यं तत्रानन्वय इति। एतेन **खण्डनकारोक्तं सर्वमपि दूषणमलग्नकमेवेति**—अद्य या ममेत्युदाहरणेऽमुष्याः त्वदागमनप्रीतेः कालान्तरत्वदागमनप्रभवप्रीतिः सदृशीत्यनेन असदृशं त्वदागमनमिति व्यज्यते एवेति नानन्वयध्वनित्वव्यपोहः॥

अथोदाहरणालङ्कारः ग्रन्थकृत्सम्मतो न वेति विचार्यते—**तत्रोदाहरणालङ्कारः**— अर्थान्तरन्यासनिरूपणावसरे=**सर्वस्वव्याख्यात्रा विमर्शिनीकारेण** यत्र पुनः स्वतः सिद्धस्यैव प्रतीतिविशदीकरणार्थं तदेकदेशभूतो विशेषः उपादीयते तत्रोदाहरणालंकारः (अ स० १३९ पु) इत्युक्त्वा **सर्वस्वकारेण** यत् 'अनन्तरत्नप्रभवस्ये त्युदाहरणमर्थान्तरन्यासस्योपन्यस्तं तत्र गुणसन्निपाते दोषनिमज्जनात्मनः सामान्यस्य नैराकांक्ष्येण सिद्धस्य प्रतीतिविशदीकरणार्थम्

इन्दोः किरणेष्विवाङ्कः इति तदेकदेशभूतो विशेषः उपात्तः इत्युदाहरणालंकारोदाहरणता प्रकटिता ॥ प्रायो विमर्शिनीकारादपि नव्येन **जयदेवेन**–स्वकीये–**चन्द्रालोके उदाहरणालंकार**मनुपन्यस्य तत्स्थाने **विकस्वरालंकारः** लक्षितः । उदाहृतश्च यथा—

यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः ।
स न जिग्ये महान्तो हि दुर्धर्षाः सागरा इव ॥ इति

तदेतद्व्याख्यास्यता ग्रन्थकृता स्वकीये-**कुवलयानन्दे**—

'यत्र कस्यचिद्विशेषस्य समर्थनार्थं सामान्यं विन्यस्य तत्प्रसिद्धावप्यपरितुष्यता कविना तत्समर्थनाय पुनर्विशेषान्तरमुपमानरीत्या, अर्थान्तरन्यसविधया वा विन्यस्यते तत्र विकस्वरालंकारः,इति । अनन्तरत्नप्रभवस्येत्यत्र रत्नरूपगुणसमुदायशालिनो हिमवतः हिमरूप एको दोषः तत्सौभाग्यविघातको नाभवत् इति विशेषसमर्थनार्थम्—

'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोःकिरणेष्विवाङ्कः'
इत्युपमानविधया विशेषणं समर्थितमिति विकस्वरालंकारः स्वरसः ।

**नचात्र**—सर्वस्वकारानुरोधेन अर्थान्तरन्यासत्वमेव अस्तु, समर्थ्यसमर्थकयोः सामान्यविशेषसम्बन्धमात्रम् । विकस्वरेतु-विशेष–सामान्यविषेषाणां शृङ्खलाक्रमेण समर्थ्यसमार्थकभाव इति, अतएव ग्रन्थकृता– **कुवलयानन्दे**–अर्थान्तरन्यासनिरूपणावसरे–नचैवं सामान्येन विशेषसमर्थनस्थलेऽपि क्वचित्तस्य सामान्यस्य लोकप्रसिद्धत्वाभावेन तस्य वुद्धावुपारोहाय पुनर्विशेषान्तरस्य न्यासप्रसङ्गः' इति वाच्यम् । इष्टापत्तेः, अत्रैव विषये विकस्वरालंकारस्य

तत्त्वालोकः

अनुपदमेव दर्शयिष्यमाणत्वात्' इत्युक्तम् । युक्तं चैतत् यत्र ह्यलंकारशरीरमुभयत्रापि तुल्यं तत्र एक एवालंकार इति गण्यते। अलंकारशरीरस्य वैलक्षण्ये तु पृथगेवालंकारता इति वस्तुस्थितिः ।

यदि अल्पाल्पविशेषस्य भेदाप्रयोजकत्वं तदा दृष्टान्तस्य–प्रतिवस्तूपमा, रूपकस्य रूपकातिशयोक्तिः, स्मृतिभ्रान्तिसन्देहाश्च उपमाया विशेषा एव स्युरिति पृथगुपादानमयुक्तं स्यात् ।

अतश्च विशेषस्य-सामान्येन,सामान्यस्य वा विशेषेण समर्थनमात्रेऽर्थान्तरन्यासः. विशेषस्य सामान्येन तस्य च विशेषेण समर्थने विकस्वर इति सिद्धं भवति ।

न च विमर्शिनीकारोक्तदिशा — उदाहरणालंकृतिमेवाभ्युपगम्य विकस्वरालंकार एव निरस्यताम् इति वाच्यम् ।

एकस्मिन् वस्तुनि ये प्रविभागाः तेषु अवयवावयविभावस्यानुभवगोचरत्वेऽपि सामान्यविशेषभावापन्नयोः घटसामान्यघटविशेषयोः अवयवावयविभावो न समीचीनः । अतश्च उदाहरणालंकारस्य न पृथक्त्वम्, अपितु तत्र विकस्वरालंकार एवेत्यभिप्रायात् ।

किंच–उदाहरणालंकारस्य पृथक्त्वे सामान्यविशेषयोः अवयवावयविभावः केनोच्यत इत्याशंकायाम् इवादिशब्देन इति वाच्यम् । इवादिशब्दस्य सादृश्यसंभावनोभयार्थकत्वे यथा प्रसिद्धिः न तथा अवयवावयविभावे इति विकस्वरालंकारस्यैवैतादृशोदाहरणेषु युक्ततेति ।

## तत्त्वालोकः

**रसगंगाधरकृता**–'अनन्तरत्नप्रभवस्य' इत्यादौ सामान्याद्विशेषस्य भेदाऽभावेन उपमाया अनिष्पत्त्या उपमालंकारस्याप्रसरादुदाहरणालंकारोऽभ्युपेय इत्युक्तम्।

सत्यमुक्तम्–अथापि पूर्वमुपमाप्रकरणे विद्यानाथोक्तलक्षणे च 'भिन्नपदोपादाने' सति अनन्तरत्नेत्युदाहरणेऽव्याप्तिः उपपादिता। 'तत्र उपमेयदोष-गुणसामान्यान्तर्गतानाम् उपमानानां दोषगुणविशेषाणां कलङ्ककिरणानां च तद्भिन्नत्वाऽभावात्' इति। एवं च ग्रन्थकर्तुः भेदाभावमात्रं नोपमानिवारकम् अभेदेऽपि तस्य दृष्टेः। अत एव च–

द्वारं द्वारमटन् भिक्षुः शिक्षत्येवं न याचते।
अदत्त्वा मादृशो माभूः दत्त्वा त्वं त्वादृशो भव॥

इत्याद्यभिन्नधर्मिकोपमोदाहृता।

यद्यभेदे उपमा नाभ्युपगम्येत तदा 'द्वारं द्वारम्' इत्यादौ कोऽलंकारः रसगंगाधरकाराद्यभिमतः स्यादिति विभावनीयम्।

**एतावता एतदुक्तं भवति**– इवादिशब्दस्य अनुभवसिद्धसादृश्य-परत्वं परित्यज्य अप्रसिद्धसामान्यविशेषभावलक्षकत्वपरिकल्पनपूर्वकमुदाहरणालंकाराभ्युपगमापेक्षया जयदेवसम्मतविकस्वरालंकाराभ्युपगमस्यैव युक्तत्वात् इति। अत एव प्राञ्चोऽपि उदाहरणालंकारः उपमायामेव पर्यवस्यतीति अभ्यधुः। तदप्युक्तं **रसरङ्गाधरकृतैव**–उदाहरणालंकारो नातिरिक्तः। उपमयैव गतार्थत्वात्। न च सामान्यविशेषयोः सादृश्यानुल्लासात्कथमुपमेति वाच्यम्। '**निर्विशेषं न सामान्यमि**'ति सामान्यस्य यत्किञ्चिद्विशेषं

तत्वालोकः

विना प्रकृतत्वायोगात्तादृशविशेषमादाय विशेषान्तरस्य सादृश्योल्लासे बाधकाभावात् इवादिभिःआमुखे प्रतीयमानस्यापि सामान्यविशेषभावस्य परिणामे सादृश्य एव विश्रान्तेरित्याहुः' इति। तथान्यत्रापि 'किंचोदाहरणालंकारो न प्राचां सन्तोषमावहति। उपमयैव तैस्तस्य निरासात्' इति चोक्तम्।

यत्तूक्तं रसगंगाधरकृता–'उदाहरणालंकारे इवादिप्रयोगः' अर्थान्तरन्यासे तु इवादिप्रयोगाभावः' इति। तदयुक्तम् –

दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैश्शिरसामतीव॥

इत्यत्र रसगंगाधरोक्तोदाहरणालंकारो वक्तुमशक्यः। इवादियोगे सत्यपि विशेषसामान्यविशेषभावानामप्रतीतेः। इवशब्दोपादानादर्थान्तरन्यासतापि वक्तुमशक्येति उत्प्रेक्षामात्रमेव स्यात्।

नच–दिवाकरा, दित्यत्र-अचेतनस्य तमसो दिवाकरात् त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिरक्षणम्। संभावितेन तु रूपेण प्रतिभासमानस्य अस्य अनुपपत्यवतारश्च कथं स्यादिति तत्समर्थनार्थं विशेषांशस्योपादाने यत्नोऽनुचित एवेति अर्थान्तरन्यासाभास एवेति क्वानुपपत्तिरिति वाच्यम्,

'समर्थनानपेक्षणेऽपि समर्थनं नार्थान्तरन्यासतां परिहरति'

इति ग्रन्थकृता कुवलयानन्दे समर्थितमेवेति उक्तोदाहरणेऽर्थान्तरन्यासतेष्यते, न स्यात् अर्थान्तरन्यासता अतश्च रसगंगाधरोक्तविषयविभागो

तत्त्वालोकः

ऽनुचित एव। अत एव अभियुक्ताः मल्लिनाथादयः उक्तोदाहरणजातेषु अर्थान्तरन्यासतामेव अभ्यधुः।

यच्चार्थान्तरन्यासनिरूपणावसरे कुवलयानन्दकारास्तु इत्यादिना **विकस्वर**लक्षणम्—'उपकारमेव कुरुते' इत्यत्र विशेष–सामान्यविशेषेषु प्राथमिकविशेषस्याभावादव्याप्तेः इति दूषितं रसगंगाधरकृता तत्रापि प्रतिबन्द्या उच्यते—उदाहरणोदाहरणत्वमपि न भवति यतस्तत्र प्राथमिकस्य सामान्यस्योपादानेऽपि द्वैतीयकस्य न तदेकदेशभूतविशेषरूपत्वम्। 'मूर्छां गतो मृतो वेति मूर्च्छां प्राप्तत्वेन रूपेण सामान्यांशस्यैवोपादानात्। यदितु मूर्छां गतो-मृतो वेति संपूर्णस्योत्तरार्धस्यैकवाक्यतेत्यु ते तदा सामान्यं विशेषेण समर्थ्यत इत्यर्थान्तरन्यासस्यानायासेन वक्तुं सुशकतया अव्याप्तेरभावात् उदाहरणालंकारो नातिरिक्त इति **ग्रन्थकाराशय इति**। अत एव—**ग्रन्थकृतैव– स्वकीये वरदराजस्तवे**—

मालिन्यमब्जशशिनोर्मधुलिट्कलङ्कौ
　धत्तो मुखे तु तव दृक्तिलकात्मनाभाम्।
दोषावितः क्वचन मेलनतो गुणत्वं
　वक्तुर्यथेश वचसि भ्रमविप्रलम्भौ॥ [वर–स्त ९१श्लो]

अत्र प्रथमप्रदर्शितविशेषोपपादनार्थं सामान्यमुपन्यस्य तत्राऽपि उपपादनापेक्षायां तदुपपादनार्थं विशेषान्तरस्योपमानत्वेन निबन्धनाद्विकस्वरालंकार इति उपपादितमित्यलमितिदिक्॥

प्रकृते — व्यङ्ग्यानन्वयेऽलंकारत्वमसंमन्यमाना एते तद्व्यावर्तनाय

## चित्रमीमांसा

एतादृशव्यावृत्त्यर्थमनन्वयालंकारलक्षणेऽव्यङ्ग्यत्वविशेषणं पूर्ववत् द्रष्टव्यम् ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभ
श्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य
कृतौ चित्रमीमांसायामनन्वयप्रकरणम्

---

## तत्त्वालोकः

वाच्यानन्वयलक्षणेऽव्यङ्ग्यत्वविशेषणमुपादेयमित्याहुः - **एतादृशव्यावृत्त्यर्थ** - **मिति**। तथा च सदृशान्तरव्यवच्छेदफलकैकधर्मप्रयोज्यैकोपमानोपमेयकमव्यङ्ग्यं सादृश्यम् अनन्वय इति फलति ।

**प्राचाम्** - व्यङ्ग्यानन्वयव्यावर्तकविशेषणानुपादात्प्रधानभूतानन्वयस्याप्यलंकारत्वं स्वीकर्तुमुचितमिति अभिमतम् । अयमेव पक्षोऽभिमतः **पण्डितराजस्यापि** ॥

**इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा(तुग्गेहल्लय)-
भिजनेन सोमयाजियाण्डान् जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसंभवेन श्रीमन्महीशूरपुरीमध्यविद्योतमानश्रीमन्महा
राजसंस्कृतमहापाठशालायां सरस्वतीप्रासादाख्यायाम्
अलङ्कारशास्त्रप्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
सो. रामस्वामि ऐय्यंगार्यशर्मणा
विरचिते चित्रमीमांसाव्याख्याने तत्त्वालोकाख्ये
अनन्वयालङ्कारप्रकरणं समाप्तम्**

---

# अथ स्मरणलङ्कारप्रकरणम्

## चित्रमीमांसा

### अथ स्मरणालङ्कारप्रकरणम् ।

## तत्त्वालोकः

### अथ स्मरणालङ्कारप्रकारणम्

स्मरणालङ्कारः

वाच्यः                व्यङ्ग्यः

य: स्मृतःसर्वपापानि तूलराशिमिवानलः ।
दग्ध्वा ज्ञानमदाद्देवः त वन्दे वाजिकन्धरम् ॥

इत्थं भेदाऽभेदसाधारणसाधर्म्यमूलान्उपमोपमेयोपमानन्वयान् निरूप्य स्मरणमवतारयति—**अथ स्मरणेति**। अत्रतावत्—**काव्यप्रकाशकारेण**—

'यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः'।

इति लक्षितः। स च यद्यपि 'सदृशादृष्टचिन्ताद्याःस्मृतिबीजस्य बोधकाः,। इत्युक्तरीत्या यत्र सदृशदर्शनात्पूर्वानुभवसंस्कारोद्बोधे सति सदृशवस्त्वन्तरस्मृतिः तत्र स्मरणमलङ्कारः। यथा—

अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमंजुलम् ।
स्मरामि वदनं तस्याः चारुचञ्चललोचनम् ॥

इत्यादौ समन्वेति। अथापि यत्र सदृशदर्शनात् सदृशसम्बन्धिस्मरणं तत्र

## चित्रमीमांसा

स्मृतिस्सादृश्यमूला या वस्त्वन्तरसमाश्रया ।
स्मरणालंकृतिस्सास्यादव्यङ्ग्यत्वविशेषिता ॥ इति ।

## तत्त्वालोकः

दिव्यानामपि कृतविस्मयां पुरस्तात्
अम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।
उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीं
अस्मार्षीत् जलनिधिमन्थनस्य शौरिः ॥

इत्यादौ सदृशस्मृत्यभावेऽपि गम्यवस्तुस्मृतिपूर्वकं तत्सम्बन्धिस्मृतौ अव्याप्तिः । एवं रुय्यकेण सदृशानुभवाद्वस्त्वन्तरस्मृतिः, इति सूत्रयित्वा वस्त्वन्तरंसदृशमेव इत्युक्तम्, तदपि एकसम्बन्धिज्ञानविधया स्मृते अव्याप्तिः तस्याश्च–दिव्यानामित्येतदेवोदाहरणं द्रष्टव्यम् ।

तथा —एकावलीकारेण–'सदृशं सदृशानुभावाद्यत्र स्मर्येत तत्स्मरणम्' इतिलक्षयित्वा–सदृशदर्शनेन विसदृशस्यापि स्मरणसंभवात् । यत्र तु सदृशं दृष्ट्वा सदृशमेव स्मर्यते तत्र स्मरणालंकारः इत्युक्तम् । तदपि उक्तोदाहरणेऽव्याप्तम्, अतस्स्वयं लक्षणमाह स्मृतिरिति ।

सादृश्यमूला सादृश्यज्ञानोद्बुद्धसंकारप्रयोज्या, वस्त्वन्तरसमाश्रया–स्मर्यमाण पदार्थावलम्बिनी स्मृतिः अव्यङ्ग्या चेत् स्मरणालंकारः । तत्र स्मर्यमाणेनानुभूयमानस्य सादृश्ये परिकल्पिते स्मरणस्य–यथा —भवभूतेरुत्तररामचरिते —

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तवैव तुल्यरूपम् ।

चित्रमीमांसा

यथा- अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कः चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥

तत्त्वालोकः

कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥

इति अनुभूयमानेन स्मर्यमाणस्य सादृश्ये परिकल्पिते स्मृधातुयोगे यथा-
**कालिदासस्योत्तरमेघे—**

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततटितं त्वां तमेव स्मरामि ॥

इत्यत्र अनुभूयमानेन मेघेन क्रीडाशैले सादृश्यपरिकल्पनम् इयुभयत्रापि स्मरतिना स्मृतिरुपन्यस्ता । तस्या अनुपादानेऽपि वाच्यायमानत्वे एतदुदाहरणता संभवतीति प्रदर्शयति— **यथेति** । उदाहरति **अपि तुरगेति** ।

सः दशरथः मृगयामटन् तुरगसमीपात् अश्वसमीपादपि उत्पतन्तं नृत्यन्तं अथवा ल्यब्लोपे पञ्चमी । अश्वसमीपमागत्य नृत्यन्तं सुप्रहारमपीत्यर्थः रुचिरकलापं मुग्धबर्हम् मयूरं–मह्यां रौतीति मयूरः तं, बर्हिणं पृषोदरादित्वात् साधुः । न बाणलक्ष्यीचकार–बाणलक्ष्यताम् नाकरोत् ।

यथा वा—दिव्यानामपि कृतविस्मयां पुरस्तात्
अम्भस्तः स्फुरदरविन्दचारुहस्ताम् ।

तत्त्वालोकः

न प्रजहारेत्यर्थं । कुत इत्यत्र ह—सपदीति । सपदि उत्पन्नाविर्भवद्बर्हगतोज्वलविचित्रकोमलमयूरदर्शनक्षण एव, चित्रमाल्यानुकीर्णे दिव्यगन्धाधिवासितकुसुमस्रजा विलुलिते रतिविगलितबन्धे तत्कालमव्याजप्रेमनियन्त्रणकण्ठग्रहविस्रस्तबन्धे, प्रियायाः केशपाशे कचकलापे गतमनस्कः संलग्नचित्तः तादृशकेशकलापमनुस्मृत्येत्यर्थः । उरः प्रभृतिभ्यः कप्(५-४-१५१) इति समासान्तः कप्रत्ययः । अस्य न बाणलक्षीचकारेत्यनेनान्वयः ।

अत्र च्विप्रत्ययान्तप्रयोगात् उत्पन्नाविर्भवद्बर्हगतोज्वलविचित्रकोमलशरीरो मयूरः सपदि अव्याजप्रेमनियत्रणकण्ठग्रहविलुलितप्रियाकेशपाशवासनाविकासहेतुः सर्वस्वायमाणः कथं बाणलक्ष्यतां सहेत इति वस्तु व्यज्यते ॥

अत्र मुग्धबर्हमयूरप्रेक्षणात् तादृशबर्हसदृशप्रियाकेशपाशविषयिणी स्मृतिः । सा च न स्मरतिना अभिहिता, किन्तु गतमनस्कः इत्यनेन लक्षितातथाचात्र सदृशदर्शनात् सदृशधर्मिका स्मृतिः ।

अथ सदृशदर्शनात्तत्सदृशवस्तुसम्बन्धिनः स्मरणेऽपि स्मतित्वमुपपद्यत इति तामुदाहरति दिव्यानामपि इति ।

शौरिः श्रीकृष्णः, दिव्यानामपि—दिवि भवानामपि देवानामपि अप्सरसामपीति वा, कृतविस्मयाम्-सौन्दर्यातिरेकेण जनिताद्भुतरसाम्.तथा स्फुरदरविन्दाभ्यां चारू मनोहरौ हस्तौ यस्यास्तां पद्महस्तामित्यर्थः । पुरस्तात्—

चित्रमीमांसा

उद्वीक्ष्य श्रियमिव कांचिदुत्तरन्तीं
अस्मार्षीत् जलनिधिमन्थनस्य शौरिः ॥

तत्त्वालोकः

अग्रे 'अम्भस्तः–अम्भसः सकाशात्, उत्तरन्तीं निष्क्रामन्तीं कांचित्स्त्रियं, श्रियमिवोद्वीक्ष्य लक्ष्मिवावलोक्य, जलनिधिमन्थनस्य समुद्रमथनम् अस्मार्षीत् सस्मार स्मृयोगे तद्धात्वर्थनिरूपितकर्मत्ववाचकात् अधीगर्थदयेशां कर्मणि [पा.सू.२·३·४] इति षष्ठी।

अत्र भगवतः श्रीकृष्णस्य अम्भसो निष्क्रामन्त्याः पद्महस्तायाः श्रियदर्शनेन तत्सदृश्याः जन्मान्तरानुभूतायाः श्रियः स्मरणेन तसम्बन्धिनः समुद्रमन्थनस्य स्मरणं जातमिति,इदमपि स्मरणं सादृश्यमूलकमेवेति स्मृतेरुदाहरणम् । एकसम्बन्धिज्ञानविधया स्मरणमिति विशेषः ।

नन्वत्र—नायिकादर्शनादेव श्री र र ज़ातमिति कथं कल्पयितुंपशक्यम् ? श्रीप्रतियोगिकनायिकानुयोगिकसादृश्यज्ञानं जातमिति तेन मन्थनं स्मृतमिति वक्तुमशक्यत्वात् इति चेन्न ।

श्रीसादृश्यवत्त्वेन ज्ञानविषयस्य नयिकाज्ञानस्य श्रीस्मरणजनकत्वमवश्यं वाच्यमेव। अन्यथा अन्यसदृशदर्शनेन अन्यस्मरणं नोपपन्नं स्यात् । अत एवात्र–

श्रियमिव काञ्चिदुद्वीक्ष्य जलनिधिमन्थनस्यास्मार्षीत् इति प्रयुञ्जता कविना उद्वीक्षणोत्तरकालिकत्वं जलनिधिमन्थनस्मरणे परिकल्पितं

## चित्रमीमांसा

-एकत्र सदृशदर्शनात् तत्सदृशधर्मिका स्मृतिः । इतरत्र सदृशदर्शनात् तत्सदृशलक्ष्मीसम्बन्धिनो जलनिधि मन्थनस्य स्मृतिः । उभययत्रापि सादृश्यमूलकवस्त्व न्तरस्मृतित्वमविशिष्टम् । अत एव सदृशासदृश साधारण्यार्थकतया लक्षणे वस्त्वन्तरग्रहणमर्थवत् ॥

## तत्त्वालोकः

संगच्छते । श्रीस्मरणद्वारैव दर्शनस्य समुद्रमथनस्मरणजनकताया विवक्षोपा रूढत्वात् । तदेतन्मनसि निधाय उदाहरणे लक्षणसमन्वयप्रकारमाह— एकत्रेति । एकत्र 'अपि तुरगसमीपादि'त्युदाहरणे सदृशदर्शनात् चित्र माल्यानुकीर्णविगलितबन्धप्रिया केशपाशसदृशमुग्धमयूरबर्हज्ञानात्, तत्सदृश-धर्मिका तादृशबर्हसदृशकेशपाशषविषयिणी स्मृतिः स्मरणम् ।

इतरत्र द्वितीयोदाहरणे 'दिव्यनामपीत्यादौ' सदृशदर्शनात् श्रीसदृशपद्महस्तनायिकावलोकनात् तत्सदृशलक्ष्मीसम्बन्धिनः नायिकासदृश-लक्ष्मीसंभूतिहेतोः जलनिधिमन्थनस्य समुद्रमथनस्य स्मृतिः । उभयत्रापि उक्तोदाहरणद्वयेऽपि, सादृश्यमूलकवस्त्वन्तरस्मृतित्व साक्षात् परंपरयावा सादृश्य ज्ञानोद्बुद्धसंस्कारप्रयोज्यस्मृतिरूपत्वम्, अविशिष्टं समानम् । अत एव सदृशात् तत्सदृशस्य, सदृशात्तत्सदृशसम्बन्धिनश्च स्मरणे सादृश्यप्रयोज्य वस्त्वन्तरस्मृतित्वस्य समानत्वादेव, लक्षणे स्मरणलक्षणे सदृशासदृशसाधार-ण्यार्थतया सदृशासदृशोभयानुगतार्थकं, वस्त्वन्तरग्रहणं वस्त्वन्तरत्वविशेषणो अर्थवत् सप्रयोजनम् ॥

**एतेन—रुय्यक – मम्मटविद्याधरादीनां** लक्षणमव्याप्तमिति प्रतिपादितं भवति ।

चित्रमीमांसा

सौमित्रे ! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥

तत्त्वालोकः

यत्तूक्तं खण्डनकृता – 'सदृशासदृशयोः केशपाशजलनिधिमन्थनयोः संग्रहाय लक्षणे वस्त्वन्तरग्रहणमर्थवत्' इति । तत्र 'सादृश्य मूला स्मृतिः स्मरणालंकारः' इत्येतावतैव केशपाशस्मरणस्येव जलनिधिमन्थन स्मरणस्यापि संग्रहात् वस्त्वन्तरसमाश्रयत्वविशेषणमनर्थकम् । एकत्र सदृश दर्शनोद्बुद्धसंस्कारजन्यत्वेन अपरत्र च सदृशदर्शनोद्बुद्धसंस्कारजन्यलक्ष्मीस्मरणोद्बुद्धसंस्कारजन्यत्वेन च, सादृश्यमूलकत्वस्याविशेषात । न हि 'सादृश्यमूला इत्युक्ते सदृशविषयेति लभ्यते । येन जलनिधिस्मृतेः संग्रहः स्यादिति ।

अत्र नागेशभट्टाः – सादृश्यपदस्य नियतसम्बन्धिकतया सम्बन्ध्याकांक्षायामुपस्थितस्मर्यमाणस्यैवान्वयापत्तिः । 'न हि जनकत्वमूला पूज्यता' इत्युक्ते पुत्रजनकत्वेन भार्या पूज्यते । अतो 'वस्त्वन्तरसमाश्रया' इत्यावश्यकमिति चिन्त्यमिदमित्याहुः ।

यदा अस्यैव स्मृतिशरीरस्य व्यङ्ग्यता तदा अलंकार्यत्वमेव नालंकारतेति अभिमन्यमानः अव्यङ्ग्यत्वविशेषणस्य प्रयोजनमाह—सौमित्रे इत्यादिना ।

सुमित्रायाः अपत्यं पुमान् सौमित्रिः, स्त्रीभ्यो ढकं बाधित्वा, बाह्वादिभ्यश्च [पा.सू.४-१-९६] इति इञ्प्रत्ययः तस्य सम्बुद्धौ सौमित्रे ।

**अत्र श्रुतकुरङ्गसम्बन्धिनः तन्नयनस्य स्मरणात् तत्सदृश-सीतानयनस्मृतिः तत्सम्बन्धिसीतास्मृतिश्चेति ।।**

तत्त्वालोकः

लक्ष्मण ! तरुतलं वृक्षमूलं सेव्यतां ननु श्रीयताम् अहम् अनुजानामि कुतो वृक्षमूलाश्रयणमेति प्रश्ने हेतुमुल्लिखति–**चण्डांशुरिति** । **चण्डांशुः** चण्डकिरणः उज्जृम्भते उद्गच्छति । लक्ष्मणः प्रतिवक्ति- रघुपते रामचन्द्र ! निशि रात्रौ चण्डांशोः सूर्यस्य कथा का दिवा उदीयमानस्य रवेः रात्रौ तद्वार्तापि न प्रसजति, अतः चण्डांशुरुज्जृम्भत इति ज्ञान भवतो भ्रम एवेति भावः

तर्हि कोऽसावुन्मीलति इति चेतत्राह-लक्ष्मणः **चन्द्र इति** । अयं पुरः परिदृश्यमानः चन्द्रः उन्मीलति–उदेति । रामः पृच्छति **वत्स इति** । वत्स! लक्ष्मण ? भवता त्वया, एतत् अयं दिवाकरः न अपितु निशाकर इतीदं कथं केन प्रकारेण विदितं ज्ञातम्? अनुमानरूपप्रमाणेन ज्ञातमिति लक्ष्मणः प्रतिवक्ति— **धत्त इति** । यतः यस्मात् कारणात् कुरङ्गं मृगं धत्ते धारयत्ति अतः अयमुदितः चन्द्र एव न सूर्य इति विदितमिति यावत्, एवं च अङ्काधिरोपितमृगः चन्द्रमा एव नार्यमा इति भावः । **अथ कुरङ्ग** पदं श्रुत्वा तत्सम्बन्धिनयनसदृशनयनस्मृत्या सीतामुखं तन्नयनं च स्मृत्वा विह्वलितो राम आह **क्वासीति** । हे प्रेयसि! सत्यवागार्जवरतिमिस्सहोपकुर्वती प्रियंवदा च सती मां स्वयं प्रीता भजमाना त्वमिति भावः । जानकि जनकनन्दिनिसीते,क्व असि मां परिहृत्य कुत्र वर्तसे? । हा इति खेदे ।

अत्र स्मृतेः व्यक्तिप्रकारमाह **अत्र श्रुतेति** । उक्तोदाहरणे,**श्रुतकुरङ्ग सम्बन्धिनः** श्रावणप्रत्यक्षविषयमृग–सम्बद्धस्य, **तन्नयनस्य** मृगनयनस्य **स्मर**

चित्रमिमांसा

**किन्त्वेषा व्यङ्ग्या, अलंकार्यभूता च। तद्व्यावृत्त्यर्थम् अव्यङ्ग्यत्वमुपात्तम्।**

**तत्त्वालोकः**

रणात्, तत्सदृशसीतानयनस्मृतिः सीतास्मृतिश्च जायते। अतः सादृश्यज्ञानोद्बुद्धसंस्कारप्रयोज्यवस्त्वन्तरसमाश्रयस्मृतित्वमविशिष्टम्, अथापि न तस्याः वाच्यत्वं किन्तु व्यज्यमानत्वमिति अलंकार्यैवैषा नत्वलंकारभूता। अत्र अतिव्याप्तिं परिहर्तुमव्यङ्ग्यत्वमुपात्तमित्याह–**किन्त्वेषेति**।

अयं भावः— अत्र जायमाना स्मृतिः रामनिष्ठा सीताविरहेण विभाविता, तादृशविरहजन्यसन्तापादिना अनुभाविता उन्माद–वितर्काभ्यां संचारिता अभिव्यज्यत इत्यस्याः व्यङ्ग्यत्वम्। अस्याश्च धत्तेकुरङ्ग यत इत्यनुमानालंकारः उपस्कारकः। अतएव चात्र स्मृतेरलंकार्यता।

**यद्यपि**—प्रियालम्बनः निशासमयोद्दीपितः सन्तापादिना अनुभावितः उन्मादेन च संचारिणा परिपोषितः विप्रलम्भः प्राधान्येनात्र व्यज्यते। अथापि ध्वन्यमानस्य भावस्य प्राधान्ये सत्यपि पर्यन्ते विप्रलम्भादिरसाभिव्यञ्जकत्वं सर्वसम्मतमिति न स्मृतेरलकार्यत्वव्यपोहः। अत एव च एतादृशोदाहरणव्यावृत्त्यर्थमव्यङ्ग्यत्वविशेषणोपादानं समुचितम्।

मुख्य व्यङ्ग्यस्यानलंकारतयैव प्रसिद्धेः। वाक्यार्थस्य च रसाद्यङ्गतया सर्वाभ्युपगतत्वात्॥

**प्राचीनैस्तु**— व्यङ्ग्योपमाव्यावर्तकविशेषणानुपादानात् प्रधानीभूतोपमादेरप्यलंकारत्वं स्वीकर्तुमुचितम् तदनुरोधेन च **नव्यैः रसगंगाधरकारादिभिः** व्यङ्ग्यत्वालंकारत्वयोः विरोधाभावः प्रतिपादितः।

**तत्त्वालोकः**

**यत्तु--यदपीत्यादिना चित्रमीमांसाखण्डनकृता**—सौमित्रे ननु सेव्यतामित्यत्र स्मृतेः व्यङ्ग्यत्वमभ्युपगम्य अलंकार्यत्वं निराकृतं तदपि मन्दम्। वाच्यार्थापेक्षया प्राधान्यादलंकार्यत्वम् अभिव्यज्यमानविप्रलम्भापेक्षया उपस्कारकत्वं चेति विरोधाभावात्। **यत्स्वेनैव निर्मितः रसगंगाधराख्यो ग्रन्थः** विस्मृतः। तत्र हि भावध्वनिस्वरूपनिरूपणावसरे—

'अस्तु वा प्राधान्येन ध्वन्यमानस्यापि भावस्य प्रान्ते रसाभिव्यञ्जकत्वम्, इत्युक्तम् 'तदनुरोधेनापि स्मृतेरलंकार्यत्वं न परिहापितम्।

**किंच**—प्राधान्याप्राधान्ये चारुत्वोत्कर्षतदभावनिबन्धने इति तु ध्वनिकारादीनामपि सम्मतम्। अत एव च–ध्वनिकृता- **प्रथमोद्योते**—उक्तम्

'चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा'इति।

एतेन क्वचित् व्यङ्ग्यत्वेऽपि तस्य चारुत्वाभावः प्रतिपादितो भवति। इत्थं सति व्यङ्ग्यत्वालंकारत्वयोः विरोधो नास्ति। परन्तु प्राधान्यमनुभवति व्यङ्ग्य तत्सामानाधिकरण्येन अलंकारत्वसत्ता परं विरुद्धयते इति | तु **पण्डितराजस्याकूतम्**।

इदमेव समीचीनः। यतश्च **ध्वनिकारेण** —

'स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलङ्काराः रसादयश्चेत्यनेक प्रभेदप्रभिन्नो दर्शयिष्यते'

इति अभिदधता व्यङ्ग्यत्वालंकारत्वयोः अविरोध एवध्वनितः॥

अथापि–**ग्रन्थकृता**- 'क्वचिद्व्यङ्ग्यप्रधाना सा व्यङ्ग्यस्य वस्त्वलंकार रसरूपतया त्रैविध्यात्' इति वदता व्यङ्ग्यत्वलंकारत्वयोः विरोधो नाभ्युपगत

चित्रमीमांसा

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः
तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवः
तावद्बिभ्रदिमां स्मृतस्तव भुजः वाचस्ततो मुद्रिताः ॥

स्तूयमानस्य भूसम्बन्धिनः भूभृद्भुजस्यतिर्न सादृश्य मूलेति नात्र स्मरणालंकारः ।

तत्त्वालोकः

इति प्रतीमः । एवं च यत्र यत्र अव्यङ्ग्यत्वविशेषणमुपादीयते तत्र तत्र प्रधानव्यङ्ग्यव्यावर्तकमेवाव्यङ्ग्यत्वविशेषणमिति न खण्डनावश्यकतेत्यव-धेयमिति प्रागेवानेकवारं प्रत्यपीपदाम ॥

स्मृतौ सादृश्ययमूलत्वविशेषणात् सादृश्येतराऽदृष्टचिन्तादिकारणां-कुरिता स्मृतिः नास्यालंकारस्य विषय इत्याह—अत्युच्चा इत्यादिना ॥

परितः समन्तात्, अत्युच्चाः अत्युन्नताः, गिरयः शैलाः स्फुरन्ति प्रकाशन्ते दृष्टिगोचरा भवन्तीत्यर्थः । तथा स्फाराः विस्तीर्णाः अम्भोधयश्च समुद्राश्च परितः स्फुरन्ति । तान् गिरीन्, एतान् अम्भोधीनपि बिभ्रती वहन्ती किमपि ईषदपि, न श्रान्तासिन क्लान्तसि एवंविधायै तुभ्यं नमः इति आश्चर्येण मुहुर्मुहुः उपलक्षितस्सन् यावत् भुवः स्तुतिं प्रस्तौमि तावदिमां सगिरिसागरां, भुवं भूमिं बिभ्रत् धारयन् तव भुजः स्मृतः, ततः तदुत्तर-क्षण एव वाचः भूस्तुतौ प्रवृत्ता गिरः, मुद्रिताः प्रतिरुद्धा इत्यर्थः । पउपादयति–**स्तूयमानस्येति** ।

**किन्तु स्मृतेः सञ्चारिभावस्य भूभृद्विषयरतिभावाङ्गत्वात् प्रेयोऽलंकारः ।**

## तत्त्वालोकः

अयं भावः—

भुवं स्तोत्रयितुं प्रवृत्तस्य कवेः एकसम्बन्धिज्ञानविधया भूपतेर्भुजस्मरणं यज्जातं न तत् सादृश्यनिबन्धनम्, अपि तु उद्‌बोधकान्तरसमवधान निबन्धनमतः अस्मिन्नुदाहरणे न स्मरणमलंकारः इति ।

तर्हि कोऽत्रालंकारइति पर्यनुयोगे आह–**किन्त्विति** । अयमभिसन्धिः भूविषयकश्रमसहिष्णुत्वादिज्ञानप्रयोजकसशैलसागरादिगतौन्नत्यादिचिन्ताविशेषेण विभाविता अवनतिगात्रनिश्चलत्वादिना अनुभाविता रत्यभिव्यञ्जिता च स्मृतिः भूरूपदेवतादिविषये प्रवृत्तत्वात् 'व्यभिचार्यञ्जितो भावः' इत्युक्तरीत्या व्यज्यमाना सती भावतां नीता राजविषयकरतिभावस्य अङ्गभूतेति प्रेयोलंकार इति ।

एवं च–'अत्रत्यस्मृतेः'इत्यस्य स्मरतिना वाच्या या स्मृतिः तस्याः इति नार्थः किन्तु भूविषयैव विभावादिभिरभिव्यज्यमाना या स्मृतिः तस्या इत्यर्थः ।

किञ्च–नहि अभिव्यज्यमानाया रतेः रतिभावाङ्गत्वे एव प्रेयोलंकार इति नियमोऽस्ति । अपितु भावस्य भावाङ्गत्वेऽपि प्रेयोलंकारतेति । अन्यथा 'अहो स रणदुन्दुभिः', इत्येकावलीकारोदाहृतपद्ये अहो इति वागारम्भानुभावेन सूचिता स्मृतिः व्यभिचारिभाव एव, इति **विद्याधरेणोपपादिते**

**तत्त्वालोकः**

सति मल्लिनाथसूरिणा—प्रेयोऽलङ्कारस्य तु विषयः इति व्याख्यातं कथं युज्येत। अतश्च एकावलीकाराद्यनुरोधेन अत्र स्मृतेः व्यज्यमानायाः इतराङ्गत्वोपपादनं ग्रन्थकृता कृतमिति कुतोऽपसिद्धान्तता।

एवं तर्हि– रतिस्मृत्योः उभयोरभिव्यक्तौ रतेः स्मृतेर्वा भावान्तराङ्गत्वमुच्यत इति चेत् प्रीत्या स्मृतेरभिव्यक्तिश्चेत् स्मृतेः भावस्य भावान्तराङ्गत्वमुपपाद्य प्रेयोलंकारता, स्मृत्या प्रीतेः अभिव्यक्तिश्चेत् स्मृतेर्भावस्य भावान्तराङ्गत्वमुपपाद्य प्रेयालंकारता वाच्या। अत्र तु भूविषयकप्रीत्यैव तद्धृतमहीधर–समुद्रादिवहनविषयकस्मरणं तद्व्याजेन भूस्तुतिः। स्तुतौ च तद्गुणानुसन्धानापेक्षा। गुणानुसन्धानं च प्रीतौ सत्यामेवेति स्मृतेः राजविषयरतिभावाङ्गत्वोपपादनं नायुक्तम्।

एवं तर्हि–स्वेनैव निर्मिते कुवलयानन्दे प्रेयोलंकारत्वमुपपादयता अमुमेव श्लोकमुदाहृत्य— अत्र प्रभुविषयरतिभावस्य वसुमतीविषयरतिभावोऽङ्गमिति उपपादितं कथं युज्यतामिति न शङ्क्यम्। तत्र काव्यप्रकाशकारादिमतप्रदर्शनायोक्तत्वात्–उक्तं चात्रैव पद्ये प्रकाशकारेण–अत्र भूविषयो रत्याख्यो भावः राजविषयस्य रतिभावस्याङ्गमिति।

एतेन—चित्रमीमांसाखण्डनकृता यदुक्त–यदपीत्यादिना 'प्रेयोलंकारता' इत्यन्तेन तत्सर्वं मतान्तरानवलोकननिबन्धनम् आग्रहमूलं चेत्यवगन्तव्यम्।

तथाहि–' नह्यत्र स्मृतिर्भावः। तस्याः स्मरतिना वाचकेनाभिधानात्, नहि वाच्यस्य व्यभिचारिणो भावत्वं वक्तुं युक्तम्। 'व्यभिचार्यञ्जितो भावः' इति सिद्धान्तस्य भङ्गापत्तेः इति तदयुक्तम्।

तत्वालोकः

न ह्यत्र स्मृतिपदोपदानमात्रेण भुजविषयिकैव स्मृतिरभिमतेति राजाज्ञा न वा ग्रन्थकृता भुजस्मृतिः राजविषयकरतिभावस्याङ्गभूतेति अभिहिता — यमंशमादायोक्तदूषणं सम्बद्ध स्यात् प्रत्युत स्मृतेः सञ्चारिभावस्येति स्पष्टमुपाददता भूविषयकरत्यभिव्यञ्जिता महीधरधारणादिविषयक ध्याना-दिरूपचिन्तया विभाविता' आश्चर्याभिव्यञ्जितभ्रून्नतिगात्रनिश्चलत्वादिना अनुभाविता स्मृतिः देवताविषये प्रवृत्ता सती अभिव्यज्यत इति व्यभिचार्यञ्जतो भावः इति संकेतितोऽपि संचारिषु पठिता राजविषयकरतिभावं प्रत्यङ्गभूतेति प्रेयोलंकार इति उपपादने प्रवृत्तिरिति स्पष्टं प्रतीतेः उक्तदूषणं चिन्त्यमेव ।

अत्र दृष्टान्तत्वेनोपात्तम्—

'अत्रानुगोदं मृगयानिवृत्तः
तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा
स्मरामि वानीरगृहेषु सुप्तम्' ॥

इति सर्वस्वकारोदाहृतं यत्पद्यं तदपि विषमम् । अत्रानुगोदम्' इत्यत्र वानीरगृहस्वापस्मणस्य वाच्यत्वमेव ।पुष्पकमारुह्य लंकातोऽयोध्यां प्रस्थितो रामः गोदावरीतीरे स्वेनैवानुभूतं वानीरगृहस्वापं स्मृतवान् । तादृशस्वाप स्मरणे च गोदावरीतीरवृत्तिवानीरगृहादेः पुनरवलोकनोद्बुद्धसंस्कारः तज्जन्या च स्मृतिर्वाच्यैव । न त्वन्या स्मृतिः विद्यते पूर्ववत् । अत्र तु वाच्यभूतभूभृद्भुजस्मरणापेक्षया भिन्नायाः भूविषयकस्मृतेः तद्विभावादिना अभिव्यक्तिरस्तीत्युपपादयितुं शक्यत्वात् ।

चित्रमिमांसा

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।

तत्त्वालोकः

एवं—नन्वित्यादिना या आशङ्किता सापि स्वकपोलकल्पितैव न खण्ड्यमानग्रन्थबलायातेति नन्वित्यारभ्य........वाच्यमित्यन्तं चिन्त्यमेव।

तथा--मम्मटोक्तिमनूद्य तद्ग्रन्थविरोधोद्भावनं ग्रन्थान्तरानाकलननिबन्धनम् । एकावल्यादौ अभिव्यज्यमानायाः स्मृतेः भावान्तराङ्गत्वोपपादनात् । तद्व्याख्यातृभिरपि सत्यपि सञ्चारित्वे भावान्तराङ्गत्वे प्रेयोलंकारत्वस्योपपादनाच्च ।

एवं अपिचेत्यादिना—कुवलयानन्दोपपादितरीतिविस्मरणाभिधानं तदपि न युक्तम्—कुवलयानन्दे प्रकाशकारानुरोधेन रतेः राजविषयरत्यङ्गत्वमुपपाद्य प्रेयोलंकारतोपपादिता । अत्र तु एकावलीकारानुरोधेन रत्यभिव्यञ्जितायाः स्मृतेः राजविषयरतिभावाङ्गत्वेन प्रेयोलंकारता प्रतिपादितेति कुतो वा विस्मरणम् । नहि सर्वेषु ग्रन्थेषु एकमेव मतम् उपादेयमिति नियमः । तथा सति –'अनुरागवती सन्ध्या' इत्यत्र वामनाभिप्रायेणाक्षेपः । भामहाभिप्रायेण तु समासोक्तिरिति अवतरणप्रदर्शनं लोचनकृतकृतं विरुध्येत । अतश्च न कस्यापि सन्दर्भस्य विस्मरणप्रसक्तिः । प्रत्युत पण्डितराजस्यैव विस्मृतिः 'सौमित्रे ननु सेव्यताम्' इत्यत्र प्राधान्ये सत्यपि रसाभिव्यञ्जकत्वोक्तेरिति पूर्वमेव प्रतिपादितम् इति तत्प्रकरणोदितं सर्वमपि खण्डनमसमञ्जसमेवेति बोध्यमिति दिक् ।

एवं चिन्तोद्बुद्धसंस्कारप्रयोज्या स्मृतिर्यत्र तत्रापि नायमलंकार इति तां प्रत्युदाहरति स तथेति ।

**चत्रमीमांसा**

ऋषीञ्ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥

अत्र चिन्तामूला स्मृतिः । विच्छित्तिविशेषाभावान्न कश्चिदलंकारः । एतदुभयव्यावृत्त्यर्थं सादृश्यमूलेति विशेषणम् ।

**तत्त्वालोकः**

सः प्रकृतः, शास्तीति शासनः कृत्यल्युटो बहुलम् [पा सू ३,३,१३] इति बहुलग्रहणात् कर्तरि ल्यु । स्मरस्य शासनः महेश्वरः तथेति प्रतिज्ञाय उक्तप्रकारेण करिष्यामीत्युक्त्वा उमां कथमपि कृच्छ्रेण विसृज्य प्रेषयित्वा, तस्यां गाढानुरागादिति भावः । ज्योतिर्मयान् ज्योतिस्स्वरूपान् ताद्रूप्ये मयट् । सप्त सप्तसंख्याकान् ऋषीन् सप्तर्षित्वेन प्रसिद्धान् मरीचि प्रमुखान् सस्मार अस्मार्षीत् ।अत्र ज्योतिर्मयानित्युक्त्या एषां कामरूपत्वं ध्वन्यते तेन जङ्गम–स्थावराद्यात्मकशरीरपरिग्रहशक्तिरस्तीति बोध्यम् ।

अत्र किंमूला सप्तर्षीणां स्मृतिः ? स्मृतिसद्भावेऽपि अलंकारता कुतोनेत्याशंकायामाह – अत्र चिन्तामूलेति ।

पूर्वस्मिन् उदाहरणे व्यङ्ग्यां व्यभिचारिभूतां स्मृतिमादाय प्रयोलंकारता अत्र तु न कश्चिदलंकारः अपि तु वस्तुमात्रमिति विशेष इति भावः । एतदुभयविधस्मृतिव्यावृत्त्यर्थं सादृश्यमूलेति विशेषणं लक्षणघटकस्मृतौ उपात्तमित्याह — **एतदुभयेति** ।

चित्रमीमांसा

एवमेते भेदाभेदसाधारणसाधर्म्यमूला अलंकाराः प्रदर्शिताः ॥

इति श्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलधिकौस्तुभ
श्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य
कृतौ चित्रमीमांसायां स्मरणालङ्कारप्रकरणम्

---

तत्त्वालोकः

उपसंहरति **एवमिति**- इदमुपलक्षणम् उपमायां संम्भाविताः भेदाः इहपि संभवन्तीत्यस्य । इत्थं च उपमो–पमेयोपमा–नन्वयस्मरणान भेदाभेदसाधारणसाधर्म्यमूलकत्वमित्युक्त भवतीति दिक् ॥

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा(नुग्गेहल्ल्य)-
भिजनेन सोमयाजियार्ण्डान् जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसंभवेन श्रीमन्महीशूरपुरीमध्यविद्योतमानश्रीमन्महा
राजसंस्कृतमहापाठशालायां सरस्वतीप्रासादाख्यायाम्
अलङ्कारशास्त्रप्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
**सो. रामस्वामि ऐय्यंगार्यशर्मणा**
विरचिते चित्रमीमांसाव्याख्याने तत्त्वालोकाख्ये
स्मरणालङ्कारप्रकरणं समाप्तम्

---

इति प्रथमो भागःसमाप्तः ]

# चित्रमीमांसा-तत्वालोकयोः कारिकोदाहरणप्रमाणादिसूची

# चित्रमीमांसा-तत्त्वालोकव्याख्यागतानां ग्रन्थानाम् अकारादिक्रमसूची

| ग्रन्थनाम | पुटसंख्या |
|---|---|

## चित्रमीमांसा-तत्वालोकव्याख्यागतानां ग्रन्थकाराणां अकारादिक्रमसूची

# शुद्धाशुद्धपाठसूची

| पृष्ठे | पंक्तौ | अशुद्धः | शुद्धः |
| --- | --- | --- | --- |
| 10 | 19 | भासत | यदा भासते |
| 11 | 18 | | अत्र त्रिविधमित्यन्तरं 'काव्यप्रकाशकृता यः भेदोपाधिः प्रदर्शितः तदपेक्षया विलक्षणस्तदुपाधिः प्रदर्श्यते। एवं वि[illegible] च कारणमुत्तरत्र वक्ष्यते'' इति संयोजनीयम्। |
| 25 | 13 | व्यज्य | व्यज्यते |
| ,, | 14 | चमत्कारा | तस्माच्चमत्कारा |
| 26 | 10 | निगस्य | निरस्य |
| ,, | 17 | उपालभन्त्याः | उपालभमानायाः |
| 29 | 20 | | पदस्येत्यधिकं |
| 32 | 5 | शक्तिमूलः | अर्थशक्तिमूलः |
| 34 | 13 | स्तयोः | स्तनयोः |
| 42 | 15 | लिङ्गित्वेन | लिङ्गत्वेन |
| 43 | 16 | न्यासमञ्जर्याम् | न्यायमञ्जर्याम् |
| 48 | 12 | अर्थे न | अर्थेन |
| 53 | 5 | नद्धसियति | न सिध्यति |
| ,, | 11 | विवृक्तितताम् | विवृतोक्तिताम् |
| | 17 | किलङ्कलितमिति | सङ्कलितमिति |
| 58 | 5 | न शकमि | न शक्नोमि |
| 60 | 14 | सदधिष्ठित | मदधिष्ठित |

| पृष्ठे | पंक्तौ | अशुद्धः | शुद्धः |
|---|---|---|---|
| 62 | 18 | च्यसिद्धि | वाच्यसिद्धिः |
| 63 | 17 | रसातां | रसतां |
| 73 | 16 | मूलाववनि | ध्वनिप्रपञ्चः |
| 95 | 21 | मिति योः | मितिद्वयोः |
| 102 | 21 | तथा | तथापि |
| 128 | 18 | व्योमत्वं | व्योमत्वं तद्भिन्नत्वं |
| 146 | 23 | इत्युक्तिः | इत्युक्तिश्चिन्त्या |
| 148 | 13 | यथामसस्तं | यथासमस्तं |
| 148 | 19 | उपादयितुं | उपपादयितुं |
| 159 | 17 | यजति पमा | न्यजति उपमा |
| 164 | 12 | दूह्यन्ते | दह्यन्ते |
| ,, | 15 | हाला हेलो | हालाहलः |
| 181 | 4 | विशिष्योपमा | विशिष्टोपमा |
| 202 | 22 | दिगवादि | हि गवादि |
| 215 | 16 | नाशभट्टेन | नागेशभट्टेन |
| 221 | 16 | नचोपमेयोपमाया | न चोपमायां |
| 222 | 7 | तुल्ययोगित्वं | तुल्ययोगितात्वं |
| 222 | 19 | उपमेयोपमायामपी | उपमेयोपमापीत्य |
| 232 | 5 | मुखचन्द्रेणातपः | मुखचन्द्रेण तापः |
| 279 | 16 | नाल अपवर्जित | नालापवर्जित |
| 289 | 17 | विष्णुः चन्द्रे | विष्णुचन्द्रे |
| 295 | 14 | कृत | कृतं स्यात् |
| 297 | 2 | उरगौण | उरगौ |
| ,, | 20 | बलात्कारे | बलात्कारेण बहि |

| पृष्ठे | पंक्तौ | अशुद्धः | शुद्धः |
|---|---|---|---|
| 301 | 12 | – –निसमानाः | चुम्बिताः निसमानाः चारु मनोज्ञाः, केसराः सटाः |
| 304 | 9 | ननु | ननु — इत्यधिकं |
| 305 | 6 | भवति | निष्पत्तिर्भवति |
| 306 | 18 | साधर्म्य | साधर्म्यप्रतीतौ |
| 312 | 2 | इकारो | ई कारो |
| 331 | 17 | मपमानतया | मुपमानताया एव |
| 355 | 22 | – गौरिति | गौरिव गौरिति |
| 356 | 3 | वेयर्थ्य | वैयर्थ्यप्रसङ्गात् |
| ,, | 4 | भावः । इत्यु | उपमेयभाव इत्युक्तः |
| 357 | 2 | ब्रह्मण एव | ब्राह्मण एव |
| ,, | 4 | भेदघटित | भेदाघटित |
| 359 | 8 | कचित् | अत्र केचित् |
| 364 | 11 | यथा सादृश्ये | यथाऽसादृश्ये |
| 377 | 4 | अमुत | अमृत |
| 378 | 18 | इत्यादीनामुपादानं | इत्यदावुपादानं |
| 380 | 21 | – – योक्तम् | तथोक्तम् |
| 381 | 7 | मानवात् | मानत्वात् |
| 382 | 22 | नियममः | नियमः |
| 402 | 20 | भविपश्चाश्च | भाविवर्णनमपि |
| 403 | 15 | समर्था | समर्थ्य |
| 411 | 20 | | अत्रा दर्भपदस्थाने इत्यनन्तरं 'पुण्डरीकपदस्योहः कार्यः हरितपदस्थाने रक्तपदस्योहः कार्यः' इति भवेत् |
| 414 | 9 | वाम्रपे | वा पे |

| पुटे | पंक्तौ | अशुद्धः | शुद्धः |
|---|---|---|---|
| 417 | 14 | महिमहित्वं | महिमत्वं |
| 420 | 19 | प्राय– – | प्रायत्वमिति |
| 422 | 17 | — अस्याः | अतश्चात्र अस्याः |
| ,, | 18 | अतश्चात्र | जनरहितत्व एव |
| 425 | 13 | स्यत्र . . . विप्र | विभावादेः विप्रलंभस्य चेति |
| 429 | 21 | ध्वनि | उपमाध्वनिः |
| 430 | 21 | कताचत् | कतिचित् |
| 438 | 9 | द्वितीयाथाभि | द्वितीयार्थाभि |
| 439 | 6 | कृतो व्यंजना | कुतो व्यञ्जना |
| ,, | 14 | त्रिपुरा रेरातेः | त्रिपुरारातेः |
| 443 | 3 | अभित्रापिं | अत्रापि |
| 444 | 2 | क्तेः भाष्यो | भाष्योक्तेः |
| ,, | 22 | एकाशकृता | प्रकाशकृता |
| 453 | 16 | यागस्पृशो | योगस्पृशो |
| 455 | 20 | पालपत्यभीः | पालयत्यभीः |
| 463 | 8 | वामभिः | वामाभिः |
| 464 | 13 | सप्तमेदां | सप्रभेदां |
| 465 | 11 | जात्या इत्यर्थः | जात्या न्यूनता इत्यर्थः |
| 470 | 14 | तटित् निर्दिष्टा | तटित् न निर्दिष्टा |
| 474 | 15 | सृतायोः | प्रसृतायाः |
| 475 | 5 | करस्थपदार्थच्युतपदार्थस्य | करस्थपदलिङ्गवचनसारूप्यं च्युत-पदे विद्यत इति करस्थपदार्थस्य च्युतपदार्थे एव समन्वयेन |
| 479 | 7 | प्राचीनेन | नव्येन |

| पृष्ठे | पंक्तौ | अशुद्धः | शुद्धः |
|---|---|---|---|
| 493 | 9 | प्रतिबिम्बभाम | प्रतिबिम्बभावोप |
| ” | 11 | धर्मोपादवोनस्य | धर्मोपादानस्य |
| 497 | 20 | यत्र | ‘यत्र’ इत्यधिकम् |
| 503 | 10 | सारूपं | सारूप्यम् |
| 504 | 22 | धृष्यत्वा | रधृष्यत्वा |
| 511 | 19 | सस्यगप्रतीति | सम्यगप्रतीति |
| 515 | 9 | मन्दाकिनी | मन्दाकिनीनां |
| 518 | 19 | उपमेयति | उपमेयगतेति |
| 520 | 19 | धर्माधिका | धर्माधिक्यं |
| 527 | 3 | तुरं गमाणां | तुरंगमाणां |
| ” | 21 | तस्यैव | तत्रैव |
| 541 | 22 | अभावः | अयं भावः |
| 544 | 4 | वाप्यञ्जनयोः | वाप्यञ्जनयोश्चो |
| 582 | 13 | त्वतम् | त्वम् |
| ” | 15 | शब्दाः | शब्दः |
| ” | 18 | स्वजलयोः | खजलयोः |
| 587 | 21 | नम्यो | नन्वयो |
| 588 | 12 | क्तौ | त्पत्तौ |
| 590 | 17 | वृत्ते | वृत्तेश्च |
| 604 | 20 | केनापि | न केनापि |
| 607 | 7 | तद्विवक्षाया | तदविवक्षा |
| 610 | 10 | द्वरद | द्विरद |
| 616 | 16 | अनेनैव | अनेनैवास्मिन् |

| | पुटे | पंक्तौ | अशुद्धः | शुद्धः |
|---|---|---|---|---|
| 417 | | | | |
| 420 | | | | |
| 422 | 635 | 13 | अनन्त्वया | सरणा |
| ,, | 640 | 6 | भ्दुजस्य | द्भुजस्य |
| 42′ | 643 | 4 | सम्बद | सम्बद्धं |
| 42′ | 644 | 18 | विस्मृतिः | वविस्मृतिः |
| | 645 | 8 | कर्तरि ट्ल्यु | कर्तरि ल्युट् |
| | i | ii | सूचा | सूची |
| | 1 | 11 | अगस्त्योदयो | अगस्त्योदये |
| | 2 | 1 | पटसंख्सा | पुटसंख्या |
| | 7 | 4 | 22, 203 | 203, 223 |

———

